# महाभारत - शांति पर्व

# ॥ महाभारत शान्तिपर्व ॥

## राजधर्मपर्व

### अध्याय ००१

वैशंपायन उवाच ॥

कृतोदकास्ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ ००१ ॥

तत्र ते सुमहात्मानो न्यवसन्कुरुनन्दनाः ।
शौचं निवर्तयिष्यन्तो मासमेकं बहिः पुरात् ॥ ००२ ॥

कृतोदकं तु राजानं धर्मात्मानं युधिष्ठिरम् ।
अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ॥ ००३ ॥

द्वैपायनो नारदश्च देवलश्च महानृषिः ।
देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः ॥ ००४ ॥

अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः ।
गृहस्थाः स्नातकाः सर्वे ददृशुः कुरुसत्तमम् ॥ ००५ ॥

अभिगम्य महात्मानः पूजिताश्च यथाविधि ।
आसनेषु महार्हेषु विविशुस्ते महर्षयः ॥ ००६ ॥

प्रतिगृह्य ततः पूजां तत्कालसदृशीं तदा ।
पर्युपासन्यथान्यायं परिवार्य युधिष्ठिरम् ॥ ००७ ॥

पुण्ये भागीरथीतीरे शोकव्याकुलचेतसम् ।
आश्वासयन्तो राजानं विप्राः शतसहस्रशः ॥ ००८ ॥

नारदस्त्वब्रवीत्काले धर्मात्मानं युधिष्ठिरम् ।
विचार्य मुनिभिः सार्धं तत्कालसदृशं वचः ॥ ००९ ॥

भवतो बाहुवीर्येण प्रसादान्माधवस्य च ।
जितेयमवनिः कृत्स्ना धर्मेण च युधिष्ठिर ॥ ०१० ॥

दिष्ट्या मुक्ताः स्थ सङ्ग्रामादस्माल्लोकभयङ्करात् ।
क्षत्रधर्मरतश्चापि कच्चिन्मोदसि पाण्डव ॥ ०११ ॥

कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप ।
कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते ॥ ०१२ ॥

युधिष्ठिर उवाच ॥

विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात् ।
ब्राह्मणानां प्रसादेन भीमार्जुनबलेन च ॥ ०१३ ॥

इदं तु मे महद्दुःखं वर्तते हृदि नित्यदा ।
कृत्वा ज्ञातिक्षयमिमं महान्तं लोभकारितम् ॥ ०१४ ॥

सौभद्रं द्रौपदेयांश्च घातयित्वा प्रियान्सुतान् ।
जयोऽयमजयाकारो भगवन्प्रतिभाति मे ॥ ०१५ ॥

किं नु वक्ष्यति वार्ष्णेयी वधूर्मे मधुसूदनम् ।
द्वारकावासिनी कृष्णमितः प्रतिगतं हरिम्  ॥ ०१६  ॥

द्रौपदी हतपुत्रेयं कृपणा हतबान्धवा ।
अस्मत्प्रियहिते युक्ता भूयः पीडयतीव माम्  ॥ ०१७  ॥

इदमन्यच्च भगवन्यत्त्वां वक्ष्यामि नारद ।
मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः  ॥ ०१८  ॥

योऽसौ नागायुतबलो लोकेऽप्रतिरथो रणे ।
सिंहखेलगतिर्धीमान्घृणी दान्तो यतव्रतः  ॥ ०१९  ॥

आश्रयो धार्तराष्ट्राणां मानी तीक्ष्णपराक्रमः ।
अमर्षी नित्यसंरम्भी क्षेप्तास्माकं रणे रणे  ॥ ०२०  ॥

शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः ।
गूढोत्पन्नः सुतः कुन्त्या भ्रातास्माकं च सोदरः  ॥ ०२१  ॥

तोयकर्मणि यं कुन्ती कथयामास सूर्यजम् ।
पुत्रं सर्वगुणोपेतमवकीर्णं जले पुरा  ॥ ०२२  ॥

यं सूतपुत्रं लोकोऽयं राधेयं चाप्यमन्यत ।
स ज्येष्ठपुत्रः कुन्त्या वै भ्रातास्माकं च मातृजः  ॥ ०२३  ॥

अजानता मया संख्ये राज्यलुब्धेन घातितः ।
तन्मे दहति गात्राणि तूलराशिमिवानलः  ॥ ०२४  ॥

न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः ।
नाहं न भीमो न यमौ स त्वस्मान्वेद सुव्रतः  ॥ ०२५  ॥

गता किल पृथा तस्य सकाशमिति नः श्रुतम् ।
अस्माकं शमकामा वै त्वं च पुत्रो ममेत्यथ ॥ ०२६ ॥

पृथाया न कृतः कामस्तेन चापि महात्मना ।
अतिपश्चादिदं मातर्यवोचदिति नः श्रुतम् ॥ ०२७ ॥

न हि शक्ष्याम्यहं त्यक्तुं नृपं दुर्योधनं रणे ।
अनार्यं च नृशंसं च कृतघ्नं च हि मे भवेत् ॥ ०२८ ॥

युधिष्ठिरेण संधिं च यदि कुर्यां मते तव ।
भीतो रणे श्वेतवाहादिति मां मंस्यते जनः ॥ ०२९ ॥

सोऽहं निर्जित्य समरे विजयं सहकेशवम् ।
संधास्ये धर्मपुत्रेण पश्चादिति च सोऽब्रवीत् ॥ ०३० ॥

तमवोचत्किल पृथा पुनः पृथुलवक्षसम् ।
चतुर्णामभयं देहि कामं युध्यस्व फल्गुनम् ॥ ०३१ ॥

सोऽब्रवीन्मातरं धीमान्वेपमानः कृताञ्जलिः ।
प्राप्तान्विषह्यांश्चतुरो न हनिष्यामि ते सुतान् ॥ ०३२ ॥

पञ्चैव हि सुता मातर्भविष्यन्ति हि ते ध्रुवम् ।
सकर्णा वा हते पार्थे सार्जुना वा हते मयि ॥ ०३३ ॥

तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत् ।
भ्रातृणां स्वस्ति कुर्वीथा येषां स्वस्ति चिकीर्षसि ॥ ०३४ ॥

तमेवमुक्त्वा तु पृथा विसृज्योपययौ गृहान् ।
सोऽर्जुनेन हतो वीरो भ्राता भ्रात्रा सहोदरः ॥ ०३५ ॥

न चैव विवृतो मन्त्रः पृथायास्तस्य वा मुने ।

अथ शूरो महेष्वासः पार्थेनासौ निपातितः ॥ ०३६ ॥

अहं त्वज्ञासिषं पश्चात्स्वसोदर्यं द्विजोत्तम ।
पूर्वजं भ्रातरं कर्णं पृथाया वचनात्प्रभो ॥ ०३७ ॥

तेन मे दूयतेऽतीव हृदयं भ्रातृघातिनः ।
कर्णार्जुनसहायोऽहं जयेयमपि वासवम् ॥ ०३८ ॥

सभायां क्लिश्यमानस्य धार्तराष्ट्रैर्दुरात्मभिः ।
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा प्रशाम्यति ॥ ०३९ ॥

यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदयाः ।
सभायां गदतो द्यूते दुर्योधनहितैषिणः ॥ ०४० ॥

तदा नश्यति मे क्रोधः पादौ तस्य निरीक्ष्य ह ।
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ॥ ०४१ ॥

सादृश्यहेतुमन्विच्छन्पृथायास्तव चैव ह ।
कारणं नाधिगच्छामि कथञ्चिदपि चिन्तयन् ॥ ०४२ ॥

कथं नु तस्य सङ्ग्रामे पृथिवी चक्रमग्रसत् ।
कथं च शप्तो भ्राता मे तत्त्वं वक्तुमिहार्हसि ॥ ०४३ ॥

श्रोतुमिच्छामि भगवंस्त्वत्तः सर्वं यथातथम् ।
भवान्हि सर्वविद्विद्वा.ण्ल्लोके वेद कृताकृतम् ॥ ०४४ ॥

# अध्याय ००२

वैशंपायन उवाच ॥

स एवमुक्तस्तु मुनिर्नारदो वदतां वरः ।
कथयामास तत्सर्वं यथा शप्तः स सूतजः ॥ ००१ ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
न कर्णार्जुनयोः किञ्चिदविषह्यं भवेद्रणे ॥ ००२ ॥

गुह्यमेतत्तु देवानां कथयिष्यामि ते नृप ।
तन्निबोध महाराज यथा वृत्तमिदं पुरा ॥ ००३ ॥

क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो ।
संघर्षजननस्तस्मात्कन्यागर्भो विनिर्मितः ॥ ००४ ॥

स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः ।
चकाराङ्गिरसां श्रेष्ठे धनुर्वेदं गुरौ तव ॥ ००५ ॥

स बलं भीमसेनस्य फल्गुनस्य च लाघवम् ।
बुद्धिं च तव राजेन्द्र यमयोर्विनयं तथा ॥ ००६ ॥

सख्यं च वासुदेवेन बाल्ये गाण्डिवधन्वनः ।
प्रजानामनुरागं च चिन्तयानो व्यदह्यत ॥ ००७ ॥

स सख्यमगमद्बाल्ये राज्ञा दुर्योधनेन वै ।
युष्माभिर्नित्यसंद्विष्टो दैवाच्चापि स्वभावतः ॥ ००८ ॥

विद्याधिकमथालक्ष्य धनुर्वेदे धनञ्जयम् ।
द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् ॥ ००९ ॥

ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम् ।
अर्जुनेन समो युद्धे भवेयमिति मे मतिः ॥ ०१० ॥

समः पुत्रेषु च स्नेहः शिष्येषु च तव ध्रुवम् ।
त्वत्प्रसादान्न मां ब्रूयुरकृतास्त्रं विचक्षणाः ॥ ०११ ॥

द्रोणस्तथोक्तः कर्णेन सापेक्षः फल्गुनं प्रति ।
दौरात्म्यं चापि कर्णस्य विदित्वा तमुवाच ह ॥ ०१२ ॥

ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः ।
क्षत्रियो वा तपस्वी यो नान्यो विद्यात्कथञ्चन ॥ ०१३ ॥

इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च ।
जगाम सहसा रामं महेन्द्रं पर्वतं प्रति ॥ ०१४ ॥

स तु राममुपागम्य शिरसाभिप्रणम्य च ।
ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यगच्छत ॥ ०१५ ॥

रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्वशः ।
उष्यतां स्वागतं चेति प्रीतिमांश्चाभवद्भृशम् ॥ ०१६ ॥

तत्र कर्णस्य वसतो महेन्द्रे पर्वतोत्तमे ।
गन्धर्वै राक्षसैर्यक्षैर्देवैश्चासीत्समागमः ॥ ०१७ ॥

स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि ।
प्रियश्चाभवदत्यर्थं देवगन्धर्वरक्षसाम् ॥ ०१८ ॥

स कदाचित्समुद्रान्ते विचरन्नाश्रमान्तिके ।
एकः खड्गधनुष्पाणिः परिचक्राम सूतजः ॥ ०१९ ॥

सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः ।

जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया ॥ ०२० ॥

तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत् ।
कर्णः प्रसादयंश्चैनमिदमित्यब्रवीद्वचः ॥ ०२१ ॥

अबुद्धिपूर्वं भगवन्धेनुरेषा हता तव ।
मया तत्र प्रसादं मे कुरुष्वेति पुनः पुनः ॥ ०२२ ॥

तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्निव ।
दुराचार वधार्हस्त्वं फलं प्राप्नुहि दुर्मते ॥ ०२३ ॥

येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम् ।
युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति ॥ ०२४ ॥

ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेतसः ।
पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम ॥ ०२५ ॥

यथेयं गौर्हता मूढ प्रमत्तेन त्वया मम ।
प्रमत्तस्यैवमेवान्यः शिरस्ते पातयिष्यति ॥ ०२६ ॥

ततः प्रसादयामास पुनस्तं द्विजसत्तमम् ।
गोभिर्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् ॥ ०२७ ॥

नेदं मद्व्याहृतं कुर्यात्सर्वलोकोऽपि वै मृषा ।
गच्छ वा तिष्ठ वा यद्वा कार्यं ते तत्समाचर ॥ ०२८ ॥

इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः ।
राममभ्यागमद्भीतस्तदेव मनसा स्मरन् ॥ ०२९ ॥

# अध्याय ००३

नारद उवाच ॥

कर्णस्य बाहुवीर्येण प्रश्रयेण दमेन च ।
तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा ॥ ००१ ॥

तस्मै स विधिवत्कृत्स्नं ब्रह्मास्त्रं सनिवर्तनम् ।
प्रोवाचाखिलमव्यग्रं तपस्वी सुतपस्विने ॥ ००२ ॥

विदितास्त्रस्ततः कर्णो रममाणोऽऽश्रमे भृगोः ।
चकार वै धनुर्वेदे यत्नमद्भुतविक्रमः ॥ ००३ ॥

ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात् ।
कर्णेन सहितो धीमानुपवासेन कर्शितः ॥ ००४ ॥

सुष्वाप जामदग्न्यो वै विस्रम्भोत्पन्नसौहृदः ।
कर्णस्योत्सङ्ग आधाय शिरः क्लान्तमना गुरुः ॥ ००५ ॥

अथ कृमिः श्लेष्ममयो मांसशोणितभोजनः ।
दारुणो दारुणस्पर्शः कर्णस्याभ्याशमागमत् ॥ ००६ ॥

स तस्योरुमथासाद्य बिभेद रुधिराशनः ।
न चैनमशकत्क्षेप्तुं हन्तुं वापि गुरोर्भयात् ॥ ००७ ॥

संदश्यमानोऽपि तथा कृमिणा तेन भारत ।
गुरुप्रबोधशङ्की च तमुपैक्षत सूतजः ॥ ००८ ॥

कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य ताम् ।
अकम्पन्नव्यथंश्चैव धारयामास भार्गवम् ॥ ००९ ॥

यदा तु रुधिरेणाङ्गे परिस्पृष्टो भृगूद्वहः ।
तदाबुध्यत तेजस्वी संतप्तश्चेदमब्रवीत् ॥ ०१० ॥

अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया ।
कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ॥ ०११ ॥

तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम् ।
ददर्श रामस्तं चापि कृमिं सूकरसंनिभम् ॥ ०१२ ॥

अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतम् ।
रोमभिः संनिरुद्धाङ्गमलर्कं नाम नामतः ॥ ०१३ ॥

स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत् ।
तस्मिन्नेवासृक्संक्लिन्ने तदद्भुतमिवाभवत् ॥ ०१४ ॥

ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान् ।
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ॥ ०१५ ॥

स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः ।
स्वस्ति ते भृगुशार्दूल गमिष्यामि यथागतम् ॥ ०१६ ॥

मोक्षितो नरकादस्मि भवता मुनिसत्तम ।
भद्रं च तेऽस्तु नन्दिश्च प्रियं मे भवता कृतम् ॥ ०१७ ॥

तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान् ।
कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् ॥ ०१८ ॥

सोऽब्रवीदहमासं प्राग्गृत्सो नाम महासुरः ।
पुरा देवयुगे तात भृगोस्तुल्यवया इव ॥ ०१९ ॥

सोऽहं भृगोः सुदयितां भार्यामपहरं बलात् ।

महर्षेरभिशापेन कृमिभूतोऽपतं भुवि ॥ ०२० ॥

अब्रवीत्तु स मां क्रोधात्तव पूर्वपितामहः ।
मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे ॥ ०२१ ॥

शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवम् ।
भविता भार्गवे राम इति मामब्रवीद्भृगुः ॥ ०२२ ॥

सोऽहमेतां गतिं प्राप्तो यथा नकुशलं तथा ।
त्वया साधो समागम्य विमुक्तः पापयोनितः ॥ ०२३ ॥

एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः ।
रामः कर्णं तु सक्रोधमिदं वचनमब्रवीत् ॥ ०२४ ॥

अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत् ।
क्षत्रियस्यैव ते धैर्यं कामया सत्यमुच्यताम् ॥ ०२५ ॥

तमुवाच ततः कर्णः शापभीतः प्रसादयन् ।
ब्रह्मक्षत्रान्तरे सूतं जातं मां विद्धि भार्गव ॥ ०२६ ॥

राधेयः कर्ण इति मां प्रवदन्ति जना भुवि ।
प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव ॥ ०२७ ॥

पिता गुरुर्न संदेहो वेदविद्याप्रदः प्रभुः ।
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ॥ ०२८ ॥

तमुवाच भृगुश्रेष्ठः सरोषः प्रहसन्निव ।
भूमौ निपतितं दीनं वेपमानं कृताञ्जलिम् ॥ ०२९ ॥

यस्मान्मिथ्योपचरितो अस्त्रलोभादिह त्वया ।
तस्मादेतद्धि ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ॥ ०३० ॥

अन्यत्र वधकालात्ते सदृशेन समेयुषः ।
अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत्कदाचन ॥ ०३१ ॥

गच्छेदानीं न ते स्थानमनृतस्येह विद्यते ।
न त्वया सदृशो युद्धे भविता क्षत्रियो भुवि ॥ ०३२ ॥

एवमुक्तस्तु रामेण न्यायेनोपजगाम सः ।
दुर्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ॥ ०३३ ॥

---

# अध्याय ००४

नारद उवाच ॥

कर्णस्तु समवाप्यैतदस्त्रं भार्गवनन्दनात् ।
दुर्योधनेन सहितो मुमुदे भरतर्षभ ॥ ००१ ॥

ततः कदाचिद्राजानः समाजग्मुः स्वयंवरे ।
कलिङ्गविषये राजन्राज्ञश्चित्राङ्गदस्य च ॥ ००२ ॥

श्रीमद्राजपुरं नाम नगरं तत्र भारत ।
राजानः शतशस्तत्र कन्यार्थं समुपागमन् ॥ ००३ ॥

श्रुत्वा दुर्योधनस्तत्र समेतान्सर्वपार्थिवान् ।
रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ॥ ००४ ॥

ततः स्वयंवरे तस्मिन्संप्रवृत्ते महोत्सवे ।

समापेतुर्नृपतयः कन्यार्थे नृपसत्तम  ॥ ००५  ॥

शिशुपालो जरासंधो भीष्मको वक्र एव च ।
कपोतरोमा नीलश्च रुक्मी च दृढविक्रमः  ॥ ००६  ॥

सृगालश्च महाराज स्त्रीराज्याधिपतिश्च यः ।
अशोकः शतधन्वा च भोजो वीरश्च नामतः  ॥ ००७  ॥

एते चान्ये च बहवो दक्षिणां दिशमाश्रिताः ।
म्लेच्छाचार्याश्च राजानः प्राच्योदीच्याश्च भारत  ॥ ००८  ॥

काञ्चनाङ्गदिनः सर्वे बद्धजाम्बूनदस्रजः ।
सर्वे भास्वरदेहाश्च व्याघ्रा इव मदोत्कटाः  ॥ ००९  ॥

ततः समुपविष्टेषु तेषु राजसु भारत ।
विवेश रङ्गं सा कन्या धात्रीवर्षधरान्विता  ॥ ०१०  ॥

ततः संश्राव्यमाणेषु राज्ञां नामसु भारत ।
अत्यक्रामद्धार्तराष्ट्रं सा कन्या वरवर्णिनी  ॥ ०११  ॥

दुर्योधनस्तु कौरव्यो नामर्षयत लङ्घनम् ।
प्रत्यषेधच्च तां कन्यामसत्कृत्य नराधिपान्  ॥ ०१२  ॥

स वीर्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः ।
रथमारोप्य तां कन्यामाजुहाव नराधिपान्  ॥ ०१३  ॥

तमन्वयाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान् ।
कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ  ॥ ०१४  ॥

ततो विमर्दः सुमहान्राज्ञामासीद्युधिष्ठिर ।
संनह्यतां तनुत्राणि रथान्योजयतामपि  ॥ ०१५  ॥

तेऽभ्यधावन्त सङ्क्रुद्धाः कर्णदुर्योधनावुभौ ।
शरवर्षाणि मुञ्चन्तो मेघाः पर्वतयोरिव ॥ ०१६ ॥

कर्णस्तेषामापततामेकैकेन क्षुरेण ह ।
धनूंषि सशरावापान्यपातयत भूतले ॥ ०१७ ॥

ततो विधनुषः कांश्चित्कांश्चिदुद्यतकार्मुकान् ।
कांश्चिदुद्वहतो बाणान्रथशक्तिगदास्तथा ॥ ०१८ ॥

लाघवादाकुलीकृत्य कर्णः प्रहरतां वरः ।
हतसूतांश्च भूयिष्ठानवजिग्ये नराधिपान् ॥ ०१९ ॥

ते स्वयं त्वरयन्तोऽश्वान्याहि याहीति वादिनः ।
व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः ॥ ०२० ॥

दुर्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा ।
हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् ॥ ०२१ ॥

---

# अध्याय ००५

नारद उवाच ॥

आविष्कृतबलं कर्णं ज्ञात्वा राजा तु मागधः ।
आह्वयद्द्वैरथेनाजौ जरासंधो महीपतिः ॥ ००१ ॥

तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः ।
युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः ॥ ००२ ॥

क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ ।
बाहुभिः समसज्जेतामुभावपि बलान्वितौ ॥ ००३ ॥

बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः ।
बिभेद संधिं देहस्य जरया श्लेषितस्य ह ॥ ००४ ॥

स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः ।
प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य भारत ॥ ००५ ॥

प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ ।
अङ्गेषु नरशार्दूल स राजासीत्सपत्नजित् ॥ ००६ ॥

पालयामास चम्पां तु कर्णः परबलार्दनः ।
दुर्योधनस्यानुमते तवापि विदितं तथा ॥ ००७ ॥

एवं शस्त्रप्रतापेन प्रथितः सोऽभवत्क्षितौ ।
त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्मकुण्डले ॥ ००८ ॥

स दिव्ये सहजे प्रादात्कुण्डले परमार्चिते ।
सहजं कवचं चैव मोहितो देवमायया ॥ ००९ ॥

विमुक्तः कुण्डलाभ्यां च सहजेन च वर्मणा ।
निहतो विजयेनाजौ वासुदेवस्य पश्यतः ॥ ०१० ॥

ब्राह्मणस्याभिशापेन रामस्य च महात्मनः ।
कुन्त्याश्च वरदानेन मायया च शतक्रतोः ॥ ०११ ॥

भीष्मावमानात्संख्यायां रथानामर्धकीर्तनात् ।
शल्यात्तेजोवधाच्चापि वासुदेवनयेन च ॥ ०१२ ॥

रुद्रस्य देवराजस्य यमस्य वरुणस्य च ।
कुबेरद्रोणयोश्चैव कृपस्य च महात्मनः ॥ ०१३ ॥

अस्त्राणि दिव्यान्यादाय युधि गाण्डीवधन्वना ।
हतो वैकर्तनः कर्णो दिवाकरसमद्युतिः ॥ ०१४ ॥

एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः ।
न शोच्यः स नरव्याघ्रो युद्धे हि निधनं गतः ॥ ०१५ ॥

---

# अध्याय ००६

वैशंपायन उवाच ॥

एतावदुक्त्वा देवर्षिर्विरराम स नारदः ।
युधिष्ठिरस्तु राजर्षिर्दध्यौ शोकपरिप्लुतः ॥ ००१ ॥

तं दीनमनसं वीरमधोवदनमातुरम् ।
निःश्वसन्तं यथा नागं पर्यश्रुनयनं तथा ॥ ००२ ॥

कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना ।
अब्रवीन्मधुराभाषा काले वचनमर्थवत् ॥ ००३ ॥

युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि ।
जहि शोकं महाप्राज्ञ शृणु चेदं वचो मम ॥ ००४ ॥

यतितः स मया पूर्वं भ्रात्र्यं ज्ञापयितुं तव ।
भास्करेण च देवेन पित्रा धर्मभृतां वर ॥ ००५ ॥

यद्वाच्यं हितकामेन सुहृदा भूतिमिच्छता ।
तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ॥ ००६ ॥

न चैनमशकद्धानुरहं वा स्नेहकारणैः ।
पुरा प्रत्यनुनेतुं वा नेतुं वाप्येकतां त्वया ॥ ००७ ॥

ततः कालपरीतः स वैरस्योद्धुक्षणे रतः ।
प्रतीपकारी युष्माकमिति चोपेक्षितो मया ॥ ००८ ॥

इत्युक्तो धर्मराजस्तु मात्रा बाष्पाकुलेक्षणः ।
उवाच वाक्यं धर्मात्मा शोकव्याकुलचेतनः ॥ ००९ ॥

भवत्या गूढमन्त्रत्वात्पीडितोऽस्मीत्युवाच ताम् ।
शशाप च महातेजाः सर्वलोकेषु च स्त्रियः ॥ ०१० ॥

न गुह्यं धारयिष्यन्तीत्यतिदुःखसमन्वितः ॥ ०१० ॥

स राजा पुत्रपौत्राणां संबन्धिसुहृदां तथा ।
स्मरन्नुद्विग्नहृदयो बभूवास्वस्थचेतनः ॥ ०११ ॥

ततः शोकपरीतात्मा सधूम इव पावकः ।
निर्वेदमकरोद्धीमान्राजा संतापपीडितः ॥ ०१२ ॥

---

# अध्याय ००७

वैशंपायन उवाच ॥

युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः ।
शुशोच दुःखसंतप्तः स्मृत्वा कर्णं महारथम् ॥ ००१ ॥

आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनः पुनः ।
दृष्ट्वार्जुनमुवाचेदं वचनं शोककर्शितः ॥ ००२ ॥

यद्भैक्षमाचरिष्याम वृष्ण्यन्धकपुरे वयम् ।
ज्ञातीन्निष्पुरुषान्कृत्वा नेमां प्राप्स्याम दुर्गतिम् ॥ ००३ ॥

अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः किल ।
आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ॥ ००४ ॥

धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ।
धिगस्त्वमर्षं येनेमामापदं गमिता वयम् ॥ ००५ ॥

साधु क्षमा दमः शौचमवैरोध्यममत्सरः ।
अहिंसा सत्यवचनं नित्यानि वनचारिणाम् ॥ ००६ ॥

वयं तु लोभान्मोहाच्च स्तम्भं मानं च संश्रिताः ।
इमामवस्थामापन्ना राज्यलेशबुभुक्षया ॥ ००७ ॥

त्रैलोक्यस्यापि राज्येन नास्मान्कश्चित्प्रहर्षयेत् ।
बान्धवान्निहतान्दृष्ट्वा पृथिव्यामामिषैषिणः ॥ ००८ ॥

ते वयं पृथिवीहेतोरवध्यान्पृथिवीसमान् ।
संपरित्यज्य जीवामो हीनार्था हतबान्धवाः ॥ ००९ ॥

आमिषे गृध्यमानानामशुनां नः शुनामिव ।
आमिषं चैव नो नष्टमामिषस्य च भोजिनः ॥ ०१० ॥

न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
न गवाश्वेन सर्वेण ते त्याज्या य इमे हताः ॥ ०११ ॥

संयुक्ताः काममन्युभ्यां क्रोधामर्षसमन्विताः ।
मृत्युयानं समारुह्य गता वैवस्वतक्षयम् ॥ ०१२ ॥

बहु कल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा ब्रह्मचर्येण वन्दनेन तितिक्षया ॥ ०१३ ॥

उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः ।
लभन्ते मातरो गर्भांस्तान्मासान्दश बिभ्रति ॥ ०१४ ॥

यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि ।
संभाविता जातबलास्ते दद्युर्यदि नः सुखम् ॥ ०१५ ॥

इह चामुत्र चैवेति कृपणाः फलहेतुकाः ॥ ०१५ ॥

तासामयं समारम्भो निवृत्तः केवलोऽफलः ।
यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः ॥ ०१६ ॥

अभुक्त्वा पार्थिवान्भोगानृणान्यनवदाय च ।
पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम् ॥ ०१७ ॥

यदैषामङ्ग पितरौ जातौ काममयाविव ।
सञ्जातबलरूपेषु तदैव निहता नृपाः ॥ ०१८ ॥

संयुक्ताः काममन्युभ्यां क्रोधहर्षासमञ्जसाः ।
न ते जन्मफलं किञ्चिद्भोक्तारो जातु कर्हिचित् ॥ ०१९ ॥

पाञ्चालानां कुरूणां च हता एव हि येऽहताः ।
ते वयं त्वधमा.ण्ल्लोकान्प्रपद्येम स्वकर्मभिः ॥ ०२० ॥

वयमेवास्य लोकस्य विनाशे कारणं स्मृताः ।
धृतराष्ट्रस्य पुत्रेण निकृत्या प्रत्यपत्स्महि ॥ ०२१ ॥

सदैव निकृतिप्रज्ञो द्वेष्टा मायोपजीवनः ।
मिथ्यावृत्तः स सततमस्मास्वनपकारिषु ॥ ०२२ ॥

अंशकामा वयं ते च न चास्माभिर्न तैर्जितम् ।
न तैर्भुक्तेयमवनिर्न नार्यो गीतवादितम् ॥ ०२३ ॥

नामात्यसमितौ कथ्यं न च श्रुतवतां श्रुतम् ।
न रत्नानि परार्ध्यानि न भूर्न द्रविणागमः ॥ ०२४ ॥

ऋद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः ।
धृतराष्ट्रस्य नृपतेः सौबलेन निवेदितः ॥ ०२५ ॥

तं पिता पुत्रगृद्धित्वादनुमेनेऽनये स्थितम् ।
अनवेक्ष्यैव पितरं गाङ्गेयं विदुरं तथा ॥ ०२६ ॥

असंशयं धृतराष्ट्रो यथैवाहं तथा गतः ॥ ०२६ ॥

अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम् ।
पतितो यशसो दीप्ताद्घातयित्वा सहोदरान् ॥ ०२७ ॥

इमौ वृद्धौ च शोकाग्नौ प्रक्षिप्य स सुयोधनः ।
अस्मत्प्रद्वेषसंयुक्तः पापबुद्धिः सदैव हि ॥ ०२८ ॥

को हि बन्धुः कुलीनः संस्तथा ब्रूयात्सुहृज्जने ।
यथासावुक्तवान्क्षुद्रो युयुत्सुर्वृष्णिसंनिधौ ॥ ०२९ ॥

आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः ।

प्रदहन्तो दिशः सर्वास्तेजसा भास्करा इव ॥ ०३० ॥

सोऽस्माकं वैरपुरुषो दुर्मन्त्रिप्रग्रहं गतः ।
दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम् ॥ ०३१ ॥

अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यताम् ॥ ०३१ ॥

कुलस्यास्यान्तकरणं दुर्मतिं पापकारिणम् ।
राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ॥ ०३२ ॥

हताः शूराः कृतं पापं विषयः स्वो विनाशितः ।
हत्वा नो विगतो मन्युः शोको मां रुन्धयत्ययम् ॥ ०३३ ॥

धनञ्जय कृतं पापं कल्याणेनोपहन्यते ।
त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ॥ ०३४ ॥

त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यदा ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ०३५ ॥

स धनञ्जय निर्द्वंद्वो मुनिर्ज्ञानसमन्वितः ।
वनमामन्त्र्य वः सर्वान्गमिष्यामि परंतप ॥ ०३६ ॥

न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः ।
परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ॥ ०३७ ॥

मया निसृष्टं पापं हि परिग्रहमभीप्सता ।
जन्मक्षयनिमित्तं च शक्यं प्राप्तुमिति श्रुतिः ॥ ०३८ ॥

स परिग्रहमुत्सृज्य कृत्स्नं राज्यं तथैव च ।
गमिष्यामि विनिर्मुक्तो विशोको विज्वरस्तथा ॥ ०३९ ॥

प्रशाधि त्वमिमामुर्वीं क्षेमां निहतकण्टकाम् ।
न ममार्थोऽस्ति राज्येन न भोगैर्वा कुरूत्तम ॥ ०४० ॥

एतावदुक्त्वा वचनं धर्मराजो युधिष्ठिरः ।
व्युपारमत्ततः पार्थः कनीयान्प्रत्यभाषत ॥ ०४१ ॥

---

# अध्याय ००८

वैशंपायन उवाच ॥

अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी ।
अभिनीततरं वाक्यं दृढवादपराक्रमः ॥ ००१ ॥

दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
स्मयमानो महातेजाः सृक्किणी संलिहन्मुहुः ॥ ००२ ॥

अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम् ।
यत्कृत्वामानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ॥ ००३ ॥

शत्रून्हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम् ।
हतामित्रः कथं सर्वं त्यजेथा बुद्धिलाघवात् ॥ ००४ ॥

क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्छितः ॥ ००५ ॥

यो ह्याजिजीविषेद्भैक्ष्यं कर्मणा नैव केनचित् ।
समारम्भान्बुभूषेत हतस्वस्तिरकिञ्चनः ॥ ००६ ॥

सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ॥ ००६ ॥

कापालीं नृप पापिष्ठां वृत्तिमास्थाय जीवतः ।
संत्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति ॥ ००७ ॥

सर्वारम्भान्समुत्सृज्य हतस्वस्तिरकिञ्चनः ।
कस्मादाशंससे भैक्ष्यं चर्तुं प्राकृतवत्प्रभो ॥ ००८ ॥

अस्मिन्राजकुले जातो जित्वा कृत्स्नां वसुंधराम् ।
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ॥ ००९ ॥

यदीमानि हवींषीह विमथिष्यन्त्यसाधवः ।
भवता विप्रहीणानि प्राप्तं त्वामेव किल्बिषम् ॥ ०१० ॥

आकिञ्चन्यमनाशास्यमिति वै नहुषोऽब्रवीत् ।
कृत्या नृशंसा ह्यधने धिगस्त्वधनतामिह ॥ ०११ ॥

अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥ ०१२ ॥

धर्मं संहरते तस्य धनं हरति यस्य यः ।
ह्रियमाणे धने राजन्वयं कस्य क्षमेमहि ॥ ०१३ ॥

अभिशस्तवत्प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥ ०१४ ॥

पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते ।
विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥ ०१५ ॥

अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।

क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ०१६ ॥

अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्रा हि लोकस्य विनार्थं न प्रसिध्यति ॥ ०१७ ॥

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
व्युच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ०१८ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमा.ण्ल्लोके यस्यार्थाः स च पण्डितः ॥ ०१९ ॥

अधनेनार्थकामेन नार्थः शक्यो विवित्सता ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ ०२० ॥

धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ ०२१ ॥

धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्तते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ ०२२ ॥

नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलाद्गिरिनदी यथा ॥ ०२३ ॥

यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥ ०२४ ॥

अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन्किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः ॥ ०२५ ॥

न चेद्धर्तव्यमन्यस्य कथं तद्धर्ममारभेत् ।
एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥ ०२६ ॥

अध्येतव्या त्रयी विद्या भवितव्यं विपश्चिता ।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ ०२७ ॥

द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः ।
इति देवा व्यवसिता वेदवादाश्च शाश्वताः ॥ ०२८ ॥

अधीयन्ते तपस्यन्ति यजन्ते याजयन्ति च ।
कृत्स्नं तदेव च श्रेयो यदप्याददतेऽन्यतः ॥ ०२९ ॥

न पश्यामोऽनपहृतं धनं किञ्चित्क्वचिद्वयम् ।
एवमेव हि राजानो जयन्ति पृथिवीमिमाम् ॥ ०३० ॥

जित्वा ममत्वं ब्रुवते पुत्रा इव पितुर्धने ।
राजर्षयो जितस्वर्गा धर्मो ह्येषां निगद्यते ॥ ०३१ ॥

यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश ।
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ॥ ०३२ ॥

आसीदियं दिलीपस्य नृगस्य नहुषस्य च ।
अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥ ०३३ ॥

स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदक्षिणः ।
तं चेन्न यजसे राजन्प्राप्तस्त्वं देवकिल्बिषम् ॥ ०३४ ॥

येषां राजाश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथं पूताः सर्वे भवन्ति ते ॥ ०३५ ॥

विश्वरूपो महादेवः सर्वमेधे महामखे ।
जुहाव सर्वभूतानि तथैवात्मानमात्मना ॥ ०३६ ॥

शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम ।
महान्दाशरथः पन्था मा राजन्कापथं गमः ॥ ०३७ ॥

---

# अध्याय ००९

युधिष्ठिर उवाच ॥

मुहूर्तं तावदेकाग्रो मनःश्रोत्रेऽन्तरात्मनि ।
धारयित्वापि ते श्रुत्वा रोचतां वचनं मम ॥ ००१ ॥

सार्थगम्यमहं मार्गं न जातु त्वत्कृते पुनः ।
गच्छेयं तद्गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ ००२ ॥

क्षेम्यश्चैकाकिना गम्यः पन्थाः कोऽस्तीति पृच्छ माम् ।
अथ वा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु ॥ ००३ ॥

हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः ।
अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ॥ ००४ ॥

जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चर्मचीरजटाधरः ॥ ००५ ॥

शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः ।
तपसा विधिदृष्टेन शरीरमुपशोषयन् ॥ ००६ ॥

मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः ।
मुदितानामरण्येषु वसतां मृगपक्षिणाम् ॥ ००७ ॥

आजिघ्रन्पेशलान्गन्धान्फुल्लानां वृक्षवीरुधाम् ।
नानारूपान्वने पश्यन्रमणीयान्वनौकसः ॥ ००८ ॥

वानप्रस्थजनस्यापि दर्शनं कुलवासिनः ।
नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनाम् ॥ ००९ ॥

एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ ०१० ॥

एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनम् ॥ ०११ ॥

अथ वैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्भैक्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥ ०१२ ॥

पांसुभिः समवच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ ०१३ ॥

न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वंद्वो निष्परिग्रहः ॥ ०१४ ॥

आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः काञ्चित्संविदं जातु केनचित् ॥ ०१५ ॥

जङ्गमाजङ्गमान्सर्वान्नविहिंसंश्चतुर्विधान् ।
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति ॥ ०१६ ॥

न चाप्यवहसन्कञ्चिन्न कुर्वन्भ्रुकुटीं क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ ०१७ ॥

अपृच्छन्कस्यचिन्मार्गं व्रजन्येनैव केनचित् ।

न देशं न दिशं काञ्चिद्गन्तुमिच्छन्विशेषतः ॥ ०१८ ॥

गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुः प्रणिहितो गच्छंस्त्रसस्थावरवर्जकः ॥ ०१९ ॥

स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि ।
द्वंद्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् ॥ ०२० ॥

अल्पं वास्वादु वा भोज्यं पूर्वालाभेन जातु चित् ।
अन्येष्वपि चर.ण्ल्लाभमलाभे सप्त पूरयन् ॥ ०२१ ॥

विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसञ्चारे काले विगतभिक्षुके ॥ ०२२ ॥

एककालं चरन्भैक्ष्यं गृहे द्वे चैव पञ्च च ।
स्पृहापाशान्विमुच्याहं चरिष्यामि महीमिमाम् ॥ ०२३ ॥

न जिजीविषुवत्किञ्चिन्न मुमूर्षुवदाचरन् ।
जीवितं मरणं चैव नाभिनन्दन्न च द्विषन् ॥ ०२४ ॥

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः ॥ ०२५ ॥

याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः ॥ ०२६ ॥

तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः ।
सुपरित्यक्तसङ्कल्पः सुनिर्णिक्तात्मकल्मषः ॥ ०२७ ॥

विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥ ०२८ ॥

वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीम् ।
तृष्णया हि महत्पापमज्ञानादस्मि कारितः ॥ ०२९ ॥

कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः ।
कार्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति ॥ ०३० ॥

आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् ।
प्रतिगृह्णाति तत्पापं कर्तुः कर्मफलं हि तत् ॥ ०३१ ॥

एवं संसारचक्रेऽस्मिन्व्याविद्धे रथचक्रवत् ।
समेति भूतग्रामोऽयं भूतग्रामेण कार्यवान् ॥ ०३२ ॥

जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम् ।
असारमिममस्वन्तं संसारं त्यजतः सुखम् ॥ ०३३ ॥

दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ॥ ०३४ ॥

कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम् ।
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते ॥ ०३५ ॥

तस्मात्प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितम् ।
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम् ॥ ०३६ ॥

एतया सततं वृत्त्या चरन्नेवंप्रकारया ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥ ०३७ ॥

# अध्याय ०१०

भीम उवाच ॥

श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहताबुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ ००१ ॥

आलस्ये कृतचित्तस्य राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥ ००२ ॥

क्षमानुकम्पा कारुण्यमानृशंस्यं न विद्यते ।
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ॥ ००३ ॥

यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कञ्चन ॥ ००४ ॥

भैक्ष्यमेवाचरिष्याम शरीरस्या विमोक्षणात् ।
न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ॥ ००५ ॥

प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥ ००६ ॥

आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः ।
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ॥ ००७ ॥

ते सदोषा हतास्माभी राज्यस्य परिपन्थिनः ।
तान्हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥ ००८ ॥

यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥ ००९ ॥

यथारुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम्  ॥ ०१०  ॥

यथा महान्तमध्वानमाशया पुरुषः पतन् ।
स निराशो निवर्तेत कर्मेदं नस्तथोपमम्  ॥ ०११  ॥

यथा शत्रून्घातयित्वा पुरुषः कुरुसत्तम ।
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथाविधम्  ॥ ०१२  ॥

यथान्नं क्षुधितो लब्ध्वा न भुञ्जीत यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथाविधम्  ॥ ०१३  ॥

वयमेवात्र गर्ह्या हि ये वयं मन्दचेतसः ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत  ॥ ०१४  ॥

वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा  ॥ ०१५  ॥

अगतीन्कागतीनस्मान्नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यन्ति यादृशम्  ॥ ०१६  ॥

आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाभिपरीतेन शत्रुभिर्व्यंसितेन च  ॥ ०१७  ॥

तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चेदं मन्यन्ते सूक्ष्मदर्शिनः  ॥ ०१८  ॥

कथं तस्मात्समुत्पन्नस्तन्निष्ठस्तदुपाश्रयः ।
तदेव निन्दन्नासीत श्रद्धा वान्यत्र गृह्यते  ॥ ०१९  ॥

श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।

वेदवादस्य विज्ञानं सत्याभासमिवानृतम् ॥ ०२० ॥

शक्यं तु मौण्ड्यमास्थाय बिभ्रतात्मानमात्मना ।
धर्मच्छद्म समास्थाय आसितुं न तु जीवितुम् ॥ ०२१ ॥

शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।
अबिभ्रता पुत्रपौत्रान्देवर्षीनतिथीन्पितृन् ॥ ०२२ ॥

नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ।
अथैतेन प्रकारेण पुण्यमाहुर्न ताञ्जनाः ॥ ०२३ ॥

यदि संन्यासतः सिद्धिं राजन्कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ ०२४ ॥

एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं चात्मचारिणः ॥ ०२५ ॥

अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ ०२६ ॥

औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः ।
येषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥ ०२७ ॥

अवेक्षस्व यथा स्वैः स्वैः कर्मभिर्व्यापृतं जगत् ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ ०२८ ॥

# ऋषिशकुनिसंवादः

## अध्याय ०११

अर्जुन उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
तापसैः सह संवादं शक्रस्य भरतर्षभ ॥ ००१ ॥

केचिद्गृहान्परित्यज्य वनमभ्यगमन्द्विजाः ।
अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ॥ ००२ ॥

धर्मोऽयमिति मन्वाना ब्रह्मचर्ये व्यवस्थिताः ।
त्यक्त्वा गृहान्पितृंश्चैव तानिन्द्रोऽन्वकृपायत ॥ ००३ ॥

तानाबभाषे भगवान्पक्षी भूत्वा हिरण्मयः ।
सुदुष्करं मनुष्यैश्च यत्कृतं विघसाशिभिः ॥ ००४ ॥

पुण्यं च बत कर्मैषां प्रशस्तं चैव जीवितम् ।
संसिद्धास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः ॥ ००५ ॥

ऋषय ऊचुः ॥

अहो बतायं शकुनिर्विघसाशान्प्रशंसति ।
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ॥ ००६ ॥

शकुनिरुवाच ॥

नाहं युष्मान्प्रशंसामि पङ्कदिग्धात्रजस्वलान् ।
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ॥ ००७ ॥

ऋषय ऊचुः ॥

इदं श्रेयः परमिति वयमेवाभ्युपास्महे ।
शकुने ब्रूहि यच्छ्रेयो भृशं वै श्रद्दधाम ते ॥ ००८ ॥

शकुनिरुवाच ॥

यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना ।
ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ॥ ००९ ॥

ऋषय ऊचुः ॥

शृणुमस्ते वचस्तात पन्थानो विदितास्तव ।
नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः ॥ ०१० ॥

शकुनिरुवाच ॥

चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥ ०११ ॥

मन्त्रोऽयं जातकर्मादि ब्राह्मणस्य विधीयते ।
जीवतो यो यथाकालं श्मशाननिधनादिति ॥ ०१२ ॥

कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः ।
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ॥ ०१३ ॥

आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ।
मासार्धमासा ऋतव आदित्यशशितारकम् ॥ ०१४ ॥

ईहन्ते सर्वभूतानि तदृतं कर्मसङ्गिनाम् ।
सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् ॥ ०१५ ॥

अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः ।
मूढानामर्थहीनानां तेषामेनस्तु विद्यते ॥ ०१६ ॥

देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान् ।
संत्यज्य मूढा वर्तन्ते ततो यान्त्यश्रुतीपथम् ॥ ०१७ ॥

एतद्वोऽस्तु तपो युक्तं ददानीत्यृषिचोदितम् ।
तस्मात्तदध्यवसतस्तपस्वि तप उच्यते ॥ ०१८ ॥

देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान् ।
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते ॥ ०१९ ॥

देवा वै दुष्करं कृत्वा विभूतिं परमां गताः ।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥ ०२० ॥

तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः ।
कुटुम्बविधिनानेन यस्मिन्सर्वं प्रतिष्ठितम् ॥ ०२१ ॥

एतद्विदुस्तपो विप्रा द्वंद्वातीता विमत्सराः ।
तस्माद्वनं मध्यमं च लोकेषु तप उच्यते ॥ ०२२ ॥

दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः ।
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि ॥ ०२३ ॥

दत्त्वातिथिभ्यो देवेभ्यः पितृभ्यः स्वजनस्य च ।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥ ०२४ ॥

तस्मात्स्वधर्ममास्थाय सुव्रताः सत्यवादिनः ।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥ ०२५ ॥

त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतीर्वर्षा जना दुष्करकारिणः ॥ ०२६ ॥

ततस्ते तद्वचः श्रुत्वा तस्य धर्मार्थसंहितम् ।
उत्सृज्य नास्तिकगतिं गार्हस्थ्यं धर्ममाश्रिताः ॥ ०२७ ॥

तस्मात्त्वमपि दुर्धर्ष धैर्यमालम्ब्य शाश्वतम् ।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम ॥ ०२८ ॥

---

# अध्याय ०१२

वैशंपायन उवाच ॥

अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत् ।
राजानमभिसंप्रेक्ष्य सर्वधर्मभृतां वरम् ॥ ००१ ॥

अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिंदमः ।
व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता ॥ ००२ ॥

विशाखयूपे देवानां सर्वेषामग्नयश्चिताः ।
तस्माद्विद्धि महाराज देवान्कर्मपथि स्थितान् ॥ ००३ ॥

अनास्तिकानास्तिकानां प्राणदाः पितरश्च ये ।
तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव ॥ ००४ ॥

वेदवादापविद्धांस्तु तान्विद्धि भृशनास्तिकान् ॥ ००४ ॥

न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु ।

देवयानेन नाकस्य पृष्ठमाप्नोति भारत ॥ ००५ ॥

अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः ।
ब्राह्मणाः श्रुतिसंपन्नास्तान्निबोध जनाधिप ॥ ००६ ॥

वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ।
कृतात्मसु महाराज स वै त्यागी स्मृतो नरः ॥ ००७ ॥

अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ।
आत्मत्यागी महाराज स त्यागी तामसः प्रभो ॥ ००८ ॥

अनिकेतः परिपतन्वृक्षमूलाश्रयो मुनिः ।
अपाचकः सदा योगी स त्यागी पार्थ भिक्षुकः ॥ ००९ ॥

क्रोधहर्षावनादृत्य पैशुन्यं च विशां पते ।
विप्रो वेदानधीते यः स त्यागी गुरुपूजकः ॥ ०१० ॥

आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः ।
एकतस्ते त्रयो राजन्गृहस्थाश्रम एकतः ॥ ०११ ॥

समीक्षते तु योऽर्थं वै कामं स्वर्गं च भारत ।
अयं पन्था महर्षीणामियं लोकविदां गतिः ॥ ०१२ ॥

इति यः कुरुते भावं स त्यागी भरतर्षभ ।
न यः परित्यज्य गृहान्वनमेति विमूढवत् ॥ ०१३ ॥

यदा कामान्समीक्षेत धर्मवैतंसिकोऽनृजुः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ॥ ०१४ ॥

अभिमानकृतं कर्म नैतत्फलवदुच्यते ।
त्यागयुक्तं महाराज सर्वमेव महाफलम् ॥ ०१५ ॥

शमो दमस्तपो दानं सत्यं शौचमथार्जवम् ।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः ॥ ०१६ ॥

पितृदेवातिथिकृते समारम्भोऽत्र शस्यते ।
अत्रैव हि महाराज त्रिवर्गः केवलं फलम् ॥ ०१७ ॥

एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् ॥ ०१८ ॥

असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः ।
मां यक्ष्यन्तीति शान्तात्मा यज्ञैर्विविधदक्षिणैः ॥ ०१९ ॥

वीरुधश्चैव वृक्षांश्च यज्ञार्थं च तथौषधीः ।
पशूंश्चैव तथा मेध्यान्यज्ञार्थानि हवींषि च ॥ ०२० ॥

गृहस्थाश्रमिणस्तच्च यज्ञकर्म विरोधकम् ।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा ॥ ०२१ ॥

तत्संप्राप्य गृहस्था ये पशुधान्यसमन्विताः ।
न यजन्ते महाराज शाश्वतं तेषु किल्बिषम् ॥ ०२२ ॥

स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथापरे ।
अथापरे महायज्ञान्मनसैव वितन्वते ॥ ०२३ ॥

एवं दानसमाधानं मार्गमातिष्ठतो नृप ।
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः ॥ ०२४ ॥

स रत्नानि विचित्राणि संभृतानि ततस्ततः ।
मखेष्वनभिसंत्यज्य नास्तिक्यमभिजल्पसि ॥ ०२५ ॥

कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ॥ ०२५ ॥

राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ।
य चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः ॥ ०२६ ॥

तैर्यजस्व महाराज शक्रो देवपतिर्यथा ॥ ०२६ ॥

राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥ ०२७ ॥

अश्वान्गाश्चैव दासीश्च करेणूश्च स्वलङ्कृताः ।
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥ ०२८ ॥

अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्यामो विशां पते ॥ ०२९ ॥

अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥ ०३० ॥

अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम् ।
तीर्थेष्वनभिसंत्यज्य प्रव्रजिष्यसि चेदथ ॥ ०३१ ॥

छिन्नाभ्रमिव गन्तासि विलयं मारुतेरितम् ।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥ ०३२ ॥

अन्तर्बहिश्च यत्किञ्चिन्मनोव्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न यो हित्वा प्रतिष्ठते ॥ ०३३ ॥

एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥ ०३४ ॥

निहत्य शत्रूंस्तरसा समृद्धा ;न्शक्रो यथा दैत्यबलानि संख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे ; पूर्वैः स्मृते पार्थिव शिष्टजुष्टे ॥ ०३५ ॥

क्षात्रेण धर्मेण पराक्रमेण ; जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता ; न शोचितव्यं भवताद्य पार्थ ॥ ०३६ ॥

---

# अध्याय ०१३

सहदेव उवाच ॥

न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ ००१ ॥

बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः ।
यो धर्मो यत्सुखं वा स्याद्द्विषतां तत्तथास्तु नः ॥ ००२ ॥

शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथास्तु नः ॥ ००३ ॥

द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥ ००४ ॥

ब्रह्ममृत्यू च तौ राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥ ००५ ॥

अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत ।
भित्त्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥ ००६ ॥

अथापि च सहोत्पत्तिः सत्त्वस्य प्रलयस्तथा ।
नष्टे शरीरे नष्टं स्याद्वृथा च स्यात्क्रियापथः ॥ ००७ ॥

तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥ ००८ ॥

लब्ध्वापि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य जीवितम् ॥ ००९ ॥

अथ वा वसतो राजन्वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते ॥ ०१० ॥

बाह्याभ्यन्तरभूतानां स्वभावं पश्य भारत ।
ये तु पश्यन्ति तद्भावं मुच्यन्ते महतो भयात् ॥ ०११ ॥

भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः ।
दुःखप्रलापानार्तस्य तस्मान्मे क्षन्तुमर्हसि ॥ ०१२ ॥

तथ्यं वा यदि वातथ्यं यन्मयैतत्प्रभाषितम् ।
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम ॥ ०१३ ॥

---

# अध्याय ०१४

वैशंपायन उवाच ॥

अव्याहरति कौन्तेये धर्मराजे युधिष्ठिरे ।
भ्रातॄणां ब्रुवतां तांस्तान्विविधान्वेदनिश्चयान् ॥ ००१ ॥

महाभिजनसंपन्ना श्रीमत्यायतलोचना ।
अभ्यभाषत राजेन्द्रं द्रौपदी योषितां वरा ॥ ००२ ॥

आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम् ।
सिंहशार्दूलसदृशैर्वारणैरिव यूथपम् ॥ ००३ ॥

अभिमानवती नित्यं विशेषेण युधिष्ठिरे ।
लालिता सततं राज्ञा धर्मज्ञा धर्मदर्शिनी ॥ ००४ ॥

आमन्त्र्य विपुलश्रोणी साम्ना परमवल्गुना ।
भर्तारमभिसंप्रेक्ष्य ततो वचनमब्रवीत् ॥ ००५ ॥

इमे ते भ्रातरः पार्थ शुष्यन्त स्तोकका इव ।
वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ ००६ ॥

नन्दयैतान्महाराज मत्तानिव महाद्विपान् ।
उपपन्नेन वाक्येन सततं दुःखभागिनः ॥ ००७ ॥

कथं द्वैतवने राजन्पूर्वमुक्त्वा तथा वचः ।
भ्रातॄनेतान्स्म सहिताञ्शीतवातातपार्दितान् ॥ ००८ ॥

वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् ।
संपूर्णां सर्वकामानामाहवे विजयैषिणः ॥ ००९ ॥

विरथांश्च रथान्कृत्वा निहत्य च महागजान् ।
संस्तीर्य च रथैर्भूमिं ससादिभिररिंदमाः ॥ ०१० ॥

यजतां विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ।
वनवासकृतं दुःखं भविष्यति सुखाय नः ॥ ०११ ॥

इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर ।
कथमद्य पुनर्वीर विनिहंसि मनांस्युत ॥ ०१२ ॥

न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते ।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते ॥ ०१३ ॥

नादण्डः क्षत्रियो भाति नादण्डो भूतिमश्नुते ।
नादण्डस्य प्रजा राज्ञः सुखमेधन्ति भारत ॥ ०१४ ॥

मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैष धर्मः स्यान्न राज्ञो राजसत्तम ॥ ०१५ ॥

असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥ ०१६ ॥

यस्मिन्क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥ ०१७ ॥

न श्रुतेन न दानेन न सान्त्वेन न चेज्यया ।
त्वयेयं पृथिवी लब्धा नोत्कोचेन तथाप्युत ॥ ०१८ ॥

यत्तद्बलममित्राणां तथा वीरसमुद्यतम् ।
हस्त्यश्वरथसंपन्नं त्रिभिरङ्गैर्महत्तरम् ॥ ०१९ ॥

रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च ।
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुंधराम् ॥ ०२० ॥

जम्बूद्वीपो महाराज नानाजनपदायुतः ।
त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो ॥ ०२१ ॥

जम्बूद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप ।

अपरेण महामेरोर्दण्डेन मृदितस्त्वया ॥ ०२२ ॥

क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नराधिप ।
पूर्वेण तु महामेरोर्दण्डेन मृदितस्त्वया ॥ ०२३ ॥

उत्तरेण महामेरोः शाकद्वीपेन संमितः ।
भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया ॥ ०२४ ॥

द्वीपाश्च सान्तरद्वीपा नानाजनपदालयाः ।
विगाह्य सागरं वीर दण्डेन मृदितास्त्वया ॥ ०२५ ॥

एतान्यप्रतिमानि त्वं कृत्वा कर्माणि भारत ।
न प्रीयसे महाराज पूज्यमानो द्विजातिभिः ॥ ०२६ ॥

स त्वं भ्रातॄनिमान्दृष्ट्वा प्रतिनन्दस्व भारत ।
ऋषभानिव संमत्तान्गजेन्द्रानूर्जितानिव ॥ ०२७ ॥

अमरप्रतिमाः सर्वे शत्रुसाहाः परंतपाः ।
एकोऽपि हि सुखायैषां क्षमः स्यादिति मे मतिः ॥ ०२८ ॥

किं पुनः पुरुषव्याघ्राः पतयो मे नरर्षभाः ।
समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने ॥ ०२९ ॥

अनृतं माब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी ।
युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे ॥ ०३० ॥

हत्वा राजसहस्राणि बहून्याशुपराक्रमः ।
तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ॥ ०३१ ॥

येषामुन्मत्तको ज्येष्ठः सर्वे तस्योपचारिणः ।
तवोन्मादेन राजेन्द्र सोन्मादाः सर्वपाण्डवाः ॥ ०३२ ॥

यदि हि स्युरनुन्मत्ता भ्रातरस्ते जनाधिप ।
बद्ध्वा त्वां नास्तिकैः सार्धं प्रशासेयुर्वसुंधराम् ॥ ०३३ ॥

कुरुते मूढमेवं हि यः श्रेयो नाधिगच्छति ।
धूपैरञ्जनयोगैश्च नस्यकर्मभिरेव च ॥ ०३४ ॥

भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति ॥ ०३४ ॥

साहं सर्वाधमा लोके स्त्रीणां भरतसत्तम ।
तथा विनिकृतामित्रैर्याहमिच्छामि जीवितुम् ॥ ०३५ ॥

एतेषां यतमानानामुत्पद्यन्ते तु संपदः ।
त्वं तु सर्वां महीं लब्ध्वा कुरुषे स्वयमापदम् ॥ ०३६ ॥

यथास्तां संमतौ राज्ञां पृथिव्यां राजसत्तमौ ।
मान्धाता चाम्बरीषश्च तथा राजन्विराजसे ॥ ०३७ ॥

प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन् ।
सपर्वतवनद्वीपां मा राजन्विमना भव ॥ ०३८ ॥

यजस्व विविधैर्यज्ञैर्जुह्वन्नग्नीन्प्रयच्छ च ।
पुराणि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम ॥ ०३९ ॥

---

# अध्याय ०१५

वैशंपायन उवाच ॥

याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत् ।
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् ॥ ००१ ॥

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ००२ ॥

धर्मं संरक्षते दण्डस्तथैवार्थं नराधिप ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥ ००३ ॥

दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एतद्विद्वन्नुपादत्स्व स्वभावं पश्य लौकिकम् ॥ ००४ ॥

राजदण्डभयादेके पापाः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥ ००५ ॥

परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ ००६ ॥

दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ ००७ ॥

यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ ००८ ॥

वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
दानदण्डः स्मृतो वैश्यो निर्दण्डः शूद्र उच्यते ॥ ००९ ॥

असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसञ्ज्ञा विशां पते ॥ ०१० ॥

यत्र श्यामो लोहिताक्षो दण्डश्चरति सूनृतः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ ०११ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ ०१२ ॥

नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ ०१३ ॥

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ ०१४ ॥

नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ।
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ॥ ०१५ ॥

य एव देवा हन्तारस्ता.ण्ल्लोकोऽर्चयते भृशम् ।
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ॥ ०१६ ॥

हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ।
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥ ०१७ ॥

एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः ।
न ब्रह्माणं न धातारं न पूषाणं कथञ्चन ॥ ०१८ ॥

मध्यस्थान्सर्वभूतेषु दान्ताञ्शमपरायणान् ।
यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ॥ ०१९ ॥

न हि पश्यामि जीवन्तं लोके कञ्चिदहिंसया ।
सत्त्वैः सत्त्वानि जीवन्ति दुर्बलैर्बलवत्तराः ॥ ०२० ॥

नकुलो मूषकानत्ति बिडालो नकुलं तथा ।

बिडालमत्ति श्वा राजञ्श्वानं व्यालमृगस्तथा ॥ ०२१ ॥

तानत्ति पुरुषः सर्वान्पश्य धर्मो यथागतः ।
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ॥ ०२२ ॥

विधानं देवविहितं तत्र विद्वान्न मुह्यति ।
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥ ०२३ ॥

विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥ ०२४ ॥

उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान्हन्ति किमन्यत्प्राणयापनात् ॥ ०२५ ॥

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥ ०२६ ॥

ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥ ०२७ ॥

भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून् ।
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥ ०२८ ॥

दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥ ०२९ ॥

दण्डश्चेन्न भवेल्लोके व्यनशिष्यन्निमाः प्रजाः ।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥ ०३० ॥

सत्यं चेदं ब्रह्मणा पूर्वमुक्तं ; दण्डः प्रजा रक्षति साधु नीतः ।
पश्याग्नयश्च प्रतिशाम्यन्त्यभीताः ; संतर्जिता दण्डभयाज्ज्वलन्ति ॥ ०३१ ॥

अन्धं तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
दण्डश्चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ ०३२ ॥

येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनोपनिपीडिताः ॥ ०३३ ॥

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयाद्भीतो भोगायेह प्रकल्पते ॥ ०३४ ॥

चातुर्वर्ण्याप्रमोहाय सुनीतनयनाय च ।
दण्डो विधात्रा विहितो धर्मार्थावभिरक्षितुम् ॥ ०३५ ॥

यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ॥ ०३६ ॥

न ब्रह्मचार्यधीयीत कल्याणी गौर्न दुह्यते ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥ ०३७ ॥

विश्वलोपः प्रवर्तेत भिद्येरन्सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥ ०३८ ॥

न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥ ०३९ ॥

चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥ ०४० ॥

न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥ ०४१ ॥

न प्रेष्या वचनं कुर्युर्न बालो जातु कर्हिचित् ।
तिष्ठेत्पितृमते धर्मे यदि दण्डो न पालयेत्  ॥ ०४२  ॥

दण्डे स्थिताः प्रजाः सर्वा भयं दण्डं विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः  ॥ ०४३  ॥

न तत्र कूटं पापं वा वञ्चना वापि दृष्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः  ॥ ०४४  ॥

हविः श्वा प्रपिबेद्धृष्टो दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत्  ॥ ०४५  ॥

यदिदं धर्मतो राज्यं विहितं यद्यधर्मतः ।
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान्यजस्व च  ॥ ०४६  ॥

सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
संवसन्तः प्रियैर्दारैर्भुञ्जानाश्चान्नमुत्तमम्  ॥ ०४७  ॥

अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम्  ॥ ०४८  ॥

लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसा साधुहिंसेति श्रेयान्धर्मपरिग्रहः  ॥ ०४९  ॥

नात्यन्तगुणवान्कश्चिन्न चाप्यत्यन्तनिर्गुणः ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च  ॥ ०५०  ॥

पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्तकान् ।
कृषन्ति बहवो भारान्बध्नन्ति दमयन्ति च  ॥ ०५१  ॥

एवं पर्याकुले लोके विपथे जर्जरीकृते ।

तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥ ०५२ ॥

यज देहि प्रजा रक्ष धर्मं समनुपालय ।
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ॥ ०५३ ॥

मा च ते निघ्नतः शत्रून्मन्युर्भवतु भारत ।
न तत्र किल्बिषं किञ्चित्कर्तुर्भवति भारत ॥ ०५४ ॥

आततायी हि यो हन्यादाततायिनमागतम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥ ०५५ ॥

अवध्यः सर्वभूतानामन्तरात्मा न संशयः ।
अवध्ये चात्मनि कथं वध्यो भवति केनचित् ॥ ०५६ ॥

यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम् ।
एवं जीवः शरीराणि तानि तानि प्रपद्यते ॥ ०५७ ॥

देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते ।
एवं मृत्युमुखं प्राहुर्ये जनास्तत्त्वदर्शिनः ॥ ०५८ ॥

---

# अध्याय ०१६

वैशंपायन उवाच ॥

अर्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः ।
धैर्यमास्थाय तेजस्वी ज्येष्ठं भ्रातरमब्रवीत् ॥ ००१ ॥

राजन्विदितधर्मोऽसि न तेऽस्त्यविदितं भुवि ।

उपशिक्षाम ते वृत्तं सदैव न च शक्नुमः ॥ ००२ ॥

न वक्ष्यामि न वक्ष्यामीत्येवं मे मनसि स्थितम् ।
अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ॥ ००३ ॥

भवतस्तु प्रमोहेन सर्वं संशयितं कृतम् ।
विक्लवत्वं च नः प्राप्तमबलत्वं तथैव च ॥ ००४ ॥

कथं हि राजा लोकस्य सर्वशास्त्रविशारदः ।
मोहमापद्यते दैन्याद्यथा कुपुरुषस्तथा ॥ ००५ ॥

आगतिश्च गतिश्चैव लोकस्य विदिता तव ।
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ॥ ००६ ॥

एवं गते महाराज राज्यं प्रति जनाधिप ।
हेतुमत्र प्रवक्ष्यामि तदिहैकमनाः शृणु ॥ ००७ ॥

द्विविधो जायते व्याधिः शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वंद्वं नोपलभ्यते ॥ ००८ ॥

शारीराज्जायते व्याधिर्मानसो नात्र संशयः ।
मानसाज्जायते व्याधिः शारीर इति निश्चयः ॥ ००९ ॥

शारीरमानसे दुःखे योऽतीते अनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ०१० ॥

शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः ।
तेषां गुणानां साम्यं च तदाहुः स्वस्थलक्षणम् ॥ ०११ ॥

तेषामन्यतमोत्सेके विधानमुपदिष्यते ।
उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते ॥ ०१२ ॥

सत्त्वं रजस्तमश्चैव मानसाः स्युस्त्रयो गुणाः ।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ॥ ०१३ ॥

कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ।
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ॥ ०१४ ॥

स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य च ।
न दुःखी सुखजातस्य न सुखी दुःखजस्य वा ॥ ०१५ ॥

स्मर्तुमर्हसि कौरव्य दिष्टं तु बलवत्तरम् ।
अथ वा ते स्वभावोऽयं येन पार्थिव कृष्यसे ॥ ०१६ ॥

दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डुपुत्राणां न तस्य स्मर्तुमर्हसि ॥ ०१७ ॥

प्रव्राजनं च नगरादजिनैश्च निवासनम् ।
महारण्यनिवासश्च न तस्य स्मर्तुमर्हसि ॥ ०१८ ॥

जटासुरात्परिक्लेशं चित्रसेनेन चाहवम् ।
सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ ०१९ ॥

पुनरज्ञातचर्यायां कीचकेन पदा वधम् ॥ ०१९ ॥

यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम ।
मनसैकेन ते युद्धमिदं घोरमुपस्थितम् ॥ ०२० ॥

यत्र नास्ति शरैः कार्यं न मित्रैर्न च बन्धुभिः ।
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ ०२१ ॥

तस्मिन्ननिर्जिते युद्धे प्राणान्यदि ह मोक्ष्यसे ।

अन्यं देहं समास्थाय पुनस्तेनैव योत्स्यसे ॥ ०२२ ॥

तस्मादद्यैव गन्तव्यं युद्धस्य भरतर्षभ ।
एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ॥ ०२३ ॥

एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् ॥ ०२४ ॥

दिष्ट्या दुर्योधनः पापो निहतः सानुगो युधि ।
द्रौपद्याः केशपक्षस्य दिष्ट्या त्वं पदवीं गतः ॥ ०२५ ॥

यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
वयं ते किङ्कराः पार्थ वासुदेवश्च वीर्यवान् ॥ ०२६ ॥

---

# अध्याय ०१७

युधिष्ठिर उवाच ॥

असंतोषः प्रमादश्च मदो रागोऽप्रशान्तता ।
बलं मोहोऽभिमानश्च उद्वेगश्चापि सर्वशः ॥ ००१ ॥

एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसि ।
निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव ॥ ००२ ॥

य इमामखिलां भूमिं शिष्यादेको महीपतिः ।
तस्याप्युदरमेवैकं किमिदं त्वं प्रशंससि ॥ ००३ ॥

नाह्ना पूरयितुं शक्या न मासेन नरर्षभ ।

अपूर्यां पूरयन्निच्छामायुषापि न शक्नुयात्  ॥ ००४  ॥

यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति ।
अल्पाहारतया त्वग्निं शमयौदर्यमुत्थितम्  ॥ ००५  ॥

जयोदरं पृथिव्या ते श्रेयो निर्जितया जितम्  ॥ ००५  ॥

मानुषान्कामभोगांस्त्वमैश्वर्यं च प्रशंससि ।
अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमम्  ॥ ००६  ॥

योगक्षेमौ च राष्ट्रस्य धर्माधर्मौ त्वयि स्थितौ ।
मुच्यस्व महतो भारात्त्यागमेवाभिसंश्रय  ॥ ००७  ॥

एकोदरकृते व्याघ्रः करोति विघसं बहु ।
तमन्येऽप्युपजीवन्ति मन्दवेगश्चरा मृगाः  ॥ ००८  ॥

विषयान्प्रतिसंहृत्य संन्यासं कुरुते यतिः ।
न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा  ॥ ००९  ॥

पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा ।
अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः  ॥ ०१०  ॥

यश्चेमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः ।
तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः  ॥ ०११  ॥

सङ्कल्पेषु निरारम्भो निराशो निर्ममो भव ।
विशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययम्  ॥ ०१२  ॥

निरामिषा न शोचन्ति शोचसि त्वं किमामिषम् ।
परित्यज्यामिषं सर्वं मृषावादात्प्रमोक्ष्यसे  ॥ ०१३  ॥

पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ ।
ईजानाः पितृयानेन देवयानेन मोक्षिणः ॥ ०१४ ॥

तपसा ब्रह्मचर्येण स्वाध्यायेन च पाविताः ।
विमुच्य देहान्वै भान्ति मृत्योरविषयं गताः ॥ ०१५ ॥

आमिषं बन्धनं लोके कर्मेहोक्तं तथामिषम् ।
ताभ्यां विमुक्तः पाशाभ्यां पदमाप्नोति तत्परम् ॥ ०१६ ॥

अपि गाथामिमां गीतां जनकेन वदन्त्युत ।
निर्द्वंद्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ ०१७ ॥

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ ०१८ ॥

प्रज्ञाप्रासादमारुह्य नशोच्याञ्शोचतो जनान् ।
जगतीस्थानिवाद्रिस्थो मन्दबुद्धीनवेक्षते ॥ ०१९ ॥

दृश्यं पश्यति यः पश्यन्स चक्षुष्मान्स बुद्धिमान् ।
अज्ञातानां च विज्ञानात्संबोधाद्बुद्धिरुच्यते ॥ ०२० ॥

यस्तु वाचं विजानाति बहुमानमियात्स वै ।
ब्रह्मभावप्रसूतानां वैद्यानां भावितात्मनाम् ॥ ०२१ ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ०२२ ॥

ते जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतसः ।
नाबुद्धयो नातपसः सर्वं बुद्धौ प्रतिष्ठितम् ॥ ०२३ ॥

# जनकोपाख्यानम्

## अध्याय ०१८

वैशंपायन उवाच ॥

तूष्णींभूतं तु राजानं पुनरेवार्जुनोऽब्रवीत् ।
संतप्तः शोकदुःखाभ्यां राज्ञो वाक्शल्यपीडितः ॥ ००१ ॥

कथयन्ति पुरावृत्तमितिहासमिमं जनाः ।
विदेहराज्ञः संवादं भार्यया सह भारत ॥ ००२ ॥

उत्सृज्य राज्यं भैक्षार्थं कृतबुद्धिं जनेश्वरम् ।
विदेहराजं महिषी दुःखिता प्रत्यभाषत ॥ ००३ ॥

धनान्यपत्यं मित्राणि रत्नानि विविधानि च ।
पन्थानं पावनं हित्वा जनको मौण्ड्यमास्थितः ॥ ००४ ॥

तं ददर्श प्रिया भार्या भैक्ष्यवृत्तिमकिञ्चनम् ।
धानामुष्टिमुपासीनं निरीहं गतमत्सरम् ॥ ००५ ॥

तमुवाच समागम्य भर्तारमकुतोभयम् ।
क्रुद्धा मनस्विनी भार्या विविक्ते हेतुमद्वचः ॥ ००६ ॥

कथमुत्सृज्य राज्यं स्वं धनधान्यसमाचितम् ।
कापालीं वृत्तिमास्थाय धानामुष्टिर्वनेऽचरः ॥ ००७ ॥

प्रतिज्ञा तेऽन्यथा राजन्विचेष्टा चान्यथा तव ।

यद्राज्यं महदुत्सृज्य स्वल्पे तुष्यसि पार्थिव ॥ ००८ ॥

नैतेनातिथयो राजन्देवर्षिपितरस्तथा ।
शक्यमद्य त्वया भर्तुं मोघस्तेऽयं परिश्रमः ॥ ००९ ॥

देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव ।
सर्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः ॥ ०१० ॥

यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः ।
भर्ता भूत्वा च लोकस्य सोऽद्यान्यैर्भृतिमिच्छसि ॥ ०११ ॥

श्रियं हित्वा प्रदीप्तां त्वं श्ववत्संप्रति वीक्ष्यसे ।
अपुत्रा जननी तेऽद्य कौसल्या चापतिस्त्वया ॥ ०१२ ॥

अशीतिर्धर्मकामास्त्वां क्षत्रियाः पर्युपासते ।
त्वदाशामभिकाङ्क्षन्त्यः कृपणाः फलहेतुकाः ॥ ०१३ ॥

ताश्च त्वं विफलाः कुर्वन्का.ण्ल्लोकान्नु गमिष्यसि ।
राजन्संशयिते मोक्षे परतन्त्रेषु देहिषु ॥ ०१४ ॥

नैव तेऽस्ति परो लोको नापरः पापकर्मणः ।
धर्म्यान्दारान्परित्यज्य यस्त्वमिच्छसि जीवितुम् ॥ ०१५ ॥

स्रजो गन्धानलङ्कारान्वासांसि विविधानि च ।
किमर्थमभिसंत्यज्य परिव्रजसि निष्क्रियः ॥ ०१६ ॥

निपानं सर्वभूतानां भूत्वा त्वं पावनं महत् ।
आढ्यो वनस्पतिर्भूत्वा सोऽद्यान्यान्पर्युपाससे ॥ ०१७ ॥

खादन्ति हस्तिनं न्यासे क्रव्यादा बहवोऽप्युत ।
बहवः कृमयश्चैव किं पुनस्त्वामनर्थकम् ॥ ०१८ ॥

य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धं च ते हरेत् ।
वासश्चापहरेत्तस्मिन्कथं ते मानसं भवेत्  ॥ ०१९  ॥

यस्त्वयं सर्वमुत्सृज्य धानामुष्टिपरिग्रहः ।
यदानेन समं सर्वं किमिदं मम दीयते  ॥ ०२०  ॥

धानामुष्टिरिहार्थश्चेत्प्रतिज्ञा ते विनश्यति  ॥ ०२०  ॥

का वाहं तव को मे त्वं कोऽद्य ते मय्यनुग्रहः ।
प्रशाधि पृथिवीं राजन्यत्र तेऽनुग्रहो भवेत्  ॥ ०२१  ॥

प्रासादं शयनं यानं वासांस्याभरणानि च  ॥ ०२१  ॥

श्रिया निराशैरधनैस्त्यक्तमित्रैरकिञ्चनैः ।
सौखिकैः संभृतानर्थान्यः संत्यजसि किं नु तत्  ॥ ०२२  ॥

योऽत्यन्तं प्रतिगृह्णीयाद्यश्च दद्यात्सदैव हि ।
तयोस्त्वमन्तरं विद्धि श्रेयांस्ताभ्यां क उच्यते  ॥ ०२३  ॥

सदैव याचमानेषु सत्सु दम्भविवर्जिषु ।
एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम्  ॥ ०२४  ॥

जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति ।
सदैव याचमानो वै तथा शाम्यति न द्विजः  ॥ ०२५  ॥

सतां च वेदा अन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा ।
न चेद्दाता भवेद्दाता कुतः स्युर्मोक्षकाङ्क्षिणः  ॥ ०२६  ॥

अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च ।
अन्नात्प्राणः प्रभवति अन्नदः प्राणदो भवेत्  ॥ ०२७  ॥

गृहस्थेभ्योऽभिनिर्वृत्ता गृहस्थानेव संश्रिताः ।
प्रभवं च प्रतिष्ठां च दान्ता निन्दन्त आसते ॥ ०२८ ॥

त्यागान्न भिक्षुकं विद्यान्न मौण्ड्यान्न च याचनात् ।
ऋजुस्तु योऽर्थं त्यजति तं सुखं विद्धि भिक्षुकम् ॥ ०२९ ॥

असक्तः सक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः ।
समः शत्रौ च मित्रे च स वै मुक्तो महीपते ॥ ०३० ॥

परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः ।
सिता बहुविधैः पाशैः सञ्चिन्वन्तो वृथामिषम् ॥ ०३१ ॥

त्रयीं च नाम वार्तां च त्यक्त्वा पुत्रांस्त्यजन्ति ये ।
त्रिविष्टब्धं च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥ ०३२ ॥

अनिष्कषाये काषायमीहार्थमिति विद्धि तत् ।
धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ॥ ०३३ ॥

काषायैरजिनैश्चीरैर्नग्नान्मुण्डाञ्जटाधरान् ।
बिभ्रत्साधून्महाराज जय लोकाञ्जितेन्द्रियः ॥ ०३४ ॥

अग्न्याधेयानि गुर्वर्थान्क्रतून्सपशुदक्षिणान् ।
ददात्यहरहः पूर्वं को नु धर्मतरस्ततः ॥ ०३५ ॥

तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते ।
सोऽप्यासीन्मोहसंपन्नो मा मोहवशमन्वगाः ॥ ०३६ ॥

एवं धर्ममनुक्रान्तं सदा दानपरैर्नरैः ।
आनृशंस्यगुणोपेतैः कामक्रोधविवर्जिताः ॥ ०३७ ॥

पालयन्तः प्रजाश्चैव दानमुत्तममास्थिताः ।
इष्टा.ण्ल्लोकानवाप्स्यामो ब्रह्मण्याः सत्यवादिनः ॥ ०३८ ॥

---

# अध्याय ०१९

युधिष्ठिर उवाच ॥

वेदाहं तात शास्त्राणि अपराणि पराणि च ।
उभयं वेदवचनं कुरु कर्म त्यजेति च ॥ ००१ ॥

आकुलानि च शास्त्राणि हेतुभिश्चित्रितानि च ।
निश्चयश्चैव यन्मात्रो वेदाहं तं यथाविधि ॥ ००२ ॥

त्वं तु केवलमस्त्रज्ञो वीरव्रतमनुष्ठितः ।
शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथञ्चन ॥ ००३ ॥

शास्त्रार्थसूक्ष्मदर्शी यो धर्मनिश्चयकोविदः ।
तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि ॥ ००४ ॥

भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया ।
न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ॥ ००५ ॥

युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च ।
न त्वया सदृशः कश्चित्त्रिषु लोकेषु विद्यते ॥ ००६ ॥

धर्मसूक्ष्मं तु यद्वाक्यं तत्र दुष्प्रतरं त्वया ।
धनञ्जय न मे बुद्धिमभिशङ्कितुमर्हसि ॥ ००७ ॥

युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ ००८ ॥

तपस्त्यागो विधिरिति निश्चयस्तात धीमताम् ।
परं परं ज्याय एषां सैषा नैःश्रेयसी गतिः ॥ ००९ ॥

न त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि यथा नैतत्प्रधानतः ॥ ०१० ॥

तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः ।
ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः ॥ ०११ ॥

अजातश्मश्रवो धीरास्तथान्ये वनवासिनः ।
अनन्ता अधना एव स्वाध्यायेन दिवं गताः ॥ ०१२ ॥

उत्तरेण तु पन्थानमार्या विषयनिग्रहात् ।
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः ॥ ०१३ ॥

दक्षिणेन तु पन्थानं यं भास्वन्तं प्रपश्यसि ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥ ०१४ ॥

अनिर्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः ।
तस्मात्त्यागः प्रधानेष्टः स तु दुःखः प्रवेदितुम् ॥ ०१५ ॥

अनुसृत्य तु शास्त्राणि कवयः समवस्थिताः ।
अपीह स्यादपीह स्यात्सारासारदिदृक्षया ॥ ०१६ ॥

वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।
विपाट्य कदलीस्कन्धं सारं ददृशिरे न ते ॥ ०१७ ॥

अथैकान्तव्युदासेन शरीरे पञ्चभौतिके ।

इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः ॥ ०१८ ॥

अग्राह्यश्चक्षुषा सोऽपि अनिर्देश्यं च तद्गिरा ।
कर्महेतुपुरस्कारं भूतेषु परिवर्तते ॥ ०१९ ॥

कल्याणगोचरं कृत्वा मनस्तृष्णां निगृह्य च ।
कर्मसंततिमुत्सृज्य स्यान्निरालम्बनः सुखी ॥ ०२० ॥

अस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते ।
कथमर्थमनर्थाढ्यमर्जुन त्वं प्रशंससि ॥ ०२१ ॥

पूर्वशास्त्रविदो ह्येवं जनाः पश्यन्ति भारत ।
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि ॥ ०२२ ॥

भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः ।
दृढपूर्वश्रुता मूढा नैतदस्तीति वादिनः ॥ ०२३ ॥

अमृतस्यावमन्तारो वक्तारो जनसंसदि ।
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥ ०२४ ॥

यान्वयं नाभिजानीमः कस्ताञ्ज्ञातुमिहार्हति ।
एवं प्राज्ञान्सतश्चापि महतः शास्त्रवित्तमान् ॥ ०२५ ॥

तपसा महदाप्नोति बुद्ध्या वै विन्दते महत् ।
त्यागेन सुखमाप्नोति सदा कौन्तेय धर्मवित् ॥ ०२६ ॥

# देवस्थानवाक्यम्

## अध्याय ०२०

वैशंपायन उवाच ॥

तस्मिन्वाक्यान्तरे वक्ता देवस्थानो महातपाः ।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् ॥ ००१ ॥

यद्वचः फल्गुनेनोक्तं न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि तदेकाग्रमनाः शृणु ॥ ००२ ॥

अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता ।
तां जित्वा न वृथा राजंस्त्वं परित्यक्तुमर्हसि ॥ ००३ ॥

चतुष्पदी हि निःश्रेणी कर्मण्येषा प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ ००४ ॥

तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः ।
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथापरे ॥ ००५ ॥

कर्मनिष्ठांस्तु बुध्येथास्तपोनिष्ठांश्च भारत ।
वैखानसानां राजेन्द्र वचनं श्रूयते यथा ॥ ००६ ॥

ईहते धनहेतोर्यस्तस्यानीहा गरीयसी ।
भूयान्दोषः प्रवर्धेत यस्तं धनमपाश्रयेत् ॥ ००७ ॥

कृच्छ्राच्च द्रव्यसंहारं कुर्वन्ति धनकारणात् ।
धनेन तृषितोऽबुद्ध्या भ्रूणहत्यां न बुध्यते ॥ ००८ ॥

अनर्हते यद्ददाति न ददाति यदर्हते ।

अनर्हार्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ॥ ००९ ॥

यज्ञाय सृष्टानि धनानि धात्रा ; यष्टादिष्टः पुरुषो रक्षिता च ।
तस्मात्सर्वं यज्ञ एवोपयोज्यं ; धनं ततोऽनन्तर एव कामः ॥ ०१० ॥

यज्ञैरिन्द्रो विविधैरन्नवद्भि ;र्देवान्सर्वानभ्ययान्महौजाः ।
तेनेन्द्रत्वं प्राप्य विभ्राजतेऽसौ ; तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ ०११ ॥

महादेवः सर्वमेधे महात्मा ; हुत्वात्मानं देवदेवो विभूतः ।
विश्वा.ण्ल्लोकान्व्याप्य विष्टभ्य कीर्त्या ; विरोचते द्युतिमान्कृत्तिवासाः ॥ ०१२ ॥

आविक्षितः पार्थिवो वै मरुत्तः ; स्वृघ्या मर्त्यो योऽजयद्देवराजम् ।
यज्ञे यस्य श्रीः स्वयं संनिविष्टा ; यस्मिन्भाण्डं काञ्चनं सर्वमासीत् ॥ ०१३ ॥

हरिश्चन्द्रः पार्थिवेन्द्रः श्रुतस्ते ; यज्ञैरिष्ट्वा पुण्यकृद्वीतशोकः ।
ऋघ्या शक्रं योऽजयन्मानुषः सं ;स्तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ ०१४ ॥

---

# अध्याय ०२१

देवस्थान उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः ॥ ००१ ॥

संतोषो वै स्वर्गतमः संतोषः परमं सुखम् ।
तुष्टेर्न किञ्चित्परतः सुसम्यक्परितिष्ठति ॥ ००२ ॥

यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरात्मैव स्वात्मनैव प्रसीदति ॥ ००३ ॥

न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
कामद्वेषौ च जयति तदात्मानं प्रपश्यति ॥ ००४ ॥

यदासौ सर्वभूतानां न क्रुध्यति न दुष्यति ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ००५ ॥

एवं कौन्तेय भूतानि तं तं धर्मं तथा तथा ।
तदा तदा प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥ ००६ ॥

अन्ये शमं प्रशंसन्ति व्यायाममपरे तथा ।
नैकं न चापरं केचिदुभयं च तथापरे ॥ ००७ ॥

यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
दानमेके प्रशंसन्ति केचिदेव प्रतिग्रहम् ॥ ००८ ॥

केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥ ००८ ॥

राज्यमेके प्रशंसन्ति सर्वेषां परिपालनम् ।
हत्वा भित्त्वा च छित्त्वा च केचिदेकान्तशीलिनः ॥ ००९ ॥

एतत्सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥ ०१० ॥

अद्रोहः सत्यवचनं संविभागो धृतिः क्षमा ।
प्रजनः स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ ०११ ॥

धनं धर्मप्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।

तस्मादेवं प्रयत्नेन कौन्तेय परिपालय ॥ ०१२ ॥

यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः ।
क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् ॥ ०१३ ॥

असाधुनिग्रहरतः साधूनां प्रग्रहे रतः ।
धर्मे वर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् ॥ ०१४ ॥

पुत्रसङ्क्रामितश्रीस्तु वने वन्येन वर्तयन् ।
विधिना श्रामणेनैव कुर्यात्कालमतन्द्रितः ॥ ०१५ ॥

य एवं वर्तते राजा राजधर्मविनिश्चितः ।
तस्यायं च परश्चैव लोकः स्यात्सफलो नृप ॥ ०१६ ॥

निर्वाणं तु सुदुष्पारं बहुविघ्नं च मे मतम् ॥ ०१६ ॥

एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥ ०१७ ॥

प्रजानां पालने युक्ता दममुत्तममास्थिताः ।
गोब्राह्मणार्थं युद्धेन संप्राप्ता गतिमुत्तमाम् ॥ ०१८ ॥

एवं रुद्राः सवसवस्तथादित्याः परंतप ।
साध्या राजर्षिसंघाश्च धर्ममेतं समाश्रिताः ॥ ०१९ ॥

अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥ ०१९ ॥

# अध्याय ०२२

वैशंपायन उवाच ॥

तस्मिन्वाक्यान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत् ।
विषण्णमनसं ज्येष्ठमिदं भ्रातरमीश्वरम् ॥ ००१ ॥

क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यमनुत्तमम् ।
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भवान्भृशम् ॥ ००२ ॥

क्षत्रियाणां महाराज सङ्ग्रामे निधनं स्मृतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥ ००३ ॥

ब्राह्मणानां तपस्त्यागः प्रेत्यधर्मविधिः स्मृतः ।
क्षत्रियाणां च विहितं सङ्ग्रामे निधनं विभो ॥ ००४ ॥

क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥ ००५ ॥

ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण तिष्ठतः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंस्थितम् ॥ ००६ ॥

न त्यागो न पुनर्याञ्चा न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥ ००७ ॥

स भवान्सर्वधर्मज्ञः सर्वात्मा भरतर्षभ ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥ ००८ ॥

त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसंहतम् ॥ ००९ ॥

जित्वारीन्क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।

विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ ०१० ॥

इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत् ।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥ ०११ ॥

तच्चास्य कर्म पूज्यं हि प्रशस्यं च विशां पते ।
तेन चेन्द्रत्वमापेदे देवानामिति नः श्रुतम् ॥ ०१२ ॥

स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ ०१३ ॥

मा त्वमेवङ्गते किञ्चित्क्षत्रियर्षभ शोचिथाः ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥ ०१४ ॥

भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ ।
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् ॥ ०१५ ॥

---

# अध्याय ०२३

वैशंपायन उवाच ॥

एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत ।
नोवाच किञ्चित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ ००१ ॥

बीभत्सोर्वचनं सम्यक्सत्यमेतद्युधिष्ठिर ।
शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः ॥ ००२ ॥

स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि ।
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ ००३ ॥

गृहस्थं हि सदा देवाः पितर ऋषयस्तथा ।
भृत्याश्चैवोपजीवन्ति तान्भजस्व महीपते ॥ ००४ ॥

वयांसि पशवश्चैव भूतानि च महीपते ।
गृहस्थैरेव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ००५ ॥

सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः ।
तं चराविमनाः पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ ००६ ॥

वेदज्ञानं च ते कृत्स्नं तपश्च चरितं महत् ।
पितृपैतामहे राज्ये धुरमुद्वोढुमर्हसि ॥ ००७ ॥

तपो यज्ञस्तथा विद्या भैक्षमिन्द्रियनिग्रहः ।
ध्यानमेकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ॥ ००८ ॥

ब्राह्मणानां महाराज चेष्टाः संसिद्धिकारिकाः ।
क्षत्रियाणां च वक्ष्यामि तवापि विदितं पुनः ॥ ००९ ॥

यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमत्युग्रं प्रजानां परिपालनम् ॥ ०१० ॥

वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रेषु प्रतिपादनम् ॥ ०११ ॥

एतानि राज्ञां कर्माणि सुकृतानि विशां पते ।
इमं लोकममुं लोकं साधयन्तीति नः श्रुतम् ॥ ०१२ ॥

तेषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।

बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः  ॥ ०१३  ॥

एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरभाषत  ॥ ०१४  ॥

भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्  ॥ ०१५  ॥

सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा  ॥ ०१६  ॥

---

# श ण्खलिखितोपाख्यानम्

## अध्याय ०२४

युधिष्ठिर उवाच  ॥

भगवन्कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम्  ॥ ००१  ॥

व्यास उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संयतव्रतौ  ॥ ००२  ॥

तयोरावसथावास्तां रमणीयौ पृथक्पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु  ॥ ००३  ॥

ततः कदाचिल्लिखितः शङ्खस्याश्रममागमत् ।
यदृच्छयापि शङ्खोऽथ निष्क्रान्तोऽभवदाश्रमात्  ॥ ००४  ॥

सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा ।
फलानि शातयामास सम्यक्परिणतान्युत  ॥ ००५  ॥

तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत्  ॥ ००६  ॥

भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि  ॥ ००७  ॥

सोऽब्रवीद्भ्रातरं ज्येष्ठमुपस्पृश्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव  ॥ ००८  ॥

तमब्रवीत्तदा शङ्खस्तीव्रकोपसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम्  ॥ ००९  ॥

गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै  ॥ ००९  ॥

अदत्तादानमेवेदं कृतं पार्थिवसत्तम ।
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय  ॥ ०१०  ॥

शीघ्रं धारय चौरस्य मम दण्डं नराधिप  ॥ ०१०  ॥

इत्युक्तस्तस्य वचनात्सुद्युम्नं वसुधाधिपम् ।
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः  ॥ ०११  ॥

सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव नरेश्वरः  ॥ ०१२  ॥

तमब्रवीत्समागत्य स राजा ब्रह्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन्कृतमेव तत् ॥ ०१३ ॥

एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रौषि करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ ०१४ ॥

अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ ।
भक्षितानि मया राजंस्तत्र मां शाधि माचिरम् ॥ ०१५ ॥

सुद्युम्न उवाच ॥

प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ ०१६ ॥

स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ ०१७ ॥

व्यास उवाच ॥

छन्द्यमानोऽपि ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं वै वरयामास तस्माद्दण्डादृते वरम् ॥ ०१८ ॥

ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ ०१९ ॥

स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भगवन्क्षन्तुमर्हसि ॥ ०२० ॥

शङ्ख उवाच ॥

न कुप्ये तव धर्मज्ञ न च दूषयसे मम ।
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥ ०२१ ॥

स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवान्पितॄनृषींश्चैव मा चाधर्मे मनः कृथाः ॥ ०२२ ॥

व्यास उवाच ॥

तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ ०२३ ॥

प्रादुरास्तां ततस्तस्य करौ जलजसंनिभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ ०२४ ॥

ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया ।
मा च तेऽत्र विशङ्का भूद्दैवमेव विधीयते ॥ ०२५ ॥

लिखित उवाच ॥

किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ ०२६ ॥

शङ्ख उवाच ॥

एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह ॥ ०२७ ॥

व्यास उवाच ॥

स राजा पाण्डवश्रेष्ठ श्रेष्ठो वै तेन कर्मणा ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ ०२८ ॥

एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथेऽस्मिन्महाराज मा च शोके मनः कृथाः ॥ ०२९ ॥

भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ०३० ॥

---

# हयग्रीवोपाख्यानम्

## अध्याय ०२५

वैशंपायन उवाच ॥

पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽब्रवीत् ।
अजातशत्रुं कौन्तेयमिदं वचनमर्थवत् ॥ ००१ ॥

अरण्ये वसतां तात भ्रातृणां ते तपस्विनाम् ।
मनोरथा महाराज ये तत्रासन्युधिष्ठिर ॥ ००२ ॥

तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ।
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ ००३ ॥

अरण्ये दुःखवसतिरनुभूता तपस्विभिः ।
दुःखस्यान्ते नरव्याघ्राः सुखं त्वनुभवन्त्विमे ॥ ००४ ॥

धर्ममर्थं च कामं च भ्रातृभिः सह भारत ।
अनुभूय ततः पश्चात्प्रस्थातासि विशां पते ॥ ००५ ॥

अतिथीनां च पितृणां देवतानां च भारत ।
आनृण्यं गच्छ कौन्तेय ततः स्वर्गं गमिष्यसि ॥ ००६ ॥

सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन ।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ ००७ ॥

भ्रातृंश्च सर्वान्क्रतुभिः संयोज्य बहुदक्षिणैः ।
संप्राप्तः कीर्तिमतुलां पाण्डवेय भविष्यसि ॥ ००८ ॥

विद्म ते पुरुषव्याघ्र वचनं कुरुनन्दन ।
शृणु मच्च यथा कुर्वन्धर्मान्न च्यवते नृपः ॥ ००९ ॥

आददानस्य च धनं निग्रहं च युधिष्ठिर ।
समानं धर्मकुशलाः स्थापयन्ति नरेश्वर ॥ ०१० ॥

देशकालप्रतीक्षे यो दस्योर्दर्शयते नृपः ।
शास्त्रजां बुद्धिमास्थाय नैनसा स हि युज्यते ॥ ०११ ॥

आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति ।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः ॥ ०१२ ॥

निबोध च यथातिष्ठन्धर्मान्न च्यवते नृपः ।
निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः ॥ ०१३ ॥

कामक्रोधावनादृत्य पितेव समदर्शनः ॥ ०१३ ॥

दैवेनोपहते राजा कर्मकाले महाद्युते ।
प्रमादयति तत्कर्म न तत्राहुरतिक्रमम् ॥ ०१४ ॥

तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।

पापैः सह न संदध्याद्राष्ट्रं पण्यं न कारयेत्  ॥ ०१५  ॥

शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमतो धनिनश्चैव परिपाल्या विशेषतः  ॥ ०१६  ॥

व्यवहारेषु धर्म्येषु नियोज्याश्च बहुश्रुताः ।
गुणयुक्तेऽपि नैकस्मिन्विश्वस्याच्च विचक्षणः  ॥ ०१७  ॥

अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते  ॥ ०१८  ॥

येऽरक्ष्यमाणा हीयन्ते दैवेनोपहते नृपे ।
तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम्  ॥ ०१९  ॥

सुमन्त्रिते सुनीते च विधिवच्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर  ॥ ०२०  ॥

विपद्यन्ते समारम्भाः सिध्यन्त्यपि च दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम्  ॥ ०२१  ॥

अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पार्थिव  ॥ ०२२  ॥

शत्रून्हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य धीरस्य निर्जितस्य युधिष्ठिर  ॥ ०२३  ॥

यत्कर्म वै निग्रहे शात्रवाणां ; योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं सुयुद्धे ; वाजिग्रीवो मोदते देवलोके  ॥ ०२४  ॥

संत्यक्तात्मा समरेष्वाततायी ; शस्त्रैश्छिन्नो दस्युभिरर्द्यमानः ।
अश्वग्रीवः कर्मशीलो महात्मा ; संसिद्धात्मा मोदते देवलोके  ॥ ०२५  ॥

धनुर्यूपो रशना ज्या शरः स्रु ;क्स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।
रथो वेदी कामगो युद्धमग्नि ;श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥ ०२६ ॥

हुत्वा तस्मिन्यज्ञवह्नावथारी ;न्पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान्हुत्वा चावभृथे रणे स ; वाजिग्रीवो मोदते देवलोके ॥ ०२७ ॥

राष्ट्रं रक्षन्बुद्धिपूर्वं नयेन ; संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वा.ण्ल्लोकान्व्याप्य कीर्त्या मनस्वी ; वाजिग्रीवो मोदते देवलोके ॥ ०२८ ॥

दैवीं सिद्धिं मानुषीं दण्डनीतिं ; योगन्यायैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा ; हयग्रीवो मोदते स्वर्गलोके ॥ ०२९ ॥

विद्वांस्त्यागी श्रद्दधानः कृतज्ञ ;स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।
मेधाविनां विदुषां संमतानां ; तनुत्यजां लोकमाक्रम्य राजा ॥ ०३० ॥

सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य ; सम्यग्राष्ट्रं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे ; वाजिग्रीवो मोदते देवलोके ॥ ०३१ ॥

जित्वा सङ्ग्रामान्पालयित्वा प्रजाश्च ; सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां ; युद्धे क्षीणो मोदते देवलोके ॥ ०३२ ॥

वृत्तं यस्य श्लाघनीयं मनुष्याः ; सन्तो विद्वांसश्चार्हयन्त्यर्हणीयाः ।
स्वर्गं जित्वा वीरलोकांश्च गत्वा ; सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥ ०३३ ॥

# सेनजिद् वाक्यम्

## अध्याय ०२६

वैशंपायन उवाच ॥

द्वैपायनवचः श्रुत्वा कुपिते च धनञ्जये ।
व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ॥ ००१ ॥

न पार्थिवमिदं राज्यं न च भोगाः पृथग्विधाः ।
प्रीणयन्ति मनो मेऽद्य शोको मां नर्दयत्ययम् ॥ ००२ ॥

श्रुत्वा च वीरहीनानामपुत्राणां च योषिताम् ।
परिदेवयमानानां शान्तिं नोपलभे मुने ॥ ००३ ॥

इत्युक्तः प्रत्युवाचेदं व्यासो योगविदां वरः ।
युधिष्ठिरं महाप्राज्ञं धर्मज्ञो वेदपारगः ॥ ००४ ॥

न कर्मणा लभ्यते चिन्तया वा ; नाप्यस्य दाता पुरुषस्य कश्चित् ।
पर्याययोगाद्विहितं विधात्रा ; कालेन सर्वं लभते मनुष्यः ॥ ००५ ॥

न बुद्धिशास्त्राध्ययनेन शक्यं ; प्राप्तुं विशेषैर्मनुजैरकाले ।
मूर्खोऽपि प्राप्नोति कदाचिदर्था ;न्कालो हि कार्यं प्रति निर्विशेषः ॥ ००६ ॥

नाभूतिकाले च फलं ददाति ; शिल्पं न मन्त्राश्च तथौषधानि ।
तान्येव कालेन समाहितानि ; सिध्यन्ति चेध्यन्ति च भूतिकाले ॥ ००७ ॥

कालेन शीघ्राः प्रविवान्ति वाताः ; कालेन वृष्टिर्जलदानुपैति ।
कालेन पद्मोत्पलवज्जलं च ; कालेन पुष्यन्ति नगा वनेषु ॥ ००८ ॥

कालेन कृष्णाश्च सिताश्च रात्र्यः ; कालेन चन्द्रः परिपूर्णबिम्बः ।

नाकालतः पुष्पफलं नगानां ; नाकालवेगाः सरितो वहन्ति ॥ ००९ ॥

नाकालमत्ताः खगपन्नगाश्च ; मृगद्विपाः शैलमहाग्रहाश्च ।
नाकालतः स्त्रीषु भवन्ति गर्भा ; नायान्त्यकाले शिशिरोष्णवर्षाः ॥ ०१० ॥

नाकालतो म्रियते जायते वा ; नाकालतो व्याहरते च बालः ।
नाकालतो यौवनमभ्युपैति ; नाकालतो रोहति बीजमुप्तम् ॥ ०११ ॥

नाकालतो भानुरुपैति योगं ; नाकालतोऽस्तं गिरिमभ्युपैति ।
नाकालतो वर्धते हीयते च ; चन्द्रः समुद्रश्च महोर्मिमाली ॥ ०१२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं राज्ञा सेनजिता दुःखार्तेन युधिष्ठिर ॥ ०१३ ॥

सर्वानेवैष पर्यायो मर्त्यान्स्पृशति दुस्तरः ।
कालेन परिपक्वा हि म्रियन्ते सर्वमानवाः ॥ ०१४ ॥

घ्नन्ति चान्यान्नरा राजंस्तानप्यन्ये नरास्तथा ।
सञ्ज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते ॥ ०१५ ॥

हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरे ।
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥ ०१६ ॥

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो कष्टमिति ध्यायञ्शोकस्यापचितिं चरेत् ॥ ०१७ ॥

स किं शोचसि मूढः सञ्शोच्यः किमनुशोचसि ।
पश्य दुःखेषु दुःखानि भयेषु च भयान्यपि ॥ ०१८ ॥

आत्मापि चायं न मम सर्वापि पृथिवी मम ।
यथा मम तथान्येषामिति पश्यन्न मुह्यति ॥ ०१९ ॥

शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्  ॥ ०२० ॥

एवमेतानि कालेन प्रियद्वेष्याणि भागशः ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च  ॥ ०२१ ॥

दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते ।
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम्  ॥ ०२२ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम्  ॥ ०२३ ॥

सुखमन्ते हि दुःखानां दुःखमन्ते सुखस्य च ।
तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम्  ॥ ०२४ ॥

यन्निमित्तं भवेच्छोकस्तापो वा दुःखमूर्छितः ।
आयासो वापि यन्मूलस्तदेकाङ्गमपि त्यजेत्  ॥ ०२५ ॥

सुखं वा यदि वा दुःखं प्रियं वा यदि वाप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः  ॥ ०२६ ॥

ईषदप्यङ्ग दाराणां पुत्राणां वा चराप्रियम् ।
ततो ज्ञास्यसि कः कस्य केन वा कथमेव वा  ॥ ०२७ ॥

ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
त एव सुखमेधन्ते मध्यः क्लेशेन युज्यते  ॥ ०२८ ॥

इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् ।
परावरज्ञो लोकस्य धर्मवित्सुखदुःखवित्  ॥ ०२९ ॥

सुखी परस्य यो दुःखे न जातु स सुखी भवेत् ।
दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परम्  ॥ ०३०  ॥

सुखं च दुःखं च भवाभवौ च ; लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमिह स्पृशन्ति ; तस्माद्धीरो नैव हृष्येन्न कुप्येत्  ॥ ०३१  ॥

दीक्षां यज्ञे पालनं युद्धमाहु ;र्योगं राष्ट्रे दण्डनीत्या च सम्यक् ।
वित्तत्यागं दक्षिणानां च यज्ञे ; सम्यग्ज्ञानं पावनानीति विद्यात्  ॥ ०३२  ॥

रक्षन्राष्ट्रं बुद्धिपूर्वं नयेन ; संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वा.ण्ल्लोकान्धर्ममूर्त्या चरंश्चा ;प्यूर्ध्वं देहान्मोदते देवलोके  ॥ ०३३  ॥

जित्वा सङ्ग्रामान्पालयित्वा च राष्ट्रं ; सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां ; युद्धे क्षीणो मोदते देवलोके  ॥ ०३४  ॥

सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य ; सम्यग्राष्ट्रं पालयित्वा च राजा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे ; पूतात्मा वै मोदते देवलोके  ॥ ०३५  ॥

यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्याः स राजा राजसत्तमः  ॥ ०३६  ॥

---

## अध्याय ०२७

युधिष्ठिर उवाच  ॥

अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ।
धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ  ॥ ००१  ॥

वसुषेणे च धर्मज्ञे धृष्टकेतौ च पार्थिवे ।
तथान्येषु नरेन्द्रेषु नानादेश्येषु संयुगे ॥ ००२ ॥

न विमुञ्चति मां शोको ज्ञातिघातिनमातुरम् ।
राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारकम् ॥ ००३ ॥

यस्याङ्के क्रीडमानेन मया वै परिवर्तितम् ।
स मया राज्यलुब्धेन गाङ्गेयो विनिपातितः ॥ ००४ ॥

यदा ह्येनं विघूर्णन्तमपश्यं पार्थसायकैः ।
कम्पमानं यथा वज्रैः प्रेक्षमाणं शिखण्डिनम् ॥ ००५ ॥

जीर्णं सिंहमिव प्रांशुं नरसिंहं पितामहम् ।
कीर्यमाणं शरैस्तीक्ष्णैर्दृष्ट्वा मे व्यथितं मनः ॥ ००६ ॥

प्राङ्मुखं सीदमानं च रथादपच्युतं शरैः ।
घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ॥ ००७ ॥

यः स बाणधनुष्पाणिर्योधयामास भार्गवम् ।
बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ॥ ००८ ॥

समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः ।
कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ॥ ००९ ॥

येन चोग्रायुधो राजा चक्रवर्ती दुरासदः ।
दग्धः शस्त्रप्रतापेन स मया युधि घातितः ॥ ०१० ॥

स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यः शिखण्डिनम् ।
न बाणैः पातयामास सोऽर्जुनेन निपातितः ॥ ०११ ॥

यदैनं पतितं भूमावपश्यं रुधिरोक्षितम् ।

तदैवाविशदत्युग्रो ज्वरो मे मुनिसत्तम ॥ ०१२ ॥

येन संवर्धिता बाला येन स्म परिरक्षिताः ॥ ०१२ ॥

स मया राज्यलुब्धेन पापेन गुरुघातिना ।
अल्पकालस्य राज्यस्य कृते मूढेन घातितः ॥ ०१३ ॥

आचार्यश्च महेष्वासः सर्वपार्थिवपूजितः ।
अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति ॥ ०१४ ॥

तन्मे दहति गात्राणि यन्मां गुरुरभाषत ।
सत्यवाक्यो हि राजंस्त्वं यदि जीवति मे सुतः ॥ ०१५ ॥

सत्यं मा मर्शयन्विप्रो मयि तत्परिपृष्टवान् ॥ ०१५ ॥

कुञ्जरं चान्तरं कृत्वा मिथ्योपचरितं मया ।
सुभृशं राज्यलुब्धेन पापेन गुरुघातिना ॥ ०१६ ॥

सत्यकञ्चुकमास्थाय मयोक्तो गुरुराहवे ।
अश्वत्थामा हत इति कुञ्जरे विनिपातिते ॥ ०१७ ॥

कान्नु लोकान्गमिष्यामि कृत्वा तत्कर्म दारुणम् ॥ ०१७ ॥

अघातयं च यत्कर्णं समरेष्वपलायिनम् ।
ज्येष्ठं भ्रातरमत्युग्रं को मत्तः पापकृत्तमः ॥ ०१८ ॥

अभिमन्युं च यद्बालं जातं सिंहमिवाद्रिषु ।
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥ ०१९ ॥

तदाप्रभृति बीभत्सुं न शक्नोमि निरीक्षितुम् ।
कृष्णं च पुण्डरीकाक्षं किल्बिषी भ्रूणहा यथा ॥ ०२० ॥

द्रौपदीं चाप्यदुःखार्हां पञ्चपुत्रविनाकृताम् ।
शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव ॥ ०२१ ॥

सोऽहमागस्करः पापः पृथिवीनाशकारकः ।
आसीन एवमेवेदं शोषयिष्ये कलेवरम् ॥ ०२२ ॥

प्रायोपविष्टं जानीध्वमद्य मां गुरुघातिनम् ।
जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् ॥ ०२३ ॥

न भोक्ष्ये न च पानीयमुपयोक्ष्ये कथञ्चन ।
शोषयिष्ये प्रियान्प्राणानिहस्थोऽहं तपोधन ॥ ०२४ ॥

यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः ।
सर्वे मामनुजानीत त्यक्ष्यामीदं कलेवरम् ॥ ०२५ ॥

वैशंपायन उवाच ॥

तमेवंवादिनं पार्थं बन्धुशोकेन विह्वलम् ।
मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ॥ ०२६ ॥

अतिवेलं महाराज न शोकं कर्तुमर्हसि ।
पुनरुक्तं प्रवक्ष्यामि दिष्टमेतदिति प्रभो ॥ ०२७ ॥

संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ ०२८ ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ०२९ ॥

सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम् ।
भूतिः श्रीर्ह्रीर्धृतिः सिद्धिर्नादक्षे निवसन्त्युत ॥ ०३० ॥

नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः ।
न च प्रज्ञालमर्थेभ्यो न सुखेभ्योऽप्यलं धनम्  ॥ ०३१  ॥

यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्कुरु ।
अत एव हि सिद्धिस्ते नेशस्त्वमात्मना नृप  ॥ ०३२  ॥

---

## अश्मजनकसंवादः

## अध्याय ०२८

वैशंपायन उवाच  ॥

ज्ञातिशोकाभितप्तस्य प्राणानभ्युत्सिसृक्षतः ।
ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत्  ॥ ००१  ॥

व्यास उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर  ॥ ००२  ॥

अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृपः ।
संशयं परिपप्रच्छ दुःखशोकपरिप्लुतः  ॥ ००३  ॥

जनक उवाच  ॥

आगमे यदि वापाये ज्ञातीनां द्रविणस्य च ।

नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ॥ ००४ ॥

अश्मोवाच ॥

उत्पन्नमिममात्मानं नरस्यानन्तरं ततः ।
तानि तान्यभिवर्तन्ते दुःखानि च सुखानि च ॥ ००५ ॥

तेषामन्यतरापत्तौ यद्यदेवोपसेवते ।
तत्तद्धि चेतनामस्य हरत्यभ्रमिवानिलः ॥ ००६ ॥

अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येवं हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यति ॥ ००७ ॥

स प्रसिक्तमना भोगान्विसृज्य पितृसञ्चितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ ००८ ॥

तमतिक्रान्तमर्यादमाददानमसांप्रतम् ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ ००९ ॥

ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः ।
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥ ०१० ॥

तेषां परमदुःखानां बुद्ध्या भेषजमादिशेत् ।
सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ॥ ०११ ॥

मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः ।
अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ॥ ०१२ ॥

एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते तथा सांस्पर्शकानि च ॥ ०१३ ॥

जरामृत्यू ह भूतानि खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ ०१४ ॥

न कश्चिज्जात्वतिक्रामेज्जरामृत्यू ह मानवः ।
अपि सागरपर्यन्तां विजित्येमां वसुंधराम् ॥ ०१५ ॥

सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम् ।
प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते ॥ ०१६ ॥

पूर्वे वयसि मध्ये वाप्युत्तमे वा नराधिप ।
अवर्जनीयास्तेऽर्था वै काङ्क्षिताश्च ततोऽन्यथा ॥ ०१७ ॥

सुप्रियैर्विप्रयोगश्च संप्रयोगस्तथाप्रियैः ।
अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते ॥ ०१८ ॥

प्रादुर्भावश्च भूतानां देहन्यासस्तथैव च ।
प्राप्तिव्यायामयोगश्च सर्वमेतत्प्रतिष्ठितम् ॥ ०१९ ॥

गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः ।
तथैव सुखदुःखानि विधानमनुवर्तते ॥ ०२० ॥

आसनं शयनं यानमुत्थानं पानभोजनम् ।
नियतं सर्वभूतानां कालेनैव भवन्त्युत ॥ ०२१ ॥

वैद्याश्चाप्यातुराः सन्ति बलवन्तः सुदुर्बलाः ।
स्त्रीमन्तश्च तथा षण्ढा विचित्रः कालपर्ययः ॥ ०२२ ॥

कुले जन्म तथा वीर्यमारोग्यं धैर्यमेव च ।
सौभाग्यमुपभोगश्च भवितव्येन लभ्यते ॥ ०२३ ॥

सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम् ।
बहूनामिच्छतां नास्ति समृद्धानां विचेष्टताम्  ॥ ०२४  ॥

व्याधिरग्निर्जलं शस्त्रं बुभुक्षा श्वापदं विषम् ।
रज्ज्वा च मरणं जन्तोरुच्चाच्च पतनं तथा  ॥ ०२५  ॥

निर्याणं यस्य यद्दिष्टं तेन गच्छति हेतुना ।
दृश्यते नाभ्यतिक्रामन्नतिक्रान्तो न वा पुनः  ॥ ०२६  ॥

दृश्यते हि युवैवेह विनश्यन्वसुमान्नरः ।
दरिद्रश्च परिक्लिष्टः शतवर्षो जनाधिप  ॥ ०२७  ॥

अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः ।
समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत्  ॥ ०२८  ॥

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
काष्ठान्यपि हि जीर्यन्ते दरिद्राणां नराधिप  ॥ ०२९  ॥

अहमेतत्करोमीति मन्यते कालचोदितः ।
यद्यदिष्टमसंतोषाद्दुरात्मा पापमाचरन्  ॥ ०३०  ॥

स्त्रियोऽक्षा मृगया पानं प्रसङ्गान्निन्दिता बुधैः ।
दृश्यन्ते चापि बहवः संप्रसक्ता बहुश्रुताः  ॥ ०३१  ॥

इति कालेन सर्वार्थानीप्सितानीप्सितानि च ।
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते  ॥ ०३२  ॥

वायुमाकाशमग्निं च चन्द्रादित्यावहःक्षपे ।
ज्योतींषि सरितः शैलान्कः करोति बिभर्ति वा  ॥ ०३३  ॥

शीतमुष्णं तथा वर्षं कालेन परिवर्तते ।

एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥ ०३४ ॥

नौषधानि न शास्त्राणि न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ०३५ ॥

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यतीयातां तद्वद्भूतसमागमः ॥ ०३६ ॥

ये चापि पुरुषैः स्त्रीभिर्गीतवाद्यैरुपस्थिताः ।
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥ ०३७ ॥

मातृपितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ ०३८ ॥

नैवास्य कश्चिद्भविता नायं भवति कस्यचित् ।
पथि सङ्गतमेवेदं दारबन्धुसुहृद्गणैः ॥ ०३९ ॥

क्वासं क्वास्मि गमिष्यामि को न्वहं किमिहास्थितः ।
कस्मात्कमनुशोचेयमित्येवं स्थापयेन्मनः ॥ ०४० ॥

अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ ॥ ०४० ॥

न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः ।
आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥ ०४१ ॥

कुर्वीत पितृदैवत्यं धर्माणि च समाचरेत् ।
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्यनुव्रजेत् ॥ ०४२ ॥

संनिमज्जज्जगदिदं गम्भीरे कालसागरे ।
जरामृत्युमहाग्राहे न कश्चिदवबुध्यते ॥ ०४३ ॥

आयुर्वेदमधीयानाः केवलं सपरिग्रहम् ।
दृश्यन्ते बहवो वैद्या व्याधिभिः समभिप्लुताः ॥ ०४४ ॥

ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
न मृत्युमतिवर्तन्ते वेलामिव महोदधिः ॥ ०४५ ॥

रसायनविदश्चैव सुप्रयुक्तरसायनाः ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ०४६ ॥

तथैव तपसोपेताः स्वाध्यायाभ्यसने रताः ।
दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ ॥ ०४७ ॥

न ह्यहानि निवर्तन्ते न मासा न पुनः समाः ।
जातानां सर्वभूतानां न पक्षा न पुनः क्षपाः ॥ ०४८ ॥

सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः ।
नरोऽवशः समभ्येति सर्वभूतनिषेवितम् ॥ ०४९ ॥

देहो वा जीवतोऽभ्येति जीवो वाभ्येति देहतः ।
पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ ०५० ॥

नायमत्यन्तसंवासो लभ्यते जातु केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ०५१ ॥

क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि च ॥ ०५२ ॥

न ह्येव पुरुषो द्रष्टा स्वर्गस्य नरकस्य वा ।
आगमस्तु सतां चक्षुर्नृपते तमिहाचर ॥ ०५३ ॥

चरितब्रह्मचर्यो हि प्रजायेत यजेत च ।

पितृदेवमहर्षीणामानृण्यायानसूयकः ॥ ०५४ ॥

स यज्ञशीलः प्रजने निविष्टः ; प्राग्ब्रह्मचारी प्रविभक्तपक्षः ।
आराधयन्स्वर्गमिमं च लोकं ; परं च मुक्त्वा हृदयव्यलीकम् ॥ ०५५ ॥

सम्यग्घि धर्मं चरतो नृपस्य ; द्रव्याणि चाप्याहरतो यथावत् ।
प्रवृत्तचक्रस्य यशोऽभिवर्धते ; सर्वेषु लोकेषु चराचरेषु ॥ ०५६ ॥

व्यास उवाच ॥

इत्येवमाज्ञाय विदेहराजो ; वाक्यं समग्रं परिपूर्णहेतुः ।
अश्मानमामन्त्र्य विशुद्धबुद्धि ;र्ययौ गृहं स्वं प्रति शान्तशोकः ॥ ०५७ ॥

तथा त्वमप्यच्युत मुञ्च शोक ;मुत्तिष्ठ शक्रोपम हर्षमेहि ।
क्षात्रेण धर्मेण मही जिता ते ; तां भुङ्क्ष्व कुन्तीसुत मा विषादीः ॥ ०५८ ॥

---

# षोडशराजकीयोपाख्यानम्

## अध्याय ०२९

वैशंपायन उवाच ॥

अव्याहरति कौन्तेये धर्मपुत्रे युधिष्ठिरे ।
गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः ॥ ००१ ॥

ज्ञातिशोकाभिसंतप्तो धर्मराजः परंतपः ।
एष शोकार्णवे मग्नस्तमाश्वासय माधव ॥ ००२ ॥

सर्वे स्म ते संशयिताः पुनरेव जनार्दन ।
अस्य शोकं महाबाहो प्रणाशयितुमर्हसि ॥ ००३ ॥

एवमुक्तस्तु गोविन्दो विजयेन महात्मना ।
पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः ॥ ००४ ॥

अनतिक्रमणीयो हि धर्मराजस्य केशवः ।
बाल्यात्प्रभृति गोविन्दः प्रीत्या चाभ्यधिकोऽर्जुनात् ॥ ००५ ॥

संप्रगृह्य महाबाहुर्भुजं चन्दनभूषितम् ।
शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ॥ ००६ ॥

शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनम् ।
व्याकोशमिव विस्पष्टं पद्मं सूर्यविबोधितम् ॥ ००७ ॥

मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम् ।
न हि ते सुलभा भूयो ये हतास्मिन्रणाजिरे ॥ ००८ ॥

स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने ।
एवं ते क्षत्रिया राजन्ये व्यतीता महारणे ॥ ००९ ॥

सर्वे ह्यभिमुखाः शूरा विगता रणशोभिनः ।
नैषां कश्चित्पृष्ठतो वा पलायन्वापि पातितः ॥ ०१० ॥

सर्वे त्यक्त्वात्मनः प्राणान्युद्धा वीरा महाहवे ।
शस्त्रपूता दिवं प्राप्ता न ताञ्शोचितुमर्हसि ॥ ०११ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृञ्जयं पुत्रशोकार्तं यथायं प्राह नारदः ॥ ०१२ ॥

सुखदुःखैरहं त्वं च प्रजाः सर्वाश्च सृञ्जय ।
अविमुक्तं चरिष्यामस्तत्र का परिदेवना ॥ ०१३ ॥

महाभाग्यं परं राज्ञां कीर्त्यमानं मया शृणु ।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ ०१४ ॥

मृतान्महानुभावांस्त्वं श्रुत्वैव तु महीपतीन् ।
श्रुत्वापनय संतापं शृणु विस्तरशश्च मे ॥ ०१५ ॥

आविक्षितं मरुत्तं मे मृतं सृञ्जय शुश्रुहि ।
यस्य सेन्द्राः सवरुणा बृहस्पतिपुरोगमाः ॥ ०१६ ॥

देवा विश्वसृजो राज्ञो यज्ञमीयुर्महात्मनः ॥ ०१६ ॥

यः स्पर्धामनयच्छक्रं देवराजं शतक्रतुम् ।
शक्रप्रियैषी यं विद्वान्प्रत्याचष्ट बृहस्पतिः ॥ ०१७ ॥

संवर्तो याजयामास यं पीडार्थं बृहस्पतेः ॥ ०१७ ॥

यस्मिन्प्रशासति सतां नृपतौ नृपसत्तम ।
अकृष्टपच्या पृथिवी विबभौ चैत्यमालिनी ॥ ०१८ ॥

आविक्षितस्य वै सत्रे विश्वे देवाः सभासदः ।
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः ॥ ०१९ ॥

मरुद्गणा मरुत्तस्य यत्सोममपिबन्त ते ।
देवान्मनुष्यान्गान्धर्वानत्यरिच्यन्त दक्षिणाः ॥ ०२० ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०२१ ॥

सुहोत्रं चेद्वैतिथिनं मृतं सृञ्जय शुश्रुम ।
यस्मै हिरण्यं ववृषे मगह्वान्परिवत्सरम् ॥ ०२२ ॥

सत्यनामा वसुमती यं प्राप्यासीज्जनाधिप ।
हिरण्यमवहन्नद्यस्तस्मिञ्जनपदेश्वरे ॥ ०२३ ॥

कूर्मान्कर्कटकान्नक्रान्मकराञ्शिंशुकानपि ।
नदीष्वपातयद्राजन्मघवा लोकपूजितः ॥ ०२४ ॥

हैरण्यान्पतितान्दृष्ट्वा मत्स्यान्मकरकच्छपान् ।
सहस्रशोऽथ शतशस्ततोऽस्मयत वैतिथिः ॥ ०२५ ॥

तद्धिरण्यमपर्यन्तमावृत्तं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समाहितः ॥ ०२६ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०२७ ॥

अदक्षिणमयज्वानं श्वैत्य संशाम्य मा शुचः ॥ ०२७ ॥

अङ्गं बृहद्रथं चैव मृतं शुश्रुम सृञ्जय ।
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत् ॥ ०२८ ॥

सहस्रं च सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ०२९ ॥

शतं शतसहस्राणां वृषाणां हेममालिनाम् ।
गवां सहस्रानुचरं दक्षिणामत्यकालयत् ॥ ०३० ॥

अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ०३१ ॥

यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुनः ।
देवान्मनुष्यान्गान्धर्वानत्यरिच्यन्त दक्षिणाः ॥ ०३२ ॥

न जातो जनिता चान्यः पुमान्यस्तत्प्रदास्यति ।
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ॥ ०३३ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०३४ ॥

शिबिमौशीनरं चैव मृतं शुश्रुम सृञ्जय ।
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ॥ ०३५ ॥

महता रथघोषेण पृथिवीमनुनादयन् ।
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ ०३६ ॥

यावदद्य गवाश्वं स्यादारण्यैः पशुभिः सह ।
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ॥ ०३७ ॥

नोद्यन्तारं धुरं तस्य कश्चिन्मेने प्रजापतिः ।
न भूतं न भविष्यन्तं सर्वराजसु भारत ॥ ०३८ ॥

अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् ॥ ०३८ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०३९ ॥

अदक्षिणमयज्वानं तं वै संशाम्य मा शुचः ॥ ०३९ ॥

भरतं चैव दौःषन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलिं महेष्वासं भूरिद्रविणतेजसम् ॥ ०४० ॥

यो बद्धा त्रिंशतो ह्यश्वान्देवेभ्यो यमुनामनु ।
सरस्वतीं विंशतिं च गङ्गामनु चतुर्दश ॥ ०४१ ॥

अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान्स महातेजा दौःषन्तिर्भरतः पुरा ॥ ०४२ ॥

भरतस्य महत्कर्म सर्वराजसु पार्थिवाः ।
खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥ ०४३ ॥

परं सहस्राद्यो बद्धा हयान्वेदीं विचित्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ ०४४ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०४५ ॥

रामं दाशरथिं चैव मृतं शुश्रुम सृञ्जय ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ ०४६ ॥

विधवा यस्य विषये नानाथाः काश्चनाभवन् ।
सर्वस्यासीत्पितृसमो रामो राज्यं यदान्वशात् ॥ ०४७ ॥

कालवर्षाश्च पर्जन्याः सस्यानि रसवन्ति च ।
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥ ०४८ ॥

प्राणिनो नाप्सु मज्जन्ति नानर्थे पावकोऽदहत् ।
न व्यालजं भयं चासीद्रामे राज्यं प्रशासति ॥ ०४९ ॥

आसन्वर्षसहस्राणि तथा पुत्रसहस्रिकाः ।
अरोगाः सर्वसिद्धार्थाः प्रजा रामे प्रशासति ॥ ०५० ॥

नान्योन्येन विवादोऽभूत्स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन्रामे राज्यं प्रशासति ॥ ०५१ ॥

नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥ ०५२ ॥

स चतुर्दश वर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधाञ्जारूथ्यानाजहार निरर्गलान् ॥ ०५३ ॥

श्यामो युवा लोहिताक्षो मत्तवारणविक्रमः ।
दश वर्षसहस्राणि रामो राज्यमकारयत् ॥ ०५४ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०५५ ॥

भगीरथं च राजानं मृतं शुश्रुम सृञ्जय ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥ ०५६ ॥

असुराणां सहस्राणि बहूनि सुरसत्तमः ।
अजयद्बाहुवीर्येण भगवान्पाकशासनः ॥ ०५७ ॥

यः सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ०५८ ॥

सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः ।
रथे रथे शतं नागाः पद्मिनो हेममालिनः ॥ ०५९ ॥

सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः ।
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥ ०६० ॥

उपह्वरे निवसतो यस्याङ्के निषसाद ह ।

गङ्गा भागीरथी तस्मादुर्वशी ह्यभवत्पुरा ॥ ०६१ ॥

भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥ ०६२ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०६३ ॥

दिलीपं चैवैलविलं मृतं शुश्रुम सृञ्जय ।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥ ०६४ ॥

इमां वै वसुसंपन्नां वसुधां वसुधाधिपः ।
ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ॥ ०६५ ॥

तस्येह यजमानस्य यज्ञे यज्ञे पुरोहितः ।
सहस्रं वारणान्हैमान्दक्षिणामत्यकालयत् ॥ ०६६ ॥

यस्य यज्ञे महानासीद्यूपः श्रीमान्हिरण्मयः ।
तं देवाः कर्म कुर्वाणाः शक्रज्येष्ठा उपाश्रयन् ॥ ०६७ ॥

चषालो यस्य सौवर्णस्तस्मिन्यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥ ०६८ ॥

अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ ०६९ ॥

एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यत्स्त्रियो हेमसंपन्नाः पथि मत्ताः स्म शेरते ॥ ०७० ॥

राजानमुग्रधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्सुमहात्मानं तेऽपि स्वर्गजितो नराः ॥ ०७१ ॥

त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषो दीयतामिति चैव हि ॥ ०७२ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०७३ ॥

मान्धातारं यौवनाश्वं मृतं शुश्रुम सृञ्जय ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ ०७४ ॥

संवृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ॥ ०७५ ॥

यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥ ०७६ ॥

मामेव धास्यतीत्येवमिन्द्रो अभ्यवपद्यत ।
मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ ०७७ ॥

ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ०७८ ॥

तं पिबन्पाणिमिन्द्रस्य समामह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन पार्थिव ॥ ०७९ ॥

तमियं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ ०८० ॥

य आङ्गारं हि नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥ ०८१ ॥

यौवनाश्वो यदाङ्गारं समरे समयोधयत् ।
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥ ०८२ ॥

यतः सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ०८३ ॥

अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददाद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो महीपतिः ॥ ०८४ ॥

हैरण्यान्योजनोत्सेधानायतान्दशयोजनम् ।
अतिरिक्तान्द्विजातिभ्यो व्यभजन्नितरे जनाः ॥ ०८५ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०८६ ॥

ययातिं नाहुषं चैव मृतं शुश्रुम सृञ्जय ।
य इमां पृथिवीं सर्वां विजित्य सहसागराम् ॥ ०८७ ॥

शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्नृप ।
ईजानः क्रतुभिः पुण्यैः पर्यगच्छद्वसुंधराम् ॥ ०८८ ॥

इष्ट्वा क्रतुसहस्रेण वाजिमेधशतेन च ।
तर्पयामास देवेन्द्रं त्रिभिः काञ्चनपर्वतैः ॥ ०८९ ॥

व्यूढे देवासुरे युद्धे हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥ ०९० ॥

अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पूरुं राज्येऽभिषिच्य स्वे सदारः प्रस्थितो वनम् ॥ ०९१ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।

पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०९२ ॥

अम्बरीषं च नाभागं मृतं शुश्रुम सृञ्जय ।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तम ॥ ०९३ ॥

यः सहस्रं सहस्राणां राज्ञामयुत याजिनाम् ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समाहितः ॥ ०९४ ॥

नैतत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
इत्यम्बरीषं नाभागमन्वमोदन्त दक्षिणाः ॥ ०९५ ॥

शतं राजसहस्राणि शतं राजशतानि च ।
सर्वेऽश्वमेधैरीजानास्तेऽभ्ययुर्दक्षिणायनम् ॥ ०९६ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ०९७ ॥

शशबिन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय ।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥ ०९८ ॥

सहस्रं तु सहस्राणां यस्यासञ्शाशबिन्दवः ।
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ॥ ०९९ ॥

शतं कन्या राजपुत्रमेकैकं पृष्ठतोऽन्वयुः ।
कन्यां कन्यां शतं नागा नागं नागं शतं रथाः ॥ १०० ॥

रथं रथं शतं चाश्वा देशजा हेममालिनः ।
अश्वमश्वं शतं गावो गां गां तद्वदजाविकम् ॥ १०१ ॥

एतद्धनमपर्यन्तमश्वमेधे महामखे ।
शशबिन्दुर्महाराज ब्राह्मणेभ्यः समादिशत् ॥ १०२ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १०३ ॥

गयमामूर्तरयसं मृतं शुश्रुम सृञ्जय ।
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ १०४ ॥

यस्मै वह्निर्वरान्प्रादात्ततो वव्रे वरान्गयः ।
ददतो मेऽक्षया चास्तु धर्मे श्रद्धा च वर्धताम् ॥ १०५ ॥

मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन ।
लेभे च कामांस्तान्सर्वान्पावकादिति नः श्रुतम् ॥ १०६ ॥

दर्शेन पौर्णमासेन चातुर्मास्यैः पुनः पुनः ।
अयजत्स महातेजाः सहस्रं परिवत्सरान् ॥ १०७ ॥

शतं गवां सहस्राणि शतमश्वशतानि च ।
उत्थायोत्थाय वै प्रादात्सहस्रं परिवत्सरान् ॥ १०८ ॥

तर्पयामास सोमेन देवान्वित्तैर्द्विजानपि ।
पितॄन्स्वधाभिः कामैश्च स्त्रियः स्वाः पुरुषर्षभ ॥ १०९ ॥

सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।
दक्षिणामददद्राजा वाजिमेधमहामखे ॥ ११० ॥

यावत्यः सिकता राजन्गङ्गायाः पुरुषर्षभ ।
तावतीरेव गाः प्रादादामूर्तरयसो गयः ॥ १११ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ११२ ॥

रन्तिदेवं च साङ्कृत्यं मृतं शुश्रुम सृञ्जय ।
सम्यगाराध्य यः शक्रं वरं लेभे महायशाः ॥ ११३ ॥

अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
श्रद्धा च नो मा व्यगमन्मा च याचिष्म कञ्चन ॥ ११४ ॥

उपातिष्ठन्त पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ ११५ ॥

महानदी चर्मराशेरुत्क्लेदात्सुस्रुवे यतः ।
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥ ११६ ॥

ब्राह्मणेभ्यो ददौ निष्कान्सदसि प्रतते नृपः ।
तुभ्यं तुभ्यं निष्कमिति यत्राक्रोशन्ति वै द्विजाः ॥ ११७ ॥

सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान्स्म प्रपद्यते ॥ ११७ ॥

अन्वाहार्योपकरणं द्रव्योपकरणं च यत् ।
घटाः स्थाल्यः कटाहाश्च पात्र्यश्च पिठरा अपि ॥ ११८ ॥

न तत्किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः ॥ ११८ ॥

साङ्कृते रन्तिदेवस्य यां रात्रिमवसद्गृहे ।
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ॥ ११९ ॥

तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ॥ १२० ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२१ ॥

सगरं च महात्मानं मृतं शुश्रुम सृञ्जय ।
ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम्  ॥ १२२  ॥

षष्टिः पुत्रसहस्राणि यं यान्तं पृष्ठतोऽन्वयुः ।
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव  ॥ १२३  ॥

एकच्छत्रा मही यस्य प्रणता ह्यभवत्पुरा ।
योऽश्वमेधसहस्रेण तर्पयामास देवताः  ॥ १२४  ॥

यः प्रादात्काञ्चनस्तम्भं प्रासादं सर्वकाञ्चनम् ।
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम्  ॥ १२५  ॥

द्विजातिभ्योऽनुरूपेभ्यः कामानुच्चावचांस्तथा ।
यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः  ॥ १२६  ॥

खानयामास यः कोपात्पृथिवीं सागराङ्किताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः  ॥ १२७  ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः  ॥ १२८  ॥

राजानं च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय ।
यमभ्यषिञ्चन्संभूय महारण्ये महर्षयः  ॥ १२९  ॥

प्रथयिष्यति वै लोकान्पृथुरित्येव शब्दितः ।
क्षताच्च नस्त्रायतीति स तस्मात्क्षत्रियः स्मृतः  ॥ १३०  ॥

पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत  ॥ १३१  ॥

अकृष्टपच्या पृथिवी पुटके पुटके मधु ।

सर्वा द्रोणदुघा गावो वैन्यस्यासन्प्रशासतः ॥ १३२ ॥

अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः ।
यथाभिकाममवसन्क्षेत्रेषु च गृहेषु च ॥ १३३ ॥

आपः संस्तम्भिरे यस्य समुद्रस्य यियासतः ।
सरितश्चानुदीर्यन्त ध्वजसङ्गश्च नाभवत् ॥ १३४ ॥

हैरण्यांस्त्रिनलोत्सेधान्पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥ १३५ ॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १३६ ॥

किं वै तूष्णीं ध्यायसि सृञ्जय त्वं ; न मे राजन्वाचमिमां श्रृणोषि ।
न चेन्मोघं विप्रलप्तं मयेदं ; पथ्यं मुमूर्षोरिव सम्यगुक्तम् ॥ १३७ ॥

सृञ्जय उवाच ॥

श्रृणोमि ते नारद वाचमेतां ; विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।
राजर्षीणां पुण्यकृतां महात्मनां ; कीर्त्या युक्तां शोकनिर्णाशनार्थम् ॥ १३८ ॥

न ते मोघं विप्रलप्तं महर्षे ; दृष्ट्वैव त्वां नारदाहं विशोकः ।
शुश्रूषे ते वचनं ब्रह्मवादि ;न्न ते तृप्याम्यमृतस्येव पानात् ॥ १३९ ॥

अमोघदर्शिन्मम चेत्प्रसादं ; सुताघदग्धस्य विभो प्रकुर्याः ।
मृतस्य सञ्जीवनमद्य मे स्या ;त्तव प्रसादात्सुतसङ्गमश्च ॥ १४० ॥

नारद उवाच ॥

यस्ते पुत्रो दयितोऽयं वियातः ; स्वर्णष्ठीवी यमदात्पर्वतस्ते ।

पुनस्ते तं पुत्रमहं ददामि ; हिरण्यनाभं वर्षसहस्रिणं च ॥ १४१ ॥

---

# अध्याय ०३०

युधिष्ठिर उवाच ॥

स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत् ।
पर्वतेन किमर्थं च दत्तः केन ममार च ॥ ००१ ॥

यदा वर्षसहस्रायुस्तदा भवति मानवः ।
कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः ॥ ००२ ॥

उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत् ।
तथ्यं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ ००३ ॥

वासुदेव उवाच ॥

अत्र ते कथयिष्यामि यथा वृत्तं जनेश्वर ।
नारदः पर्वतश्चैव प्रागृषी लोकपूजितौ ॥ ००४ ॥

मातुलो भागिनेयश्च देवलोकादिहागतौ ।
विहर्तुकामौ संप्रीत्या मानुष्येषु पुरा प्रभू ॥ ००५ ॥

हविःपवित्रभोज्येन देव भोज्येन चैव ह ।
नारदो मातुलश्चैव भागिनेयश्च पर्वतः ॥ ००६ ॥

तावुभौ तपसोपेताववनीतलचारिणौ ।

भुञ्जानौ मानुषान्भोगान्यथावत्पर्यधावताम् ॥ ००७ ॥

प्रीतिमन्तौ मुदा युक्तौ समयं तत्र चक्रतुः ।
यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाशुभः ॥ ००८ ॥

अन्योन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत् ॥ ००८ ॥

तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ।
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ॥ ००९ ॥

आवां भवति वत्स्यावः कञ्चित्कालं हिताय ते ।
यथावत्पृथिवीपाल आवयोः प्रगुणीभव ॥ ०१० ॥

तथेति कृत्वा तौ राजा सत्कृत्योपचचार ह ॥ ०१० ॥

ततः कदाचित्तौ राजा महात्मानौ तथागतौ ।
अब्रवीत्परमप्रीतः सुतेयं वरवर्णिनी ॥ ०११ ॥

एकैव मम कन्यैषा युवां परिचरिष्यति ।
दर्शनीयानवद्याङ्गी शीलवृत्तसमन्विता ॥ ०१२ ॥

सुकुमारी कुमारी च पद्मकिञ्जल्कसंनिभा ॥ ०१२ ॥

परमं सौम्य इत्युक्तस्ताभ्यां राजा शशास ताम् ।
कन्ये विप्रावुपचर देववत्पितृवच्च ह ॥ ०१३ ॥

सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ ०१४ ॥

तस्यास्तथोपचारेण रूपेणाप्रतिमेन च ।
नारदं हृच्छयस्तूर्णं सहसैवान्वपद्यत ॥ ०१५ ॥

ववृधे च ततस्तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तावुडुराड्शनैः ॥ ०१६ ॥

न च तं भागिनेयाय पर्वताय महात्मने ।
शशंस मन्मथं तीव्रं व्रीडमानः स धर्मवित् ॥ ०१७ ॥

तपसा चेङ्गितेनाथ पर्वतोऽथ बुबोध तत् ।
कामार्तं नारदं क्रुद्धः शशापैनं ततो भृशम् ॥ ०१८ ॥

कृत्वा समयमव्यग्रो भवान्वै सहितो मया ।
यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाशुभः ॥ ०१९ ॥

अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम् ।
भवता वचनं ब्रह्मंस्तस्मादेतद्वदाम्यहम् ॥ ०२० ॥

न हि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा ।
सुकुमार्यां कुमार्यां ते तस्मादेष शपाम्यहम् ॥ ०२१ ॥

ब्रह्मवादी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन् ।
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः ॥ ०२२ ॥

शप्स्ये तस्मात्सुसङ्क्रुद्धो भवन्तं तं निबोध मे ।
सुकुमारी च ते भार्या भविष्यति न संशयः ॥ ०२३ ॥

वानरं चैव कन्या त्वां विवाहात्प्रभृति प्रभो ।
संद्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाकृतम् ॥ ०२४ ॥

स तद्वाक्यं तु विज्ञाय नारदः पर्वतात्तदा ।
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः ॥ ०२५ ॥

तपसा ब्रह्मचर्येण सत्येन च दमेन च ।
युक्तोऽपि धर्मनित्यश्च न स्वर्गवासमाप्स्यसि ॥ ०२६ ॥

तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ ।
प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ ॥ ०२७ ॥

पर्वतः पृथिवीं कृत्स्नां विचचार महामुनिः ।
पूज्यमानो यथान्यायं तेजसा स्वेन भारत ॥ ०२८ ॥

अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम् ।
धर्मेण धर्मप्रवरः सुकुमारीमनिन्दिताम् ॥ ०२९ ॥

सा तु कन्या यथाशापं नारदं तं ददर्श ह ।
पाणिग्रहणमन्त्राणां प्रयोगादेव वानरम् ॥ ०३० ॥

सुकुमारी च देवर्षिं वानरप्रतिमाननम् ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ॥ ०३१ ॥

उपतस्थे च भर्तारं न चान्यं मनसाप्यगात् ।
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला ॥ ०३२ ॥

ततः कदाचिद्भगवान्पर्वतोऽनुससार ह ।
वनं विरहितं किञ्चित्तत्रापश्यत्स नारदम् ॥ ०३३ ॥

ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा ।
भवान्प्रसादं कुरुतां स्वर्गादेशाय मे प्रभो ॥ ०३४ ॥

तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तदा ।
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम् ॥ ०३५ ॥

त्वयाहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ।

इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात्  ॥ ०३६  ॥

अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह  ॥ ०३६  ॥

तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान् ।
निवर्तयेतां तौ शापमन्योऽन्येन तदा मुनी  ॥ ०३७  ॥

श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम् ।
सुकुमारी प्रदुद्राव परपत्यभिशङ्कया  ॥ ०३८  ॥

तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।
अब्रवीत्तव भर्तैष नात्र कार्या विचारणा  ॥ ०३९  ॥

ऋषिः परमधर्मात्मा नारदो भगवान्प्रभुः ।
तवैवाभेद्यहृदयो मा ते भूदत्र संशयः  ॥ ०४०  ॥

सानुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुः श्रुत्वा स्वां प्रकृतिं गता  ॥ ०४१  ॥

पर्वतोऽथ ययौ स्वर्गं नारदोऽथ ययौ गृहान्  ॥ ०४१  ॥

प्रत्यक्षकर्मा सर्वस्य नारदोऽयं महानृषिः ।
एष वक्ष्यति वै पृष्टो यथा वृत्तं नरोत्तम  ॥ ०४२  ॥

# सुवर्णष्ठीव्युपाख्यानम्

## अध्याय ०३१

वैशंपायन उवाच ॥

ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत ।
भगवञ्श्रोतुमिच्छामि सुवर्णष्ठीविसंभवम् ॥ ००१ ॥

एवमुक्तः स च मुनिर्धर्मराजेन नारदः ।
आचचक्षे यथा वृत्तं सुवर्णष्ठीविनं प्रति ॥ ००२ ॥

एवमेतन्महाराज यथायं केशवोऽब्रवीत् ।
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥ ००३ ॥

अहं च पर्वतश्चैव स्वस्रीयो मे महामुनिः ।
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ॥ ००४ ॥

तत्र संपूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ॥ ००५ ॥

व्यतिक्रान्तासु वर्षासु समये गमनस्य च ।
पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥ ००६ ॥

आवामस्य नरेन्द्रस्य गृहे परमपूजितौ ।
उषितौ समये ब्रह्मंश्चिन्त्यतामत्र सांप्रतम् ॥ ००७ ॥

ततोऽहमब्रुवं राजन्पर्वतं शुभदर्शनम् ।
सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ॥ ००८ ॥

वरेण छन्द्यतां राजा लभतां यद्यदिच्छति ।
आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥ ००९ ॥

तत आहूय राजानं सृञ्जयं शुभदर्शनम् ।
पर्वतोऽनुमतं वाक्यमुवाच मुनिपुङ्गवः ॥ ०१० ॥

प्रीतौ स्वो नृप सत्कारैस्तव ह्यार्जवसंभृतैः ।
आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥ ०११ ॥

देवानामविहिंसायां यद्भवेन्मानुषक्षमम् ।
तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ॥ ०१२ ॥

सृञ्जय उवाच ॥

प्रीतौ भवन्तौ यदि मे कृतमेतावता मम ।
एष एव परो लाभो निर्वृत्तो मे महाफलः ॥ ०१३ ॥

नारद उवाच ॥

तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत ।
वृणीष्व राजन्सङ्कल्पो यस्ते हृदि चिरं स्थितः ॥ ०१४ ॥

सृञ्जय उवाच ॥

अभीप्सामि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मन्तं महाभागं देवराजसमद्युतिम् ॥ ०१५ ॥

पर्वत उवाच ॥

भविष्यत्येष ते कामो न त्वायुष्मान्भविष्यति ।
देवराजाभिभूत्यर्थं सङ्कल्पो ह्येष ते हृदि ॥ ०१६ ॥

सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति ।
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः ॥ ०१७ ॥

नारद उवाच ॥

तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः ।
प्रसादयामास तदा नैतदेवं भवेदिति ॥ ०१८ ॥

आयुष्मान्मे भवेत्पुत्रो भवतस्तपसा मुने ।
न च तं पर्वतः किञ्चिदुवाचेन्द्रव्यपेक्षया ॥ ०१९ ॥

तमहं नृपतिं दीनमब्रुवं पुनरेव तु ।
स्मर्तव्योऽहं महाराज दर्शयिष्यामि ते स्मृतः ॥ ०२० ॥

अहं ते दयितं पुत्रं प्रेतराजवशं गतम् ।
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥ ०२१ ॥

एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम् ।
सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम् ॥ ०२२ ॥

सृञ्जयस्याथ राजर्षेः कस्मिंश्चित्कालपर्यये ।
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव ॥ ०२३ ॥

ववृधे स यथाकालं सरसीव महोत्पलम् ।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥ ०२४ ॥

तदद्भुततमं लोके पप्रथे कुरुसत्तम ।
बुबुधे तच्च देवेन्द्रो वरदानं महात्मनोः ॥ ०२५ ॥

ततस्त्वभिभवाद्भीतो बृहस्पतिमते स्थितः ।

कुमारस्यान्तरप्रेक्षी बभूव बलवृत्रहा ॥ ०२६ ॥

चोदयामास वज्रं स दिव्यास्त्रं मूर्तिसंस्थितम् ।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो ॥ ०२७ ॥

विवृद्धः किल वीर्येण मामेषोऽभिभविष्यति ।
सृञ्जयस्य सुतो वज्र यथैनं पर्वतो ददौ ॥ ०२८ ॥

एवमुक्तस्तु शक्रेण वज्रः परपुरञ्जयः ।
कुमारस्यान्तरप्रेक्षी नित्यमेवान्वपद्यत ॥ ०२९ ॥

सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम् ।
हृष्टः सान्तःपुरो राजा वननित्योऽभवत्तदा ॥ ०३० ॥

ततो भागीरथीतीरे कदाचिद्वननिर्झरे ।
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत ॥ ०३१ ॥

पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः ।
सहसोत्पतितं व्याघ्रमाससाद महाबलः ॥ ०३२ ॥

तेन चैव विनिष्पिष्टो वेपमानो नृपात्मजः ।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥ ०३३ ॥

हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत ।
शार्दूलो देवराजस्य माययान्तर्हितस्तदा ॥ ०३४ ॥

धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत् ।
अभ्यधावत तं देशं स्वयमेव महीपतिः ॥ ०३५ ॥

स ददर्श गतासुं तं शयानं पीतशोणितम् ।
कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥ ०३६ ॥

स तमुत्सङ्गमारोप्य परिपीडितवक्षसम् ।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः ॥ ०३७ ॥

ततस्ता मातरस्तस्य रुदन्त्यः शोककर्शिताः ।
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥ ०३८ ॥

ततः स राजा सस्मार मामन्तर्गतमानसः ।
तच्चाहं चिन्तितं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥ ०३९ ॥

स मयैतानि वाक्यानि श्रावितः शोकलालसः ।
यानि ते यदुवीरेण कथितानि महीपते ॥ ०४० ॥

सञ्जीवितश्चापि मया वासवानुमते तदा ।
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ॥ ०४१ ॥

अत ऊर्ध्वं कुमारः स स्वर्णष्ठीवी महायशाः ।
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान् ॥ ०४२ ॥

कारयामास राज्यं स पितरि स्वर्गते विभुः ।
वर्षाणामेकशतवत्सहस्रं भीमविक्रमः ॥ ०४३ ॥

तत इष्ट्वा महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ॥ ०४४ ॥

उत्पाद्य च बहून्पुत्रान्कुलसंतानकारिणः ।
कालेन महता राजन्कालधर्ममुपेयिवान् ॥ ०४५ ॥

स त्वं राजेन्द्र सञ्जातं शोकमेतन्निवर्तय ।
यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ॥ ०४६ ॥

पितृपैतामहं राज्यमास्थाय दुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैरिष्टा.णल्लोकानवाप्स्यसि ॥ ०४७ ॥

---

# अध्याय ०३२

वैशंपायन उवाच ॥

तूष्णींभूतं तु राजानं शोचमानं युधिष्ठिरम् ।
तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ००१ ॥

प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मानुवर्तनम् ॥ ००२ ॥

अनुतिष्ठस्व वै राजन्पितृपैतामहं पदम् ।
ब्राह्मणेषु च यो धर्मः स नित्यो वेदनिश्चितः ॥ ००३ ॥

तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ ००४ ॥

तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥ ००५ ॥

प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वा यदि वा पुत्रस्तपस्वी वापि कश्चन ॥ ००६ ॥

पापान्सर्वैरुपायैस्तान्नियच्छेद्घातयेत वा ॥ ००६ ॥

अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम् ।

धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ॥ ००७ ॥

ते त्वया धर्महन्तारो निहताः सपदानुगाः ।
स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव ॥ ००८ ॥

राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ००८ ॥

युधिष्ठिर उवाच ॥

न तेऽभिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मः सर्वधर्मभृतां वर ॥ ००९ ॥

मया ह्यवध्या बहवो घातिता राज्यकारणात् ।
तान्यकार्याणि मे ब्रह्मन्दहन्ति च तपन्ति च ॥ ०१० ॥

व्यास उवाच ॥

ईश्वरो वा भवेत्कर्ता पुरुषो वापि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥ ०११ ॥

ईश्वरेण नियुक्ता हि साध्वसाधु च पार्थिव ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥ ०१२ ॥

यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथञ्चन ॥ ०१३ ॥

अथ वा तदुपादानात्प्राप्नुयुः कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ ०१४ ॥

न चैतदिष्टं कौन्तेय यदन्येन फलं कृतम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ ०१५ ॥

अथ वा पुरुषः कर्ता कर्मणोः शुभपापयोः ।
न परं विद्यते तस्मादेवमन्यच्छुभं कुरु ॥ ०१६ ॥

न हि कश्चित्क्वचिद्राजन्दिष्टात्प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ ०१७ ॥

यदि वा मन्यसे राजन्हठे लोकं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ ०१८ ॥

अथाभिपत्तिर्लोकस्य कर्तव्या शुभपापयोः ।
अभिपन्नतमं लोके राज्ञामुद्यतदण्डनम् ॥ ०१९ ॥

अथापि लोके कर्माणि समावर्तन्त भारत ।
शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतिः ॥ ०२० ॥

एवं सत्यं शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज तद्राजशार्दूल मैवं शोके मनः कृथाः ॥ ०२१ ॥

स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ ०२२ ॥

विहितानीह कौन्तेय प्रायश्चित्तानि कर्मिणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥ ०२३ ॥

तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं चरिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत ॥ ०२४ ॥

# अध्याय ०३३

युधिष्ठिर उवाच ॥

हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाः सपितामहाः ॥ ००१ ॥

क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा ।
वयस्या ज्ञातयश्चैव भ्रातरश्च पितामह ॥ ००२ ॥

बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥ ००३ ॥

तांस्तादृशानहं हत्वा धर्मनित्यान्महीक्षितः ।
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ॥ ००४ ॥

दह्याम्यनिशमद्याहं चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ ००५ ॥

दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान्परितप्ये पितामह ॥ ००६ ॥

का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति ।
विहीनानां स्वतनयैः पतिभिर्भ्रातृभिस्तथा ॥ ००७ ॥

अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहितान् ।
आक्रोशन्त्यः कृशा दीना निपतन्त्यश्च भूतले ॥ ००८ ॥

अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान्प्रियान्सर्वा गमिष्यन्ति यमक्षयम् ॥ ००९ ॥

वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम्  ॥ ०१०  ॥

ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके निपतिष्यामो ह्यधःशिरस एव च  ॥ ०११  ॥

शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमांश्च विशेषांस्त्वं ममाचक्ष्व पितामह  ॥ ०१२  ॥

---

# अध्याय ०३४

वैशंपायन उवाच  ॥

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
समीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम्  ॥ ००१  ॥

मा विषादं कृथा राजन्क्षत्रधर्ममनुस्मर ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ  ॥ ००२  ॥

काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः  ॥ ००३  ॥

न त्वं हन्ता न भीमोऽपि नार्जुनो न यमावपि ।
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम्  ॥ ००४  ॥

न यस्य मातापितरौ नानुग्राह्योऽस्ति कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः  ॥ ००५  ॥

हेतुमात्रमिदं तस्य कालस्य पुरुषर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥ ००६ ॥

कर्ममूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥ ००७ ॥

तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकारित्वे यैस्ते कालवशं गताः ॥ ००८ ॥

आत्मनश्च विजानीहि नियमव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाक्रम्य कारितः ॥ ००९ ॥

त्वष्ट्रेव विहितं यन्त्रं यथा स्थापयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ ०१० ॥

पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥ ०११ ॥

व्यलीकं चापि यत्त्वत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन्प्रायश्चित्तं तदाचर ॥ ०१२ ॥

इदं च श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥ ०१३ ॥

तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥ ०१४ ॥

एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तदा देवास्त्रिदिवं चैव लेभिरे ॥ ०१५ ॥

तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।

संश्रिता दानवानां वै साह्यार्थे दर्पमोहिताः ॥ ०१६ ॥

शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ ०१७ ॥

धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥ ०१८ ॥

एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वाथ राष्ट्रं वा न तद्वृत्तोपघातकम् ॥ ०१९ ॥

अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥ ०२० ॥

तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ ०२१ ॥

न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।
भ्रातृनाश्वासयैतांस्त्वं सुहृदश्च परंतप ॥ ०२२ ॥

यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥ ०२३ ॥

तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥ ०२४ ॥

त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ ०२५ ॥

अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ ०२६ ॥

मरुद्भिः सह जित्वारीन्मघवान्पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ ०२७ ॥

पूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान् ।
मरुद्गणवृतः शक्रः शुशुभे भासयन्दिशः ॥ ०२८ ॥

स्वर्गलोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥ ०२९ ॥

सोऽयं त्वमिह सङ्क्रान्तो विक्रमेण वसुंधराम् ।
निर्जिताश्च महीपाला विक्रमेण त्वयानघ ॥ ०३० ॥

तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥ ०३१ ॥

बालानपि च गर्भस्थान्सान्त्वानि समुदाचरन् ।
रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥ ०३२ ॥

कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति ॥ ०३३ ॥

एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥ ०३४ ॥

अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥ ०३५ ॥

अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकल्मषम् ।
चरस्व धर्मं कौन्तेय श्रेयान्यः प्रेत्य भाविकः ॥ ०३६ ॥

# अध्याय ०३५

युधिष्ठिर उवाच ॥

कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः ।
किं कृत्वा चैव मुच्येत तन्मे ब्रूहि पितामह ॥ ००१ ॥

व्यास उवाच ॥

अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्या च वर्तयन् ॥ ००२ ॥

सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ ००३ ॥

परिवित्तिः परिवेत्ता ब्रह्मोज्झो यश्च कुत्सकः ।
दिधिषूपतिस्तथा यः स्यादग्रेदिधिषुरेव च ॥ ००४ ॥

अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा ।
अतीर्थे ब्रह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ ००५ ॥

ग्रामयाजी च कौन्तेय राज्ञश्च परिविक्रयी ।
शूद्रस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः ॥ ००६ ॥

वृथापशुसमालम्भी वनदाहस्य कारकः ।
अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा ॥ ००७ ॥

यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ।

एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ॥ ००८ ॥

अकार्याण्यपि वक्ष्यामि यानि तानि निबोध मे ।
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ॥ ००९ ॥

स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया ।
अयाज्ययाजनं चैव तथाभक्ष्यस्य भक्षणम् ॥ ०१० ॥

शरणागतसंत्यागो भृत्यस्याभरणं तथा ।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ॥ ०११ ॥

आधानादीनि कर्माणि शक्तिमान्न करोति यः ।
अप्रयच्छंश्च सर्वाणि नित्यं देयानि भारत ॥ ०१२ ॥

दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम् ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः ॥ ०१३ ॥

पित्रा विभजते पुत्रो यश्च स्याद्गुरुतल्पगः ।
अप्रजायन्नधर्मेण भवत्याधर्मिको जनः ॥ ०१४ ॥

उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ।
यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते जनः ॥ ०१५ ॥

एतान्येव तु कर्माणि क्रियमाणानि मानवान् ।
येषु येषु निमित्तेषु न लिम्पन्त्यथ तच्छृणु ॥ ०१६ ॥

प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं निहत्याजौ न तेन ब्रह्महा भवेत् ॥ ०१७ ॥

अपि चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं तं धर्मं प्रब्रवीमि ते ॥ ०१८ ॥

अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति ॥ ०१९ ॥

प्राणात्यये तथाज्ञानादाचरन्मदिरामपि ।
अचोदितो धर्मपरः पुनः संस्कारमर्हति ॥ ०२० ॥

एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् ।
प्रायश्चित्तविधानेन सर्वमेतेन शुध्यति ॥ ०२१ ॥

गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् ।
उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ॥ ०२२ ॥

स्तेयं कुर्वंस्तु गुर्वर्थमापत्सु न निबध्यते ।
बहुशः कामकारेण न चेद्यः संप्रवर्तते ॥ ०२३ ॥

अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति ।
स्वयमप्राशिता यश्च न स पापेन लिप्यते ॥ ०२४ ॥

प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य वा ।
गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च ॥ ०२५ ॥

नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथञ्चन ।
आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥ ०२६ ॥

पारिवित्त्यं च पतिते नास्ति प्रव्रजिते तथा ।
भिक्षिते पारदार्यं च न तद्धर्मस्य दूषकम् ॥ ०२७ ॥

वृथापशुसमालम्भं नैव कुर्यान्न कारयेत् ।
अनुग्रहः पशूणां हि संस्कारो विधिचोदितः ॥ ०२८ ॥

अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम् ।
सकारणं तथा तीर्थेऽतीर्थे वा प्रतिपादनम् ॥ ०२९ ॥

स्त्रियस्तथापचारिण्यो निष्कृतिः स्याददूषिका ।
अपि सा पूयते तेन न तु भर्ता प्रदुष्यते ॥ ०३० ॥

तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददूषकः ।
असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् ॥ ०३१ ॥

वनदाहो गवामर्थे क्रियमाणो न दूषकः ॥ ०३१ ॥

उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति ।
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ॥ ०३२ ॥

---

# अध्याय ०३६

व्यास उवाच ॥

तपसा कर्मभिश्चैव प्रदानेन च भारत ।
पुनाति पापं पुरुषः पूतश्चेन्न प्रवर्तते ॥ ००१ ॥

एककालं तु भुञ्जानश्चरन्भैक्षं स्वकर्मकृत् ।
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ ००२ ॥

अनसूयुरधःशायी कर्म लोके प्रकाशयन् ।
पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ॥ ००३ ॥

षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।
मासे मासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ॥ ००४ ॥

संवत्सरेण मासाशी पूयते नात्र संशयः ।
तथैवोपरमन्राजन्स्वल्पेनापि प्रमुच्यते ॥ ००५ ॥

क्रतुना चाश्वमेधेन पूयते नात्र संशयः ।
य चास्यावभृथे स्नान्ति केचिदेवंविधा नराः ॥ ००६ ॥

ते सर्वे पूतपाप्मानो भवन्तीति परा श्रुतिः ।
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ ००७ ॥

गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयन् ।
ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ॥ ००८ ॥

कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिम् ।
दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ॥ ००९ ॥

गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये ।
साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ॥ ०१० ॥

शतं तै यस्तु काम्बोजान्ब्राह्मणेभ्यः प्रयच्छति ।
नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ॥ ०११ ॥

मनोरथं तु यो दद्यादेकस्मा अपि भारत ।
न कीर्तयेत दत्त्वा यः स च पापात्प्रमुच्यते ॥ ०१२ ॥

सुरापानं सकृत्पीत्वा योऽग्निवर्णां पिबेद्द्विजः ।
स पावयत्यथात्मानमिह लोके परत्र च ॥ ०१३ ॥

मेरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन् ।

महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः ॥ ०१४ ॥

बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
समितिं ब्राह्मणैर्गच्छेदिति वै ब्राह्मणी श्रुतिः ॥ ०१५ ॥

भूमिप्रदानं कुर्याद्यः सुरां पीत्वा विमत्सरः ।
पुनर्न च पिबेद्राजन्संस्कृतः शुध्यते नरः ॥ ०१६ ॥

गुरुतल्पी शिलां तप्तामायसीमधिसंविशेत् ।
पाणावाधाय वा शेफं प्रव्रजेदूर्ध्वदर्शनः ॥ ०१७ ॥

शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ।
कर्मभ्यो विप्रमुच्यन्ते यत्ताः संवत्सरं स्त्रियः ॥ ०१८ ॥

महाव्रतं चरेद्यस्तु दद्यात्सर्वस्वमेव तु ।
गुर्वर्थे वा हतो युद्धे स मुच्येत्कर्मणोऽशुभात् ॥ ०१९ ॥

अनृतेनोपचर्ता च प्रतिरोद्धा गुरोस्तथा ।
उपहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते ॥ ०२० ॥

अवकीर्णिनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
खरचर्मवासाः षण्मासं तथा मुच्येत किल्बिषात् ॥ ०२१ ॥

परदारापहारी च परस्यापहरन्वसु ।
संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् ॥ ०२२ ॥

स्तेयं तु यस्यापहरेत्तस्मै दद्यात्समं वसु ।
विविधेनाभ्युपायेन तेन मुच्येत किल्बिषात् ॥ ०२३ ॥

कृच्छ्राद्द्वादशरात्रेण स्वभ्यस्तेन दशावरम् ।
परिवेत्ता भवेत्पूतः परिवित्तिश्च भारत ॥ ०२४ ॥

निवेश्यं तु भवेत्तेन सदा तारयिता पितॄन् ।
न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥ ०२५ ॥

भजने ह्यृतुना शुद्धं चातुर्मास्यं विधीयते ।
स्त्रियस्तेन विशुध्यन्ति इति धर्मविदो विदुः ॥ ०२६ ॥

स्त्रियस्त्वाशङ्किताः पापैर्नोपगम्या हि जानता ।
रजसा ता विशुध्यन्ते भस्मना भाजनं यथा ॥ ०२७ ॥

चतुष्पात्सकलो धर्मो ब्राह्मणानां विधीयते ।
पादावकृष्टो राजन्ये तथा धर्मो विधीयते ॥ ०२८ ॥

तथा वैश्ये च शूद्रे च पादः पादो विधीयते ।
विद्यादेवंविधेनैषां गुरुलाघवनिश्चयम् ॥ ०२९ ॥

तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्त्वेतरान्बहून् ।
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयेन्नरः ॥ ०३० ॥

अगम्यागमने राजन्प्रायश्चित्तं विधीयते ।
आर्द्रवस्त्रेण षण्मासं विहार्यं भस्मशायिना ॥ ०३१ ॥

एष एव तु सर्वेषामकार्याणां विधिर्भवेत् ।
ब्राह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः ॥ ०३२ ॥

सावित्रीमप्यधीयानः शुचौ देशे मिताशनः ।
अहिंस्रोऽमन्दकोऽजल्पन्मुच्यते सर्वकिल्बिषैः ॥ ०३३ ॥

अहःसु सततं तिष्ठेदभ्याकाशं निशि स्वपेत् ।
त्रिरह्नस्त्रिर्निशायाश्च सवासा जलमाविशेत् ॥ ०३४ ॥

स्त्रीशूद्रपतितांश्चापि नाभिभाषेद्व्रतान्वितः ।
पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः ॥ ०३५ ॥

शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकः ।
अतिरिच्येत्तयोर्यत्तु तत्कर्ता लभते फलम् ॥ ०३६ ॥

तस्माद्दानेन तपसा कर्मणा च शुभं फलम् ।
वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ॥ ०३७ ॥

कुर्याच्छुभानि कर्माणि निमित्ते पापकर्मणाम् ।
दद्यान्नित्यं च वित्तानि तथा मुच्येत किल्बिषात् ॥ ०३८ ॥

अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम् ।
महापातकवर्जं तु प्रायश्चित्तं विधीयते ॥ ०३९ ॥

भक्ष्याभक्ष्येषु सर्वेषु वाच्यावाच्ये तथैव च ।
अज्ञानज्ञानयो राजन्विहितान्यनुजानते ॥ ०४० ॥

जानता तु कृतं पापं गुरु सर्वं भवत्युत ।
अज्ञानात्स्खलिते दोषे प्रायश्चित्तं विधीयते ॥ ०४१ ॥

शक्यते विधिना पापं यथोक्तेन व्यपोहितुम् ।
आस्तिके श्रद्दधाने तु विधिरेष विधीयते ॥ ०४२ ॥

नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन ।
दम्भदोषप्रधानेषु विधिरेष न दृश्यते ॥ ०४३ ॥

शिष्टाचारश्च शिष्टश्च धर्मो धर्मभृतां वर ।
सेवितव्यो नरव्याघ्र प्रेत्य चेह सुखार्थिना ॥ ०४४ ॥

स राजन्मोक्ष्यसे पापात्तेन पूर्वेण हेतुना ।

त्राणार्थं वा वधेनैषामथ वा नृपकर्मणा ॥ ०४५ ॥

अथ वा ते घृणा काचित्प्रायश्चित्तं चरिष्यसि ।
मा त्वेवानार्यजुष्टेन कर्मणा निधनं गमः ॥ ०४६ ॥

---

# अध्याय ०३७

वैशंपायन उवाच ॥

एवमुक्तो भगवता धर्मराजो युधिष्ठिरः ।
चिन्तयित्वा मुहूर्तं तु प्रत्युवाच तपोधनम् ॥ ००१ ॥

किं भक्ष्यं किमभक्ष्यं च किं च देयं प्रशस्यते ।
किं च पात्रमपात्रं वा तन्मे ब्रूहि पितामह ॥ ००२ ॥

व्यास उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ॥ ००३ ॥

सिद्धास्तपोव्रतपराः समागम्य पुरा विभुम् ।
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ॥ ००४ ॥

कथमन्नं कथं दानं कथमध्ययनं तपः ।
कार्याकार्यं च नः सर्वं शंस वै त्वं प्रजापते ॥ ००५ ॥

तैरेवमुक्तो भगवान्मनुः स्वायंभुवोऽब्रवीत् ।

शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः  ॥ ००६  ॥

अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोधः क्षमेज्या धर्मलक्षणम्  ॥ ००७  ॥

य एव धर्मः सोऽधर्मोऽदेशेऽकाले प्रतिष्ठितः ।
आदानमनृतं हिंसा धर्मो व्यावस्थिकः स्मृतः  ॥ ००८  ॥

द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम् ।
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः  ॥ ००९  ॥

अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ।
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च  ॥ ०१०  ॥

एतयोश्चोभयोः स्यातां शुभाशुभतया तथा ।
दैवं च दैवयुक्तं च प्राणश्च प्रलयश्च ह  ॥ ०११  ॥

अप्रेक्षापूर्वकरणादशुभानां शुभं फलम् ।
ऊर्ध्वं भवति संदेहादिह दृष्टार्थमेव वा  ॥ ०१२  ॥

अप्रेक्षापूर्वकरणात्प्रायश्चित्तं विधीयते  ॥ ०१२  ॥

क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः ।
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये  ॥ ०१३  ॥

तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति  ॥ ०१३  ॥

जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः ।
वर्जयेन्न हि तं धर्मं येषां धर्मो न विद्यते  ॥ ०१४  ॥

दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः ।

यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥ ०१५ ॥

अरुणा मृत्तिका चैव तथा चैव पिपीलकाः ।
श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च ॥ ०१६ ॥

अभक्ष्या ब्राह्मणैर्मत्स्याः शकलैर्ये विवर्जिताः ।
चतुष्पात्कच्छपादन्यो मण्डूका जलजाश्च ये ॥ ०१७ ॥

भासा हंसाः सुपर्णाश्च चक्रवाका बकाः प्लवाः ।
कङ्को मद्गुश्च गृध्राश्च काकोलूकं तथैव च ॥ ०१८ ॥

क्रव्यादाः पक्षिणः सर्वे चतुष्पादाश्च दंष्ट्रिणः ।
येषां चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्वशः ॥ ०१९ ॥

एडकाश्वखरोष्ट्रीणां सूतिकानां गवामपि ।
मानुषीणां मृगीणां च न पिबेद्ब्राह्मणः पयः ॥ ०२० ॥

प्रेतान्नं सूतिकान्नं च यच्च किञ्चिदनिर्दशम् ।
अभोज्यं चाप्यपेयं च धेन्वा दुग्धमनिर्दशम् ॥ ०२१ ॥

तक्ष्णश्चर्मावकर्तुश्च पुंश्चल्या रजकस्य च ।
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा ॥ ०२२ ॥

गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनश्च ये ।
परिवित्तिनपुंषां च बन्दिद्यूतविदां तथा ॥ ०२३ ॥

वार्यमाणाहृतं चान्नं शुक्तं पर्युषितं च यत् ।
सुरानुगतमुच्छिष्टमभोज्यं शेषितं च यत् ॥ ०२४ ॥

पिष्टमांसेक्षुशाकानां विकाराः पयसस्तथा ।
सक्तुधानाकरम्भाश्च नोपभोज्याश्चिरस्थिताः ॥ ०२५ ॥

पायसं कृसरं मांसमपूपाश्च वृथा कृताः ।
अभोज्याश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः ॥ ०२६ ॥

देवान्पितॄन्मनुष्यांश्च मुनीन्गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थो भोक्तुमर्हति ॥ ०२७ ॥

यथा प्रव्रजितो भिक्षुर्गृहस्थः स्वगृहे वसेत् ।
एवंवृत्तः प्रियैर्दारैः संवसन्धर्ममाप्नुयात् ॥ ०२८ ॥

न दद्याद्यशसे दानं न भयान्नोपकारिणे ।
न नृत्तगीतशीलेषु हासकेषु च धार्मिकः ॥ ०२९ ॥

न मत्ते नैव चोन्मत्ते न स्तेने न चिकित्सके ।
न वाग्घीने विवर्णे वा नाङ्गहीने न वामने ॥ ०३० ॥

न दुर्जने दौष्कुले वा व्रतैर्वा यो न संस्कृतः ।
अश्रोत्रिये मृतं दानं ब्राह्मणेऽब्रह्मवादिनि ॥ ०३१ ॥

असम्यक्चैव यद्दत्तमसम्यक्च प्रतिग्रहः ।
उभयोः स्यादनर्थाय दातुरादातुरेव च ॥ ०३२ ॥

यथा खदिरमालम्ब्य शिलां वाप्यर्णवं तरन् ।
मज्जते मज्जते तद्वद्दाता यश्च प्रतीच्छकः ॥ ०३३ ॥

काष्ठैरार्द्रैर्यथा वह्निरुपस्तीर्णो न दीप्यते ।
तपःस्वाध्यायचारित्रैरेवं हीनः प्रतिग्रही ॥ ०३४ ॥

कपाले यद्वदापः स्युः श्वदृतौ वा यथा पयः ।
आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ ०३५ ॥

निर्मन्त्रो निर्व्रतो यः स्यादशास्त्रज्ञोऽनसूयकः ।
अनुक्रोशात्प्रदातव्यं दीनेष्वेवं नरेष्वपि ॥ ०३६ ॥

न वै देयमनुक्रोशाद्दीनायाप्यपकारिणे ।
आप्ताचरितमित्येव धर्म इत्येव वा पुनः ॥ ०३७ ॥

निष्कारणं स्म तद्दत्तं ब्राह्मणे धर्मवर्जिते ।
भवेदपात्रदोषेण न मेऽत्रास्ति विचारणा ॥ ०३८ ॥

यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ०३९ ॥

यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा ॥ ०४० ॥

ग्रामधान्यं यथा शून्यं यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ ॥ ०४१ ॥

देवतानां पितृणां च हव्यकव्यविनाशनः ।
शत्रुरर्थहरो मूर्खो न लोकान्प्राप्तुमर्हति ॥ ०४२ ॥

एतत्ते कथितं सर्वं यथा वृत्तं युधिष्ठिर ।
समासेन महद्ध्येतच्छ्रोतव्यं भरतर्षभ ॥ ०४३ ॥

---

# अध्याय ०३८

युधिष्ठिर उवाच ॥

श्रोतुमिच्छामि भगवन्विस्तरेण महामुने ।
राजधर्मान्द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान्  ॥ ००१  ॥

आपत्सु च यथा नीतिर्विधातव्या महीक्षिता ।
धर्म्यमालम्ब्य पन्थानं विजयेयं कथं महीम्  ॥ ००२  ॥

प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यविवर्धिता ।
कौतूहलानुप्रवणा हर्षं जनयतीव मे  ॥ ००३  ॥

धर्मचर्या च राज्यं च नित्यमेव विरुध्यते ।
येन मुह्यति मे चेतश्चिन्तयानस्य नित्यशः  ॥ ००४  ॥

वैशंपायन उवाच  ॥

तमुवाच महातेजा व्यासो वेदविदां वरः ।
नारदं समभिप्रेक्ष्य सर्वं जानन्पुरातनम्  ॥ ००५  ॥

श्रोतुमिच्छसि चेद्धर्मानखिलेन युधिष्ठिर ।
प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहम्  ॥ ००६  ॥

स ते सर्वरहस्येषु संशयान्मनसि स्थितान् ।
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित्  ॥ ००७  ॥

जनयामास यं देवी दिव्या त्रिपथगा नदी ।
साक्षाद्ददर्श यो देवान्सर्वाञ्शक्रपुरोगमान्  ॥ ००८  ॥

बृहस्पतिपुरोगांश्च देवर्षीनसकृत्प्रभुः ।
तोषयित्वोपचारेण राजनीतिमधीतवान्  ॥ ००९  ॥

उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः ।

तच्च सर्वं सवैयाख्यं प्राप्तवान्कुरुसत्तमः ॥ ०१० ॥

भार्गवाच्च्यवनाच्चापि वेदानङ्गोपबृंहितान् ।
प्रतिपेदे महाबुद्धिर्वसिष्ठाच्च यतव्रतात् ॥ ०११ ॥

पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम् ।
अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा ॥ ०१२ ॥

मार्कण्डेयमुखात्कृत्स्नं यतिधर्ममवाप्तवान् ।
रामादस्त्राणि शक्राच्च प्राप्तवान्भरतर्षभ ॥ ०१३ ॥

मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि ।
तथानपत्यस्य सतः पुण्यलोका दिवि श्रुताः ॥ ०१४ ॥

यस्य ब्रह्मर्षयः पुण्या नित्यमासन्सभासदः ।
यस्य नाविदितं किञ्चिज्ज्ञानज्ञेयेषु विद्यते ॥ ०१५ ॥

स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित् ।
तमभ्येहि पुरा प्राणान्स विमुञ्चति धर्मवित् ॥ ०१६ ॥

एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महाद्युतिः ।
उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतम् ॥ ०१७ ॥

वैशसं सुमहत्कृत्वा ज्ञातीनां लोमहर्षणम् ।
आगस्कृत्सर्वलोकस्य पृथिवीनाशकारकः ॥ ०१८ ॥

घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनम् ।
उपसंप्रष्टुमर्हामि तमहं केन हेतुना ॥ ०१९ ॥

ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया ।
पुनराह महाबाहुर्यदुश्रेष्ठो महाद्युतिः ॥ ०२० ॥

नेदानीमतिनिर्बन्धं शोके कर्तुमिहार्हसि ।
यदाह भगवान्व्यासस्तत्कुरुष्व नृपोत्तम ॥ ०२१ ॥

ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः ।
पर्जन्यमिव घर्मार्ता आशंसाना उपासते ॥ ०२२ ॥

हतशिष्टाश्च राजानः कृत्स्नं चैव समागतम् ।
चातुर्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलम् ॥ ०२३ ॥

प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम् ।
नियोगादस्य च गुरोर्व्यासस्यामिततेजसः ॥ ०२४ ॥

सुहृदां चास्मदादीनां द्रौपद्याश्च परंतप ।
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ ०२५ ॥

एवमुक्तस्तु कृष्णेन राजा राजीवलोचनः ।
हितार्थं सर्वलोकस्य समुत्तस्थौ महातपाः ॥ ०२६ ॥

सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयम् ।
द्वैपायनेन च तथा देवस्थानेन जिष्णुना ॥ ०२७ ॥

एतैश्चान्यैश्च बहुभिरनुनीतो युधिष्ठिरः ।
व्यजहान्मानसं दुःखं संतापं च महामनाः ॥ ०२८ ॥

श्रुतवाक्यः श्रुतनिधिः श्रुतश्रव्यविशारदः ।
व्यवस्य मनसः शान्तिमगच्छत्पाण्डुनन्दनः ॥ ०२९ ॥

स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ॥ ०३० ॥

प्रविविक्षुः स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ॥ ०३१ ॥

ततो रथं नवं शुभ्रं कम्बलाजिनसंवृतम् ।
युक्तं षोडशभिर्गोभिः पाण्डुरैः शुभलक्षणैः ॥ ०३२ ॥

मन्त्रैरभ्यर्चितः पुण्यैः स्तूयमानो महर्षिभिः ।
आरुरोह यथा देवः सोमोऽमृतमयं रथम् ॥ ०३३ ॥

जग्राह रश्मीन्कौन्तेयो भीमो भीमपराक्रमः ।
अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ॥ ०३४ ॥

ध्रियमाणं तु तच्छत्रं पाण्डुरं तस्य मूर्धनि ।
शुशुभे तारकाराजसितमभ्रमिवाम्बरे ॥ ०३५ ॥

चामरव्यजने चास्य वीरौ जगृहतुस्तदा ।
चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलङ्कृते ॥ ०३६ ॥

ते पञ्च रथमास्थाय भ्रातरः समलङ्कृताः ।
भूतानीव समस्तानि राजन्ददृशिरे तदा ॥ ०३७ ॥

आस्थाय तु रथं शुभ्रं युक्तमश्वैर्महाजवैः ।
अन्वयात्पृष्ठतो राजन्युयुत्सुः पाण्डवाग्रजम् ॥ ०३८ ॥

रथं हेममयं शुभ्रं सैन्यसुग्रीवयोजितम् ।
सह सात्यकिना कृष्णः समास्थायान्वयात्कुरून् ॥ ०३९ ॥

नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत ।
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ ०४० ॥

कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा च द्रौपदी ।

यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ॥ ०४१ ॥

ततो रथाश्च बहुला नागाश्च समलङ्कृताः ।
पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ॥ ०४२ ॥

ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः ।
स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ॥ ०४३ ॥

तत्प्रयाणं महाबाहोर्बभूवाप्रतिमं भुवि ।
आकुलाकुलमुत्सृष्टं हृष्टपुष्टजनान्वितम् ॥ ०४४ ॥

अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
नगरं राजमार्गश्च यथावत्समलङ्कृतम् ॥ ०४५ ॥

पाण्डुरेण च माल्येन पताकाभिश्च वेदिभिः ।
संवृतो राजमार्गश्च धूपनैश्च सुधूपितः ॥ ०४६ ॥

अथ चूर्णैश्च गन्धानां नानापुष्पैः प्रियङ्गुभिः ।
माल्यदामभिरासक्तै राजवेश्माभिसंवृतम् ॥ ०४७ ॥

कुम्भाश्च नगरद्वारि वारिपूर्णा दृढा नवाः ।
कन्याः सुमनसश्छागाः स्थापितास्तत्र तत्र ह ॥ ०४८ ॥

तथा स्वलङ्कृतद्वारं नगरं पाण्डुनन्दनः ।
स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ॥ ०४९ ॥

# चार्वाकचरितकथनम्

## अध्याय ०३९

वैशंपायन उवाच ॥

प्रवेशने तु पार्थानां जनस्य पुरवासिनः ।
दिदृक्षूणां सहस्राणि समाजग्मुर्बहून्यथ ॥ ००१ ॥

स राजमार्गः शुशुभे समलङ्कृतचत्वरः ।
यथा चन्द्रोदये राजन्वर्धमानो महोदधिः ॥ ००२ ॥

गृहाणि राजमार्गे तु रत्नवन्ति बृहन्ति च ।
प्राकम्पन्तेव भारेण स्त्रीणां पूर्णानि भारत ॥ ००३ ॥

ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ ००४ ॥

धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान् ।
उपतिष्ठसि कल्याणि महर्षीनिव गौतमी ॥ ००५ ॥

तव कर्माण्यमोघानि व्रतचर्या च भामिनि ।
इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ॥ ००६ ॥

प्रशंसावचनैस्तासां मिथःशब्दैश्च भारत ।
प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलम् ॥ ००७ ॥

तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः ।
अलङ्कृतं शोभमानमुपायाद्राजवेश्म ह ॥ ००८ ॥

ततः प्रकृतयः सर्वाः पौरजानपदास्तथा ।
ऊचुः कथाः कर्णसुखाः समुपेत्य ततस्ततः ॥ ००९ ॥

दिष्ट्या जयसि राजेन्द्र शत्रूञ्शत्रुनिसूदन ।
दिष्ट्या राज्यं पुनः प्राप्तं धर्मेण च बलेन च ॥ ०१० ॥

भव नस्त्वं महाराज राजेह शरदां शतम् ।
प्रजाः पालय धर्मेण यथेन्द्रस्त्रिदिवं नृप ॥ ०११ ॥

एवं राजकुलद्वारि मङ्गलैरभिपूजितः ।
आशीर्वादान्द्विजैरुक्तान्प्रतिगृह्य समन्ततः ॥ ०१२ ॥

प्रविश्य भवनं राजा देवराजगृहोपमम् ।
श्रुत्वा विजयसंयुक्तं रथात्पश्चादवातरत् ॥ ०१३ ॥

प्रविश्याभ्यन्तरं श्रीमान्दैवतान्यभिगम्य च ।
पूजयामास रत्नैश्च गन्धैर्माल्यैश्च सर्वशः ॥ ०१४ ॥

निश्चक्राम ततः श्रीमान्पुनरेव महायशाः ।
ददर्श ब्राह्मणांश्चैव सोऽभिरूपानुपस्थितान् ॥ ०१५ ॥

स संवृतस्तदा विप्रैराशीर्वादविवक्षुभिः ।
शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा ॥ ०१६ ॥

तान्स संपूजयामास कौन्तेयो विधिवद्द्विजान् ।
धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च ॥ ०१७ ॥

सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा ।
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः ॥ ०१८ ॥

ततः पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत ।

सुहृदां हर्षजननः पुण्यः श्रुतिसुखावहः ॥ ०१९ ॥

हंसवन्नेदुषां राजन्द्विजानां तत्र भारती ।
शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरा ॥ ०२० ॥

ततो दुन्दुभिनिर्घोषः शङ्खानां च मनोरमः ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ ०२१ ॥

निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ॥ ०२२ ॥

तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः ।
सांख्यः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः ॥ ०२३ ॥

वृतः सर्वैस्तदा विप्रैराशीर्वादविवक्षुभिः ।
परंसहस्रै राजेन्द्र तपोनियमसंस्थितैः ॥ ०२४ ॥

स दुष्टः पापमाशंसन्पाण्डवानां महात्मनाम् ।
अनामन्त्र्यैव तान्विप्रांस्तमुवाच महीपतिम् ॥ ०२५ ॥

इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि ।
धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ ०२६ ॥

किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसङ्क्षयम् ।
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ ०२७ ॥

इति ते वै द्विजाः श्रुत्वा तस्य घोरस्य रक्षसः ।
विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ॥ ०२८ ॥

ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः ।
व्रीडिताः परमोद्विग्नास्तूष्णीमासन्विशां पते ॥ ०२९ ॥

युधिष्ठिर उवाच ॥

प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यापन्नं व्यसनिनं न मां धिक्कर्तुमर्हथ ॥ ०३० ॥

वैशंपायन उवाच ॥

ततो राजन्ब्राह्मणास्ते सर्व एव विशां पते ।
ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव ॥ ०३१ ॥

जज्ञुश्चैव महात्मानस्ततस्तं ज्ञानचक्षुषा ।
ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ॥ ०३२ ॥

ब्राह्मणा ऊचुः ॥

एष दुर्योधनसखा चार्वाको नाम राक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ ०३३ ॥

न वयं ब्रूम धर्मात्मन्व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ॥ ०३४ ॥

वैशंपायन उवाच ॥

ततस्ते ब्राह्मणाः सर्वे हुङ्कारैः क्रोधमूर्छिताः ।
निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम् ॥ ०३५ ॥

स पपात विनिर्दग्धस्तेजसा ब्रह्मवादिनाम् ।
महेन्द्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ॥ ०३६ ॥

पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।

राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ॥ ०३७ ॥

वासुदेव उवाच ॥

ब्राह्मणास्तात लोकेऽस्मिन्नर्चनीयाः सदा मम ।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥ ०३८ ॥

पुरा कृतयुगे तात चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवत्सरम् ॥ ०३९ ॥

छन्द्यमानो वरेणाथ ब्रह्मणा स पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥ ०४० ॥

द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यस्ततस्तस्मै जगत्प्रभुः ॥ ०४१ ॥

स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥ ०४२ ॥

ततो देवाः समेत्याथ ब्रह्माणमिदमब्रुवन् ।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ ०४३ ॥

तानुवाचाव्ययो देवो विहितं तत्र वै मया ।
यथास्य भविता मृत्युरचिरेणैव भारत ॥ ०४४ ॥

राजा दुर्योधनो नाम सखास्य भविता नृप ।
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ ०४५ ॥

तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः ।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति ॥ ०४६ ॥

स एष निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ ०४७ ॥

हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव ।
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥ ०४८ ॥

स त्वमातिष्ठ कल्याणं मा ते भूद्ग्लानिरच्युत ।
शत्रूञ्जहि प्रजा रक्ष द्विजांश्च प्रतिपालय ॥ ०४९ ॥

---

# अध्याय ०४०

वैशंपायन उवाच ॥

ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः ।
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने ॥ ००१ ॥

तमेवाभिमुखौ पीठे सेव्यास्तरणसंवृते ।
सात्यकिर्वासुदेवश्च निषीदतुररिंदमौ ॥ ००२ ॥

मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ ००३ ॥

दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते ।
पृथापि सहदेवेन सहास्ते नकुलेन च ॥ ००४ ॥

सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः ।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ॥ ००५ ॥

युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी ।
धृतराष्ट्रो यतो राजा ततः सर्व उपाविशन् ॥ ००६ ॥

तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् ।
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन् ॥ ००७ ॥

ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् ।
ददृशुर्धर्मराजानमादाय बहु मङ्गलम् ॥ ००८ ॥

पृथिवीं च सुवर्णं च रत्नानि विविधानि च ।
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ॥ ००९ ॥

काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः ।
पूर्णकुम्भाः सुमनसो लाजा बर्हींषि गोरसाः ॥ ०१० ॥

शमीपलाशपुंनागाः समिधो मधुसर्पिषी ।
स्रुव औदुम्बरः शङ्खास्तथा हेमविभूषिताः ॥ ०११ ॥

दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणां वेदीं लक्षणेनोपलिप्य ह ॥ ०१२ ॥

व्याघ्रचर्मोत्तरे श्लक्ष्णे सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥ ०१३ ॥

उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान्विधिमन्त्रपुरस्कृतम् ॥ ०१४ ॥

अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥ ०१५ ॥

ततोऽनुवादयामासुः पणवानकदुन्दुभीः ।

धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः ॥ ०१६ ॥

पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ।
ततो निष्कसहस्रेण ब्राह्मणान्स्वस्ति वाचयत् ॥ ०१७ ॥

वेदाध्ययनसंपन्नाञ्शीलवृत्तसमन्वितान् ॥ ०१७ ॥

ते प्रीता ब्राह्मणा राजन्स्वस्त्यूचुर्जयमेव च ।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ ०१८ ॥

युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव ।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥ ०१९ ॥

दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ।
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ॥ ०२० ॥

मुक्ता वीरक्षयादस्मात्सङ्ग्रामान्निहतद्विषः ।
क्षिप्रमुत्तरकालानि कुरु कार्याणि पाण्डव ॥ ०२१ ॥

ततः प्रत्यर्चितः सद्भिर्धर्मराजो युधिष्ठिरः ।
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥ ०२२ ॥

---

# अध्याय ०४१

वैशंपायन उवाच ॥

प्रकृतीनां तु तद्वाक्यं देशकालोपसंहितम् ।

श्रुत्वा युधिष्ठिरो राजाथोत्तरं प्रत्यभाषत ॥ ००१ ॥

धन्याः पाण्डुसुता लोके येषां ब्राह्मणपुङ्गवाः ।
तथ्यान्वाप्यथ वातथ्यान्गुणानाहुः समागताः ॥ ००२ ॥

अनुग्राह्या वयं नूनं भवतामिति मे मतिः ।
यत्रैवं गुणसंपन्नानस्मान्ब्रूथ विमत्सराः ॥ ००३ ॥

धृतराष्ट्रो महाराजः पिता नो दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥ ००४ ॥

एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् ।
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ॥ ००५ ॥

यदि चाहमनुग्राह्यो भवतां सुहृदां ततः ।
धृतराष्ट्रे यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥ ००६ ॥

एष नाथो हि जगतो भवतां च मया सह ।
अस्यैव पृथिवी कृत्स्ना पाण्डवाः सर्व एव च ॥ ००७ ॥

एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ॥ ००७ ॥

अनुगम्य च राजानं यथेष्टं गम्यतामिति ।
पौरजानपदान्सर्वान्विसृज्य कुरुनन्दनः ॥ ००८ ॥

यौवराज्येन कौरव्यो भीमसेनमयोजयत् ॥ ००८ ॥

मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने ।
विदुरं बुद्धिसंपन्नं प्रीतिमान्वै समादिशत् ॥ ००९ ॥

कृताकृतपरिज्ञाने तथायव्ययचिन्तने ।

सञ्जयं योजयामास ऋद्धमृद्धैर्गुणैर्युतम् ॥ ०१० ॥

बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं व्यादिशद्राजा कर्मिणामन्ववेक्षणे ॥ ०११ ॥

परचक्रोपरोधे च दृप्तानां चावमर्दने ।
युधिष्ठिरो महाराजः फल्गुनं व्यादिदेश ह ॥ ०१२ ॥

द्विजानां वेदकार्येषु कार्येष्वन्येषु चैव हि ।
धौम्यं पुरोधसां श्रेष्ठं व्यादिदेश परंतपः ॥ ०१३ ॥

सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिः सर्वावस्थो विशां पते ॥ ०१४ ॥

यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु ।
तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ॥ ०१५ ॥

विदुरं सञ्जयं चैव युयुत्सुं च महामतिम् ।
अब्रवीत्परवीरघ्नो धर्मात्मा धर्मवत्सलः ॥ ०१६ ॥

उत्थायोत्थाय यत्कार्यमस्य राज्ञः पितुर्मम ।
सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथातथम् ॥ ०१७ ॥

पौरजानपदानां च यानि कार्याणि नित्यशः ।
राजानं समनुज्ञाप्य तानि कार्याणि धर्मतः ॥ ०१८ ॥

# अध्याय ०४२

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा ज्ञातीनां ये हता मृधे ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ ००१ ॥

धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।
सर्वकामगुणोपेतमन्नं गाश्च धनानि च ॥ ००२ ॥

रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ ००२ ॥

युधिष्ठिरस्तु कर्णस्य द्रोणस्य च महात्मनः ।
धृष्टद्युम्नाभिमन्युभ्यां हैडिम्बस्य च रक्षसः ॥ ००३ ॥

विराटप्रभृतीनां च सुहृदामुपकारिणाम् ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥ ००४ ॥

ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ।
धनैश्च वस्त्रै रत्नैश्च गोभिश्च समतर्पयत् ॥ ००५ ॥

ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदैहिकम् ॥ ००६ ॥

सभाः प्रपाश्च विविधास्तडागानि च पाण्डवः ।
सुहृदां कारयामास सर्वेषामौर्ध्वदैहिकम् ॥ ००७ ॥

स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ ००८ ॥

धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा ।

सर्वांश्च कौरवामात्यान्भृत्यांश्च समपूजयत् ॥ ००९ ॥

याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः ।
सर्वास्ताः कौरवो राजा संपूज्यापालयद्धृणी ॥ ०१० ॥

दीनान्धकृपणानां च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ॥ ०११ ॥

स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु ।
निःसपत्नः सुखी राजा विजहार युधिष्ठिरः ॥ ०१२ ॥

---

# कृष्णनामशतस्तुतिः

## अध्याय ०४३

वैशंपायन उवाच ॥

अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः ।
दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ॥ ००१ ॥

तव कृष्ण प्रसादेन नयेन च बलेन च ।
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ ००२ ॥

पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया ।
नमस्ते पुण्डरीकाक्ष पुनः पुनररिंदम ॥ ००३ ॥

त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिम् ।

नामभिस्त्वां बहुविधैः स्तुवन्ति परमर्षयः ॥ ००४ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ००५ ॥

अदित्याः सप्तरात्रं तु पुराणे गर्भतां गतः ।
पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ॥ ००६ ॥

शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यसे ।
त्रिचक्षुः शम्भुरेकस्त्वं विभुर्दामोदरोऽपि च ॥ ००७ ॥

वराहोऽग्निर्बृहद्भानुर्वृषणस्ताक्ष्यलक्षणः ।
अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ॥ ००८ ॥

वाचिष्ठ उग्रः सेनानीः सत्यो वाजसनिर्गुहः ।
अच्युतश्च्यावनोऽरीणां सङ्कृतिर्विकृतिर्वृषः ॥ ००९ ॥

कृतवर्त्मा त्वमेवाद्रिर्वृषगर्भो वृषाकपिः ।
सिन्धुक्षिदूर्मिस्त्रिककुत्त्रिधामा त्रिवृदच्युतः ॥ ०१० ॥

सम्राड्विराड्स्वराड्चैव सुरराड्धर्मदो भवः ।
विभुर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ॥ ०११ ॥

स्विष्टकृद्भिषगावर्तः कपिलस्त्वं च वामनः ।
यज्ञो ध्रुवः पतङ्गश्च जयत्सेनस्त्वमुच्यसे ॥ ०१२ ॥

शिखण्डी नहुषो बभ्रुर्दिवस्पृक्त्वं पुनर्वसुः ।
सुबभ्रुरुक्षो रुक्मस्त्वं सुषेणो दुन्दुभिस्तथा ॥ ०१३ ॥

गभस्तिनेमिः श्रीपद्मं पुष्करं पुष्पधारणः ।
ऋभुर्विभुः सर्वसूक्ष्मस्त्वं सावित्रं च पठ्यसे ॥ ०१४ ॥

अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धन्व च ।
हिरण्यगर्भं त्वामाहुः स्वधा स्वाहा च केशव ॥ ०१५ ॥

योनिस्त्वमस्य प्रलयश्च कृष्ण ; त्वमेवेदं सृजसि विश्वमग्रे ।
विश्वं चेदं त्वद्वशे विश्वयोने ; नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ॥ ०१६ ॥

एवं स्तुतो धर्मराजेन कृष्णः ; सभामध्ये प्रीतिमान्पुष्कराक्षः ।
तमभ्यनन्दद्भारतं पुष्कलाभि ;र्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः ॥ ०१७ ॥

---

# अध्याय ०४४

वैशंपायन उवाच ॥

ततो विसर्जयामास सर्वाः प्रकृतयो नृपः ।
विविशुश्चाभ्यनुज्ञाता यथास्वानि गृहाणि च ॥ ००१ ॥

ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् ।
सान्त्वयन्नब्रवीद्धीमानर्जुनं यमजौ तथा ॥ ००२ ॥

शत्रुभिर्विविधैः शस्त्रैः कृत्तदेहा महारणे ।
श्रान्ता भवन्तः सुभृशं तापिताः शोकमन्युभिः ॥ ००३ ॥

अरण्ये दुःखवसतीर्मत्कृते पुरुषोत्तमाः ।
भवद्भिरनुभूताश्च यथा कुपुरुषैस्तथा ॥ ००४ ॥

यथासुखं यथाजोषं जयोऽयमनुभूयताम् ।
विश्रान्ता.ण्ल्लब्धविज्ञानाञ्श्वः समेतास्मि वः पुनः ॥ ००५ ॥

ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ ००६ ॥

धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर्मन्दरं मघवानिव ॥ ००७ ॥

यथा दुर्योधनगृहं तथा दुःशासनस्य च ।
प्रासादमालासंयुक्तं हेमतोरणभूषितम् ॥ ००८ ॥

दासीदाससुसंपूर्णं प्रभूतधनधान्यवत् ।
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ ००९ ॥

दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् ।
कुबेरभवनप्रख्यं मणिहेमविभूषितम् ॥ ०१० ॥

नकुलाय वरार्हाय कर्शिताय महावने ।
ददौ प्रीतो महाराज धर्मराजो युधिष्ठिरः ॥ ०११ ॥

दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषितम् ।
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम् ॥ ०१२ ॥

प्रददौ सहदेवाय सततं प्रियकारिणे ।
मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा ॥ ०१३ ॥

युयुत्सुर्विदुरश्चैव सञ्जयश्च महाद्युतिः ।
सुधर्मा चैव धौम्यश्च यथास्वं जग्मुरालयान् ॥ ०१४ ॥

सह सात्यकिना शौरिरर्जुनस्य निवेशनम् ।
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥ ०१५ ॥

तत्र भक्षान्नपानैस्ते समुपेताः सुखोषिताः ।
सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरम् ॥ ०१६ ॥

---

# अध्याय ०४५

जनमेजय उवाच ॥

प्राप्य राज्यं महातेजा धर्मराजो युधिष्ठिरः ।
यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि ॥ ००१ ॥

भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः ।
ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि ॥ ००२ ॥

वैशंपायन उवाच ॥

शृणु राजेन्द्र तत्त्वेन कीर्त्यमानं मयानघ ।
वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ॥ ००३ ॥

प्राप्य राज्यं महातेजा धर्मराजो युधिष्ठिरः ।
चातुर्वर्ण्यं यथायोगं स्वे स्वे धर्मे न्यवेशयत् ॥ ००४ ॥

ब्राह्मणानां सहस्रं च स्नातकानां महात्मनाम् ।
सहस्रनिष्कमेकैकं वाचयामास पाण्डवः ॥ ००५ ॥

तथानुजीविनो भृत्यान्संश्रितानतिथीनपि ।
कामैः संतर्पयामास कृपणांस्तर्ककानपि ॥ ००६ ॥

पुरोहिताय धौम्याय प्रादादयुतशः स गाः ।
धनं सुवर्णं रजतं वासांसि विविधानि च ॥ ००७ ॥

कृपाय च महाराज गुरुवृत्तिमवर्तत ।
विदुराय च धर्मात्मा पूजां चक्रे यतव्रतः ॥ ००८ ॥

भक्षान्नपानैर्विविधैर्वासोभिः शयनासनैः ।
सर्वान्संतोषयामास संश्रितान्ददतां वरः ॥ ००९ ॥

लब्धप्रशमनं कृत्वा स राजा राजसत्तम ।
युयुत्सोर्धार्तराष्ट्रस्य पूजां चक्रे महायशाः ॥ ०१० ॥

धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च ।
निवेद्य स्वस्थवद्राजन्नास्ते राजा युधिष्ठिरः ॥ ०११ ॥

तथा सर्वं स नगरं प्रसाद्य जनमेजय ।
वासुदेवं महात्मानमभ्यगच्छत्कृताञ्जलिः ॥ ०१२ ॥

ततो महति पर्यङ्के मणिकाञ्चनभूषिते ।
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम् ॥ ०१३ ॥

जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् ।
पीतकौशेयसंवीतं हेम्नीवोपहितं मणिम् ॥ ०१४ ॥

कौस्तुभेन उरःस्थेन मणिनाभिविराजितम् ।
उद्यतेवोदयं शैलं सूर्येणाप्तकिरीटिनम् ॥ ०१५ ॥

नौपम्यं विद्यते यस्य त्रिषु लोकेषु किञ्चन ॥ ०१५ ॥

सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहम् ।
उवाच मधुराभाषः स्मितपूर्वमिदं तदा ॥ ०१६ ॥

सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ ०१७ ॥

तव ह्याश्रित्य तां देवीं बुद्धिं बुद्धिमतां वर ।
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता ॥ ०१८ ॥

भवत्प्रसादाद्भगवंस्त्रिलोकगतिविक्रम ।
जयः प्राप्तो यशश्चाग्र्यं न च धर्माच्च्युता वयम् ॥ ०१९ ॥

तं तथा भाषमाणं तु धर्मराजं युधिष्ठिरम् ।
नोवाच भगवान्किञ्चिद्ध्यानमेवान्वपद्यत ॥ ०२० ॥

---

# अध्याय ०४६

युधिष्ठिर उवाच ॥

किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ।
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥ ००१ ॥

चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषोत्तम ।
अपक्रान्तो यतो देव तेन मे विस्मितं मनः ॥ ००२ ॥

निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः ।
इन्द्रियाणि च सर्वाणि मनसि स्थापितानि ते ॥ ००३ ॥

इन्द्रियाणि मनश्चैव बुद्धौ संवेशितानि ते ।
सर्वश्चैव गणो देव क्षेत्रज्ञे ते निवेशितः ॥ ००४ ॥

नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः ।
स्थाणुकुड्यशिलाभूतो निरीहश्चासि माधव ॥ ००५ ॥

यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत ।
तथासि भगवन्देव निश्चलो दृढनिश्चयः ॥ ००६ ॥

यदि श्रोतुमिहार्हामि न रहस्यं च ते यदि ।
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥ ००७ ॥

त्वं हि कर्ता विकर्ता च त्वं क्षरं चाक्षरं च हि ।
अनादिनिधनश्चाद्यस्त्वमेव पुरुषोत्तम ॥ ००८ ॥

त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ॥ ००९ ॥

वैशंपायन उवाच ॥

ततः स्वगोचरे न्यस्य मनो बुद्धीन्द्रियाणि च ।
स्मितपूर्वमुवाचेदं भगवान्वासवानुजः ॥ ०१० ॥

शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ०११ ॥

यस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
न सहेद्देवराजोऽपि तमस्मि मनसा गतः ॥ ०१२ ॥

येनाभिद्रुत्य तरसा समस्तं राजमण्डलम् ।
ऊढास्तिस्रः पुरा कन्यास्तमस्मि मनसा गतः ॥ ०१३ ॥

त्रयोविंशतिरात्रं यो योधयामास भार्गवम् ।

न च रामेण निस्तीर्णस्तमस्मि मनसा गतः ॥ ०१४ ॥

यं गङ्गा गर्भविधिना धारयामास पार्थिवम् ।
वसिष्ठशिष्यं तं तात मनसास्मि गतो नृप ॥ ०१५ ॥

दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् ।
साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः ॥ ०१६ ॥

रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव ।
आधारं सर्वविद्यानां तमस्मि मनसा गतः ॥ ०१७ ॥

एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया ।
शरणं मामुपागच्छत्ततो मे तद्गतं मनः ॥ ०१८ ॥

स हि भूतं च भव्यं च भवच्च पुरुषर्षभ ।
वेत्ति धर्मभृतां श्रेष्ठस्ततो मे तद्गतं मनः ॥ ०१९ ॥

तस्मिन्हि पुरुषव्याघ्रे कर्मभिः स्वैर्दिवं गते ।
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी ॥ ०२० ॥

तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम् ।
अभिगम्योपसङ्गृह्य पृच्छ यत्ते मनोगतम् ॥ ०२१ ॥

चातुर्वैद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
चातुर्वर्ण्यस्य धर्मं च पृच्छैनं पृथिवीपते ॥ ०२२ ॥

तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरंधरे ।
ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥ ०२३ ॥

तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठः स धर्मज्ञो जनार्दनमुवाच ह ॥ ०२४ ॥

यद्भवानाह भीष्मस्य प्रभावं प्रति माधव ।
तथा तन्नात्र संदेहो विद्यते मम मानद ॥ ०२५ ॥

महाभाग्यं हि भीष्मस्य प्रभावश्च महात्मनः ।
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् ॥ ०२६ ॥

भवांश्च कर्ता लोकानां यद्ब्रवीत्यरिसूदन ।
तथा तदनभिध्येयं वाक्यं यादवनन्दन ॥ ०२७ ॥

यतस्त्वनुग्रहकृता बुद्धिस्ते मयि माधव ।
त्वामग्रतः पुरस्कृत्य भीष्मं पश्यामहे वयम् ॥ ०२८ ॥

आवृत्ते भगवत्यर्के स हि लोकान्गमिष्यति ।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥ ०२९ ॥

तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च ।
दर्शनं तस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ॥ ०३० ॥

श्रुत्वैतद्धर्मराजस्य वचनं मधुसूदनः ।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ॥ ०३१ ॥

सात्यकिस्तूपनिष्क्रम्य केशवस्य समीपतः ।
दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ॥ ०३२ ॥

स सात्यकेराशु वचो निशम्य ; रथोत्तमं काञ्चनभूषिताङ्गम् ।
मसारगल्वर्कमयैर्विभङ्गै ;र्विभूषितं हेमपिनद्धचक्रम् ॥ ०३३ ॥

दिवाकरांशुप्रभमाशुगामिनं ; विचित्रनानामणिरत्नभूषितम् ।
नवोदितं सूर्यमिव प्रतापिनं ; विचित्रताक्ष्र्यध्वजिनं पताकिनम् ॥ ०३४ ॥

सुग्रीवसैन्यप्रमुखैर्वराश्वै ;र्मनोजवैः काञ्चनभूषिताङ्गैः ।
सुयुक्तमावेदयदच्युताय ; कृताञ्जलिर्दारुको राजसिंह ॥ ०३५ ॥

---

# भीष्मस्तवराजः

## अध्याय ०४७

जनमेजय उवाच ॥

शरतल्पे शयानस्तु भरतानां पितामहः ।
कथमुत्सृष्टवान्देहं कं च योगमधारयत् ॥ ००१ ॥

वैशंपायन उवाच ॥

शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ ००२ ॥

निवृत्तमात्रे त्वयन उत्तरे वै दिवाकरे ।
समावेशयदात्मानमात्मन्येव समाहितः ॥ ००३ ॥

विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ।
शिश्ये परमया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ००४ ॥

व्यासेन वेदश्रवसा नारदेन सुरर्षिणा ।
देवस्थानेन वात्स्येन तथाश्मकसुमन्तुना ॥ ००५ ॥

एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।

श्रद्धादमपुरस्कारैर्वृतश्चन्द्र इव ग्रहैः ॥ ००६ ॥

भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः स्थितः ॥ ००७ ॥

स्वरेण पुष्टनादेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ॥ ००८ ॥

कृताञ्जलिः शुचिर्भूत्वा वाग्विदां प्रवरः प्रभुम् ।
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ ००९ ॥

आरिराधयिषुः कृष्णं वाचं जिगमिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥ ०१० ॥

शुचिः शुचिषदं हंसं तत्परः परमेष्ठिनम् ।
युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये प्रजापतिम् ॥ ०११ ॥

यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥ ०१२ ॥

यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥ ०१३ ॥

हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ॥ ०१४ ॥

अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ ०१५ ॥

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ ०१६ ॥

चतुर्भिश्चतुरात्मानं सत्त्वस्थं सात्वतां पतिम् ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥ ०१७ ॥

यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ॥ ०१८ ॥

यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ।
इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मन्यवस्थितम् ॥ ०१९ ॥

पुराणे पुरुषः प्रोक्तो ब्रह्मा प्रोक्तो युगादिषु ।
क्षये सङ्कर्षणः प्रोक्तस्तमुपास्यमुपास्महे ॥ ०२० ॥

अतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसम् ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥ ०२१ ॥

यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ।
वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ॥ ०२२ ॥

हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम् ।
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः ॥ ०२३ ॥

शुक्ले देवान्पितॄन्कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ ०२४ ॥

महतस्तमसः पारे पुरुषं ज्वलनद्युतिम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ०२५ ॥

यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसंघा गायन्ति तस्मै वेदात्मने नमः ॥ ०२६ ॥

ऋग्यजुःसामधामानं दशार्धहविराकृतिम् ।
यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ ०२७ ॥

यः सुपर्णो यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः ।
रथंतरबृहत्यक्षस्तस्मै स्तोत्रात्मने नमः ॥ ०२८ ॥

यः सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यवर्णः शकुनिस्तस्मै हंसात्मने नमः ॥ ०२९ ॥

पदाङ्गं संधिपर्वाणं स्वरव्यञ्जनलक्षणम् ।
यमाहुरक्षरं नित्यं तस्मै वागात्मने नमः ॥ ०३० ॥

यश्चिनोति सतां सेतुमृतेनामृतयोनिना ।
धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥ ०३१ ॥

यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ ०३२ ॥

यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ०३३ ॥

यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ॥ ०३४ ॥

यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ०३५ ॥

अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ०३६ ॥

योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः ।

संभक्षयति भूतानि तस्मै घोरात्मने नमः ॥ ०३७ ॥

संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥ ०३८ ॥

सहस्रशिरसे तस्मै पुरुषायामितात्मने ।
चतुःसमुद्रपर्यायोगनिद्रात्मने नमः ॥ ०३९ ॥

अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम् ।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ०४० ॥

यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ०४१ ॥

युगेष्वावर्तते योंऽशैर्दिनर्त्वनयहायनैः ।
सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ॥ ०४२ ॥

ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः ।
पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ॥ ०४३ ॥

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥ ०४४ ॥

विषये वर्तमानानां यं तं वैशेषिकैर्गुणैः ।
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ०४५ ॥

अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ०४६ ॥

परः कालात्परो यज्ञात्परः सदसतोश्च यः ।
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ०४७ ॥

यो मोहयति भूतानि स्नेहरागानुबन्धनैः ।
सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ०४८ ॥

आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम् ।
यं ज्ञानिनोऽधिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ०४९ ॥

अप्रमेयशरीराय सर्वतोऽनन्तचक्षुषे ।
अपारपरिमेयाय तस्मै चिन्त्यात्मने नमः ॥ ०५० ॥

जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ०५१ ॥

शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने ।
भस्मदिग्धोर्ध्वलिङ्गाय तस्मै रुद्रात्मने नमः ॥ ०५२ ॥

पञ्चभूतात्मभूताय भूतादिनिधनात्मने ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ०५३ ॥

यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥ ०५४ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
अपवर्गोऽसि भूतानां पञ्चानां परतः स्थितः ॥ ०५५ ॥

नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ॥ ०५६ ॥

नमस्ते भगवन्विष्णो लोकानां प्रभवाप्यय ।
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ ०५७ ॥

तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु ।
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम्  ॥ ०५८  ॥

दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः  ॥ ०५९  ॥

अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम्  ॥ ०६०  ॥

यथा विष्णुमयं सत्यं यथा विष्णुमयं हविः ।
यथा विष्णुमयं सर्वं पाप्मा मे नश्यतां तथा  ॥ ०६१  ॥

त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम  ॥ ०६२  ॥

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः  ॥ ०६३  ॥

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा  ॥ ०६४  ॥

अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः ।
त्रैकाल्यदर्शनं ज्ञानं दिव्यं दातुं ययौ हरिः  ॥ ०६५  ॥

तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः ।
भीष्मं वाग्भिर्बाष्पकण्ठास्तमानर्चुर्महामतिम्  ॥ ०६६  ॥

ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरुषोत्तमम् ।
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः  ॥ ०६७  ॥

विदित्वा भक्तियोगं तु भीष्मस्य पुरुषोत्तमः ।

सहसोत्थाय संहृष्टो यानमेवान्वपद्यत ॥ ०६८ ॥

केशवः सात्यकिश्चैव रथेनैकेन जग्मतुः ।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ ०६९ ॥

भीमसेनो यमौ चोभौ रथमेकं समास्थितौ ।
कृपो युयुत्सुः सूतश्च सञ्जयश्चापरं रथम् ॥ ०७० ॥

ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ।
नेमिघोषेण महता कम्पयन्तो वसुंधराम् ॥ ०७१ ॥

ततो गिरः पुरुषवरस्तवान्विता ; द्विजेरिताः पथि सुमनाः स शुश्रुवे ।
कृताञ्जलिं प्रणतमथापरं जनं ; स केशिहा मुदितमनाभ्यनन्दत ॥ ०७२ ॥

---

# अध्याय ०४८

वैशंपायन उवाच ॥

ततः स च हृषीकेशः स च राजा युधिष्ठिरः ।
कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ह ॥ ००१ ॥

रथैस्ते नगराकारैः पताकाध्वजशोभितैः ।
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥ ००२ ॥

तेऽवतीर्य कुरुक्षेत्रं केशमज्जास्थिसङ्कुलम् ।
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महात्मभिः ॥ ००३ ॥

गजाश्वदेहास्थिचयैः पर्वतैरिव सञ्चितम् ।

नरशीर्षकपालैश्च शङ्खैरिव समाचितम् ॥ ००४ ॥

चितासहस्रैर्निचितं वर्मशस्त्रसमाकुलम् ।
आपानभूमिं कालस्य तदा भुक्तोज्झितामिव ॥ ००५ ॥

भूतसंघानुचरितं रक्षोगणनिषेवितम् ।
पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ॥ ००६ ॥

गच्छन्नेव महाबाहुः सर्वयादवनन्दनः ।
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ॥ ००७ ॥

अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः ।
येषु संतर्पयामास पूर्वान्क्षत्रियशोणितैः ॥ ००८ ॥

त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः ।
इहेदानीं ततो रामः कर्मणो विरराम ह ॥ ००९ ॥

युधिष्ठिर उवाच ॥

त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया तदा ।
रामेणेति यदात्थ त्वमत्र मे संशयो महान् ॥ ०१० ॥

क्षत्रबीजं यदा दग्धं रामेण यदुपुङ्गव ।
कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ॥ ०११ ॥

महात्मना भगवता रामेण यदुपुङ्गव ।
कथमुत्सादितं क्षत्रं कथं वृद्धिं पुनर्गतम् ॥ ०१२ ॥

महाभारतयुद्धे हि कोटिशः क्षत्रिया हताः ।
तथाभूच्च मही कीर्णा क्षत्रियैर्वदतां वर ॥ ०१३ ॥

एवं मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन ।
आगमो हि परः कृष्ण त्वत्तो नो वासवानुज ॥ ०१४ ॥

वैशंपायन उवाच ॥

ततो व्रजन्नेव गदाग्रजः प्रभुः ; शशंस तस्मै निखिलेन तत्त्वतः ।
युधिष्ठिरायाप्रतिमौजसे तदा ; यथाभवत्क्षत्रियसङ्कुला मही ॥ ०१५ ॥

---

# जामदग्न्योपाख्यानम्

## अध्याय ०४९

वासुदेव उवाच ॥

श्रृणु कौन्तेय रामस्य मया यावत्परिश्रुतम् ।
महर्षीणां कथयतां कारणं तस्य जन्म च ॥ ००१ ॥

यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः ।
उद्भूता राजवंशेषु ये भूयो भारते हताः ॥ ००२ ॥

जह्नोरजह्नुस्तनयो बल्लवस्तस्य चात्मजः ।
कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपतिः ॥ ००३ ॥

उग्रं तपः समातिष्ठत्सहस्राक्षसमो भुवि ।
पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ॥ ००४ ॥

तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरंदरः ।

समर्थः पुत्रजनने स्वयमेवैत्य भारत ॥ ००५ ॥

पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः ।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ॥ ००६ ॥

तस्य कन्याभवद्राजन्नाम्ना सत्यवती प्रभो ।
तां गाधिः कविपुत्राय सोर्चीकाय ददौ प्रभुः ॥ ००७ ॥

ततः प्रीतस्तु कौन्तेय भार्गवः कुरुनन्दन ।
पुत्रार्थे श्रपयामास चरुं गाधेस्तथैव च ॥ ००८ ॥

आहूय चाह तां भार्यामृचीको भार्गवस्तदा ।
उपयोज्यश्चरुरयं त्वया मात्राप्ययं तव ॥ ००९ ॥

तस्या जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः ।
अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ॥ ०१० ॥

तवापि पुत्रं कल्याणि धृतिमन्तं तपोन्वितम् ।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ ०११ ॥

इत्येवमुक्त्वा तां भार्यामृचीको भृगुनन्दनः ।
तपस्यभिरतो धीमाञ्जगामारण्यमेव ह ॥ ०१२ ॥

एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः ।
गाधिः सदारः संप्राप्त ऋचीकस्याश्रमं प्रति ॥ ०१३ ॥

चरुद्वयं गृहीत्वा तु राजन्सत्यवती तदा ।
भर्तुर्वाक्यादथाव्यग्रा मात्रे हृष्टा न्यवेदयत् ॥ ०१४ ॥

माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञातमात्मसंस्थं चकार ह ॥ ०१५ ॥

अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा ।
धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥ ०१६ ॥

तामृचीकस्तदा दृष्ट्वा ध्यानयोगेन वै ततः ।
अब्रवीद्राजशार्दूल स्वां भार्यां वरवर्णिनीम् ॥ ०१७ ॥

मात्रासि व्यंसिता भद्रे चरुव्यत्यासहेतुना ।
जनिष्यते हि ते पुत्रः क्रूरकर्मा महाबलः ॥ ०१८ ॥

जनिष्यते हि ते भ्राता ब्रह्मभूतस्तपोधनः ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् ॥ ०१९ ॥

सैवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् ॥ ०२० ॥

नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः ।
ब्राह्मणापसदं पुत्रं प्राप्स्यसीति महामुने ॥ ०२१ ॥

ऋचीक उवाच ॥

नैष सङ्कल्पितः कामो मया भद्रे तथा त्वयि ।
उग्रकर्मा भवेत्पुत्रश्चरुर्माता च कारणम् ॥ ०२२ ॥

सत्यवत्युवाच ॥

इच्छ.ण्ल्लोकानपि मुने सृजेथाः किं पुनर्मम ।
शमात्मकमृजुं पुत्रं लभेयं जपतां वर ॥ ०२३ ॥

ऋचीक उवाच ॥

नोक्तपूर्वं मया भद्रे स्वैरेष्वप्यनृतं वचः ।
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने ॥ ०२४ ॥

सत्यवत्युवाच ॥

काममेवं भवेत्पौत्रो ममेह तव चैव ह ।
शमात्मकमृजुं पुत्रं लभेयं जपतां वर ॥ ०२५ ॥

ऋचीक उवाच ॥

पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि ।
यथा त्वयोक्तं तु वचस्तथा भद्रे भविष्यति ॥ ०२६ ॥

वासुदेव उवाच ॥

ततः सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं शान्तं जमदग्निं शमात्मकम् ॥ ०२७ ॥

विश्वामित्रं च दायादं गाधिः कुशिकनन्दनः ।
प्राप ब्रह्मर्षिसमितं विश्वेन ब्रह्मणा युतम् ॥ ०२८ ॥

आर्चीको जनयामास जमदग्निः सुदारुणम् ।
सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदे च पारगम् ॥ ०२९ ॥

रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥ ०२९ ॥

एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली ।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयान्वयः ॥ ०३० ॥

ददाह पृथिवीं सर्वां सप्तद्वीपां सपत्तनाम् ।
स्वबाहुस्त्रबलेनाजौ धर्मेण परमेण च ॥ ०३१ ॥

तृषितेन स कौरव्य भिक्षितश्चित्रभानुना ।
सहस्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ॥ ०३२ ॥

ग्रामान्पुराणि घोषांश्च पत्तनानि च वीर्यवान् ।
जज्वाल तस्य बाणैस्तु चित्रभानुर्दिधक्षया ॥ ०३३ ॥

स तस्य पुरुषेन्द्रस्य प्रभावेन महातपाः ।
ददाह कार्तवीर्यस्य शैलानथ वनानि च ॥ ०३४ ॥

स शून्यमाश्रमारण्यं वरुणस्यात्मजस्य तत् ।
ददाह पवनेनेद्धश्चित्रभानुः सहैहयः ॥ ०३५ ॥

आपवस्तं ततो रोषाच्छशापार्जुनमच्युत ।
दग्धेऽऽश्रमे महाराज कार्तवीर्येण वीर्यवान् ॥ ०३६ ॥

त्वया न वर्जितं मोहाद्यस्माद्वनमिदं मम ।
दग्धं तस्माद्रणे रामो बाहूंस्ते छेत्स्यतेऽर्जुन ॥ ०३७ ॥

अर्जुनस्तु महाराज बली नित्यं शमात्मकः ।
ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ॥ ०३८ ॥

तस्य पुत्राः सुबलिनः शापेनासन्पितुर्वधे ।
निमित्तमवलिप्ता वै नृशंसाश्चैव नित्यदा ॥ ०३९ ॥

जमदग्निधेन्वास्ते वत्समानिन्युर्भरतर्षभ ।
अज्ञातं कार्तवीर्यस्य हैहयेन्द्रस्य धीमतः ॥ ०४० ॥

ततोऽर्जुनस्य बाहूंस्तु छित्त्वा वै पौरुषान्वितः ।
तं रुवन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमम् ॥ ०४१ ॥

प्रत्यानयत राजेन्द्र तेषामन्तःपुरात्प्रभुः ॥ ०४१ ॥

अर्जुनस्य सुतास्ते तु संभूयाबुद्धयस्तदा ।
गत्वाश्रममसंबुद्धं जमदग्नेर्महात्मनः ॥ ०४२ ॥

अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप ।
समित्कुशार्थं रामस्य निर्गतस्य महात्मनः ॥ ०४३ ॥

ततः पितृवधामर्षाद्रामः परममन्युमान् ।
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ॥ ०४४ ॥

ततः स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान् ।
विक्रम्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः ॥ ०४५ ॥

स हैहयसहस्राणि हत्वा परममन्युमान् ।
चकार भार्गवो राजन्महीं शोणितकर्दमाम् ॥ ०४६ ॥

स तथा सुमहातेजाः कृत्वा निःक्षत्रियां महीम् ।
कृपया परयाविष्टो वनमेव जगाम ह ॥ ०४७ ॥

ततो वर्षसहस्रेषु समतीतेषु केषुचित् ।
क्षोभं संप्राप्तवांस्तीव्रं प्रकृत्या कोपनः प्रभुः ॥ ०४८ ॥

विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ।
परावसुर्महाराज क्षिप्त्वाह जनसंसदि ॥ ०४९ ॥

ये ते ययातिपतने यज्ञे सन्तः समागताः ।
प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ॥ ०५० ॥

मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि ।
भयात्क्षत्रियवीराणां पर्वतं समुपाश्रितः ॥ ०५१ ॥

स पुनः क्षत्रियशतैः पृथिवीमनुसंतताम् ।
परावसोस्तदा श्रुत्वा शस्त्रं जग्राह भार्गवः ॥ ०५२ ॥

ततो ये क्षत्रिया राजञ्शतशस्तेन जीविताः ।
ते विवृद्धा महावीर्याः पृथिवीपतयोऽभवन् ॥ ०५३ ॥

स पुनस्ताञ्जघानाशु बालानपि नराधिप ।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ॥ ०५४ ॥

जातं जातं स गर्भं तु पुनरेव जघान ह ।
अरक्षंश्च सुतान्कांश्चित्तदा क्षत्रिययोषितः ॥ ०५५ ॥

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ॥ ०५६ ॥

क्षत्रियाणां तु शेषार्थं करेणोद्दिश्य कश्यपः ।
स्रुक्प्रग्रहवता राजञ्श्रीमान्वाक्यमथाब्रवीत् ॥ ०५७ ॥

गच्छ पारं समुद्रस्य दक्षिणस्य महामुने ।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥ ०५८ ॥

ततः शूर्पारकं देशं सागरस्तस्य निर्ममे ।
संत्रासाज्जामदग्न्यस्य सोऽपरान्तं महीतलम् ॥ ०५९ ॥

कश्यपस्तु महाराज प्रतिगृह्य महीमिमाम् ।
कृत्वा ब्राह्मणसंस्थां वै प्रविवेश महावनम् ॥ ०६० ॥

ततः शूद्राश्च वैश्याश्च यथास्वैरप्रचारिणः ।
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ ॥ ०६१ ॥

अराजके जीवलोके दुर्बला बलवत्तरैः ।
बाध्यन्ते न च वित्तेषु प्रभुत्वमिह कस्यचित् ॥ ०६२ ॥

ततः कालेन पृथिवी प्रविवेश रसातलम् ।
अरक्ष्यमाणा विधिवत्क्षत्रियैर्धर्मरक्षिभिः ॥ ०६३ ॥

ऊरुणा धारयामास कश्यपः पृथिवीं ततः ।
निमज्जन्तीं तदा राजंस्तेनोर्वीति मही स्मृता ॥ ०६४ ॥

रक्षिणश्च समुद्दिश्य प्रायाचत्पृथिवी तदा ।
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः ॥ ०६५ ॥

सन्ति ब्रह्मन्मया गुप्ता नृषु क्षत्रियपुङ्गवाः ।
हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ॥ ०६६ ॥

अस्ति पौरवदायादो विडूरथसुतः प्रभो ।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्येव पर्वते ॥ ०६७ ॥

तथानुकम्पमानेन यज्वनाथामितौजसा ।
पराशरेण दायादः सौदासस्याभिरक्षितः ॥ ०६८ ॥

सर्वकर्माणि कुरुते तस्यर्षेः शूद्रवद्धि सः ।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥ ०६९ ॥

शिबेः पुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संरक्षितो गोभिः सोऽभिरक्षतु मां मुने ॥ ०७० ॥

प्रतर्दनस्य पुत्रस्तु वत्सो नाम महायशाः ।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ ०७१ ॥

दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य ह ।

अङ्गः स गौतमेनापि गङ्गाकूलेऽभिरक्षितः ॥ ०७२ ॥

बृहद्रथो महाबाहुर्भुवि भूतिपुरस्कृतः ।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ०७३ ॥

मरुत्तस्यान्ववाये तु क्षत्रियास्तुर्वसोस्त्रयः ।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ॥ ०७४ ॥

एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः ।
सम्यग्ग्राममभिरक्षन्तु ततः स्थास्यामि निश्चला ॥ ०७५ ॥

एतेषां पितरश्चैव तथैव च पितामहाः ।
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ॥ ०७६ ॥

तेषामपचितिश्चैव मया कार्या न संशयः ।
न ह्यहं कामये नित्यमविक्रान्तेन रक्षणम् ॥ ०७७ ॥

ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः ।
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान् ॥ ०७८ ॥

तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः ।
एवमेतत्पुरा वृत्तं यन्मां पृच्छसि पाण्डव ॥ ०७९ ॥

वैशंपायन उवाच ॥

एवं ब्रुवन्नेव यदुप्रवीरो ; युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
रथेन तेनाशु ययौ यथार्को ; विशन्प्रभाभिर्भगवांस्त्रिलोकम् ॥ ०८० ॥

# अध्याय ०५०

वैशंपायन उवाच ॥

ततो रामस्य तत्कर्म श्रुत्वा राजा युधिष्ठिरः ।
विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् ॥ ००१ ॥

अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः ।
विक्रमो येन वसुधा क्रोधान्निःक्षत्रिया कृता ॥ ००२ ॥

गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः ।
गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥ ००३ ॥

अहो धन्यो हि लोकोऽयं सभाग्याश्च नरा भुवि ।
यत्र कर्मेदृशं धर्म्यं द्विजेन कृतमच्युत ॥ ००४ ॥

तथा यान्तौ तदा तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥ ००५ ॥

ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
स्वरश्मिजालसंवीतं सायंसूर्यमिवानलम् ॥ ००६ ॥

उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥ ००७ ॥

दूरादेव तमालोक्य कृष्णो राजा च धर्मराट् ।
चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः ॥ ००८ ॥

अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः ।
एकीकृत्येन्द्रियग्राममुपतस्थुर्महामुनीन् ॥ ००९ ॥

अभिवाद्य च गोविन्दः सात्यकिस्ते च कौरवाः ।
व्यासादींस्तानृषीन्पश्चाद्गाङ्गेयमुपतस्थिरे ॥ ०१० ॥

तपोवृद्धिं ततः पृष्ट्वा गाङ्गेयं यदुकौरवाः ।
परिवार्य ततः सर्वे निषेदुः पुरुषर्षभाः ॥ ०११ ॥

ततो निशम्य गाङ्गेयं शाम्यमानमिवानलम् ।
किञ्चिद्दीनमना भीष्ममिति होवाच केशवः ॥ ०१२ ॥

कच्चिज्ज्ञानानि ते राजन्प्रसन्नानि यथा पुरा ।
कच्चिदव्याकुला चैव बुद्धिस्ते वदतां वर ॥ ०१३ ॥

शराभिघातदुःखात्ते कच्चिद्गात्रं न दूयते ।
मानसादपि दुःखाद्धि शारीरं बलवत्तरम् ॥ ०१४ ॥

वरदानात्पितुः कामं छन्दमृत्युरसि प्रभो ।
शंतनोर्धर्मशीलस्य न त्वेतच्छमकारणम् ॥ ०१५ ॥

सुसूक्ष्मोऽपीह देहे वै शल्यो जनयते रुजम् ।
किं पुनः शरसंघातैश्चितस्य तव भारत ॥ ०१६ ॥

कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ ।
भवान्ह्युपदिशेच्छ्रेयो देवानामपि भारत ॥ ०१७ ॥

यद्धि भूतं भविष्यच्च भवच्च पुरुषर्षभ ।
सर्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितम् ॥ ०१८ ॥

संसारश्चैव भूतानां धर्मस्य च फलोदयः ।
विदितस्ते महाप्राज्ञ त्वं हि ब्रह्ममयो निधिः ॥ ०१९ ॥

त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम् ।

स्त्रीसहस्त्रैः परिवृतं पश्यामीहोर्ध्वरेतसम्  ॥ ०२० ॥

ऋते शांतनवाद्भीष्मात्त्रिषु लोकेषु पार्थिव ।
सत्यसंधान्महावीर्याच्छूराद्धर्मैकतत्परात्  ॥ ०२१ ॥

मृत्युमावार्य तरसा शरप्रस्तरशायिनः ।
निसर्गप्रभवं किञ्चिन्न च तातानुशुश्रुम  ॥ ०२२ ॥

सत्ये तपसि दाने च यज्ञाधिकरणे तथा ।
धनुर्वेदे च वेदे च नित्यं चैवान्ववेक्षणे  ॥ ०२३ ॥

अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम् ।
महारथं त्वत्सदृशं न कञ्चिदनुशुश्रुम  ॥ ०२४ ॥

त्वं हि देवान्सगन्धर्वान्ससुरासुरराक्षसान् ।
शक्त एकरथेनैव विजेतुं नात्र संशयः  ॥ ०२५ ॥

त्वं हि भीष्म महाबाहो वसूनां वासवोपमः ।
नित्यं विप्रैः समाख्यातो नवमोऽनवमो गुणैः  ॥ ०२६ ॥

अहं हि त्वाभिजानामि यस्त्वं पुरुषसत्तम ।
त्रिदशेष्वपि विख्यातः स्वशक्त्या सुमहाबलः  ॥ ०२७ ॥

मनुष्येषु मनुष्येन्द्र न दृष्टो न च मे श्रुतः ।
भवतो यो गुणैस्तुल्यः पृथिव्यां पुरुषः क्वचित्  ॥ ०२८ ॥

त्वं हि सर्वैर्गुणै राजन्देवानप्यतिरिच्यसे ।
तपसा हि भवाञ्शक्तः स्रष्टुं लोकांश्चराचरान्  ॥ ०२९ ॥

तदस्य तप्यमानस्य ज्ञातीनां सङ्क्षयेण वै ।
ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद  ॥ ०३० ॥

ये हि धर्माः समाख्याताश्चातुर्वर्ण्यस्य भारत ।
चातुराश्रम्यसंसृष्टास्ते सर्वे विदितास्तव ॥ ०३१ ॥

चातुर्वेद्ये च ये प्रोक्ताश्चातुर्होत्रे च भारत ।
सांख्ये योगे च नियता ये च धर्माः सनातनाः ॥ ०३२ ॥

चातुर्वर्ण्येन यश्चैको धर्मो न स्म विरुध्यते ।
सेव्यमानः स चैवाद्यो गाङ्गेय विदितस्तव ॥ ०३३ ॥

इतिहासपुराणं च कात्स्न्येन विदितं तव ।
धर्मशास्त्रं च सकलं नित्यं मनसि ते स्थितम् ॥ ०३४ ॥

ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः ।
तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ ॥ ०३५ ॥

स पाण्डवेयस्य मनःसमुत्थितं ; नरेन्द्र शोकं व्यपकर्ष मेधया ।
भवद्विधा ह्युत्तमबुद्धिविस्तरा ; विमुह्यमानस्य जनस्य शान्तये ॥ ०३६ ॥

---

# अध्याय ०५१

वैशंपायन उवाच ॥

श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः ।
किञ्चिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥ ००१ ॥

नमस्ते भगवन्विष्णो लोकानां निधनोद्भव ।

त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ ००२ ॥

विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
अपवर्गोऽसि भूतानां पञ्चानां परतः स्थितः ॥ ००३ ॥

नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
योगेश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणम् ॥ ००४ ॥

मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम ।
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषु वर्त्मसु ॥ ००५ ॥

तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ००६ ॥

दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ।
दिशो भुजौ रविश्चक्षुर्वीर्ये शक्रः प्रतिष्ठितः ॥ ००७ ॥

अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ॥ ००८ ॥

त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ००९ ॥

वासुदेव उवाच ॥

यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ ।
ततो वपुर्मया दिव्यं तव राजन्प्रदर्शितम् ॥ ०१० ॥

न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च ।
दर्शयाम्यहमात्मानं न चादान्ताय भारत ॥ ०११ ॥

भवांस्तु मम भक्तश्च नित्यं चार्जवमास्थितः ।
दमे तपसि सत्ये च दाने च निरतः शुचिः ॥ ०१२ ॥

अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव ।
तव ह्युपस्थिता लोका येभ्यो नावर्तते पुनः ॥ ०१३ ॥

पञ्चाशतं षट्च कुरुप्रवीर ; शेषं दिनानां तव जीवितस्य ।
ततः शुभैः कर्मफलोदयैस्त्वं ; समेष्यसे भीष्म विमुच्य देहम् ॥ ०१४ ॥

एते हि देवा वसवो विमाना ;न्यास्थाय सर्वे ज्वलिताग्निकल्पाः ।
अन्तर्हितास्त्वां प्रतिपालयन्ति ; काष्ठां प्रपद्यन्तमुदक्पतङ्गम् ॥ ०१५ ॥

व्यावृत्तमात्रे भगवत्युदीचीं ; सूर्ये दिशं कालवशात्प्रपन्ने ।
गन्तासि लोकान्पुरुषप्रवीर ; नावर्तते यानुपलभ्य विद्वान् ॥ ०१६ ॥

अमुं च लोकं त्वयि भीष्म याते ; ज्ञानानि नङ्क्ष्यन्त्यखिलेन वीर ।
अतः स्म सर्वे त्वयि संनिकर्षे ; समागता धर्मविवेचनाय ॥ ०१७ ॥

तज्ज्ञातिशोकोपहतश्रुताय ; सत्याभिसंधाय युधिष्ठिराय ।
प्रब्रूहि धर्मार्थसमाधियुक्त ;मर्थ्यं वचोऽस्यापनुदास्य शोकम् ॥ ०१८ ॥

---

# अध्याय ०५२

वैशंपायन उवाच ॥

ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शांतनवो भीष्मः प्रत्युवाच कृताञ्जलिः ॥ ००१ ॥

लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमभिश्रुत्य हर्षेणास्मि परिप्लुतः ॥ ००२ ॥

किं चाहमभिधास्यामि वाक्पते तव संनिधौ ।
यदा वाचोगतं सर्वं तव वाचि समाहितम् ॥ ००३ ॥

यद्धि किञ्चित्कृतं लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निःसृतं देव लोका बुद्धिमया हि ते ॥ ००४ ॥

कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थशास्त्राणां सोऽर्थान्ब्रूयात्तवाग्रतः ॥ ००५ ॥

शराभिघाताद्व्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ००६ ॥

न च मे प्रतिभा काचिदस्ति किञ्चित्प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विषानलसमैः शरैः ॥ ००७ ॥

बलं मेधाः प्रजरति प्राणाः संत्वरयन्ति च ।
मर्माणि परितप्यन्ते भ्रान्तं चेतस्तथैव च ॥ ००८ ॥

दौर्बल्यात्सज्जते वाङ्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलनन्दन ॥ ००९ ॥

तत्क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत ।
त्वत्संनिधौ च सीदेत वाचस्पतिरपि ब्रुवन् ॥ ०१० ॥

न दिशः संप्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ०११ ॥

स्वयमेव प्रभो तस्माद्धर्मराजस्य यद्धितम् ।
तद्ब्रवीह्याशु सर्वेषामागमानां त्वमागमः ॥ ०१२ ॥

कथं त्वयि स्थिते लोके शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते ॥ ०१३ ॥

वासुदेव उवाच ॥

उपपन्नमिदं वाक्यं कौरवाणां धुरंधरे ।
महावीर्ये महासत्त्वे स्थिते सर्वार्थदर्शिनि ॥ ०१४ ॥

यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं विभो ॥ ०१५ ॥

न ते ग्लानिर्न ते मूर्छा न दाहो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ ०१६ ॥

ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति ॥ ०१७ ॥

सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट् ॥ ०१८ ॥

यद्यच्च धर्मसंयुक्तमर्थयुक्तमथापि वा ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ ०१९ ॥

इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ ०२० ॥

चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा ।
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ॥ ०२१ ॥

वैशंपायन उवाच ॥

ततस्ते व्याससहिताः सर्व एव महर्षयः ।
ऋग्यजुःसामसंयुक्तैर्वचोभिः कृष्णमर्चयन् ॥ ०२२ ॥

ततः सर्वार्तवं दिव्यं पुष्पवर्षं नभस्तलात् ।
पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ॥ ०२३ ॥

वादित्राणि च दिव्यानि जगुश्चाप्सरसां गणाः ।
न चाहितमनिष्टं वा किञ्चित्तत्र व्यदृश्यत ॥ ०२४ ॥

ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः ।
शान्तायां दिशि शान्ताश्च प्रावदन्मृगपक्षिणः ॥ ०२५ ॥

ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः ।
दहन्वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ ०२६ ॥

ततो महर्षयः सर्वे समुत्थाय जनार्दनम् ।
भीष्ममामन्त्रयां चक्रू राजानं च युधिष्ठिरम् ॥ ०२७ ॥

ततः प्रणाममकरोत्केशवः पाण्डवस्तथा ।
सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ॥ ०२८ ॥

ततस्ते धर्मनिरताः सम्यक्तैरभिपूजिताः ।
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ ०२९ ॥

तथैवामन्त्र्य गाङ्गेयं केशवस्ते च पाण्डवाः ।
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ ०३० ॥

ततो रथैः काञ्चनदन्तकूबरै ;र्महीधराभैः समदैश्च दन्तिभिः ।

हयैः सुपर्णैरिव चाशुगामिभिः ; पदातिभिश्चात्तशरासनादिभिः ॥ ०३१ ॥

ययौ रथानां पुरतो हि सा चमू ;स्तथैव पश्चादतिमात्रसारिणी ।
पुरश्च पश्चाच्च यथा महानदी ; पुरर्क्षवन्तं गिरिमेत्य नर्मदा ॥ ०३२ ॥

ततः पुरस्ताद्भगवान्निशाकरः ; समुत्थितस्तामभिहर्षयंश्चमूम् ।
दिवाकरापीतरसास्तथौषधीः ; पुनः स्वकेनैव गुणेन योजयन् ॥ ०३३ ॥

ततः पुरं सुरपुरसंनिभद्युति ; प्रविश्य ते यदुवृषपाण्डवास्तदा ।
यथोचितान्भवनवरान्समाविश ;ञ्श्रमान्विता मृगपतयो गुहा इव ॥ ०३४ ॥

---

# अध्याय ०५३

वैशंपायन उवाच ॥

ततः प्रविश्य भवनं प्रसुप्तो मधुसूदनः ।
याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत ॥ ००१ ॥

स ध्यानपथमाश्रित्य सर्वज्ञानानि माधवः ।
अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् ॥ ००२ ॥

ततः श्रुतिपुराणज्ञाः शिक्षिता रक्तकण्ठिनः ।
अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ॥ ००३ ॥

पठन्ति पाणिस्वनिकास्तथा गायन्ति गायनाः ।
शङ्खानकमृदङ्गांश्च प्रवाद्यन्त सहस्रशः ॥ ००४ ॥

वीणापणववेणूनां स्वनश्चातिमनोरमः ।

प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनः ॥ ००५ ॥

तथा युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः ।
उच्चैरुर्मधुरा वाचो गीतवादित्रसंहिताः ॥ ००६ ॥

तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः ।
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥ ००७ ॥

ततः सहस्रं विप्राणां चतुर्वेदविदां तथा ।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ००८ ॥

मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च ।
आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ॥ ००९ ॥

गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् ।
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥ ०१० ॥

ततः कृष्णस्य वचनात्सात्यकिस्त्वरितो ययौ ।
उपगम्य च राजानं युधिष्ठिरमुवाच ह ॥ ०११ ॥

युक्तो रथवरो राजन्वासुदेवस्य धीमतः ।
समीपमापगेयस्य प्रयास्यति जनार्दनः ॥ ०१२ ॥

भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते ।
यदत्रानन्तरं कृत्यं तद्भवान्कर्तुमर्हति ॥ ०१३ ॥

युधिष्ठिर उवाच ॥

युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते ।
न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ॥ ०१४ ॥

न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः ।
अतः पुरःसराश्चापि निवर्तन्तु धनञ्जय ॥ ०१५ ॥

अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति ।
ततो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ ०१६ ॥

वैशंपायन उवाच ॥

तद्वाक्यमाकर्ण्य तथा कुन्तीपुत्रो धनञ्जयः ।
युक्तं रथवरं तस्मा आचचक्षे नरर्षभ ॥ ०१७ ॥

ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि ।
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥ ०१८ ॥

आगच्छतस्त्वथ कृष्णोऽपि पाण्डवेषु महात्मसु ।
शैनेयसहितो धीमान्रथमेवान्वपद्यत ॥ ०१९ ॥

रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् ।
मेघघोषै रथवरैः प्रययुस्ते महारथाः ॥ ०२० ॥

मेघपुष्पं बलाहं च सैन्यं सुग्रीवमेव च ।
दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ ०२१ ॥

ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
गां खुराग्रैस्तथा राज.ण्ल्लिखन्तः प्रययुस्तदा ॥ ०२२ ॥

ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः ।
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ ०२३ ॥

ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः ।
आस्ते ब्रह्मर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा ॥ ०२४ ॥

ततोऽवतीर्य गोविन्दो रथात्स च युधिष्ठिरः ।
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ॥ ०२५ ॥

ऋषीनभ्यर्चयामासुः करानुद्यम्य दक्षिणान् ॥ ०२५ ॥

स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥ ०२६ ॥

शरतल्पे शयानं तमादित्यं पतितं यथा ।
ददर्श स महाबाहुर्भयादागतसाध्वसः ॥ ०२७ ॥

---

# अध्याय ०५४

जनमेजय उवाच ॥

धर्मात्मनि महासत्त्वे सत्यसंधे जितात्मनि ।
देवव्रते महाभागे शरतल्पगतेऽच्युते ॥ ००१ ॥

शयाने वीरशयने भीष्मे शंतनुनन्दने ।
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपस्थिते ॥ ००२ ॥

काः कथाः समवर्तन्त तस्मिन्वीरसमागमे ।
हतेषु सर्वसैन्येषु तन्मे शंस महामुने ॥ ००३ ॥

वैशंपायन उवाच ॥

शरतल्पगते भीष्मे कौरवाणां धुरंधरे ।

आजग्मुर्ऋषयः सिद्धा नारदप्रमुखा नृप ॥ ००४ ॥

हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः ।
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ ००५ ॥

तेऽभिगम्य महात्मानो भरतानां पितामहम् ।
अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ॥ ००६ ॥

मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः ।
उवाच पाण्डवान्सर्वान्हतशिष्टांश्च पार्थिवान् ॥ ००७ ॥

प्राप्तकालं च आचक्षे भीष्मोऽयमनुयुज्यताम् ।
अस्तमेति हि गाङ्गेयो भानुमानिव भारत ॥ ००८ ॥

अयं प्राणानुत्सिसृक्षुस्तं सर्वेऽभ्येत्य पृच्छत ।
कृत्स्नान्हि विविधान्धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ ००९ ॥

एष वृद्धः पुरा लोकान्संप्राप्नोति तनुत्यजाम् ।
तं शीघ्रमनुयुञ्जध्वं संशयान्मनसि स्थितान् ॥ ०१० ॥

एवमुक्ता नारदेन भीष्ममीयुर्नराधिपाः ।
प्रष्टुं चाशक्नुवन्तस्ते वीक्षां चक्रुः परस्परम् ॥ ०११ ॥

अथोवाच हृषीकेशं पाण्डुपुत्रो युधिष्ठिरः ।
नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् ॥ ०१२ ॥

प्रव्याहारय दुर्धर्ष त्वमग्रे मधुसूदन ।
त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः ॥ ०१३ ॥

एवमुक्तः पाण्डवेन भगवान्केशवस्तदा ।
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ ०१४ ॥

वासुदेव उवाच ॥

कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम ।
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ ०१५ ॥

कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ ०१६ ॥

भीष्म उवाच ॥

दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा ।
तव प्रसादाद्गोविन्द सद्यो व्यपगतानघ ॥ ०१७ ॥

यच्च भूतं भविष्यच्च भवच्च परमद्युते ।
तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥ ०१८ ॥

वेदोक्ताश्चैव ये धर्मा वेदान्तनिहिताश्च ये ।
तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत ॥ ०१९ ॥

शिष्टैश्च धर्मो यः प्रोक्तः स च मे हृदि वर्तते ।
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन ॥ ०२० ॥

चतुर्ष्वाश्रमधर्मेषु योऽर्थः स च हृदि स्थितः ।
राजधर्मांश्च सकलानवगच्छामि केशव ॥ ०२१ ॥

यत्र यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन ।
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ॥ ०२२ ॥

युवेव चास्मि संवृत्तस्त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ ०२३ ॥

स्वयं किमर्थं तु भवाञ्श्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥ ०२४ ॥

वासुदेव उवाच ॥

यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव ।
मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥ ०२५ ॥

शीतांशुश्चन्द्र इत्युक्ते को लोके विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ ०२६ ॥

आधेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता ॥ ०२७ ॥

यावद्धि पृथिवीपाल पृथिवी स्थास्यते ध्रुवा ।
तावत्तवाक्षया कीर्तिर्लोकाननु चरिष्यति ॥ ०२८ ॥

यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवादा इव ते स्थास्यन्ति वसुधातले ॥ ०२९ ॥

यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना ।
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥ ०३० ॥

एतस्मात्कारणाद्भीष्म मतिर्दिव्या मया हि ते ।
दत्ता यशो विप्रथेत कथं भूयस्तवेति ह ॥ ०३१ ॥

यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षयं स्थानं भवतीति विनिश्चितम् ॥ ०३२ ॥

राजानो हतशिष्टास्त्वां राजन्नभित आसते ।

धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ॥ ०३३ ॥

भवान्हि वयसा वृद्धः श्रुताचारसमन्वितः ।
कुशलो राजधर्माणां पूर्वेषामपराश्च ये ॥ ०३४ ॥

जन्मप्रभृति ते कश्चिद्वृजिनं न ददर्श ह ।
ज्ञातारमनुधर्माणां त्वां विदुः सर्वपार्थिवाः ॥ ०३५ ॥

तेभ्यः पितेव पुत्रेभ्यो राजन्ब्रूहि परं नयम् ।
ऋषयश्च हि देवाश्च त्वया नित्यमुपासिताः ॥ ०३६ ॥

तस्माद्वक्तव्यमेवेह त्वया पश्याम्यशेषतः ।
धर्माञ्शुश्रूषमाणेभ्यः पृष्टेन च सता पुनः ॥ ०३७ ॥

वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः ।
अप्रतिब्रुवतः कष्टो दोषो हि भवति प्रभो ॥ ०३८ ॥

तस्मात्पुत्रैश्च पौत्रैश्च धर्मान्पृष्टः सनातनान् ।
विद्वाञ्जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ॥ ०३९ ॥

---

# अध्याय ०५५

वैशंपायन उवाच ॥

अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ।
हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ॥ ००१ ॥

तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ॥ ००१ ॥

युधिष्ठिरस्तु मां राजा धर्मान्समनुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चानघ ॥ ००२ ॥

यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि ।
अहृष्यन्नृषयः सर्वे स मां पृच्छतु पाण्डवः ॥ ००३ ॥

सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित्स मां पृच्छतु पाण्डवः ॥ ००४ ॥

धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ॥ ००५ ॥

सत्यं दानं तपः शौचं शान्तिर्दाक्ष्यमसंभ्रमः ।
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ॥ ००६ ॥

यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ॥ ००७ ॥

संबन्धिनोऽतिथीन्भृत्यान्संश्रितोपाश्रितांश्च यः ।
संमानयति सत्कृत्य स मां पृच्छतु पाण्डवः ॥ ००८ ॥

सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ॥ ००९ ॥

इज्याध्ययननित्यश्च धर्मे च निरतः सदा ।
शान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः ॥ ०१० ॥

वासुदेव उवाच ॥

लज्जया परयोपेतो धर्मात्मा स युधिष्ठिरः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ०११ ॥

लोकस्य कदनं कृत्वा लोकनाथो विशां पते ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ०१२ ॥

पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबन्धिबान्धवान् ।
अर्घ्यार्हानिषुभिर्हत्वा भवन्तं नोपसर्पति ॥ ०१३ ॥

भीष्म उवाच ॥

ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ ०१४ ॥

पितॄन्पितामहान्पुत्रान्गुरून्संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान्यः संख्ये निहन्याद्धर्म एव सः ॥ ०१५ ॥

समयत्यागिनो लुब्धान्गुरूनपि च केशव ।
निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित् ॥ ०१६ ॥

आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥ ०१७ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु भीष्मेण धर्मराजो युधिष्ठिरः ।
विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः ॥ ०१८ ॥

अथास्य पादौ जग्राह भीष्मश्चाभिननन्द तम् ।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ ०१९ ॥

तमुवाचाथ गाङ्गेय ऋषभः सर्वधन्विनाम् ।
पृच्छ मां तात विस्रब्धं मा भैस्त्वं कुरुसत्तम ॥ ०२० ॥

---

# अध्याय ०५६

वैशंपायन उवाच ॥

प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः ॥ ००१ ॥

राज्यं वै परमो धर्म इति धर्मविदो विदुः ।
महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥ ००२ ॥

राजधर्मान्विशेषेण कथयस्व पितामह ।
सर्वस्य जीवलोकस्य राजधर्माः परायणम् ॥ ००३ ॥

त्रिवर्गोऽत्र समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥ ००४ ॥

यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ ००५ ॥

अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलं भवेत् ॥ ००६ ॥

उदयन्हि यथा सूर्यो नाशयत्यासुरं तमः ।
राजधर्मास्तथालोक्यामाक्षिपन्त्यशुभां गतिम् ॥ ००७ ॥

तदग्रे राजधर्माणामर्थतत्त्वं पितामह ।
प्रब्रूहि भरतश्रेष्ठ त्वं हि बुद्धिमतां वरः ॥ ००८ ॥

आगमश्च परस्त्वत्तः सर्वेषां नः परंतप ।
भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ॥ ००९ ॥

भीष्म उवाच ॥

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥ ०१० ॥

शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर ।
निरुच्यमानान्नियतो यच्चान्यदभिवाञ्छसि ॥ ०११ ॥

आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनकाम्यया ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥ ०१२ ॥

दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च स मान्यते ॥ ०१३ ॥

उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थप्रसिद्धये ॥ ०१४ ॥

साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥ ०१५ ॥

विपन्ने च समारम्भे संतापं मा स्म वै कृथाः ।
घटते विनयस्तात राज्ञामेष नयः परः ॥ ०१६ ॥

न हि सत्यादृते किञ्चिद्राज्ञां वै सिद्धिकारणम् ।

सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥ ०१७ ॥

ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् ।
तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणम् ॥ ०१८ ॥

गुणवाञ्शीलवान्दान्तो मृदुर्धर्म्यो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ ०१९ ॥

आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ॥ ०२० ॥

मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचर ॥ ०२१ ॥

अदण्ड्याश्चैव ते नित्यं विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम भारत ॥ ०२२ ॥

मनुना चापि राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥ ०२३ ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ०२४ ॥

अयो हन्ति यदाश्मानमग्निश्चापोऽभिपद्यते ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥ ०२५ ॥

एतज्ज्ञात्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥ ०२६ ॥

एवं चैव नरव्याघ्र लोकतन्त्रविघातकाः ।
निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः ॥ ०२७ ॥

श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा ।
तौ निबोध महाप्राज्ञ त्वमेकाग्रमना नृप ॥ ०२८ ॥

उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नरेश्वरः ॥ ०२९ ॥

विनश्यमानं धर्मं हि यो रक्षति स धर्मवित् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मनुमृच्छति ॥ ०३० ॥

एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
स्वपराद्धानपि हि तान्विषयान्ते समुत्सृजेत् ॥ ०३१ ॥

अभिशस्तमपि ह्येषां कृपायीत विशां पते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥ ०३२ ॥

राजद्विष्टे च विप्रस्य विषयान्ते विसर्जनम् ।
विधीयते न शारीरं भयमेषां कदाचन ॥ ०३३ ॥

दयिताश्च नरास्ते स्युर्नित्यं पुरुषसत्तम ।
न कोशः परमो ह्यन्यो राज्ञां पुरुषसञ्चयात् ॥ ०३४ ॥

दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वेषु तेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ॥ ०३५ ॥

तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ॥ ०३६ ॥

न च क्षान्तेन ते भाव्यं नित्यं पुरुषसत्तम ।
अधर्म्यो हि मृदू राजा क्षमावानिव कुञ्जरः ॥ ०३७ ॥

बार्हस्पत्ये च शास्त्रे वै श्लोका विनियताः पुरा ।
अस्मिन्नर्थे महाराज तन्मे निगदतः शृणु ॥ ०३८ ॥

क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ ०३९ ॥

तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वापि भवेन्नृपः ।
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ॥ ०४० ॥

प्रत्यक्षेणानुमानेन तथौपम्योपदेशतः ।
परीक्ष्यास्ते महाराज स्वे परे चैव सर्वदा ॥ ०४१ ॥

व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत् ॥ ०४२ ॥

नित्यं हि व्यसनी लोके परिभूतो भवत्युत ।
उद्वेजयति लोकं चाप्यतिद्वेषी महीपतिः ॥ ०४३ ॥

भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज शृणु येनेदमिष्यते ॥ ०४४ ॥

यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् ॥ ०४५ ॥

वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना ।
स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ॥ ०४६ ॥

न संत्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥ ०४७ ॥

परिहासश्च भृत्यैस्ते न नित्यं वदतां वर ।

कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥ ०४८ ॥

अवमन्यन्ति भर्तारं संहर्षादुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति हि तद्वचः ॥ ०४९ ॥

प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्तेऽभोज्यान्याहारयन्ति च ॥ ०५० ॥

क्रुध्यन्ति परिदीप्यन्ति भूमिमध्यासतेऽस्य च ।
उत्कोचैर्वञ्चनाभिश्च कार्याण्यनुविहन्ति च ॥ ०५१ ॥

जर्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥ ०५२ ॥

वातं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ ।
निर्लज्जा नरशार्दूल व्याहरन्ति च तद्वचः ॥ ०५३ ॥

हयं वा दन्तिनं वापि रथं नृपतिसंमतम् ।
अधिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ ॥ ०५४ ॥

इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवन्ति परिषद्गताः ॥ ०५५ ॥

क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः ।
संघर्षशीलाश्च सदा भवन्त्यन्योन्यकारणात् ॥ ०५६ ॥

विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ॥ ०५७ ॥

अलङ्करणभोज्यं च तथा स्नानानुलेपनम् ॥ ०५७ ॥

हेलमाना नरव्याघ्र स्वस्थास्तस्योपश्रृण्वते ।
निन्दन्ति स्वानधीकारान्संत्यजन्ति च भारत ॥ ०५८ ॥

न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ।
क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ॥ ०५९ ॥

अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ॥ ०५९ ॥

एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥ ०६० ॥

---

# अध्याय ०५७

भीष्म उवाच ॥

नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
प्रशाम्यते च राजा हि नारीवोद्यमवर्जितः ॥ ००१ ॥

भगवानुशना चाह श्लोकमत्र विशां पते ।
तमिहैकमना राजन्गदतस्त्वं निबोध मे ॥ ००२ ॥

द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ००३ ॥

तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि ।
संधेयानपि संधत्स्व विरोध्यांश्च विरोधय ॥ ००४ ॥

सप्ताङ्गे यश्च ते राज्ये वैपरीत्यं समाचरेत् ।

गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥ ००५ ॥

मरुत्तेन हि राज्ञायं गीतः श्लोकः पुरातनः ।
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ॥ ००६ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ००७ ॥

बाहोः पुत्रेण राज्ञा च सगरेणेह धीमता ।
असमञ्जाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ॥ ००८ ॥

असमञ्जाः सरय्वां प्राक्पौराणां बालकान्नृप ।
न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ॥ ००९ ॥

ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः ।
मिथ्या विप्रानुपचरन्संत्यक्तो दयितः सुतः ॥ ०१० ॥

लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥ ०११ ॥

न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
विक्रान्तः सत्यवाक्क्षान्तो नृपो न चलते पथः ॥ ०१२ ॥

गुप्तमन्त्रो जितक्रोधो शास्त्रार्थगतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥ ०१३ ॥

त्रय्या संवृतरन्ध्रश्च राजा भवितुमर्हति ।
वृजिनस्य नरेन्द्राणां नान्यत्संवरणात्परम् ॥ ०१४ ॥

चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ।
धर्मसङ्कररक्षा हि राज्ञां धर्मः सनातनः ॥ ०१५ ॥

न विश्वसेच्च नृपतिर्न चात्यर्थं न विश्वसेत् ।
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्यावलोकयेत्  ॥ ०१६  ॥

द्विट्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते ।
त्रिवर्गविदितार्थश्च युक्तचारोपधिश्च यः  ॥ ०१७  ॥

कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ।
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः  ॥ ०१८  ॥

अभृतानां भवेद्भर्ता भृतानां चान्ववेक्षकः ।
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता  ॥ ०१९  ॥

उपासिता च वृद्धानां जिततन्द्रीरलोलुपः ।
सतां वृत्ते स्थितमतिः सन्तो ह्याचारदर्शिनः  ॥ ०२०  ॥

न चाददीत वित्तानि सतां हस्तात्कदाचन ।
असद्भ्यस्तु समादद्यात्सद्भ्यः संप्रतिपादयेत्  ॥ ०२१  ॥

स्वयं प्रहर्तादाता च वश्यात्मा वश्यसाधनः ।
काले दाता च भोक्ता च शुद्धाचारस्तथैव च  ॥ ०२२  ॥

शूरान्भक्तानसंहार्यान्कुले जातानरोगिणः ।
शिष्टाञ्शिष्टाभिसंबन्धान्मानिनो नावमानिनः  ॥ ०२३  ॥

विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मेषु निरतान्साधूनचलानचलानिव  ॥ ०२४  ॥

सहायान्सततं कुर्याद्राजा भूतिपुरस्कृतः ।
तैस्तुल्यश्च भवेद्भोगैश्छत्रमात्राज्ञयाधिकः  ॥ ०२५  ॥

प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्सदा ।
एवं कृत्वा नरेन्द्रो हि न खेदमिह विन्दति ॥ ०२६ ॥

सर्वातिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥ ०२७ ॥

शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चावतिष्ठते ॥ ०२८ ॥

अक्रोधनोऽथाव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥ ०२९ ॥

प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु तत्परः ।
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥ ०३० ॥

क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥ ०३१ ॥

आरब्धान्येव कार्याणि न पर्यवसितानि च ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥ ०३२ ॥

पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ ०३३ ॥

अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥ ०३४ ॥

स्वकर्मनिरता यस्य जना विषयवासिनः ।
असंघातरता दान्ताः पाल्यमाना यथाविधि ॥ ०३५ ॥

वश्या नेया विनीताश्च न च संघर्षशीलिनः ।

विषये दानरुचयो नरा यस्य स पार्थिवः ॥ ०३६ ॥

न यस्य कूटकपटं न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मः सनातनः ॥ ०३७ ॥

यः सत्करोति ज्ञानानि नेयः पौरहिते रतः ।
सतां धर्मानुगस्त्यागी स राजा राज्यमर्हति ॥ ०३८ ॥

यस्य चारश्च मन्त्रश्च नित्यं चैव कृताकृते ।
न ज्ञायते हि रिपुभिः स राजा राज्यमर्हति ॥ ०३९ ॥

श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना ।
आख्याते रामचरिते नृपतिं प्रति भारत ॥ ०४० ॥

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ ०४१ ॥

तद्राजन्राजसिंहानां नान्यो धर्मः सनातनः ।
ऋते रक्षां सुविस्पष्टां रक्षा लोकस्य धारणम् ॥ ०४२ ॥

प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥ ०४३ ॥

षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ०४४ ॥

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ०४५ ॥

# अध्याय ०५८

भीष्म उवाच ॥

एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति ॥ ००१ ॥

विशालाक्षश्च भगवान्काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥ ००२ ॥

भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥ ००३ ॥

रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।
राज्ञां राजीवताम्राक्ष साधनं चात्र वै शृणु ॥ ००४ ॥

चारश्च प्रणिधिश्चैव काले दानममत्सरः ।
युक्त्यादानं न चादानमयोगेन युधिष्ठिर ॥ ००५ ॥

सतां सङ्ग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ॥ ००६ ॥

साधूनामपरित्यागः कुलीनानां च धारणम् ।
निचयश्च निचेयानां सेवा बुद्धिमतामपि ॥ ००७ ॥

बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ॥ ००८ ॥

पुरगुप्तिरविश्वासः पौरसंघातभेदनम् ।
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ॥ ००९ ॥

द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ।
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम्  ॥ ०१०  ॥

उपजापश्च भृत्यानामात्मनः परदर्शनात् ।
अविश्वासः स्वयं चैव परस्याश्वासनं तथा  ॥ ०११  ॥

नीतिधर्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम्  ॥ ०१२  ॥

उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे  ॥ ०१३  ॥

उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च  ॥ ०१४  ॥

उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानधीरं वाग्धीरा रमयन्त उपासते  ॥ ०१५  ॥

उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
धर्षणीयो रिपूणां स्याद्भुजङ्ग इव निर्विषः  ॥ ०१६  ॥

न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च  ॥ ०१७  ॥

एकाश्वेनापि संभूतः शत्रुर्दुर्गसमाश्रितः ।
तं तं तापयते देशमपि राज्ञः समृद्धिनः  ॥ ०१८  ॥

राज्ञो रहस्यं यद्वाक्यं जयार्थं लोकसङ्ग्रहः ।
हृदि यच्चास्य जिह्मं स्यात्कारणार्थं च यद्भवेत्  ॥ ०१९  ॥

यच्चास्य कार्यं वृजिनमार्जवेनैव धार्यते ।

दम्भनार्थाय लोकस्य धर्मिष्ठामाचरेत्क्रियाम्  ॥ ०२०  ॥

राज्यं हि सुमहत्तन्त्रं दुर्धार्यमकृतात्मभिः ।
न शक्यं मृदुना वोढुमाघातस्थानमुत्तमम्  ॥ ०२१  ॥

राज्यं सर्वामिषं नित्यमार्जवेनेह धार्यते ।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर  ॥ ०२२  ॥

यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य वै प्रजाः ।
सोऽप्यस्य विपुलो धर्म एवंवृत्ता हि भूमिपाः  ॥ ०२३  ॥

एष ते राजधर्माणां लेशः समनुवर्णितः ।
भूयस्ते यत्र संदेहस्तद्ब्रूहि वदतां वर  ॥ ०२४  ॥

वैशंपायन उवाच  ॥

ततो व्यासश्च भगवान्देवस्थानोऽश्मना सह ।
वासुदेवः कृपश्चैव सात्यकिः सञ्जयस्तथा  ॥ ०२५  ॥

साधु साध्विति संहृष्टाः पुष्यमाणैरिवाननैः ।
अस्तुवंस्ते नरव्याघ्रं भीष्मं धर्मभृतां वरम्  ॥ ०२६  ॥

ततो दीनमना भीष्ममुवाच कुरुसत्तमः ।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन्  ॥ ०२७  ॥

श्व इदानीं स्वसंदेहं प्रक्ष्यामि त्वं पितामह ।
उपैति सविताप्यस्तं रसमापीय पार्थिवम्  ॥ ०२८  ॥

ततो द्विजातीनभिवाद्य केशवः ; कृपश्च ते चैव युधिष्ठिरादयः ।
प्रदक्षिणीकृत्य महानदीसुतं ; ततो रथानारुरुहुर्मुदा युताः  ॥ ०२९  ॥

दृषद्वतीं चाप्यवगाह्य सुव्रताः ; कृतोदकार्याः कृतजप्यमङ्गलाः ।
उपास्य संध्यां विधिवत्परंतपा ;स्ततः पुरं ते विविशुर्गजाह्वयम् ॥ ०३० ॥

---

# अध्याय ०५९

वैशंपायन उवाच ॥

ततः काल्यं समुत्थाय कृतपौर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारै रथैः पाण्डवयादवाः ॥ ००१ ॥

प्रपद्य च कुरुक्षेत्रं भीष्ममासाद्य चानघम् ।
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥ ००२ ॥

व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥ ००३ ॥

ततो राजा महातेजा धर्मराजो युधिष्ठिरः ।
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्याभिवाद्य च ॥ ००४ ॥

य एष राजाराजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि पितामह ॥ ००५ ॥

तुल्यपाणिशिरोग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठभुजोदरः ॥ ००६ ॥

तुल्यशुक्रास्थिमज्जश्च तुल्यमांसासृगेव च ।
निःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥ ००७ ॥

समानजन्ममरणः समः सर्वगुणैर्नृणाम् ।
विशिष्टबुद्धीञ्शूरांश्च कथमेकोऽधितिष्ठति ॥ ००८ ॥

कथमेको महीं कृत्स्नां वीरशूरार्यसङ्कुलाम् ।
रक्षत्यपि च लोकोऽस्य प्रसादमभिवाञ्छति ॥ ००९ ॥

एकस्य च प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुलेनाकुलः सर्वो भवतीति विनिश्चयः ॥ ०१० ॥

एतदिच्छाम्यहं सर्वं तत्त्वेन भरतर्षभ ।
श्रोतुं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥ ०११ ॥

नैतत्कारणमल्पं हि भविष्यति विशां पते ।
यदेकस्मिञ्जगत्सर्वं देववद्याति संनतिम् ॥ ०१२ ॥

भीष्म उवाच ॥

नियतस्त्वं नरश्रेष्ठ शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥ ०१३ ॥

नैव राज्यं न राजासीन्न दण्डो न च दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति च परस्परम् ॥ ०१४ ॥

पालयानास्तथान्योन्यं नरा धर्मेण भारत ।
खेदं परममाजग्मुस्ततस्तान्मोह आविशत् ॥ ०१५ ॥

ते मोहवशमापन्ना मानवा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥ ०१६ ॥

नष्टायां प्रतिपत्तौ तु मोहवश्या नरास्तदा ।
लोभस्य वशमापन्नाः सर्वे भारतसत्तम ॥ ०१७ ॥

अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र समपद्यत वै प्रभो ॥ ०१८ ॥

तांस्तु कामवशं प्राप्तान्रागो नाम समस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्यं युधिष्ठिर ॥ ०१९ ॥

अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् ॥ ०२० ॥

विप्लुते नरलोकेऽस्मिंस्ततो ब्रह्म ननाश ह ।
नाशाच्च ब्रह्मणो राजन्धर्मो नाशमथागमत् ॥ ०२१ ॥

नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥ ०२२ ॥

प्रपद्य भगवन्तं ते देवा लोकपितामहम् ।
ऊचुः प्राञ्जलयः सर्वे दुःखशोकभयार्दिताः ॥ ०२३ ॥

भगवन्नरलोकस्थं नष्टं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥ ०२४ ॥

ब्रह्मणश्च प्रणाशेन धर्मोऽप्यनशदीश्वर ।
ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर ॥ ०२५ ॥

अधो हि वर्षमस्माकं मर्त्यास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥ ०२६ ॥

अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रभावसमुत्थोऽसौ प्रभावो नो विनश्यति ॥ ०२७ ॥

तानुवाच सुरान्सर्वान्स्वयंभूर्भगवांस्ततः ।
श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः ॥ ०२८ ॥

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥ ०२९ ॥

त्रिवर्ग इति विख्यातो गण एष स्वयंभुवा ।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गणः ॥ ०३० ॥

मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ ०३१ ॥

आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ॥ ०३२ ॥

त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ ०३३ ॥

अमात्यरक्षाप्रणिधी राजपुत्रस्य रक्षणम् ।
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ॥ ०३४ ॥

साम चोपप्रदानं च भेदो दण्डश्च पाण्डव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥ ०३५ ॥

मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च ।
विभ्रंशश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम् ॥ ०३६ ॥

संधिश्च विविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यः कार्त्स्न्येन परिवर्णितः ॥ ०३७ ॥

यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।

विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ॥ ०३८ ॥

आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ॥ ०३९ ॥

प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यस्तु बहुविस्तरः ॥ ०४० ॥

रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिकाः पथि चाष्टकम् ॥ ०४१ ॥

अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ।
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ॥ ०४२ ॥

स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः ।
अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ॥ ०४३ ॥

कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह ।
आत्मरक्षणमाश्वासः स्पशानां चान्ववेक्षणम् ॥ ०४४ ॥

कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥ ०४५ ॥

उत्पाताश्च निपाताश्च सुयुद्धं सुपलायनम् ।
शस्त्राणां पायनज्ञानं तथैव भरतर्षभ ॥ ०४६ ॥

बलव्यसनमुक्तं च तथैव बलहर्षणम् ।
पीडनास्कन्दकालश्च भयकालश्च पाण्डव ॥ ०४७ ॥

तथा खातविधानं च योगसञ्चार एव च ।
चौराटव्यबलैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥ ०४८ ॥

अग्निदैर्गरदैश्चैव प्रतिरूपकचारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥ ०४९ ॥

दूषणेन च नागानामाशङ्काजननेन च ।
आरोधनेन भक्तस्य पथश्चोपार्जनेन च ॥ ०५० ॥

सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमञ्जसम् ।
दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥ ०५१ ॥

अरिमध्यस्थमित्राणां सम्यक्चोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ॥ ०५२ ॥

व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
शमो व्यायामयोगश्च योगो द्रव्यस्य सञ्चयः ॥ ०५३ ॥

अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।
अर्थकाले प्रदानं च व्यसनेष्वप्रसङ्गिता ॥ ०५४ ॥

तथा राजगुणाश्चैव सेनापतिगुणाश्च ये ।
कारणस्य च कर्तुश्च गुणदोषास्तथैव च ॥ ०५५ ॥

दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुजीविनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ॥ ०५६ ॥

अलब्धलिप्सा लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्तथा ॥ ०५७ ॥

विसर्गोऽर्थस्य धर्मार्थमर्थार्थं कामहेतुना ।
चतुर्थो व्यसनाघाते तथैवात्रानुवर्णितः ॥ ०५८ ॥

क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह  ॥ ०५९  ॥

मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा  ॥ ०६०  ॥

वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागोऽथार्थदूषणमेव च  ॥ ०६१  ॥

यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।
अवमर्दः प्रतीघातः केतनानां च भञ्जनम्  ॥ ०६२  ॥

चैत्यद्रुमाणामामर्दो रोधःकर्मान्तनाशनम् ।
अपस्करोऽथ गमनं तथोपास्या च वर्णिता  ॥ ०६३  ॥

पणवानकशङ्खानां भेरीणां च युधां वर ।
उपार्जनं च द्रव्याणां परमर्म च तानि षट्  ॥ ०६४  ॥

लब्धस्य च प्रशमनं सतां चैव हि पूजनम् ।
विद्वद्भिरेकीभावश्च प्रातर्होमविधिज्ञता  ॥ ०६५  ॥

मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च  ॥ ०६६  ॥

एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः ।
उत्सवानां समाजानां क्रियाः केतनजास्तथा  ॥ ०६७  ॥

प्रत्यक्षा च परोक्षा च सर्वाधिकरणेषु च ।
वृत्तिर्भरतशार्दूल नित्यं चैवान्ववेक्षणम्  ॥ ०६८  ॥

अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनम् ।

अनुजीविस्वजातिभ्यो गुणेषु परिरक्षणम्  ॥ ०६९  ॥

रक्षणं चैव पौराणां स्वराष्ट्रस्य विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन्द्वादशराजिका  ॥ ०७०  ॥

द्वासप्ततिमतिश्चैव प्रोक्ता या च स्वयंभुवा ।
देशजातिकुलानां च धर्माः समनुवर्णिताः  ॥ ०७१  ॥

धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः ।
उपायश्चार्थलिप्सा च विविधा भूरिदक्षिणाः  ॥ ०७२  ॥

मूलकर्मक्रिया चात्र माया योगश्च वर्णितः ।
दूषणं स्रोतसामत्र वर्णितं च स्थिराम्भसाम्  ॥ ०७३  ॥

यैर्यैरुपायैर्लोकश्च न चलेदार्यवर्त्मनः ।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽनुवर्णितम्  ॥ ०७४  ॥

एतत्कृत्वा शुभं शास्त्रं ततः स भगवान्प्रभुः ।
देवानुवाच संहृष्टः सर्वाञ्शक्रपुरोगमान्  ॥ ०७५  ॥

उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता  ॥ ०७६  ॥

दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननु चरिष्यति  ॥ ०७७  ॥

दण्डेन नीयते चेयं दण्डं नयति चाप्युत ।
दण्डनीतिरिति प्रोक्ता त्री.ण्ल्लोकाननुवर्तते  ॥ ०७८  ॥

षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा  ॥ ०७९  ॥

नयचारश्च विपुलो येन सर्वमिदं ततम् ।
आगमश्च पुराणानां महर्षीणां च संभवः ॥ ०८० ॥

तीर्थवंशश्च वंशश्च नक्षत्राणां युधिष्ठिर ।
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ॥ ०८१ ॥

चातुर्वर्ण्यं तथैवात्र चातुर्वैद्यं च वर्णितम् ।
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ॥ ०८२ ॥

तपो ज्ञानमहिंसा च सत्यासत्ये नयः परः ।
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ॥ ०८३ ॥

सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम् ।
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ॥ ०८४ ॥

तस्मिन्पैतामहे शास्त्रे पाण्डवैतदसंशयम् ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥ ०८५ ॥

ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥ ०८६ ॥

युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः ।
सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ ०८७ ॥

वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥ ०८८ ॥

भगवानपि तच्छास्त्रं सञ्चिक्षेप पुरंदरः ।
सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥ ०८९ ॥

अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः ।
सञ्चिक्षेपेश्वरो बुध्या बार्हस्पत्यं तदुच्यते ॥ ०९० ॥

अध्यायानां सहस्रेण काव्यः सङ्क्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महातपाः ॥ ०९१ ॥

एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः ।
सङ्क्षिप्तमायुर्विज्ञाय मर्त्यानां ह्रासि पाण्डव ॥ ०९२ ॥

अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम् ।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्यं तं वै समादिश ॥ ०९३ ॥

ततः सञ्चिन्त्य भगवान्देवो नारायणः प्रभुः ।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ॥ ०९४ ॥

विरजास्तु महाभाग विभुत्वं भुवि नैच्छत ।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥ ०९५ ॥

कीर्तिमांस्तस्य पुत्रोऽभूत्सोऽपि पञ्चातिगोऽभवत् ।
कर्दमस्तस्य च सुतः सोऽप्यतप्यन्महत्तपः ॥ ०९६ ॥

प्रजापतेः कर्दमस्य अनङ्गो नाम वै सुतः ।
प्रजानां रक्षिता साधुर्दण्डनीतिविशारदः ॥ ०९७ ॥

अनङ्गपुत्रोऽतिबलो नीतिमानधिगम्य वै ।
अभिपेदे महीराज्यमथेन्द्रियवशोऽभवत् ॥ ०९८ ॥

मृत्योस्तु दुहिता राजन्सुनीथा नाम मानसी ।
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ॥ ०९९ ॥

तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।

मन्त्रपूतैः कुशैर्जघ्नुर्ऋषयो ब्रह्मवादिनः ॥ १०० ॥

ममन्थुर्दक्षिणं चोरुमृषयस्तस्य मन्त्रतः ।
ततोऽस्य विकृतो जज्ञे ह्रस्वाङ्गः पुरुषो भुवि ॥ १०१ ॥

दग्धस्थाणुप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः ।
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ॥ १०२ ॥

तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः ।
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ॥ १०३ ॥

भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥ १०४ ॥

कवची बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥ १०५ ॥

तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम् ।
ततः स प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह ॥ १०६ ॥

सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ॥ १०७ ॥

यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वै करिष्यामि नात्र कार्या विचारणा ॥ १०८ ॥

तमूचुरथ देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशङ्कः समाचर ॥ १०९ ॥

प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामक्रोधौ च लोभं च मानं चोत्सृज्य दूरतः ॥ ११० ॥

यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स बाहुभ्यां शश्वद्धर्ममवेक्षतः ॥ १११ ॥

प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥ ११२ ॥

यश्चात्र धर्मनीत्युक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ॥ ११३ ॥

अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभिभो ।
लोकं च सङ्करात्कृत्स्नात्त्रातास्मीति परंतप ॥ ११४ ॥

वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे सहायाश्चेदेवमस्तु सुरर्षभाः ॥ ११५ ॥

एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः ।
पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ॥ ११६ ॥

मन्त्रिणो वालखिल्यास्तु सारस्वत्यो गणो ह्यभूत् ।
महर्षिर्भगवान्गर्गस्तस्य सांवत्सरोऽभवत् ॥ ११७ ॥

आत्मनाष्टम इत्येव श्रुतिरेषा परा नृषु ।
उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ॥ ११८ ॥

समतां वसुधायाश्च स सम्यगुपपादयत् ।
वैषम्यं हि परं भूमेरासीदिति ह नः श्रुतम् ॥ ११९ ॥

स विष्णुना च देवेन शक्रेण विबुधैः सह ।
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः ॥ १२० ॥

तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव ।
सागरः सरितां भर्ता हिमवांश्चाचलोत्तमः ॥ १२१ ॥

शक्रश्च धनमक्षय्यं प्रादात्तस्य युधिष्ठिर ।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः ॥ १२२ ॥

यक्षराक्षसभर्ता च भगवान्नरवाहनः ।
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ॥ १२३ ॥

हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ।
प्रादुर्बभूवुर्वैन्यस्य चिन्तनादेव पाण्डव ॥ १२४ ॥

न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा ॥ १२४ ॥

सरीसृपेभ्यः स्तेनेभ्यो न चान्योन्यात्कदाचन ।
भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात् ॥ १२५ ॥

तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।
यक्षराक्षसनागैश्चापीप्सितं यस्य यस्य यत् ॥ १२६ ॥

तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ।
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥ १२७ ॥

ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते ।
प्रथिता धनतश्चेयं पृथिवी साधुभिः स्मृता ॥ १२८ ॥

स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः ।
नातिवर्तिष्यते कश्चिद्राजंस्त्वामिति पार्थिव ॥ १२९ ॥

तपसा भगवान्विष्णुराविवेश च भूमिपम् ।
देववन्नरदेवानां नमते यज्जगन्नृप ॥ १३० ॥

दण्डनीत्या च सततं रक्षितं तं नरेश्वर ।
नाधर्षयत्ततः कश्चिच्चारनित्याच्च दर्शनात् ॥ १३१ ॥

आत्मना करणैश्चैव समस्येह महीक्षितः ।
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात् ॥ १३२ ॥

विष्णोर्ललाटात्कमलं सौवर्णमभवत्तदा ।
श्रीः संभूता यतो देवी पत्नी धर्मस्य धीमतः ॥ १३३ ॥

श्रियः सकाशादर्थश्च जातो धर्मेण पाण्डव ।
अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता ॥ १३४ ॥

सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ।
पार्थिवो जायते तात दण्डनीतिवशानुगः ॥ १३५ ॥

महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि ।
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति ॥ १३६ ॥

स्थापनामथ देवानां न कश्चिदतिवर्तते ।
तिष्ठत्येकस्य च वशे तं चेदनुविधीयते ॥ १३७ ॥

शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
तुल्यस्यैकस्य यस्यायं लोको वचसि तिष्ठति ॥ १३८ ॥

यो ह्यस्य मुखमद्राक्षीत्सोम्य सोऽस्य वशानुगः ।
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति ॥ १३९ ॥

ततो जगति राजेन्द्र सततं शब्दितं बुधैः ।
देवाश्च नरदेवाश्च तुल्या इति विशां पते ॥ १४० ॥

एतत्ते सर्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तताम् ॥ १४१ ॥

---

# अध्याय ०६०

वैशंपायन उवाच ॥

ततः पुनः स गाङ्गेयमभिवाद्य पितामहम् ।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥ ००१ ॥

के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चतुर्णामाश्रमाणां च राजधर्माश्च के मताः ॥ ००२ ॥

केन स्विद्वर्धते राष्ट्रं राजा केन विवर्धते ।
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ॥ ००३ ॥

कोशं दण्डं च दुर्गं च सहायान्मन्त्रिणस्तथा ।
ऋत्विक्पुरोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ॥ ००४ ॥

केषु विश्वसितव्यं स्याद्राज्ञां कस्याञ्चिदापदि ।
कुतो वात्मा दृढो रक्ष्यस्तन्मे ब्रूहि पितामह ॥ ००५ ॥

भीष्म उवाच ॥

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्वा धर्मान्वक्ष्यामि शाश्वतान् ॥ ००६ ॥

अक्रोधः सत्यवचनं संविभागः क्षमा तथा ।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च ॥ ००७ ॥

आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ॥ ००८ ॥

दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ॥ ००९ ॥

तं चेद्वित्तमुपागच्छेद्वर्तमानं स्वकर्मणि ।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥ ०१० ॥

कुर्वीतापत्यसंतानमथो दद्याद्यजेत च ।
संविभज्य हि भोक्तव्यं धनं सद्भिरितीष्यते ॥ ०११ ॥

परिनिष्ठितकार्यस्तु स्वाध्यायेनैव ब्राह्मणः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ०१२ ॥

क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत ।
दद्याद्राजा न याचेत यजेत न तु याजयेत् ॥ ०१३ ॥

नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमम् ॥ ०१४ ॥

ये च क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः ।
य एवाहवजेतारस्त एषां लोकजित्तमाः ॥ ०१५ ॥

अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ ०१६ ॥

वधं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः ।

नास्य कृत्यतमं किञ्चिदन्यद्दस्युनिबर्हणात् ॥ ०१७ ॥

दानमध्ययनं यज्ञो योगः क्षेमो विधीयते ।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता ॥ ०१८ ॥

स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः ।
धर्मेण सर्वकृत्यानि समनिष्ठानि कारयेत् ॥ ०१९ ॥

परिनिष्ठितकार्यः स्यान्नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते ॥ ०२० ॥

वैश्यस्यापीह यो धर्मस्तं ते वक्ष्यामि भारत ।
दानमध्ययनं यज्ञः शौचेन धनसञ्चयः ॥ ०२१ ॥

पितृवत्पालयेद्वैश्यो युक्तः सर्वपशूनिह ।
विकर्म तद्भवेदन्यत्कर्म यद्यत्समाचरेत् ॥ ०२२ ॥

रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् ॥ ०२२ ॥

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥ ०२३ ॥

तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
षण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ॥ ०२४ ॥

लये च सप्तमो भागस्तथा श‍ृङ्गे कला खुरे ।
सस्यस्य सर्वबीजानामेषा सांवत्सरी भृतिः ॥ ०२५ ॥

न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन ॥ ०२६ ॥

शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ॥ ०२७ ॥

तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ।
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात् ॥ ०२८ ॥

शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः ।
सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन ॥ ०२९ ॥

पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ॥ ०३० ॥

तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
अवश्यभरणीयो हि वर्णानां शूद्र उच्यते ॥ ०३१ ॥

छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ॥ ०३२ ॥

अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव विधेयानि तस्य धर्मधनं हि तत् ॥ ०३३ ॥

यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तस्य तु तेनाहुर्वृत्तिं धर्मविदो जनाः ॥ ०३४ ॥

देयः पिण्डोऽनपेताय भर्तव्यौ वृद्धदुर्बलौ ॥ ०३४ ॥

शूद्रेण च न हातव्यो भर्ता कस्याञ्चिदापदि ।
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये ॥ ०३५ ॥

न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो ह्यसौ ॥ ०३५ ॥

उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्यैव भारत ।
स्वाहाकारनमस्कारौ मन्त्रः शूद्रे विधीयते ॥ ०३६ ॥

ताभ्यां शूद्रः पाकयज्ञैर्यजेत व्रतवान्स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ ०३७ ॥

शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ॥ ०३८ ॥

अतो हि सर्ववर्णानां श्रद्धायज्ञो विधीयते ।
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ॥ ०३९ ॥

दैवतं परमं विप्राः स्वेन स्वेन परस्परम् ।
अयजन्निह सत्रैस्ते तैस्तैः कामैः सनातनैः ॥ ०४० ॥

संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।
देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत् ॥ ०४१ ॥

तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ॥ ०४१ ॥

ऋग्यजुःसामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा तु प्राजापत्य उपद्रवः ॥ ०४२ ॥

यज्ञो मनीषया तात सर्ववर्णेषु भारत ।
नास्य यज्ञहनो देवा ईहन्ते नेतरे जनाः ॥ ०४३ ॥

तस्मात्सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥ ०४३ ॥

स्वं दैवतं ब्राह्मणाः स्वेन नित्यं ; परान्वर्णानयजन्नेवमासीत् ।
आरोचिता नः सुमहान्स धर्मः ; सृष्टो ब्रह्मणा त्रिषु वर्णेषु दृष्टः ॥ ०४४ ॥

तस्माद्वर्णा ऋजवो जातिधर्माः ; संसृज्यन्ते तस्य विपाक एषः ।
एकं साम यजुरेकमृगेका ; विप्रश्चैकोऽनिश्चयस्तेषु दृष्टः ॥ ०४५ ॥

अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥ ०४६ ॥

उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥ ०४७ ॥

यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ ०४८ ॥

तानि यः संविजानाति ज्ञाननिश्चयनिश्चितः ।
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥ ०४९ ॥

स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।
यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥ ०५० ॥

ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ।
सर्वथा सर्ववर्णैर्हि यष्टव्यमिति निश्चयः ॥ ०५१ ॥

न हि यज्ञसमं किञ्चित्त्रिषु लोकेषु विद्यते ॥ ०५१ ॥

तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता ॥ ०५२ ॥

# अध्याय ०६१

भीष्म उवाच ॥

आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णामिह वर्णानां कर्माणि च युधिष्ठिर ॥ ००१ ॥

वानप्रस्थं भैक्षचर्यां गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम् ॥ ००२ ॥

जटाकरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदमधीत्य च ॥ ००३ ॥

सदारो वाप्यदारो वा आत्मवान्संयतेन्द्रियः ।
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ॥ ००४ ॥

तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित् ।
ऊर्ध्वरेताः प्रजायित्वा गच्छत्यक्षरसात्मताम् ॥ ००५ ॥

एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम् ।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥ ००६ ॥

चरितब्रह्मचर्यस्य ब्राह्मणस्य विशां पते ।
भैक्षचर्यास्वधीकारः प्रशस्त इह मोक्षिणः ॥ ००७ ॥

यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ ००८ ॥

निराशीः स्यात्सर्वसमो निर्भोगो निर्विकारवान् ।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ॥ ००९ ॥

अधीत्य वेदान्कृतसर्वकृत्यः ; संतानमुत्पाद्य सुखानि भुक्त्वा ।
समाहितः प्रचरेद्दुश्चरं तं ; गार्हस्थ्यधर्मं मुनिधर्मदृष्टम्  ॥ ०१०  ॥

स्वदारतुष्ट ऋतुकालगामी ; नियोगसेवी नशठो नजिह्मः ।
मिताशनो देवपरः कृतज्ञः ; सत्यो मृदुश्चानृशंसः क्षमावान्  ॥ ०११  ॥

दान्तो विधेयो हव्यकव्येऽप्रमत्तो ; अन्नस्य दाता सततं द्विजेभ्यः ।
अमत्सरी सर्वलिङ्गिप्रदाता ; वैताननित्यश्च गृहाश्रमी स्यात्  ॥ ०१२  ॥

अथात्र नारायणगीतमाहु ;र्महर्षयस्तात महानुभावाः ।
महार्थमत्यर्थतपःप्रयुक्तं ; तदुच्यमानं हि मया निबोध  ॥ ०१३  ॥

सत्यार्जवं चातिथिपूजनं च ; धर्मस्तथार्थश्च रतिश्च दारे ।
निषेवितव्यानि सुखानि लोके ; ह्यस्मिन्परे चैव मतं ममैतत्  ॥ ०१४  ॥

भरणं पुत्रदाराणां वेदानां पारणं तथा ।
सतां तमाश्रमं श्रेष्ठं वदन्ति परमर्षयः  ॥ ०१५  ॥

एवं हि यो ब्राह्मणो यज्ञशीलो ; गार्हस्थ्यमध्यावसते यथावत् ।
गृहस्थवृत्तिं प्रविशोध्य सम्य ;क्स्वर्गे विषुद्धं फलमाप्नुते सः  ॥ ०१६  ॥

तस्य देहपरित्यागादिष्टाः कामाक्षया मताः ।
आनन्त्यायोपतिष्ठन्ति सर्वतोक्षिशिरोमुखाः  ॥ ०१७  ॥

खादन्नेको जपन्नेकः सर्पन्नेको युधिष्ठिर ।
एकस्मिन्नेव आचार्ये शुश्रूषुर्मलपङ्कवान्  ॥ ०१८  ॥

ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
अविचार्य तथा वेदं कृत्यं कुर्वन्वसेत्सदा  ॥ ०१९  ॥

शुश्रूषां सततं कुर्वन्गुरोः संप्रणमेत च ।

षट्कर्मस्वनिवृत्तश्च नप्रवृत्तश्च सर्वशः ॥ ०२० ॥

न चरत्यधिकारेण सेवितं द्विषतो न च ।
एषोऽऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥ ०२१ ॥

---

# अध्याय ०६२

युधिष्ठिर उवाच ॥

शिवान्सुखान्महोदर्कानहिंस्रा.ण्ल्लोकसंमतान् ।
ब्रूहि धर्मान्सुखोपायान्मद्विधानां सुखावहान् ॥ ००१ ॥

भीष्म उवाच ॥

ब्राह्मणस्येह चत्वार आश्रमा विहिताः प्रभो ।
वर्णास्ताननुवर्तन्ते त्रयो भरतसत्तम ॥ ००२ ॥

उक्तानि कर्माणि बहूनि राज ;न्स्वर्ग्याणि राजन्यपरायणानि ।
नेमानि दृष्टान्तविधौ स्मृतानि ; क्षात्रे हि सर्वं विहितं यथावत् ॥ ००३ ॥

क्षात्राणि वैश्यानि च सेवमानः ; शौद्राणि कर्माणि च ब्राह्मणः सन् ।
अस्मि.ण्ल्लोके निन्दितो मन्दचेताः ; परे च लोके निरयं प्रयाति ॥ ००४ ॥

या सञ्ज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे तां सञ्ज्ञां कुरु पाण्डव ॥ ००५ ॥

षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि ।
सर्वधर्मोपपन्नस्य संभूतस्य कृतात्मनः ॥ ००६ ॥

ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च ।
निराशिषो वदान्यस्य लोका ह्यक्षरसञ्ज्ञिताः ॥ ००७ ॥

यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च ।
तादृशं तादृशेनैव स गुणं प्रतिपद्यते ॥ ००८ ॥

वृद्ध्या कृषिवणिक्त्वेन जीवसञ्जीवनेन च ।
वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं महत् ॥ ००९ ॥

कालसञ्चोदितः कालः कालपर्यायनिश्चितः ।
उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः ॥ ०१० ॥

अन्तवन्ति प्रदानानि पुरा श्रेयस्कराणि च ।
स्वकर्मनिरतो लोको ह्यक्षरः सर्वतोमुखः ॥ ०११ ॥

---

# अध्याय ०६३

भीष्म उवाच ॥

ज्याकर्षणं शत्रुनिबर्हणं च ; कृषिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथार्थहेतो ;रकार्यमेतत्परमं द्विजस्य ॥ ००१ ॥

सेव्यं तु ब्रह्मषट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥ ००२ ॥

राजप्रैष्यं कृषिधनं जीवनं च वणिज्यया ।
कौटिल्यं कौलटेयं च कुसीदं च विवर्जयेत् ॥ ००३ ॥

शूद्रो राजन्भवति ब्रह्मबन्धु ;र्दुश्चारित्र्यो यश्च धर्मादपेतः ।
वृषलीपतिः पिशुनो नर्तकश्च ; ग्रामप्रैष्यो यश्च भवेद्विकर्मा ॥ ००४ ॥

जपन्वेदानजपंश्चापि राज ;न्समः शूद्रैर्दासवच्चापि भोज्यः ।
एते सर्वे शूद्रसमा भवन्ति ; राजन्नेतान्वर्जयेद्देवकृत्ये ॥ ००५ ॥

निर्मर्यादे चाशने क्रूरवृत्तौ ; हिंसात्मके त्यक्तधर्मस्ववृत्ते ।
हव्यं कव्यं यानि चान्यानि राज ;न्देयान्यदेयानि भवन्ति तस्मिन् ॥ ००६ ॥

तस्माद्धर्मो विहितो ब्राह्मणस्य ; दमः शौचं चार्जवं चापि राजन् ।
तथा विप्रस्याश्रमाः सर्व एव ; पुरा राजन्ब्रह्मणा वै निसृष्टाः ॥ ००७ ॥

यः स्याद्दान्तः सोमप आर्यशीलः ; सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावा ;न्स वै विप्रो नेतरः पापकर्मा ॥ ००८ ॥

शूद्रं वैश्यं राजपुत्रं च राज.ण् ;ल्लोकाः सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णाञ्जातिधर्मेषु सक्ता ;न्मत्वा विष्णुर्नेच्छति पाण्डुपुत्र ॥ ००९ ॥

लोके चेदं सर्वलोकस्य न स्या ;च्चातुर्वर्ण्यं वेदवादाश्च न स्युः ।
सर्वाश्चेज्याः सर्वलोकक्रियाश्च ; सद्यः सर्वे चाश्रमस्था न वै स्युः ॥ ०१० ॥

यश्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमदृष्टांश्च धर्मांस्ताञ्शृणु पाण्डव ॥ ०११ ॥

शुश्रूषाकृतकृत्यस्य कृतसंतानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥ ०१२ ॥

अल्पान्तरगतस्यापि दशधर्मगतस्य वा ।
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ॥ ०१३ ॥

भैक्षचर्यां न तु प्राहुस्तस्य तद्धर्मचारिणः ।
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ॥ ०१४ ॥

कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः ।
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रममण्डलम् ॥ ०१५ ॥

वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ।
संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥ ०१६ ॥

पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर ।
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च ॥ ०१७ ॥

समानीय यथापाठं विप्रेभ्यो दत्तदक्षिणः ।
सङ्ग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु ॥ ०१८ ॥

स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ॥ ०१९ ॥

अर्चयित्वा पितॄन्सम्यक्पितृयज्ञैर्यथाविधि ।
देवान्यज्ञैरृषीन्वेदैरर्चित्वा चैव यत्नतः ॥ ०२० ॥

अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् ।
आनुपूर्व्याश्रमान्राजन्गत्वा सिद्धिमवाप्नुयात् ॥ ०२१ ॥

राजर्षित्वेन राजेन्द्र भैक्षचर्याध्वसेवया ।
अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया ॥ ०२२ ॥

न चैतन्नैष्ठिकं कर्म त्रयाणां भरतर्षभ ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥ ०२३ ॥

बह्वायत्तं क्षत्रियैर्मानवानां ; लोकश्रेष्ठं धर्ममासेवमानैः ।

सर्वे धर्माः सोपधर्मास्त्रयाणां ; राज्ञो धर्मादिति वेदाच्छृणोमि ॥ ०२४ ॥

यथा राजन्हस्तिपदे पदानि ; संलीयन्ते सर्वसत्त्वोद्भवानि ।
एवं धर्मान्राजधर्मेषु सर्वा ;न्सर्वावस्थं संप्रलीनान्निबोध ॥ ०२५ ॥

अल्पाश्रयानल्पफलान्वदन्ति ; धर्मानन्यान्धर्मविदो मनुष्याः ।
महाश्रयं बहुकल्याणरूपं ; क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥ ०२६ ॥

सर्वे धर्मा राजधर्मप्रधानाः ; सर्वे धर्माः पाल्यमाना भवन्ति ।
सर्वत्यागो राजधर्मेषु राजं ;स्त्यागे चाहुर्धर्ममग्र्यं पुराणम् ॥ ०२७ ॥

मज्जेत्त्रयी दण्डनीतौ हतायां ; सर्वे धर्मा न भवेयुर्विरुद्धाः ।
सर्वे धर्माश्चाश्रमाणां गताः स्युः ; क्षात्रे त्यक्ते राजधर्मे पुराणे ॥ ०२८ ॥

सर्वे त्यागा राजधर्मेषु दृष्टाः ; सर्वा दीक्षा राजधर्मेषु चोक्ताः ।
सर्वे योगा राजधर्मेषु चोक्ताः ; सर्वे लोका राजधर्मान्प्रविष्टाः ॥ ०२९ ॥

यथा जीवाः प्रकृतौ वध्यमाना ; धर्माश्रितानामुपपीडनाय ।
एवं धर्मा राजधर्मैर्वियुक्ताः ; सर्वावस्थं नाद्रियन्ते स्वधर्मम् ॥ ०३० ॥

---

# इन्द्रमान्धातृसंवादः

## अध्याय ०६४

भीष्म उवाच ॥

चातुराश्रम्यधर्माश्च जातिधर्माश्च पाण्डव ।

लोकपालोत्तराश्चैव क्षात्रे धर्मे व्यवस्थिताः ॥ ००१ ॥

सर्वाण्येतानि धर्माणि क्षात्रे भरतसत्तम ।
निराशिषो जीवलोके क्षात्रे धर्मे व्यवस्थिताः ॥ ००२ ॥

अप्रत्यक्षं बहुद्वारं धर्ममाश्रमवासिनाम् ।
प्ररूपयन्ति तद्भावमागमैरेव शाश्वतम् ॥ ००३ ॥

अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चयम् ।
अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ॥ ००४ ॥

प्रत्यक्षसुखभूयिष्ठमात्मसाक्षिकमच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥ ००५ ॥

धर्माश्रमव्यवसिनां ब्राह्मणानां युधिष्ठिर ।
यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा ॥ ००६ ॥

राजधर्मेष्वनुपमा लोक्या सुचरितैरिह ॥ ००६ ॥

उदाहृतं ते राजेन्द्र यथा विष्णुं महौजसम् ।
सर्वभूतेश्वरं देवं प्रभुं नारायणं पुरा ॥ ००७ ॥

जग्मुः सुबहवः शूरा राजानो दण्डनीतये ॥ ००७ ॥

एकैकमात्मनः कर्म तुलयित्वाश्रमे पुरा ।
राजानः पर्युपातिष्ठन्दृष्टान्तवचने स्थिताः ॥ ००८ ॥

साध्या देवा वसवश्चाश्विनौ च ; रुद्राश्च विश्वे मरुतां गणाश्च ।
सृष्टाः पुरा आदिदेवेन देवा ; क्षात्रे धर्मे वर्तयन्ते च सिद्धाः ॥ ००९ ॥

अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चयम् ।

निर्मर्यादे वर्तमाने दानवैकायने कृते ॥ ०१० ॥

बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् ॥ ०१० ॥

पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया ।
अनादिमध्यनिधनं देवं नारायणं प्रति ॥ ०११ ॥

स राजा राजशार्दूल मान्धाता परमेष्ठिनः ।
जग्राह शिरसा पादौ यज्ञे विष्णोर्महात्मनः ॥ ०१२ ॥

दर्शयामास तं विष्णू रूपमास्थाय वासवम् ।
स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् ॥ ०१३ ॥

तस्य पार्थिवसंघस्य तस्य चैव महात्मनः ।
संवादोऽयं महानासीद्विष्णुं प्रति महाद्युते ॥ ०१४ ॥

इन्द्र उवाच ॥

किमिष्यते धर्मभृतां वरिष्ठ ; यद्द्रष्टुकामोऽसि तमप्रमेयम् ।
अनन्तमायामितसत्त्ववीर्यं ; नारायणं ह्यादिदेवं पुराणम् ॥ ०१५ ॥

नासौ देवो विश्वरूपो मयापि ; शक्यो द्रष्टुं ब्रह्मणा वापि साक्षात् ।
येऽन्ये कामास्तव राजन्हृदिस्था ; दास्यामि तांस्त्वं हि मर्त्येषु राजा ॥ ०१६ ॥

सत्ये स्थितो धर्मपरो जितेन्द्रियः ; शूरो दृढं प्रीतिरतः सुराणाम् ।
बुद्ध्या भक्त्या चोत्तमश्रद्धया च ; ततस्तेऽहं दद्मि वरं यथेष्टम् ॥ ०१७ ॥

मान्धातोवाच ॥

असंशयं भगवन्नादिदेवं ; द्रक्ष्याम्यहं शिरसाहं प्रसाद्य ।
त्यक्त्वा भोगान्धर्मकामो ह्यरण्य ;मिच्छे गन्तुं सत्पथं लोकजुष्टम् ॥ ०१८ ॥

क्षात्राद्धर्माद्विपुलादप्रमेया ;ल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च ।
धर्मो योऽसावादिदेवात्प्रवृत्तो ; लोकज्येष्ठस्तं न जानामि कर्तुम् ॥ ०१९ ॥

इन्द्र उवाच ॥

असैनिकोऽधर्मपरश्चरेथाः ; परां गतिं लप्स्यसे चाप्रमत्तः ।
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः ; पश्चादन्ये शेषभूताश्च धर्माः ॥ ०२० ॥

शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः ; सुप्रस्थानाः क्षत्रधर्माविशिष्टाः ।
अस्मिन्धर्मे सर्वधर्माः प्रविष्टा ;स्तस्माद्धर्मं श्रेष्ठमिमं वदन्ति ॥ ०२१ ॥

कर्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे प्रमथ्यारीन्क्षत्रधर्मेण विष्णुना ॥ ०२२ ॥

यदि ह्यसौ भगवान्नाहनिष्य ;द्रिपून्सर्वान्वसुमानप्रमेयः ।
न ब्राह्मणा न च लोकादिकर्ता ; न सद्धर्मा नादिधर्मा भवेयुः ॥ ०२३ ॥

इमामुर्वीं न जयेद्विक्रमेण ; देवश्रेष्ठोऽसौ पुरा चेदमेयः ।
चातुर्वर्ण्यं चातुराश्रम्यधर्माः ; सर्वे न स्युर्ब्रह्मणो वै विनाशात् ॥ ०२४ ॥

दृष्टा धर्माः शतधा शाश्वतेन ; क्षात्रेण धर्मेण पुनः प्रवृत्ताः ।
युगे युगे ह्यादिधर्माः प्रवृत्ता ; लोकज्येष्ठं क्षत्रधर्मं वदन्ति ॥ ०२५ ॥

आत्मत्यागः सर्वभूतानुकम्पा ; लोकज्ञानं मोक्षणं पालनं च ।
विषण्णानां मोक्षणं पीडितानां ; क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥ ०२६ ॥

निर्मर्यादाः काममन्युप्रवृत्ता ; भीता राज्ञो नाधिगच्छन्ति पापम् ।
शिष्टाश्चान्ये सर्वधर्मोपपन्नाः ; साध्वाचाराः साधु धर्मं चरन्ति ॥ ०२७ ॥

पुत्रवत्परिपाल्यानि लिङ्गधर्मेण पार्थिवैः ।

लोके भूतानि सर्वाणि विचरन्ति न संशयः ॥ ०२८ ॥

सर्वधर्मपरं क्षत्रं लोकज्येष्ठं सनातनम् ।
शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् ॥ ०२९ ॥

---

# अध्याय ०६५

इन्द्र उवाच ॥

एवंवीर्यः सर्वधर्मोपपन्नः ; क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः ।
पाल्यो युष्माभिर्लोकसिंहैरुदारै ;र्विपर्यये स्यादभावः प्रजानाम् ॥ ००१ ॥

भुवः संस्कारं राजसंस्कारयोग ;मभैक्षचर्यां पालनं च प्रजानाम् ।
विद्याद्राजा सर्वभूतानुकम्पां ; देहत्यागं चाहवे धर्ममग्र्यम् ॥ ००२ ॥

त्यागं श्रेष्ठं मुनयो वै वदन्ति ; सर्वश्रेष्ठो यः शरीरं त्यजेत ।
नित्यं त्यक्तं राजधर्मेषु सर्वं ; प्रत्यक्षं ते भूमिपालाः सदैते ॥ ००३ ॥

बहुश्रुत्या गुरुशुश्रूषया वा ; परस्य वा संहननाद्वदन्ति ।
नित्यं धर्मं क्षत्रियो ब्रह्मचारी ; चरेदेको ह्याश्रमं धर्मकामः ॥ ००४ ॥

सामान्यार्थे व्यवहारे प्रवृत्ते ; प्रियाप्रिये वर्जयन्नेव यत्नात् ।
चातुर्वर्ण्यस्थापनात्पालनाच्च ; तैस्तैर्योगैर्नियमैरौरसैश्च ॥ ००५ ॥

सर्वोद्योगैराश्रमं धर्ममाहुः ; क्षात्रं ज्येष्ठं सर्वधर्मोपपन्नम् ।
स्वं स्वं धर्मं ये न चरन्ति वर्णा ;स्तांस्तान्धर्मानयथावद्वदन्ति ॥ ००६ ॥

निर्मर्यादे नित्यमर्थे विनष्टा ;नाहुस्तान्वै पशुभूतान्मनुष्यान् ।
यथा नीतिं गमयत्यर्थलोभा ;च्छ्रेयांस्तस्मादाश्रमः क्षत्रधर्मः ॥ ००७ ॥

त्रैविद्यानां या गतिर्ब्राह्मणानां ; यश्चैवोक्तोऽथाश्रमो ब्राह्मणानाम् ।
एतत्कर्म ब्राह्मणस्याहुरग्र्य ;मन्यत्कुर्वञ्शूद्रवच्छस्त्रवध्यः ॥ ००८ ॥

चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव ।
ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कथञ्चन ॥ ००९ ॥

अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते ।
कर्मणा व्यज्यते धर्मो यथैव श्वा तथैव सः ॥ ०१० ॥

यो विकर्मस्थितो विप्रो न स सन्मानमर्हति ।
कर्मस्वनुपयुञ्जानमविश्वास्यं हि तं विदुः ॥ ०११ ॥

एते धर्माः सर्ववर्णाश्च वीरै ;रुत्क्रष्टव्याः क्षत्रियैरेष धर्मः ।
तस्माज्ज्येष्ठा राजधर्मा न चान्ये ; वीर्यज्येष्ठा वीरधर्मा मता मे ॥ ०१२ ॥

मान्धातोवाच ॥

यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कह्वाश्च पह्लवाश्चान्ध्रमद्रकाः ॥ ०१३ ॥

ओड्राः पुलिन्दा रमठाः काचा म्लेच्छाश्च सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ ०१४ ॥

कथं धर्मं चरेयुस्ते सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे ते दस्युजीविनः ॥ ०१५ ॥

एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥ ०१६ ॥

इन्द्र उवाच ॥

मातापित्रोर्हि कर्तव्या शुश्रूषा सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ ०१७ ॥

भूमिपालानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥ ०१८ ॥

पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं द्विजेषु दद्युरेव ते ॥ ०१९ ॥

अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥ ०२० ॥

दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ।
पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभिः ॥ ०२१ ॥

एतान्येवंप्रकाराणि विहितानि पुरानघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ ०२२ ॥

मान्धातोवाच ॥

दृश्यन्ते मानवा लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्तमाना आश्रमेषु चतुर्ष्वपि ॥ ०२३ ॥

इन्द्र उवाच ॥

विनष्टायां दण्डनीतौ राजधर्मे निराकृते ।
संप्रमुह्यन्ति भूतानि राजदौरात्म्यतो नृप ॥ ०२४ ॥

असंख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा ।
आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन्कृते युगे ॥ ०२५ ॥

अशृण्वानाः पुराणानां धर्माणां प्रवरा गतीः ।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ॥ ०२६ ॥

यदा निवर्त्यते पापो दण्डनीत्या महात्मभिः ।
तदा धर्मो न चलते सद्भूतः शाश्वतः परः ॥ ०२७ ॥

परलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न हुतं न श्राद्धं फलति क्वचित् ॥ ०२८ ॥

मानुषाणामधिपतिं देवभूतं सनातनम् ।
देवाश्च बहु मन्यन्ते धर्मकामं नरेश्वरम् ॥ ०२९ ॥

प्रजापतिर्हि भगवान्यः सर्वमसृजज्जगत् ।
स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ॥ ०३० ॥

प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम् ।
स मे मान्यश्च पूज्यश्च तत्र क्षत्रं प्रतिष्ठितम् ॥ ०३१ ॥

भीष्म उवाच ॥

एवमुक्त्वा स भगवान्मरुद्गणवृतः प्रभुः ।
जगाम भवनं विष्णुरक्षरं परमं पदम् ॥ ०३२ ॥

एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ ।
कः क्षत्रमवमन्येत चेतनावान्बहुश्रुतः ॥ ०३३ ॥

अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च ।
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ॥ ०३४ ॥

आदौ प्रवर्तिते चक्रे तथैवादिपरायणे ।
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥ ०३५ ॥

---

# अध्याय ०६६

युधिष्ठिर उवाच ॥

श्रुता मे कथिताः पूर्वैश्चत्वारो मानवाश्रमाः ।
व्याख्यानमेषामाचक्ष्व पृच्छतो मे पितामह ॥ ००१ ॥

भीष्म उवाच ॥

विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर ।
यथा मम महाबाहो विदिताः साधुसंमताः ॥ ००२ ॥

यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर ।
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ॥ ००३ ॥

सर्वाण्येतानि कौन्तेय विद्यन्ते मनुजर्षभ ।
साध्वाचारप्रवृत्तानां चातुराश्रम्यकर्मणाम् ॥ ००४ ॥

अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर ।
समेक्षिणश्च भूतेषु भैक्षाश्रमपदं भवेत् ॥ ००५ ॥

वेत्त्यादानविसर्गं यो निग्रहानुग्रहौ तथा ।
यथोक्तवृत्तेर्वीरस्य क्षेमाश्रमपदं भवेत् ॥ ००६ ॥

ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर ।
समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ॥ ००७ ॥

आह्निकं भूतयज्ञांश्च पितृयज्ञांश्च मानुषान् ।
कुर्वतः पार्थ विपुलान्वन्याश्रमपदं भवेत् ॥ ००८ ॥

पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात् ।
दीक्षा बहुविधा राज्ञो वन्याश्रमपदं भवेत् ॥ ००९ ॥

वेदाध्ययननित्यत्वं क्षमाथाचार्यपूजनम् ।
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् ॥ ०१० ॥

अजिह्ममशठं मार्गं सेवमानस्य भारत ।
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् ॥ ०११ ॥

वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत ।
प्रयच्छतोऽर्थान्विपुलान्वन्याश्रमपदं भवेत् ॥ ०१२ ॥

सर्वभूतेष्वनुक्रोशं कुर्वतस्तस्य भारत ।
आनृशंस्यप्रवृत्तस्य सर्वावस्थं पदं भवेत् ॥ ०१३ ॥

बालवृद्धेषु कौरव्य सर्वावस्थं युधिष्ठिर ।
अनुक्रोशं विदधतः सर्वावस्थं पदं भवेत् ॥ ०१४ ॥

बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु कौरव्य कुर्वन्गार्हस्थ्यमावसेत् ॥ ०१५ ॥

चराचराणां भूतानां रक्षामपि च सर्वशः ।
यथार्हपूजां च सदा कुर्वन्गार्हस्थ्यमावसेत् ॥ ०१६ ॥

ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तृणाम् ।

निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः ॥ ०१७ ॥

साधूनामर्चनीयानां प्रजासु विदितात्मनाम् ।
पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् ॥ ०१८ ॥

आश्रमस्थानि सर्वाणि यस्तु वेश्मनि भारत ।
आददीतेह भोज्येन तद्गार्हस्थ्यं युधिष्ठिर ॥ ०१९ ॥

यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां स सर्वेषां फलं प्राप्नोत्यनुत्तमम् ॥ ०२० ॥

यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा ।
आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर ॥ ०२१ ॥

स्थानमानं वयोमानं कुलमानं तथैव च ।
कुर्वन्वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर ॥ ०२२ ॥

देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च ।
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् ॥ ०२३ ॥

काले विभूतिं भूतानामुपहारांस्तथैव च ।
अर्हयन्पुरुषव्याघ्र साधूनामाश्रमे वसेत् ॥ ०२४ ॥

दशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते ।
सर्वलोकस्य कौन्तेय राजा भवति सोऽऽश्रमी ॥ ०२५ ॥

ये धर्मकुशला लोके धर्मं कुर्वन्ति साधवः ।
पालिता यस्य विषये पादोंऽशस्तस्य भूपतेः ॥ ०२६ ॥

धर्मारामान्धर्मपरान्ये न रक्षन्ति मानवान् ।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ ०२७ ॥

ये च रक्षासहायाः स्युः पार्थिवानां युधिष्ठिर ।
ते चैवांशहराः सर्वे धर्मे परकृतेऽनघ ॥ ०२८ ॥

सर्वाश्रमपदे ह्याहुर्गार्हस्थ्यं दीप्तनिर्णयम् ।
पावनं पुरुषव्याघ्र यं वयं पर्युपास्महे ॥ ०२९ ॥

आत्मोपमस्तु भूतेषु यो वै भवति मानवः ।
न्यस्तदण्डो जितक्रोधः स प्रेत्य लभते सुखम् ॥ ०३० ॥

धर्मोत्थिता सत्त्ववीर्या धर्मसेतुवटाकरा ।
त्यागवाताध्वगा शीघ्रा नौस्त्वा संतारयिष्यति ॥ ०३१ ॥

यदा निवृत्तः सर्वस्मात्कामो योऽस्य हृदि स्थितः ।
तदा भवति सत्त्वस्थस्ततो ब्रह्म समश्नुते ॥ ०३२ ॥

सुप्रसन्नस्तु भावेन योगेन च नराधिप ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ०३३ ॥

वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् ।
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥ ०३४ ॥

वने चरति यो धर्ममाश्रमेषु च भारत ।
रक्षया तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ॥ ०३५ ॥

एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः ।
अनुतिष्ठ त्वमेनं वै पूर्वैर्दृष्टं सनातनम् ॥ ०३६ ॥

चातुराश्रम्यमेकाग्रः चातुर्वर्ण्यं च पाण्डव ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ०३७ ॥

# मनुराजकरणोपन्यासः

## अध्याय ०६७

युधिष्ठिर उवाच ॥

चातुराश्रम्य उक्तोऽत्र चातुर्वर्ण्यस्तथैव च ।
राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

राष्ट्रस्यैतत्कृत्यतमं राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्ति च ॥ ००२ ॥

अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥ ००३ ॥

इन्द्रमेनं प्रवृणुते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ॥ ००४ ॥

नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्यपि ॥ ००५ ॥

अथ चेदभिवर्तेत राज्यार्थी बलवत्तरः ।
अराजकानि राष्ट्राणि हतराजानि वा पुनः ॥ ००६ ॥

प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ।

न हि पापात्पापतरमस्ति किञ्चिदराजकात् ॥ ००७ ॥

स चेत्समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान्हि प्रकुपितः कुर्यान्निःशेषतामपि ॥ ००८ ॥

भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
सुदुहा या तु भवति नैव तां क्लेशयन्त्युत ॥ ००९ ॥

यदतप्तं प्रणमति न तत्संतापयन्त्युत ।
यच्च स्वयं नतं दारु न तत्संनामयन्त्यपि ॥ ०१० ॥

एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ०११ ॥

तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस्तेषां येषामराजकम् ॥ ०१२ ॥

प्रीयते हि हरन्पापः परवित्तमराजके ।
यदास्य उद्धरन्त्यन्ये तदा राजानमिच्छति ॥ ०१३ ॥

पापा अपि तदा क्षेमं न लभन्ते कदाचन ।
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥ ०१४ ॥

अदासः क्रियते दासो ह्रियन्ते च बलात्स्त्रियः ।
एतस्मात्कारणाद्देवाः प्रजापालान्प्रचक्रिरे ॥ ०१५ ॥

राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः ।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥ ०१६ ॥

अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥ ०१७ ॥

ताः समेत्य ततश्चक्रुः समयानिति नः श्रुतम् ।
वाक्क्रूरो दण्डपुरुषो यश्च स्यात्पारदारिकः ॥ ०१८ ॥

यश्च न स्वमथादद्यात्त्याज्या नस्तादृशा इति ॥ ०१८ ॥

विश्वासनार्थं वर्णानां सर्वेषामविशेषतः ।
तास्तथा समयं कृत्वा समये नावतस्थिरे ॥ ०१९ ॥

सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम् ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥ ०२० ॥

यं पूजयेम संभूय यश्च नः परिपालयेत् ।
ताभ्यो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ॥ ०२१ ॥

मनुरुवाच ॥

बिभेमि कर्मणः क्रूराद्राज्यं हि भृशदुष्करम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तिषु नित्यदा ॥ ०२२ ॥

भीष्म उवाच ॥

तमब्रुवन्प्रजा मा भैः कर्मणैनो गमिष्यति ।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ॥ ०२३ ॥

धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ॥ ०२३ ॥

मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥ ०२४ ॥

स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान् ।

सुखे धास्यसि नः सर्वान्कुबेर इव नैर्ऋतान् ॥ ०२५ ॥

यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति ॥ ०२६ ॥

तेन धर्मेण महता सुखलब्धेन भावितः ।
पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः ॥ ०२७ ॥

विजयायाशु निर्याहि प्रतपन्रश्मिमानिव ।
मानं विधम शत्रूणां धर्मो जयतु नः सदा ॥ ०२८ ॥

स निर्ययौ महातेजा बलेन महता वृतः ।
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥ ०२९ ॥

तस्य तां महिमां दृष्ट्वा महेन्द्रस्येव देवताः ।
अपतत्रसिरे सर्वे स्वधर्मे च दधुर्मनः ॥ ०३० ॥

ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ।
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ॥ ०३१ ॥

एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ ०३२ ॥

नमस्येयुश्च तं भक्त्या शिष्या इव गुरुं सदा ।
देवा इव सहस्राक्षं प्रजा राजानमन्तिके ॥ ०३३ ॥

सत्कृतं स्वजनेनेह परोऽपि बहु मन्यते ।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥ ०३४ ॥

राज्ञः परैः परिभवः सर्वेषामसुखावहः ।
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ॥ ०३५ ॥

भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।
आसनानि च शय्याश्च सर्वोपकरणानि च ॥ ०३६ ॥

गुप्तात्मा स्याद्दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रतिभाषेत मानवान् ॥ ०३७ ॥

कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ॥ ०३८ ॥

---

# बृहस्पतिकौसल्यसंवादः

## अध्याय ०६८

युधिष्ठिर उवाच ॥

किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥ ००२ ॥

राजा वसुमना नाम कौसल्यो धीमतां वरः ।
महर्षिं परिपप्रच्छ कृतप्रज्ञो बृहस्पतिम् ॥ ००३ ॥

सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतेः ।
दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥ ००४ ॥

विधिं पप्रच्छ राज्यस्य सर्वभूतहिते रतः ।
प्रजानां हितमन्विच्छन्धर्ममूलं विशां पते ॥ ००५ ॥

केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन च ।
कमर्चन्तो महाप्राज्ञ सुखमत्यन्तमाप्नुयुः ॥ ००६ ॥

इति पृष्टो महाराज्ञा कौसल्येनामितौजसा ।
राजसत्कारमव्यग्रः शशंसास्मै बृहस्पतिः ॥ ००७ ॥

राजमूलो महाराज धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ००८ ॥

राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।
प्रसादयति धर्मेण प्रसाद्य च विराजते ॥ ००९ ॥

यथा ह्यनुदये राजन्भूतानि शशिसूर्ययोः ।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥ ०१० ॥

यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः ।
विहरेयुर्यथाकाममभिसृत्य पुनः पुनः ॥ ०११ ॥

विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम् ।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥ ०१२ ॥

एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥ ०१३ ॥

हरेयुर्बलवन्तो हि दुर्बलानां परिग्रहान् ।

हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥ ०१४ ॥

यानं वस्त्रमलङ्कारान्रत्नानि विविधानि च ।
हरेयुः सहसा पापा यदि राजा न पालयेत् ॥ ०१५ ॥

ममेदमिति लोकेऽस्मिन्न भवेत्संपरिग्रहः ।
विश्वलोपः प्रवर्तेत यदि राजा न पालयेत् ॥ ०१६ ॥

मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥ ०१७ ॥

पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु ।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥ ०१८ ॥

वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ॥ ०१९ ॥

अन्तश्चाकाशमेव स्याल्लोकोऽयं दस्युसाद्भवेत् ।
पतेच्च नरकं घोरं यदि राजा न पालयेत् ॥ ०२० ॥

न योनिपोषो वर्तेत न कृषिर्न वणिक्पथः ।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥ ०२१ ॥

न यज्ञाः संप्रवर्तेरन्विधिवत्स्वाप्तदक्षिणाः ।
न विवाहाः समाजा वा यदि राजा न पालयेत् ॥ ०२२ ॥

न वृषाः संप्रवर्तेरन्न मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् ॥ ०२३ ॥

त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् ॥ ०२४ ॥

न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥ ०२५ ॥

ब्राह्मणाश्चतुरो वेदान्नाधीयेरंस्तपस्विनः ।
विद्यास्नातास्तपःस्नाता यदि राजा न पालयेत् ॥ ०२६ ॥

हस्तो हस्तं स मुष्णीयाद्भिद्येरन्सर्वसेतवः ।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥ ०२७ ॥

न लभेद्धर्मसंश्लेषं हतविप्रहतो जनः ।
कर्ता स्वेच्छेन्द्रियो गच्छेद्यदि राजा न पालयेत् ॥ ०२८ ॥

अनयाः संप्रवर्तेरन्भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥ ०२९ ॥

विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥ ०३० ॥

नाक्रुष्टं सहते कश्चित्कुतो हस्तस्य लङ्घनम् ।
यदि राजा मनुष्येषु त्राता भवति धार्मिकः ॥ ०३१ ॥

स्त्रियश्चापुरुषा मार्गं सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः ॥ ०३२ ॥

धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥ ०३३ ॥

यजन्ते च त्रयो वर्णा महायज्ञैः पृथग्विधैः ।
युक्ताश्चाधीयते शास्त्रं यदा रक्षति भूमिपः ॥ ०३४ ॥

वार्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा ।
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ॥ ०३५ ॥

यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदति ॥ ०३६ ॥

यस्याभावे च भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नित्यः स्यात्कस्तं न प्रतिपूजयेत् ॥ ०३७ ॥

तस्य यो वहते भारं सर्वलोकसुखावहम् ।
तिष्ठेत्प्रियहिते राज्ञ उभौ लोकौ हि यो जयेत् ॥ ०३८ ॥

यस्तस्य पुरुषः पापं मनसाप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं पतेत् ॥ ०३९ ॥

न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ०४० ॥

कुरुते पञ्च रूपाणि कालयुक्तानि यः सदा ।
भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः ॥ ०४१ ॥

यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥ ०४२ ॥

यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥ ०४३ ॥

अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान्सामात्यांस्तदा भवति सोऽन्तकः ॥ ०४४ ॥

यदा त्वधार्मिकान्सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।

धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥ ०४५ ॥

यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ॥ ०४६ ॥

श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राज.ण्ल्लोके भवति भूमिपः ॥ ०४७ ॥

नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्म्यमाकाङ्क्षता लाभमीश्वरस्यानसूयता ॥ ०४८ ॥

न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥ ०४९ ॥

कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः ।
न तु राज्ञाभिपन्नस्य शेषं क्वचन विद्यते ॥ ०५० ॥

तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥ ०५१ ॥

नश्येदभिमृशन्सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ॥ ०५२ ॥

महान्तं नरकं घोरमप्रतिष्ठमचेतसः ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥ ०५३ ॥

राजा भोजो विराट्सम्राट्क्षत्रियो भूपतिर्नृपः ।
य एवं स्तूयते शब्दैः कस्तं नार्चितुमिच्छति ॥ ०५४ ॥

तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः ।
मेधावी स्मृतिमान्दक्षः संश्रयेत महीपतिम् ॥ ०५५ ॥

कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
धर्मनित्यं स्थितं स्थित्यां मन्त्रिणं पूजयेन्नृपः ॥ ०५६ ॥

दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत् ॥ ०५७ ॥

राजा प्रगल्भं पुरुषं करोति ; राजा कृशं बृंहयते मनुष्यम् ।
राजाभिपन्नस्य कुतः सुखानि ; राजाभ्युपेतं सुखिनं करोति ॥ ०५८ ॥

राजा प्रजानां हृदयं गरीयो ; गतिः प्रतिष्ठा सुखमुत्तमं च ।
यमाश्रिता लोकमिमं परं च ; जयन्ति सम्यक्पुरुषा नरेन्द्रम् ॥ ०५९ ॥

नराधिपश्चाप्यनुशिष्य मेदिनीं ; दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा ;स्त्रिविष्टपे स्थानमुपैति सत्कृतम् ॥ ०६० ॥

स एवमुक्तो गुरुणा कौसल्यो राजसत्तमः ।
प्रयत्नात्कृतवान्वीरः प्रजानां परिपालनम् ॥ ०६१ ॥

---

# अध्याय ०६९

युधिष्ठिर उवाच ॥

पार्थिवेन विशेषेण किं कार्यमवशिष्यते ।
कथं रक्ष्यो जनपदः कथं रक्ष्याश्च शत्रवः ॥ ००१ ॥

कथं चारं प्रयुञ्जीत वर्णान्विश्वासयेत्कथम् ।
कथं भृत्यान्कथं दारान्कथं पुत्रांश्च भारत ॥ ००२ ॥

भीष्म उवाच ॥

राजवृत्तं महाराज श्रृणुष्वावहितोऽखिलम् ।
यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ ००३ ॥

आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ००४ ॥

एतावानात्मविजयः पञ्चवर्गविनिग्रहः ।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ॥ ००५ ॥

न्यसेत गुल्मान्दुर्गेषु संधौ च कुरुनन्दन ।
नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ ००६ ॥

संस्थानेषु च सर्वेषु पुरेषु नगरस्य च ।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥ ००७ ॥

प्रणिधींश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान्प्राज्ञान्क्षुत्पिपासातपक्षमान् ॥ ००८ ॥

अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः ॥ ००९ ॥

पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ ०१० ॥

चारांश्च विद्यात्प्रहितान्परेण भरतर्षभ ।
आपणेषु विहारेषु समवायेषु भिक्षुषु ॥ ०११ ॥

आरामेषु तथोद्याने पण्डितानां समागमे ।

वेशेषु चत्वरे चैव सभास्वावसथेषु च ॥ ०१२ ॥

एवं विहन्याच्चारेण परचारं विचक्षणः ।
चारेण विहतं सर्वं हतं भवति पाण्डव ॥ ०१३ ॥

यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात्संधिं बलीयसा ॥ ०१४ ॥

अज्ञायमानो हीनत्वे कुर्यात्संधिं परेण वै ।
लिप्सुर्वा कञ्चिदेवार्थं त्वरमाणो विचक्षणः ॥ ०१५ ॥

गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
संदधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥ ०१६ ॥

उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥ ०१७ ॥

यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः ।
अशक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् ॥ ०१८ ॥

यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥ ०१९ ॥

यात्रामाज्ञापयेद्वीरः कल्यपुष्टबलः सुखी ।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥ ०२० ॥

न च वश्यो भवेदस्य नृपो यद्यपि वीर्यवान् ।
हीनश्च बलवीर्याभ्यां कर्शयंस्तं परावसेत् ॥ ०२१ ॥

राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्छनैः ।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥ ०२२ ॥

वर्जनीयं सदा युद्धं राज्यकामेन धीमता ॥ ०२२ ॥

उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ।
सान्त्वेनानुप्रदानेन भेदेन च नराधिप ॥ ०२३ ॥

यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येद्धि पण्डितः ॥ ०२३ ॥

आददीत बलिं चैव प्रजाभ्यः कुरुनन्दन ।
षड्भागममितप्रज्ञस्तासामेवाभिगुप्तये ॥ ०२४ ॥

दशधर्मगतेभ्यो यद्वसु बह्वल्पमेव च ।
तन्नाददीत सहसा पौराणां रक्षणाय वै ॥ ०२५ ॥

यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषां प्रकर्तव्या व्यवहारे प्रदर्शिते ॥ ०२६ ॥

सुतं च स्थापयेद्राजा प्राज्ञं सर्वार्थदर्शिनम् ।
व्यवहारेषु सततं तत्र राज्यं व्यवस्थितम् ॥ ०२७ ॥

आकरे लवणे शुल्के तरे नागवने तथा ।
न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान् ॥ ०२८ ॥

सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् ।
नृपस्य सततं दण्डः सम्यग्धर्मे प्रशस्यते ॥ ०२९ ॥

वेदवेदाङ्गवित्प्राज्ञः सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च भारत ॥ ०३० ॥

एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः ।
क्रियालोपे तु नृपतेः कुतः स्वर्गः कुतो यशः ॥ ०३१ ॥

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
त्रिधा त्वाक्रन्द्य मित्राणि विधानमुपकल्पयेत्  ॥ ०३२  ॥

घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान्सर्वाञ्शाखानगरकेष्वपि  ॥ ०३३  ॥

ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः  ॥ ०३४  ॥

सस्याभिहारं कुर्याच्च स्वयमेव नराधिपः ।
असंभवे प्रवेशस्य दाहयेदग्निना भृशम्  ॥ ०३५  ॥

क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा सर्वस्वं बलेनाथ स्वकेन वै  ॥ ०३६  ॥

नदीषु मार्गेषु सदा सङ्क्रमानवसादयेत् ।
जलं निस्रावयेत्सर्वमनिस्राव्यं च दूषयेत्  ॥ ०३७  ॥

तदात्वेनायतीभिश्च विवदन्भूम्यनन्तरम् ।
प्रतीघातः परस्याजौ मित्रकालेऽप्युपस्थिते  ॥ ०३८  ॥

दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान्विवर्जयेत्  ॥ ०३९  ॥

प्रवृद्धानां च वृक्षाणां शाखाः प्रच्छेदयेत्तथा ।
चैत्यानां सर्वथा वर्ज्यमपि पत्रस्य पातनम्  ॥ ०४०  ॥

प्रकण्ठीः कारयेत्सम्यगाकाशजननीस्तथा ।
आपूरयेच्च परिखाः स्थाणुनक्रझषाकुलाः  ॥ ०४१  ॥

कडङ्गद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य ह ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत्  ॥ ०४२  ॥

द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत्सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत्  ॥ ०४३  ॥

काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत्तथा कूपान्कृतान्पूर्वं पयोर्थिभिः  ॥ ०४४  ॥

तृणच्छन्नानि वेश्मानि पङ्केनापि प्रलेपयेत् ।
निर्हरेच्च तृणं मासे चैत्रे वह्निभयात्पुरः  ॥ ०४५  ॥

नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवाग्निर्ज्वलेद्गेहे वर्जयित्वाग्निहोत्रिकम्  ॥ ०४६  ॥

कर्मारारिष्टशालासु ज्वलेदग्निः समाहितः ।
गृहाणि च प्रविश्याथ विधेयः स्याद्धुताशनः  ॥ ०४७  ॥

महादण्डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै  ॥ ०४८  ॥

भिक्षुकांश्चाक्रिकांश्चैव क्षीबोन्मत्तान्कुशीलवान् ।
बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा  ॥ ०४९  ॥

चत्वरेषु च तीर्थेषु सभास्वावसथेषु च ।
यथार्हवर्णं प्रणिधिं कुर्यात्सर्वत्र पार्थिवः  ॥ ०५०  ॥

विशालान्राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत्  ॥ ०५१  ॥

भाण्डागारायुधागारान्धान्यागारांश्च सर्वशः ।

अश्वागारान्गजागारान्बलाधिकरणानि च ॥ ०५२ ॥

परिखाश्चैव कौरव्य प्रतोलीः सङ्कटानि च ।
न जातु कश्चित्पश्येत्तु गुह्यमेतद्युधिष्ठिर ॥ ०५३ ॥

अथ संनिचयं कुर्याद्राजा परबलार्दितः ।
तैलं मधु घृतं सस्यमौषधानि च सर्वशः ॥ ०५४ ॥

अङ्गारकुशमुञ्जानां पलाशशरपर्णिनाम् ।
यवसेन्धनदिग्धानां कारयेत च सञ्चयान् ॥ ०५५ ॥

आयुधानां च सर्वेषां शक्त्यृष्टिप्रासवर्मणाम् ।
सञ्चयानेवमादीनां कारयेत नराधिपः ॥ ०५६ ॥

औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान्वै सङ्गृह्णीयाद्विशेषतः ॥ ०५७ ॥

नटाश्च नर्तकाश्चैव मल्ला मायाविनस्तथा ।
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥ ०५८ ॥

यतः शङ्का भवेच्चापि भृत्यतो वापि मन्त्रितः ।
पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयेत तान् ॥ ०५९ ॥

कृते कर्मणि राजेन्द्र पूजयेद्धनसञ्चयैः ।
मानेन च यथार्हेण सान्त्वेन विविधेन च ॥ ०६० ॥

निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद्राजा यथा शास्त्रेषु दर्शितम् ॥ ०६१ ॥

राज्ञा सप्तैव रक्ष्याणि तानि चापि निबोध मे ।
आत्मामात्यश्च कोशश्च दण्डो मित्राणि चैव हि ॥ ०६२ ॥

तथा जनपदश्चैव पुरं च कुरुनन्दन ।
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥ ०६३ ॥

षाड्गुण्यं च त्रिवर्गं च त्रिवर्गमपरं तथा ।
यो वेत्ति पुरुषव्याघ्र स भुनक्ति महीमिमाम् ॥ ०६४ ॥

षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर ।
संधायासनमित्येव यात्रासंधानमेव च ॥ ०६५ ॥

विगृह्यासनमित्येव यात्रां संपरिगृह्य च ।
द्वैधीभावस्तथान्येषां संश्रयोऽथ परस्य च ॥ ०६६ ॥

त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ।
क्षयः स्थानं च वृद्धिश्च त्रिवर्गमपरं तथा ॥ ०६७ ॥

धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः ।
धर्मेण हि महीपालश्चिरं पालयते महीम् ॥ ०६८ ॥

अस्मिन्नर्थे च यौ श्लोकौ गीतावङ्गिरसा स्वयम् ।
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥ ०६९ ॥

कृत्वा सर्वाणि कार्याणि सम्यक्संपाल्य मेदिनीम् ।
पालयित्वा तथा पौरान्परत्र सुखमेधते ॥ ०७० ॥

किं तस्य तपसा राज्ञः किं च तस्याध्वरैरपि ।
अपालिताः प्रजा यस्य सर्वा धर्मविनाकृताः ॥ ०७१ ॥

# अध्याय ०७०

युधिष्ठिर उवाच ॥

दण्डनीतिश्च राजा च समस्तौ तावुभावपि ।
कस्य किं कुर्वतः सिद्ध्यै तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

महाभाग्यं दण्डनीत्याः सिद्धैः शब्दैः सहेतुकैः ।
शृणु मे शंसतो राजन्यथावदिह भारत ॥ ००२ ॥

दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥ ००३ ॥

चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसङ्करे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ ००४ ॥

सोमे प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि ।
तस्माद्देवमनुष्याणां सुखं विद्धि समाहितम् ॥ ००५ ॥

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ००६ ॥

दण्डनीत्या यदा राजा सम्यक्कात्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ ००७ ॥

भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ ००८ ॥

योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।

वैदिकानि च कर्माणि भवन्त्यविगुणान्युत ॥ ००९ ॥

ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः ।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥ ०१० ॥

व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।
विधवा न भवन्त्यत्र नृशंसो नाभिजायते ॥ ०११ ॥

अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥ ०१२ ॥

नाधर्मो विद्यते तत्र धर्म एव तु केवलः ।
इति कार्तयुगानेतान्गुणान्विद्धि युधिष्ठिर ॥ ०१३ ॥

दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥ ०१४ ॥

अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ ०१५ ॥

अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥ ०१६ ॥

अशुभस्य तदा अर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी भवत्यल्पफला तथा ॥ ०१७ ॥

दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रविशति तदा कलिः ॥ ०१८ ॥

कलावधर्मो भूयिष्ठं धर्मो भवति तु क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ ०१९ ॥

शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्तते वर्णसङ्करः ॥ ०२० ॥

वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो नसुखाः सर्वे भवन्त्यामयिनस्तथा ॥ ०२१ ॥

ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते चागतायुषः ॥ ०२२ ॥

विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति ॥ ०२३ ॥

रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥ ०२४ ॥

राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ०२५ ॥

कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ ०२६ ॥

प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ ०२७ ॥

ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति ॥ ०२८ ॥

दण्डनीतिं पुरस्कृत्य विजानन्क्षत्रियः सदा ।
अनवाप्तं च लिप्सेत लब्धं च परिपालयेत् ॥ ०२९ ॥

लोकस्य सीमन्तकरी मर्यादा लोकभावनी ।
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥ ०३० ॥

यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ ।
एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥ ०३१ ॥

तस्मात्कौरव्य धर्मेण प्रजाः पालय नीतिमान् ।
एवंवृत्तः प्रजा रक्षन्स्वर्गं जेतासि दुर्जयम् ॥ ०३२ ॥

---

# अध्याय ०७१

युधिष्ठिर उवाच ॥

केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
सुखेनार्थान्सुखोदर्कानिह च प्रेत्य चाप्नुयात् ॥ ००१ ॥

भीष्म उवाच ॥

इयं गुणानां षड्त्रिंशत्षड्त्रिंशद्गुणसंयुता ।
यान्गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् ॥ ००२ ॥

चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न नास्तिकः ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥ ००३ ॥

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ ००४ ॥

संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः ।
नानाप्तैः कारयेच्चारं कुर्यात्कार्यमपीडया ॥ ००५ ॥

अर्थान्ब्रूयान्न चासत्सु गुणान्ब्रूयान्न चात्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ००६ ॥

नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ००७ ॥

अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियं सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ ००८ ॥

अस्तब्धः पूजयेन्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवान्न दम्भेन श्रियमिच्छेदकुत्सिताम् ॥ ००९ ॥

सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।
सान्त्वयेन्न च भोगार्थमनुगृह्णन्न चाक्षिपेत् ॥ ०१० ॥

प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शेषयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥ ०११ ॥

एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥ ०१२ ॥

इति सर्वान्गुणानेतान्यथोक्तान्योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥ ०१३ ॥

वैशंपायन उवाच ॥

इदं वचः शांतनवस्य शुश्रुवा ;न्युधिष्ठिरः पाण्डवमुख्यसंवृतः ।
तदा ववन्दे च पितामहं नृपो ; यथोक्तमेतच्च चकार बुद्धिमान् ॥ ०१४ ॥

# अध्याय ०७२

युधिष्ठिर उवाच ॥

कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते ।
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

समासेनैव ते तात धर्मान्वक्ष्यामि निश्चितान् ।
विस्तरेण हि धर्माणां न जात्वन्तमवाप्नुयात् ॥ ००२ ॥

धर्मनिष्ठाञ्श्रुतवतो वेदव्रतसमाहितान् ।
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥ ००३ ॥

प्रत्युत्थायोपसङ्गृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥ ००४ ॥

धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ॥ ००५ ॥

आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत ।
अर्थार्थं परिगृह्णीयात्कामक्रोधौ च वर्जयेत् ॥ ००६ ॥

कामक्रोधौ पुरस्कृत्य योऽर्थं राजानुतिष्ठति ।
न स धर्मं न चाप्यर्थं परिगृह्णाति बालिशः ॥ ००७ ॥

मा स्म लुब्धांश्च मूर्खांश्च कामे चार्थेषु यूयुजः ।
अलुब्धान्बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ॥ ००८ ॥

मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ॥ ००९ ॥

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
शास्त्रनीतेन लिप्सेथा वेतनेन धनागमम् ॥ ०१० ॥

दापयित्वा करं धर्म्यं राष्ट्रं नित्यं यथाविधि ।
अशेषान्कल्पयेद्राजा योगक्षेमानतन्द्रितः ॥ ०११ ॥

गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ॥ ०१२ ॥

मा स्माधर्मेण लाभेन लिप्सेथास्त्वं धनागमम् ।
धर्मार्थावध्रुवौ तस्य योऽपशास्त्रपरो भवेत् ॥ ०१३ ॥

अपशास्त्रपरो राजा सञ्चयान्नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥ ०१४ ॥

अर्थमूलोऽपहिंसां च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन्प्रजाः ॥ ०१५ ॥

ऊधश्छिन्द्याद्धि यो धेन्वाः क्षीरार्थी न लभेत्पयः ।
एवं राष्ट्रमयोगेन पीडितं न विवर्धते ॥ ०१६ ॥

यो हि दोग्ध्रीमुपास्ते तु स नित्यं लभते पयः ।
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥ ०१७ ॥

अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् ।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥ ०१८ ॥

दोग्धि धान्यं हिरण्यं च प्रजा राज्ञि सुरक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥ ०१९ ॥

मालाकारोपमो राजन्भव माङ्गारिकोपमः ।
तथा युक्तश्चिरं राष्ट्रं भोक्तुं शक्यसि पालयन् ॥ ०२० ॥

परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ ०२१ ॥

मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥ ०२२ ॥

धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन्परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् ॥ ०२३ ॥

एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालयन् ।
स्वन्तं पुण्यं यशोवन्तं प्राप्स्यसे कुरुनन्दन ॥ ०२४ ॥

धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर तथा युक्तो नाधिबन्धेन योक्ष्यसे ॥ ०२५ ॥

एष एव परो धर्मो यद्राजा रक्षते प्रजाः ।
भूतानां हि यथा धर्मे रक्षणं च परा दया ॥ ०२६ ॥

तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः ।
यद्राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥ ०२७ ॥

यदह्ना कुरुते पापमरक्षन्भयतः प्रजाः ।

राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥ ०२८ ॥

यदह्ना कुरुते पुण्यं प्रजा धर्मेण पालयन् ।
दश वर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥ ०२९ ॥

स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥ ०३० ॥

एवं धर्मं प्रयत्नेन कौन्तेय परिपालयन् ।
इह पुण्यफलं लब्ध्वा नाधिबन्धेन योक्ष्यसे ॥ ०३१ ॥

स्वर्गलोके च महतीं श्रियं प्राप्स्यसि पाण्डव ।
असंभवश्च धर्माणामीदृशानामराजसु ॥ ०३२ ॥

तस्माद्राजैव नान्योऽस्ति यो महत्फलमाप्नुयात् ॥ ०३२ ॥

स राज्यमृद्धिमत्प्राप्य धर्मेण परिपालयन् ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥ ०३३ ॥

---

# पुरुरवःपवनसंवादः

## अध्याय ०७३

भीष्म उवाच ॥

य एव तु सतो रक्षेदसतश्च निबर्हयेत् ।
स एव राज्ञा कर्तव्यो राजन्राजपुरोहितः ॥ ००१ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पुरूरवस ऐलस्य संवादं मातरिश्वनः ॥ ००२ ॥

ऐल उवाच ॥

कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः ।
कस्माच्च भवति श्रेयानेतद्वायो विचक्ष्व मे ॥ ००३ ॥

वायुरुवाच ॥

ब्रह्मणो मुखतः सृष्टो ब्राह्मणो राजसत्तम ।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य उच्यते ॥ ००४ ॥

वर्णानां परिचर्यार्थं त्रयाणां पुरुषर्षभ ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः ॥ ००५ ॥

ब्राह्मणो जातमात्रस्तु पृथिवीमन्वजायत ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ ००६ ॥

ततः पृथिव्या गोप्तारं क्षत्रियं दण्डधारिणम् ।
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये ॥ ००७ ॥

वैश्यस्तु धनधान्येन त्रीन्वर्णान्बिभृयादिमान् ।
शूद्रो ह्येनान्परिचरेदिति ब्रह्मानुशासनम् ॥ ००८ ॥

ऐल उवाच ॥

द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत् ।
धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥ ००९ ॥

वायुरुवाच ॥

विप्रस्य सर्वमेवैतद्यत्किञ्चिज्जगतीगतम् ।
ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः ॥ ०१० ॥

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ॥ ०११ ॥

पत्यभावे यथा स्त्री हि देवरं कुरुते पतिम् ।
आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम् ॥ ०१२ ॥

एष ते प्रथमः कल्प आपद्यन्यो भवेदतः ।
यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि ॥ ०१३ ॥

यः कश्चिद्विजयेद्भूमिं ब्राह्मणाय निवेदयेत् ।
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने ॥ ०१४ ॥

स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत् ।
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया ॥ ०१५ ॥

ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवाक् ।
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् ॥ ०१६ ॥

राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम् ।
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः ॥ ०१७ ॥

तावता स कृतप्रज्ञश्चिरं यशसि तिष्ठति ।
तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः ॥ ०१८ ॥

एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः ।
सम्यग्वृत्ताः स्वधर्मस्था न कुतश्चिद्भयान्विताः ॥ ०१९ ॥

राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं स विन्दति ॥ ०२० ॥

देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
यज्ञमेवोपजीवन्ति नास्ति चेष्टमराजके ॥ ०२१ ॥

इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः ॥ ०२२ ॥

छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति ।
अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ॥ ०२३ ॥

शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः ।
तेषु भोगेषु सर्वेषु नभीतो लभते सुखम् ॥ ०२४ ॥

अभयस्यैव यो दाता तस्यैव सुमहत्फलम् ।
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ॥ ०२५ ॥

इन्द्रो राजा यमो राजा धर्मो राजा तथैव च ।
राजा बिभर्ति रूपाणि राज्ञा सर्वमिदं धृतम् ॥ ०२६ ॥

---

# ऐलकश्यपसंवादः

## अध्याय ०७४

भीष्म उवाच ॥

राज्ञा पुरोहितः कार्यो भवेद्विद्वान्बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम्  ॥ ००१  ॥

धर्मात्मा धर्मविद्येषां राज्ञां राजन्पुरोहितः ।
राजा चैवं गुणो येषां कुशलं तेषु सर्वशः  ॥ ००२  ॥

उभौ प्रजा वर्धयतो देवान्पूर्वान्परान्पितॄन् ।
यौ समेयास्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ  ॥ ००३  ॥

परस्परस्य सुहृदौ संमतौ समचेतसौ ।
ब्रह्मक्षत्रस्य संमानात्प्रजाः सुखमवाप्नुयुः  ॥ ००४  ॥

विमाननात्तयोरेव प्रजा नश्येयुरेव ह ।
ब्रह्मक्षत्रं हि सर्वेषां धर्माणां मूलमुच्यते  ॥ ००५  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऐलकश्यपसंवादं तं निबोध युधिष्ठिर  ॥ ००६  ॥

ऐल उवाच  ॥

यदा हि ब्रह्म प्रजहाति क्षत्रं ; क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन्भजन्ते ; तथाबल्यं कतमेऽस्मिन्वियन्ति  ॥ ००७  ॥

कश्यप उवाच  ॥

व्यृद्धं राष्ट्रं भवति क्षत्रियस्य ; ब्रह्म क्षत्रं यत्र विरुध्यते ह ।
अन्वग्बलं दस्यवस्तद्भजन्ते ;ऽबल्यं तथा तत्र वियन्ति सन्तः  ॥ ००८  ॥

नैषामुक्षा वर्धते नोत उस्रा ; न गर्गरो मथ्यते नो यजन्ते ।
नैषां पुत्रा वेदमधीयते च ; यदा ब्रह्म क्षत्रियाः संत्यजन्ति  ॥ ००९  ॥

नैषामुक्षा वर्धते जातु गेहे ; नाधीयते सप्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूता भवन्ति ; ये ब्राह्मणाः क्षत्रियान्संत्यजन्ति ॥ ०१० ॥

एतौ हि नित्यसंयुक्ताावितरेतरधारणे ।
क्षत्रं हि ब्रह्मणो योनिर्योनिः क्षत्रस्य च द्विजाः ॥ ०११ ॥

उभावेतौ नित्यमभिप्रपन्नौ ; संप्रापतुर्महतीं श्रीप्रतिष्ठाम् ।
तयोः संधिर्भिद्यते चेत्पुराण ;स्ततः सर्वं भवति हि संप्रमूढम् ॥ ०१२ ॥

नात्र प्लवं लभते पारगामी ; महागाधे नौरिव संप्रणुन्ना ।
चातुर्वर्ण्यं भवति च संप्रमूढं ; ततः प्रजाः क्षयसंस्था भवन्ति ॥ ०१३ ॥

ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।
अरक्ष्यमाणः सततमश्रु पापं च वर्षति ॥ ०१४ ॥

अब्रह्मचारी चरणादपेतो ; यदा ब्रह्मा ब्रह्मणि त्राणमिच्छेत् ।
आश्चर्यशो वर्षति तत्र देव ;स्तत्राभीक्ष्णं दुःसहाश्चाविशन्ति ॥ ०१५ ॥

स्त्रियं हत्वा ब्राह्मणं वापि पापः ; सभायां यत्र लभतेऽनुवादम् ।
राज्ञः सकाशे न बिभेति चापि ; ततो भयं जायते क्षत्रियस्य ॥ ०१६ ॥

पापैः पापे क्रियमाणेऽतिवेलं ; ततो रुद्रो जायते देव एषः ।
पापैः पापाः सञ्जनयन्ति रुद्रं ; ततः सर्वान्साध्वसाधून्हिनस्ति ॥ ०१७ ॥

ऐल उवाच ॥

कुतो रुद्रः कीदृशो वापि रुद्रः ; सत्त्वैः सत्त्वं दृश्यते वध्यमानम् ।
एतद्विद्वन्कश्यप मे प्रचक्ष्व ; यतो रुद्रो जायते देव एषः ॥ ०१८ ॥

कश्यप उवाच ॥

आत्मा रुद्रो हृदये मानवानां ; स्वं स्वं देहं परदेहं च हन्ति ।
वातोत्पातैः सदृशं रुद्रमाहु ;र्दावैर्जीमूतैः सदृशं रूपमस्य ॥ ०१९ ॥

ऐल उवाच ॥

न वै वातं परिवृनोति कश्चि ;न्न जीमूतो वर्षति नैव दावः ।
तथायुक्तो दृश्यते मानवेषु ; कामद्वेषाद्बध्यते मुच्यते च ॥ ०२० ॥

कश्यप उवाच ॥

यथैकगेहे जातवेदाः प्रदीप्तः ; कृत्स्नं ग्रामं प्रदहेत्स त्वरावान् ।
विमोहनं कुरुते देव एष ; ततः सर्वं स्पृश्यते पुण्यपापैः ॥ ०२१ ॥

ऐल उवाच ॥

यदि दण्डः स्पृशते पुण्यभाजं ; पापैः पापे क्रियमाणेऽविशेषात् ।
कस्य हेतोः सुकृतं नाम कुर्या ;द्दुष्कृतं वा कस्य हेतोर्न कुर्यात् ॥ ०२२ ॥

कश्यप उवाच ॥

असंत्यागात्पापकृतामपापां ;स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा ;न्न मिश्रः स्यात्पापकृद्भिः कथञ्चित् ॥ ०२३ ॥

ऐल उवाच ॥

साध्वसाधून्धारयतीह भूमिः ; साध्वसाधूंस्तापयतीह सूर्यः ।
साध्वसाधून्वातयतीह वायु ;रापस्तथा साध्वसाधून्वहन्ति ॥ ०२४ ॥

कश्यप उवाच ॥

एवमस्मिन्वर्तते लोक एव ; नामुत्रैवं वर्तते राजपुत्र ।
प्रेत्यैतयोरन्तरवान्विशेषो ; यो वै पुण्यं चरते यश्च पापम्  ॥ ०२५  ॥

पुण्यस्य लोको मधुमान्घृतार्चि ;र्हिरण्यज्योतिरमृतस्य नाभिः ।
तत्र प्रेत्य मोदते ब्रह्मचारी ; न तत्र मृत्युर्न जरा नोत दुःखम्  ॥ ०२६  ॥

पापस्य लोको निरयोऽप्रकाशो ; नित्यं दुःखः शोकभूयिष्ठ एव ।
तत्रात्मानं शोचते पापकर्मा ; बह्वीः समाः प्रपतन्नप्रतिष्ठः  ॥ ०२७  ॥

मिथो भेदाद्ब्राह्मणक्षत्रियाणां ; प्रजा दुःखं दुःसहं चाविशन्ति ।
एवं ज्ञात्वा कार्य एवेह विद्वा ;न्पुरोहितो नैकविद्यो नृपेण  ॥ ०२८  ॥

तं चैवान्वभिषिच्येत तथा धर्मो विधीयते ।
अग्र्यो हि ब्राह्मणः प्रोक्तः सर्वस्यैवेह धर्मतः  ॥ ०२९  ॥

पूर्वं हि ब्राह्मणाः सृष्टा इति धर्मविदो विदुः ।
ज्येष्ठेनाभिजनेनास्य प्राप्तं सर्वं यदुत्तरम्  ॥ ०३०  ॥

तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।
सर्वं श्रेष्ठं वरिष्ठं च निवेद्यं तस्य धर्मतः  ॥ ०३१  ॥

अवश्यमेतत्कर्तव्यं राज्ञा बलवतापि हि ।
ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते  ॥ ०३२  ॥

# मुचकुन्दोपाख्यानम्

## अध्याय ०७५

भीष्म उवाच ॥

योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ।
योगक्षेमश्च राज्ञोऽपि समायत्तः पुरोहिते ॥ ००१ ॥

यतादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ।
दृष्टं च राजा बाहुभ्यां तद्राष्ट्रं सुखमेधते ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥ ००३ ॥

मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः ।
जिज्ञासमानः स्वबलमभ्ययादलकाधिपम् ॥ ००४ ॥

ततो वैश्रवणो राजा रक्षांसि समवासृजत् ।
ते बलान्यवमृद्नन्तः प्राचरंस्तस्य नैरृताः ॥ ००५ ॥

स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः ।
गर्हयामास विद्वांसं पुरोहितमरिंदमः ॥ ००६ ॥

तत उग्रं तपस्तप्त्वा वसिष्ठो ब्रह्मवित्तमः ।
रक्षांस्यपावधीत्तत्र पन्थानं चाप्यविन्दत ॥ ००७ ॥

ततो वैश्रवणो राजा मुचुकुन्दमदर्शयत् ।
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ॥ ००८ ॥

त्वत्तो हि बलिनः पूर्वे राजानः सपुरोहिताः ।

न चैवं समवर्तंस्ते यथा त्वमिह वर्तसे ॥ ००९ ॥

ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः ।
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः ॥ ०१० ॥

यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि ।
किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्तसे ॥ ०११ ॥

मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् ।
न्यायपूर्वमसंरब्धमसंभ्रान्तमिदं वचः ॥ ०१२ ॥

ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं च तल्लोकं परिरक्षति ॥ ०१३ ॥

तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥ ०१४ ॥

ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम् ।
तथा च मां प्रवर्तन्तं गर्हयस्यलकाधिप ॥ ०१५ ॥

ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ।
नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत ॥ ०१६ ॥

नाच्छिन्दे चापि निर्दिष्टमिति जानीहि पार्थिव ।
प्रशाधि पृथिवीं वीर मद्दत्तामखिलामिमाम् ॥ ०१७ ॥

मुचुकुन्द उवाच ॥

नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव ।
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ॥ ०१८ ॥

भीष्म उवाच ॥

ततो वैश्रवणो राजा विस्मयं परमं ययौ ।
क्षत्रधर्मे स्थितं दृष्ट्वा मुचुकुन्दमसंभ्रमम् ॥ ०१९ ॥

ततो राजा मुचुकुन्दः सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः ॥ ०२० ॥

एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते ।
जयत्यविजितामुर्वीं यशश्च महदश्नुते ॥ ०२१ ॥

नित्योदको ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः ।
तयोर्हि सर्वमायत्तं यत्किञ्चिज्जगतीगतम् ॥ ०२२ ॥

---

# अध्याय ०७६

युधिष्ठिर उवाच ॥

यया वृत्त्या महीपालो विवर्धयति मानवान् ।
पुण्यांश्च लोकाञ्जयति तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।
उपवासतपःशीलः प्रजानां पालने रतः ॥ ००२ ॥

सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत् ।
उत्थानेनाप्रमादेन पूजयेच्चैव धार्मिकान् ॥ ००३ ॥

राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत्प्रजानां हि रोचते ॥ ००४ ॥

नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु ।
निहन्यात्सर्वतो दस्यून्न कामात्कस्यचित्क्षमेत् ॥ ००५ ॥

यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भारत विन्दति ॥ ००६ ॥

यदधीते यद्यजते यद्ददाति यदर्चति ।
राजा चतुर्थभाक्तस्य प्रजा धर्मेण पालयन् ॥ ००७ ॥

यद्राष्ट्रेऽकुशलं किञ्चिद्राज्ञोऽरक्षयतः प्रजाः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ००८ ॥

अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
कर्मणः पृथिवीपाल नृशंसोऽनृतवागपि ॥ ००९ ॥

तादृशात्किल्बिषाद्राजा शृणु येन प्रमुच्यते ॥ ००९ ॥

प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि ।
स्वकोशात्तत्प्रदेयं स्यादशक्तेनोपजीवता ॥ ०१० ॥

सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणास्तथा ।
न स्थेयं विषये तेषु योऽपकुर्याद्द्विजातिषु ॥ ०११ ॥

ब्रह्मस्वे रक्ष्यमाणे हि सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥ ०१२ ॥

पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।

नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम्  ॥ ०१३  ॥

न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्याः पालयितुं प्रजाः  ॥ ०१४  ॥

युधिष्ठिर उवाच  ॥

नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते  ॥ ०१५  ॥

तदलं मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया  ॥ ०१६  ॥

तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः  ॥ ०१७  ॥

भीष्म उवाच  ॥

वेदाहं तव या बुद्धिरानृशंस्यगुणैव सा ।
न च शुद्धानृशंस्येन शक्यं महदुपासितुम्  ॥ ०१८  ॥

अपि तु त्वा मृदुं दान्तमत्यार्यमतिधार्मिकम् ।
क्लीबं धर्मघृणायुक्तं न लोको बहु मन्यते  ॥ ०१९  ॥

राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि  ॥ ०२०  ॥

न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः ।
प्रजापालनसंभूतं प्राप्ता धर्मफलं ह्यसि  ॥ ०२१  ॥

न ह्येतामाशिषं पाण्डुर्न च कुन्त्यन्वयाचत ।

न चैतां प्राज्ञतां तात यया चरसि मेधया ॥ ०२२ ॥

शौर्यं बलं च सत्त्वं च पिता तव सदाब्रवीत् ।
माहात्म्यं बलमौदार्यं तव कुन्त्यन्वयाचत ॥ ०२३ ॥

नित्यं स्वाहा स्वधा नित्यमुभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥ ०२४ ॥

दानमध्ययनं यज्ञः प्रजानां परिपालनम् ।
धर्ममेतमधर्मं वा जन्मनैवाभ्यजायिथाः ॥ ०२५ ॥

काले धुरि नियुक्तानां वहतां भार आहिते ।
सीदतामपि कौन्तेय न कीर्तिरवसीदति ॥ ०२६ ॥

समन्ततो विनियतो वहत्यस्खलितो हि यः ।
निर्दोषकर्मवचनात्सिद्धिः कर्मण एव सा ॥ ०२७ ॥

नैकान्तविनिपातेन विचचारेह कश्चन ।
धर्मी गृही वा राजा वा ब्रह्मचार्यथ वा पुनः ॥ ०२८ ॥

अल्पं तु साधुभूयिष्ठं यत्कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्त्यकर्मणः ॥ ०२९ ॥

यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम् ।
योगक्षेमस्तदा राजन्कुशलायैव कल्पते ॥ ०३० ॥

दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा ।
सर्वतः परिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ ०३१ ॥

यं हि वैद्याः कुले जाता अवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ॥ ०३२ ॥

युधिष्ठिर उवाच ॥

किं न्वतः परमं स्वर्ग्यं का न्वतः प्रीतिरुत्तमा ।
किं न्वतः परमैश्वर्यं ब्रूहि मे यदि मन्यसे ॥ ०३३ ॥

भीष्म उवाच ॥

यस्मिन्प्रतिष्ठिताः सम्यक्क्षेमं विन्दन्ति तत्क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥ ०३४ ॥

त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्गं सतो रक्षासतो जहि ॥ ०३५ ॥

अनु त्वा तात जीवन्तु सुहृदः साधुभिः सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिवाण्डजाः ॥ ०३६ ॥

धृष्टं शूरं प्रहर्तारमनृशंसं जितेन्द्रियम् ।
वत्सलं संविभक्तारमनु जीवन्तु त्वां जनाः ॥ ०३७ ॥

---

# अध्याय ०७७

युधिष्ठिर उवाच ॥

स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ ००१ ॥

भीष्म उवाच ॥

विद्यालक्षणसंपन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन्ब्राह्मणाः परिकीर्तिताः ॥ ००२ ॥

ऋत्विगाचार्यसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ००३ ॥

ऋत्विक्पुरोहितो मन्त्री दूतोऽथार्थानुशासकः ।
एते क्षत्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ००४ ॥

अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ००५ ॥

जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥ ००६ ॥

अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः ।
तान्सर्वान्धार्मिको राजा बलिं विष्टिं च कारयेत् ॥ ००७ ॥

आह्वायका देवलका नक्षत्रग्रामयाजकाः ।
एते ब्राह्मणचण्डाला महापथिकपञ्चमाः ॥ ००८ ॥

एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः ।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ ००९ ॥

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥ ०१० ॥

विकर्मस्थास्तु नोपेक्ष्या जातु राज्ञा कथञ्चन ।
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया ॥ ०११ ॥

यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥ ०१२ ॥

अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा ।
राजन्स राज्ञा भर्तव्य इति धर्मविदो विदुः ॥ ०१३ ॥

स चेन्नो परिवर्तेत कृतवृत्तिः परंतप ।
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः ॥ ०१४ ॥

---

# केकयराजराक्शससंवादः

## अध्याय ०७८

युधिष्ठिर उवाच ॥

केषां राजा प्रभवति वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥ ००२ ॥

विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन ।
इति राज्ञां पुरावृत्तमभिजल्पन्ति साधवः ॥ ००३ ॥

यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।

राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ॥ ००४ ॥

अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा ।
तस्माद्राजर्षयः सर्वे ब्राह्मणानन्वपालयन् ॥ ००५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं केकयराजेन ह्रियमाणेन रक्षसा ॥ ००६ ॥

केकयानामधिपतिं रक्षो जग्राह दारुणम् ।
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥ ००७ ॥

राजोवाच ॥

न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ॥ ००८ ॥

न च मे ब्राह्मणोऽविद्वान्नाव्रती नाप्यसोमपः ।
नानाहिताग्निर्विषये मामकान्तरमाविशः ॥ ००९ ॥

नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम ।
अधीते नाव्रती कश्चिन्मामकान्तरमाविशः ॥ ०१० ॥

अधीयतेऽध्यापयन्ति यजन्ते याजयन्ति च ।
ददति प्रतिगृह्णन्ति षड्सु कर्मस्ववस्थिताः ॥ ०११ ॥

पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः ।
ब्राह्मणा मे स्वकर्मस्था मामकान्तरमाविशः ॥ ०१२ ॥

न याचन्ते प्रयच्छन्ति सत्यधर्मविशारदाः ।
नाध्यापयन्त्यधीयन्ते यजन्ते न च याजकाः ॥ ०१३ ॥

ब्राह्मणान्परिरक्षन्ति सङ्ग्रामेष्वपलायिनः ।
क्षत्रिया मे स्वकर्मस्था मामकान्तरमाविशः ॥ ०१४ ॥

कृषिगोरक्षवाणिज्यमुपजीवन्त्यमायया ।
अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः ॥ ०१५ ॥

संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः ।
मम वैश्याः स्वकर्मस्था मामकान्तरमाविशः ॥ ०१६ ॥

त्रीन्वर्णाननुतिष्ठन्ति यथावदनसूयकाः ।
मम शूद्राः स्वकर्मस्था मामकान्तरमाविशः ॥ ०१७ ॥

कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्तास्मि सर्वेषां मामकान्तरमाविशः ॥ ०१८ ॥

कुलदेशादिधर्माणां प्रथितानां यथाविधि ।
अव्युच्छेत्तास्मि सर्वेषां मामकान्तरमाविशः ॥ ०१९ ॥

तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः ॥ ०२० ॥

नासंविभज्य भोक्तास्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविशः ॥ ०२१ ॥

नाब्रह्मचारी भिक्षावान्भिक्षुर्वाब्रह्मचारिकः ।
अनृत्विजं हुतं नास्ति मामकान्तरमाविशः ॥ ०२२ ॥

नावजानाम्यहं वृद्धान्न वैद्यान्न तपस्विनः ।
राष्ट्रे स्वपति जागर्मि मामकान्तरमाविशः ॥ ०२३ ॥

वेदाध्ययनसंपन्नस्तपस्वी सर्वधर्मवित् ।

स्वामी सर्वस्य राज्यस्य श्रीमान्मम पुरोहितः ॥ ०२४ ॥

दानेन दिव्यानभिवाञ्छामि लोका ;न्सत्येनाथो ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि ; न मे भयं विद्यते राक्षसेभ्यः ॥ ०२५ ॥

न मे राष्ट्रे विधवा ब्रह्मबन्धु ;र्न ब्राह्मणः कृपणो नोत चोरः ।
न पारजायी न च पापकर्मा ; न मे भयं विद्यते राक्षसेभ्यः ॥ ०२६ ॥

न मे शस्त्रैरनिर्भिन्नमङ्गे द्व्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मामकान्तरमाविशः ॥ ०२७ ॥

गोब्राह्मणे च यज्ञे च नित्यं स्वस्त्ययनं मम ।
आशासते जना राष्ट्रे मामकान्तरमाविशः ॥ ०२८ ॥

राक्षस उवाच ॥

यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात्प्राप्नुहि कैकेय गृहान्स्वस्ति व्रजाम्यहम् ॥ ०२९ ॥

येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोभ्यो भयं तेषां कुत एव तु मानुषात् ॥ ०३० ॥

येषां पुरोगमा विप्रा येषां ब्रह्मबलं बलम् ।
प्रियातिथ्यास्तथा दारास्ते वै स्वर्गजितो नराः ॥ ०३१ ॥

भीष्म उवाच ॥

तस्माद्द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः ।
आशीरेषां भवेद्राज्ञां राष्ट्रं सम्यक्प्रवर्धते ॥ ०३२ ॥

तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।

नियम्याः संविभज्याश्च प्रजानुग्रहकारणात्  ॥ ०३३  ॥

य एवं वर्तते राजा पौरजानपदेष्विह ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम्  ॥ ०३४  ॥

---

# अध्याय ०७९

युधिष्ठिर उवाच  ॥

व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत ।
कथञ्चिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा  ॥ ००१  ॥

भीष्म उवाच  ॥

अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत् ।
कृषिगोरक्षमास्थाय व्यसने वृत्तिसङ्क्षये  ॥ ००२  ॥

युधिष्ठिर उवाच  ॥

कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते ।
ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ  ॥ ००३  ॥

भीष्म उवाच  ॥

सुरा लवणमित्येव तिलान्केसरिणः पशून् ।
ऋषभान्मधु मांसं च कृतान्नं च युधिष्ठिर  ॥ ००४  ॥

सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।

एतेषां विक्रयात्तात ब्राह्मणो नरकं व्रजेत् ॥ ००५ ॥

अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथञ्चन ॥ ००६ ॥

पक्केनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत्पक्कमामेन भोजनार्थाय भारत ॥ ००७ ॥

वयं सिद्धमशिष्यामो भवान्साधयतामिदम् ।
एवं समीक्ष्य निमयन्नाधर्मोऽस्ति कदाचन ॥ ००८ ॥

अत्र ते वर्तयिष्यामि यथा धर्मः पुरातनः ।
व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर ॥ ००९ ॥

भवतेऽहं ददानीदं भवानेतत्प्रयच्छतु ।
रुचिते वर्तते धर्मो न बलात्संप्रवर्तते ॥ ०१० ॥

इत्येवं संप्रवर्तन्त व्यवहाराः पुरातनाः ।
ऋषीणामितरेषां च साधु चेदमसंशयम् ॥ ०११ ॥

युधिष्ठिर उवाच ॥

अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥ ०१२ ॥

राजा त्राता न लोके स्यात्किं तदा स्यात्परायणम् ।
एतन्मे संशयं ब्रूहि विस्तरेण पितामह ॥ ०१३ ॥

भीष्म उवाच ॥

दानेन तपसा यज्ञैरद्रोहेण दमेन च ।

ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥ ०१४ ॥

तेषां ये वेदबलिनस्त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः ॥ ०१५ ॥

राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम् ।
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता ॥ ०१६ ॥

यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसंदधेत् ।
तदा वर्णा यथाधर्ममाविशेयुः स्वकर्मसु ॥ ०१७ ॥

उन्मर्यादे प्रवृत्ते तु दस्युभिः सङ्करे कृते ।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणान्प्रति ।
कस्तस्य ब्राह्मणस्त्राता को धर्मः किं परायणम् ॥ ०१९ ॥

भीष्म उवाच ॥

तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥ ०२० ॥

क्षत्रस्याभिप्रवृद्धस्य ब्राह्मणेषु विशेषतः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ ०२१ ॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ०२२ ॥

यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिपद्यते ।

क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥ ०२३ ॥

तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥ ०२४ ॥

ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति सर्वशः ॥ ०२५ ॥

ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च ॥ ०२६ ॥

मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते ।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥ ०२७ ॥

अति स्विष्टस्वधीतानां लोकानति तपस्विनाम् ।
अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिम् ॥ ०२८ ॥

एवमेवात्मनस्त्यागान्नान्यं धर्मं विदुर्जनाः ॥ ०२८ ॥

तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति ।
ब्रह्मद्विषो नियच्छन्तस्तेषां नोऽस्तु सलोकता ॥ ०२९ ॥

ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ॥ ०२९ ॥

यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥ ०३० ॥

भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि ।
कारणाद्देशकालस्य देशकालः स तादृशः ॥ ०३१ ॥

मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।

धर्म्याः पापानि कुर्वन्तो गच्छन्ति परमां गतिम्  ॥ ०३२  ॥

ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे वर्णदोषे दुर्गस्य नियमेषु च  ॥ ०३३  ॥

युधिष्ठिर उवाच  ॥

अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे ।
संप्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली  ॥ ०३४  ॥

ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्मेण धारयन्  ॥ ०३५  ॥

कार्यं कुर्यान्न वा कुर्यात्संवार्यो वा भवेन्न वा ।
न स्म शस्त्रं ग्रहीतव्यमन्यत्र क्षत्रबन्धुतः  ॥ ०३६  ॥

भीष्म उवाच  ॥

अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वाप्यन्यः सर्वथा मानमर्हति  ॥ ०३७  ॥

यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम् ।
अनाथाः पाल्यमाना वै दस्युभिः परिपीडिताः  ॥ ०३८  ॥

तमेव पूजयेरंस्ते प्रीत्या स्वमिव बान्धवम् ।
महद्ध्यभीक्ष्णं कौरव्य कर्ता सन्मानमर्हति  ॥ ०३९  ॥

किमुक्ष्णावहता कृत्यं किं धेन्वा चाप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाप्यरक्षता  ॥ ०४०  ॥

यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।

यथा ह्यनेत्रः शकटः पथि क्षेत्रं यथोषरम् ॥ ०४१ ॥

एवं ब्रह्मानधीयानं राजा यश्च न रक्षिता ।
न वर्षति च यो मेघः सर्व एते निरर्थकाः ॥ ०४२ ॥

नित्यं यस्तु सतो रक्षेदसतश्च निबर्हयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥ ०४३ ॥

---

# अध्याय ०८०

युधिष्ठिर उवाच ॥

क्वसमुत्थाः कथंशीला ऋत्विजः स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥ ००१ ॥

भीष्म उवाच ॥

प्रतिकर्म पुराचार ऋत्विजां स्म विधीयते ।
आदौ छन्दांसि विज्ञाय द्विजानां श्रुतमेव च ॥ ००२ ॥

ये त्वेकरतयो नित्यं धीरा नाप्रियवादिनः ।
परस्परस्य सुहृदः संमताः समदर्शिनः ॥ ००३ ॥

येष्वानृशंस्यं सत्यं चाप्यहिंसा तप आर्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ००४ ॥

ह्रीमान्सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥ ००५ ॥

अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति ।
एते महर्त्विजस्तात सर्वे मान्या यथातथम् ॥ ००६ ॥

युधिष्ठिर उवाच ॥

यदिदं वेदवचनं दक्षिणासु विधीयते ।
इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ॥ ००७ ॥

नेदं प्रति धनं शास्त्रमापद्धर्ममशास्त्रतः ।
आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ००८ ॥

श्रद्धामारभ्य यष्टव्यमित्येषा वैदिकी श्रुतिः ।
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ००९ ॥

भीष्म उवाच ॥

न वेदानां परिभवान्न शाठ्येन न मायया ।
कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी ॥ ०१० ॥

यज्ञाङ्गं दक्षिणास्तात वेदानां परिबृंहणम् ।
न मन्त्रा दक्षिणाहीनास्तारयन्ति कथञ्चन ॥ ०११ ॥

शक्तिस्तु पूर्णपात्रेण संमितानवमा भवेत् ।
अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाविधि ॥ ०१२ ॥

सोमो राजा ब्राह्मणानामित्येषा वैदिकी श्रुतिः ।
तं च विक्रेतुमिच्छन्ति न वृथा वृत्तिरिष्यते ॥ ०१३ ॥

तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते ॥ ०१३ ॥

इत्येवं धर्मतः ख्यातमृषिभिर्धर्मवादिभिः ।
पुमान्यज्ञश्च सोमश्च न्यायवृत्तो यथा भवेत् ॥ ०१४ ॥

अन्यायवृत्तः पुरुषो न परस्य न चात्मनः ॥ ०१४ ॥

शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।
तानि सम्यक्प्रणीतानि ब्राह्मणानां महात्मनाम् ॥ ०१५ ॥

तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः ।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ ०१६ ॥

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ ०१७ ॥

अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥ ०१८ ॥

निबोध दशहोतॄणां विधानं पार्थ यादृशम् ।
चित्तिः स्रुक्चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् ॥ ०१९ ॥

सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥ ०२० ॥

---

# अध्याय ०८१

युधिष्ठिर उवाच ॥

यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।

पुरुषेणासहायेन किमु राज्यं पितामह ॥ ००१ ॥

किंशीलः किंसमाचारो राज्ञोऽर्थसचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे नापि विश्वसेत् ॥ ००२ ॥

भीष्म उवाच ॥

चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ००३ ॥

धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥ ००४ ॥

यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ।
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ॥ ००५ ॥

चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथापरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥ ००६ ॥

न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ००७ ॥

असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ॥ ००८ ॥

अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत् ।
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥ ००९ ॥

एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युना न विशिष्यते ॥ ०१० ॥

अकालमृत्युर्विश्वासो विश्वसन्हि विपद्यते ।
यस्मिन्करोति विश्वासमिच्छतस्तस्य जीवति ॥ ०११ ॥

तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैव सनातनी ॥ ०१२ ॥

यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः ॥ ०१३ ॥

यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन्सर्वसेतवः ॥ ०१४ ॥

तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्यात्तममित्रं विनिर्दिशेत् ॥ ०१५ ॥

यः समृद्ध्या न तुष्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥ ०१६ ॥

यं मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन्कुर्वीत विश्वासं यथा पितरि वै तथा ॥ ०१७ ॥

तं शक्त्या वर्धमानश्च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥ ०१८ ॥

क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।
ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ ०१९ ॥

व्यसनान्नित्यभीतोऽसौ समृद्ध्यामेव तृप्यते ।
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥ ०२० ॥

रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।

कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः ॥ ०२१ ॥

मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंसवान् ।
यो मानितोऽमानितो वा न संदूष्येत्कदाचन ॥ ०२२ ॥

ऋत्विग्वा यदि वाचार्यः सखा वात्यन्तसंस्तुतः ।
गृहे वसेदमात्यस्ते यः स्यात्परमपूजितः ॥ ०२३ ॥

स ते विद्यात्परं मन्त्रं प्रकृतिं चार्थधर्मयोः ।
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥ ०२४ ॥

नैव द्वौ न त्रयः कार्या न मृष्येरन्परस्परम् ।
एकार्थादेव भूतानां भेदो भवति सर्वदा ॥ ०२५ ॥

कीर्तिप्रधानो यश्च स्याद्यश्च स्यात्समये स्थितः ।
समर्थान्यश्च न द्वेष्टि समर्थान्कुरुते च यः ॥ ०२६ ॥

यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥ ०२७ ॥

शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ।
कुलीनः शीलसंपन्नस्तितिक्षुरनसूयकः ॥ ०२८ ॥

एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः ।
पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः ॥ ०२९ ॥

कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ।
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्ति च ॥ ०३० ॥

एते कर्माणि कुर्वन्ति स्पर्धमाना मिथः सदा ।
अनुतिष्ठन्ति चैवार्थानाचक्षाणाः परस्परम् ॥ ०३१ ॥

ज्ञातिभ्यश्चैव बिभ्येथा मृत्योरिव यतः सदा ।
उपराजेव राजर्धिं ज्ञातिर्न सहते सदा ॥ ०३२ ॥

ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ ०३३ ॥

अज्ञातिता नातिसुखा नावज्ञेयास्त्वतः परम् ।
अज्ञातिमन्तं पुरुषं परे परिभवन्त्युत ॥ ०३४ ॥

निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम् ।
नान्यैर्निकारं सहते ज्ञातेर्ज्ञातिः कदाचन ॥ ०३५ ॥

आत्मानमेव जानाति निकृतं बान्धवैरपि ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं तेषु लक्ष्यते ॥ ०३६ ॥

नाज्ञातिरनुगृह्णाति नाज्ञातिर्दिग्धमस्यति ।
उभयं ज्ञातिलोकेषु दृश्यते साध्वसाधु च ॥ ०३७ ॥

तान्मानयेत्पूजयेच्च नित्यं वाचा च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिदाचरेत् ॥ ०३८ ॥

विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा ।
न हि दोषो गुणो वेति निस्पृक्तस्तेषु दृश्यते ॥ ०३९ ॥

तस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ ०४० ॥

य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वैश्वर्ये चिरं यशसि तिष्ठति ॥ ०४१ ॥

# वासुदेवनारदसंवादः

## अध्याय ०८२

युधिष्ठिर उवाच ॥

एवमग्राह्यके तस्मिञ्ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासुदेवस्य संवादं सुरर्षेर्नारदस्य च ॥ ००२ ॥

वासुदेव उवाच ॥

नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वापि नात्मवान् ॥ ००३ ॥

स ते सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद ।
कृत्स्नां च बुद्धिं संप्रेक्ष्य संपृच्छे त्रिदिवङ्गम ॥ ००४ ॥

दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्तास्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥ ००५ ॥

अरणीमग्निकामो वा मथ्नाति हृदयं मम ।
वाचा दुरुक्तं देवर्षे तन्मे दहति नित्यदा ॥ ००६ ॥

बलं सङ्कर्षणे नित्यं सौकुमार्यं पुनर्गदे ।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥ ००७ ॥

अन्ये हि सुमहाभागा बलवन्तो दुरासदाः ।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥ ००८ ॥

यस्य न स्युर्न वै स स्याद्यस्य स्युः कृच्छ्रमेव तत् ।
द्वाभ्यां निवारितो नित्यं वृणोम्येकतरं न च ॥ ००९ ॥

स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः ।
यस्य वापि न तौ स्यातां किं नु दुःखतरं ततः ॥ ०१० ॥

सोऽहं कितवमातेव द्वयोरपि महामुने ।
एकस्य जयमाशंसे द्वितीयस्यापराजयम् ॥ ०११ ॥

ममैवं क्लिश्यमानस्य नारदोभयतः सदा ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ ०१२ ॥

नारद उवाच ॥

आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वान्यतः ॥ ०१३ ॥

सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवाः सर्वे ह्येते तदन्वयाः ॥ ०१४ ॥

अर्थहेतोर्हि कामाद्वाद्वारा बीभत्सयापि वा ।
आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥ ०१५ ॥

कृतमूलमिदानीं तज्जातशब्दं सहायवत् ।

न शक्यं पुनरादातुं वान्तमन्नमिव त्वया ॥ ०१६ ॥

बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन ।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥ ०१७ ॥

तच्चेत्सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयव्ययं वा स्याद्विनाशो वा पुनर्भवेत् ॥ ०१८ ॥

अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ ०१९ ॥

वासुदेव उवाच ॥

अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥ ०२० ॥

नारद उवाच ॥

शक्त्यान्नदानं सततं तितिक्षा दम आर्जवम् ।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ ०२१ ॥

ज्ञातीनां वक्तुकामानां कटूनि च लघूनि च ।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥ ०२२ ॥

नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमादत्ते तामुद्यम्योरसा वह ॥ ०२३ ॥

सर्व एव गुरुं भारमनड्वान्वहते समे ।
दुर्गे प्रतीकः सुगवो भारं वहति दुर्वहम् ॥ ०२४ ॥

भेदाद्विनाशः संघानां संघमुख्योऽसि केशव ।

यथा त्वां प्राप्य नोत्सीदेदयं संघस्तथा कुरु ॥ ०२५ ॥

नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसंत्यागाद्गणः प्राज्ञेऽवतिष्ठते ॥ ०२६ ॥

धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम् ।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु ॥ ०२७ ॥

आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रायानविधौ तथा ॥ ०२८ ॥

माधवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः ।
त्वय्यासक्ता महाबाहो लोका लोकेश्वराश्च ये ॥ ०२९ ॥

उपासते हि त्वद्बुद्धिमृषयश्चापि माधव ।
त्वं गुरुः सर्वभूतानां जानीषे त्वं गतागतम् ॥ ०३० ॥

त्वामासाद्य यदुश्रेष्ठमेधन्ते ज्ञातिनः सुखम् ॥ ०३० ॥

---

# कालकवृक्षीयोपाख्यानम्

## अध्याय ०८३

भीष्म उवाच ॥

एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत ।
यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः ॥ ००१ ॥

ह्रियमाणममात्येन भृतो वा यदि वाभृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ ००२ ॥

श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्या ह्युपहन्तारं भूयिष्ठं घ्नन्ति भारत ॥ ००३ ॥

राजकोशस्य गोप्तारं राजकोशविलोपकाः ।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ ००४ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुनिः कालकवृक्षीयः कौसल्यं यदुवाच ह ॥ ००५ ॥

कोसलानामाधिपत्यं संप्राप्ते क्षेमदर्शिनि ।
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ॥ ००६ ॥

स काकं पञ्जरे बद्धा विषयं क्षेमदर्शिनः ।
पूर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ॥ ००७ ॥

अधीये वायसीं विद्यां शंसन्ति मम वायसाः ।
अनागतमतीतं च यच्च संप्रति वर्तते ॥ ००८ ॥

इति राष्ट्रे परिपतन्बहुशः पुरुषैः सह ।
सर्वेषां राजयुक्तानां दुष्कृतं परिपृष्टवान् ॥ ००९ ॥

स बुद्धा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः ।
राजयुक्तापचारांश्च सर्वान्बुद्धा ततस्ततः ॥ ०१० ॥

तमेव काकमादाय राजानं द्रष्टुमागमत् ।
सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः ॥ ०११ ॥

स स्म कौसल्यमागम्य राजामात्यमलङ्कृतम् ।
प्राह काकस्य वचनादमुत्रेदं त्वया कृतम्  ॥ ०१२  ॥

असौ चासौ च जानीते राजकोशस्त्वया हृतः ।
एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यताम्  ॥ ०१३  ॥

तथान्यानपि स प्राह राजकोशहरान्सदा ।
न चास्य वचनं किञ्चिदकृतं श्रूयते क्वचित्  ॥ ०१४  ॥

तेन विप्रकृताः सर्वे राजयुक्ताः कुरूद्वह ।
तमतिक्रम्य सुप्तस्य निशि काकमपोथयन्  ॥ ०१५  ॥

वायसं तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे ।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत्  ॥ ०१६  ॥

राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरम् ।
अनुज्ञातस्त्वया ब्रूयां वचनं त्वत्पुरो हितम्  ॥ ०१७  ॥

मित्रार्थमभिसंतप्तो भक्त्या सर्वात्मना गतः ।
अयं तवार्थं हरते यो ब्रूयादक्षमान्वितः  ॥ ०१८  ॥

संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः ।
अतिमन्युप्रसक्तो हि प्रसज्य हितकारणम्  ॥ ०१९  ॥

तथाविधस्य सुहृदः क्षन्तव्यं संविजानता ।
ऐश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता  ॥ ०२०  ॥

तं राजा प्रत्युवाचेदं यन्मा किञ्चिद्भवान्वदेत् ।
कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितम्  ॥ ०२१  ॥

ब्राह्मण प्रतिजानीहि प्रब्रूहि यदि चेच्छसि ।

करिष्यामि हि ते वाक्यं यद्यन्मां विप्र वक्ष्यसि ॥ ०२२ ॥

मुनिरुवाच ॥

ज्ञात्वा नयानपायांश्च भृत्यतस्ते भयानि च ।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागमम् ॥ ०२३ ॥

प्रागेवोक्तश्च दोषोऽयमाचार्यैर्नृपसेविनाम् ।
अगतीकगतिर्ह्येषा या राज्ञा सह जीविका ॥ ०२४ ॥

आशीविषैश्च तस्याहुः सङ्गतं यस्य राजभिः ।
बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ॥ ०२५ ॥

तेभ्यः सर्वेभ्य एवाहुर्भयं राजोपसेविनाम् ।
अथैषामेकतो राजन्मुहूर्तादेव भीर्भवेत् ॥ ०२६ ॥

नैकान्तेनाप्रमादो हि कर्तुं शक्यो महीपतौ ।
न तु प्रमादः कर्तव्यः कथञ्चिद्भूतिमिच्छता ॥ ०२७ ॥

प्रमादाद्धि स्खलेद्राजा स्खलिते नास्ति जीवितम् ।
अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः ॥ ०२८ ॥

आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ ०२९ ॥

दुर्व्याहृताच्छङ्कमानो दुष्कृताद्दुरधिष्ठितात् ।
दुरासिताद्दुर्व्रजितादिङ्गितादङ्गचेष्टितात् ॥ ०३० ॥

देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ॥ ०३१ ॥

इति राजन्मयः प्राह वर्तते च तथैव तत् ॥ ०३१ ॥

अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः ।
ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्यमापदि ॥ ०३२ ॥

वायसश्चैव मे राजन्नन्तकायाभिसंहितः ।
न च मेऽत्र भवान्गर्ह्यो न च येषां भवान्प्रियः ॥ ०३३ ॥

हिताहितांस्तु बुध्येथा मा परोक्षमतिर्भव ॥ ०३३ ॥

ये त्वादानपरा एव वसन्ति भवतो गृहे ।
अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् ॥ ०३४ ॥

ये वा भवद्विनाशेन राज्यमिच्छन्त्यनन्तरम् ।
अन्तरैरभिसंधाय राजन्सिध्यन्ति नान्यथा ॥ ०३५ ॥

तेषामहं भयाद्राजन्गमिष्याम्यन्यमाश्रमम् ।
तैर्हि मे संधितो बाणः काके निपतितः प्रभो ॥ ०३६ ॥

छद्मना मम काकश्च गमितो यमसादनम् ।
दृष्टं ह्येतन्मया राजंस्तपोदीर्घेण चक्षुषा ॥ ०३७ ॥

बहुनक्रझषग्राहां तिमिङ्गिलगणायुताम् ।
काकेन बडिशेनेमामतार्षं त्वामहं नदीम् ॥ ०३८ ॥

स्थाण्वश्मकण्टकवतीं व्याघ्रसिंहगजाकुलाम् ।
दुरासदां दुष्प्रवेशां गुहां हैमवतीमिव ॥ ०३९ ॥

अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते ।
राजदुर्गावतरणे नोपायं पण्डिता विदुः ॥ ०४० ॥

गहनं भवतो राज्यमन्धकारतमोवृतम् ।
नेह विश्वसितुं शक्यं भवतापि कुतो मया ॥ ०४१ ॥

अतो नायं शुभो वासस्तुल्ये सदसती इह ।
वधो ह्येवात्र सुकृते दुष्कृते न च संशयः ॥ ०४२ ॥

न्यायतो दुष्कृते घातः सुकृते स्यात्कथं वधः ।
नेह युक्तं चिरं स्थातुं जवेनातो व्रजेद्बुधः ॥ ०४३ ॥

सीता नाम नदी राजन्प्लवो यस्यां निमज्जति ।
तथोपमामिमां मन्ये वागुरां सर्वघातिनीम् ॥ ०४४ ॥

मधुप्रपातो हि भवान्भोजनं विषसंयुतम् ।
असतामिव ते भावो वर्तते न सतामिव ॥ ०४५ ॥

आशीविषैः परिवृतः कूपस्त्वमिव पार्थिव ॥ ०४५ ॥

दुर्गतीर्था बृहत्कूला करीरीवेत्रसंयुता ।
नदी मधुरपानीया यथा राजंस्तथा भवान् ॥ ०४६ ॥

श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ॥ ०४६ ॥

यथाश्रित्य महावृक्षं कक्षः संवर्धते महान् ।
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ॥ ०४७ ॥

तेनैवोपेन्धनो नूनं दावो दहति दारुणः ।
तथोपमा ह्यमात्यास्ते राजंस्तान्परिशोधय ॥ ०४८ ॥

भवतैव कृता राजन्भवता परिपालिताः ।
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियम् ॥ ०४९ ॥

उषितं शङ्कमानेन प्रमादं परिरक्षता ।
अन्तःसर्प इवागारे वीरपत्न्या इवालये ॥ ०५० ॥

शीलं जिज्ञासमानेन राज्ञश्च सहजीविना ॥ ०५० ॥

कच्चिज्जितेन्द्रियो राजा कच्चिदभ्यन्तरा जिताः ।
कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः ॥ ०५१ ॥

जिज्ञासुरिह संप्राप्तस्तवाहं राजसत्तम ।
तस्य मे रोचसे राजन्क्षुधितस्येव भोजनम् ॥ ०५२ ॥

अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ।
भवतोऽर्थकृदित्येव मयि दोषो हि तैः कृतः ॥ ०५३ ॥

विद्यते कारणं नान्यदिति मे नात्र संशयः ॥ ०५३ ॥

न हि तेषामहं द्रुग्धस्तत्तेषां दोषवद्गतम् ।
अरेर्हि दुर्हताद्भेयं भग्नपृष्ठादिवोरगात् ॥ ०५४ ॥

राजोवाच ॥

भूयसा परिबर्हेण सत्कारेण च भूयसा ।
पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ॥ ०५५ ॥

ये त्वां ब्राह्मण नेच्छन्ति न ते वत्स्यन्ति मे गृहे ।
भवतैव हि तज्ज्ञेयं यदिदानीमनन्तरम् ॥ ०५६ ॥

यथा स्याद्दुष्कृतो दण्डो यथा च सुकृतं कृतम् ।
तथा समीक्ष्य भगवञ्श्रेयसे विनियुङ्क्ष्व माम् ॥ ०५७ ॥

मुनिरुवाच ॥

अदर्शयन्निमं दोषमेकैकं दुर्बलं कुरु ।
ततः कारणमाज्ञाय पुरुषं पुरुषं जहि ॥ ०५८ ॥

एकदोषा हि बहवो मृद्नीयुरपि कण्टकान् ।
मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते ॥ ०५९ ॥

वयं तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः ।
स्वस्ति चेच्छामि भवतः परेषां च यथात्मनः ॥ ०६० ॥

राजन्नात्मानमाचक्षे संबन्धी भवतो ह्यहम् ।
मुनिः कालकवृक्षीय इत्येवमभिसञ्ज्ञितः ॥ ०६१ ॥

पितुः सखा च भवतः संमतः सत्यसङ्गरः ।
व्यापन्ने भवतो राज्ये राजन्पितरि संस्थिते ॥ ०६२ ॥

सर्वकामान्परित्यज्य तपस्तप्तं तदा मया ।
स्नेहात्त्वां प्रब्रवीम्येतन्मा भूयो विभ्रमेदिति ॥ ०६३ ॥

उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया ।
राज्येनामात्यसंस्थेन कथं राजन्प्रमाद्यसि ॥ ०६४ ॥

भीष्म उवाच ॥

ततो राजकुले नान्दी सञ्जज्ञे भूयसी पुनः ।
पुरोहितकुले चैव संप्राप्ते ब्राह्मणर्षभे ॥ ०६५ ॥

एकच्छत्रां महीं कृत्वा कौसल्याय यशस्विने ।
मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ॥ ०६६ ॥

हितं तद्वचनं श्रुत्वा कौसल्योऽन्वशिषन्महीम् ।

तथा च कृतवान्राजा यथोक्तं तेन भारत ॥ ०६७ ॥

---

# अध्याय ०८४

भीष्म उवाच ॥

ह्रीनिषेधाः सदा सन्तः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥ ००१ ॥

अत्याढ्यांश्चातिशूरांश्च ब्राह्मणांश्च बहुश्रुतान् ।
सुसंतुष्टांश्च कौन्तेय महोत्साहांश्च कर्मसु ॥ ००२ ॥

एतान्सहाया.ण्लिप्सेथाः सर्वास्वापत्सु भारत ।
कुलीनः पूजितो नित्यं न हि शक्तिं निगूहति ॥ ००३ ॥

प्रसन्नं ह्यप्रसन्नं वा पीडितं हृतमेव वा ।
आवर्तयति भूयिष्ठं तदेको ह्यनुपालितः ॥ ००४ ॥

कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः ।
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ ००५ ॥

दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः ।
ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ॥ ००६ ॥

अर्थमानार्घ्यसत्कारैर्भोगैरुच्चावचैः प्रियान् ।
यानर्थभाजो मन्येथास्ते ते स्युः सुखभागिनः ॥ ००७ ॥

अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः ।

न त्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः ॥ ००८ ॥

अनार्या ये न जानन्ति समयं मन्दचेतसः ।
तेभ्यः प्रतिजुगुप्सेथा जानीयाः समयच्युतान् ॥ ००९ ॥

नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।
यस्त्वेको बहुभिः श्रेयान्कामं तेन गणं त्यजेत् ॥ ०१० ॥

श्रेयसो लक्षणं ह्येतद्विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ॥ ०११ ॥

समर्थान्पूजयेद्यश्च नास्पर्ध्यैः स्पर्धते च यः ।
न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ॥ ०१२ ॥

अमानी सत्यवाक्शक्तो जितात्मा मान्यमानिता ।
स ते मन्त्रसहायः स्यात्सर्वावस्थं परीक्षितः ॥ ०१३ ॥

कुलीनः सत्यसंपन्नस्तितिक्षुर्दक्ष आत्मवान् ।
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥ ०१४ ॥

तस्यैवं वर्तमानस्य पुरुषस्य विजानतः ।
अमित्राः संप्रसीदन्ति ततो मित्रीभवन्त्यपि ॥ ०१५ ॥

अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणान् ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥ ०१६ ॥

संबद्धाः पुरुषैराप्तैरभिजातैः स्वदेशजैः ।
अहार्यैरव्यभीचारैः सर्वतः सुपरीक्षितैः ॥ ०१७ ॥

योधाः स्त्रौवास्तथा मौलास्तथैवान्येऽप्यवस्कृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ ०१८ ॥

येषां वैनयिकी बुद्धिः प्रकृता चैव शोभना ।
तेजो धैर्यं क्षमा शौचमनुराग स्थितिर्धृतिः ॥ ०१९ ॥

परीक्षितगुणान्नित्यं प्रौढभावान्धुरंधरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजार्थकारिणः ॥ ०२० ॥

पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान् ।
कुलीनान्सत्यसंपन्नानिङ्गितज्ञाननिष्ठुरान् ॥ ०२१ ॥

देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥ ०२२ ॥

हीनतेजा ह्यसंहृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयान् ॥ ०२३ ॥

एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामयुक्तोऽपि नालं मन्त्रं परीक्षितुम् ॥ ०२४ ॥

तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर्मुह्यत्यूह्येषु कर्मसु ॥ ०२५ ॥

यो वा ह्यस्थिरसङ्कल्पो बुद्धिमानागतागमः ।
उपायज्ञोऽपि नालं स कर्म यापयितुं चिरम् ॥ ०२६ ॥

केवलात्पुनराचारात्कर्मणो नोपपद्यते ।
परिमर्शो विशेषाणामश्रुतस्येह दुर्मतेः ॥ ०२७ ॥

मन्त्रिण्यननुरक्ते तु विश्वासो न हि विद्यते ।
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥ ०२८ ॥

व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः ।
मारुतोपहतच्छिद्रैः प्रविश्याग्निरिव द्रुमम्  ॥ ०२९  ॥

सङ्क्रुध्यत्येकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धस्ततः पश्चात्प्रसीदति  ॥ ०३०  ॥

तानि तान्यनुरक्तेन शक्यान्यनुतितिक्षितुम् ।
मन्त्रिणां च भवेत्क्रोधो विस्फूर्जितमिवाशनेः  ॥ ०३१  ॥

यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया ।
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम्  ॥ ०३२  ॥

अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः ।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति  ॥ ०३३  ॥

योऽमित्रैः सह संबद्धो न पौरान्बहु मन्यते ।
स सुहृत्तादृशो राज्ञो न मन्त्रं श्रोतुमर्हति  ॥ ०३४  ॥

अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
स सुहृत्क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति  ॥ ०३५  ॥

आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति  ॥ ०३६  ॥

यस्त्वल्पेनापि कार्येण सकृदाक्षारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति  ॥ ०३७  ॥

कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः ।
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति  ॥ ०३८  ॥

ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥ ०३९ ॥

सत्यवाक्शीलसंपन्नो गम्भीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ॥ ०४० ॥

संतुष्टः संमतः सत्यः शौटीरो द्वेष्यपापकः ।
मन्त्रवित्कालविच्छूरः स मन्त्रं श्रोतुमर्हति ॥ ०४१ ॥

सर्वलोकं समं शक्तः सान्त्वेन कुरुते वशे ।
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ॥ ०४२ ॥

पौरजानपदा यस्मिन्विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ ०४३ ॥

तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥ ०४४ ॥

स्वासु प्रकृतिषु छिद्रं लक्षयेरन्परस्य च ।
मन्त्रिणो मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ॥ ०४५ ॥

नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ०४६ ॥

मन्त्रग्राहा हि राज्यस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरो जनः ॥ ०४७ ॥

राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ।
स्वामिनं त्वनुवर्तन्ति वृत्त्यर्थमिह मन्त्रिणः ॥ ०४८ ॥

स विनीय मदक्रोधौ मानमीर्ष्यां च निर्वृतः ।

नित्यं पञ्चोपधातीतैर्मन्त्रयेत्सह मन्त्रिभिः ॥ ०४९ ॥

तेषां त्रयाणां विविधं विमर्शं ; बुध्येत चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च ; निवेदयेदुत्तरमन्त्रकाले ॥ ०५० ॥

धर्मार्थकामज्ञमुपेत्य पृच्छे ;द्युक्तो गुरुं ब्राह्मणमुत्तमार्थम् ।
निष्ठा कृता तेन यदा सह स्या ;त्तं तत्र मार्गं प्रणयेदसक्तम् ॥ ०५१ ॥

एवं सदा मन्त्रयितव्यमाहु ;र्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः ।
तस्मात्त्वमेवं प्रणयेः सदैव ; मन्त्रं प्रजासङ्ग्रहणे समर्थम् ॥ ०५२ ॥

न वामनाः कुब्जकृशा न खञ्जा ; नान्धा जडाः स्त्री न नपुंसकं च ।
न चात्र तिर्यङ्न पुरो न पश्चा ;न्नोर्ध्वं न चाधः प्रचरेत कश्चित् ॥ ०५३ ॥

आरुह्य वातायनमेव शून्यं ; स्थलं प्रकाशं कुशकाशहीनम् ।
वागङ्गदोषान्परिहृत्य मन्त्रं ; संमन्त्रयेत्कार्यमहीनकालम् ॥ ०५४ ॥

---

# शक्रबृहस्पतिसंवादः

## अध्याय ०८५

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर ॥ ००१ ॥

शक्र उवाच ॥

किं स्विदेकपदं ब्रह्मन्पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ ००२ ॥

बृहस्पतिरुवाच ॥

सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ ००३ ॥

एतदेकपदं शक्र सर्वलोकसुखावहम् ।
आचरन्सर्वभूतेषु प्रियो भवति सर्वदा ॥ ००४ ॥

यो हि नाभाषते किञ्चित्सततं भ्रुकुटीमुखः ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥ ००५ ॥

यस्तु पूर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥ ००६ ॥

दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥ ००७ ॥

अदाता ह्यपि भूतानां मधुरामीरयन्गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ॥ ००८ ॥

तस्मात्सान्त्वं प्रकर्तव्यं दण्डमाधित्सतामिह ।
फलं च जनयत्येवं न चास्योद्विजते जनः ॥ ००९ ॥

सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥ ०१० ॥

भीष्म उवाच ॥

इत्युक्तः कृतवान्सर्वं तथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगेतत्समाचर ॥ ०११ ॥

---

# अध्याय ०८६

युधिष्ठिर उवाच ॥

कथं स्विदिह राजेन्द्र पालयन्पार्थिवः प्रजाः ।
प्रति धर्मं विशेषेण कीर्तिमाप्नोति शाश्वतीम् ॥ ००१ ॥

भीष्म उवाच ॥

व्यवहारेण शुद्धेन प्रजापालनतत्परः ।
प्राप्य धर्मं च कीर्तिं च लोकावाप्नोत्युभौ शुचिः ॥ ००२ ॥

युधिष्ठिर उवाच ॥

कीदृशं व्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥ ००३ ॥

ये चैते पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन्पुरुषे ह्येते विद्यन्त इति मे मतिः ॥ ००४ ॥

भीष्म उवाच ॥

एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान् ।

दुर्लभः पुरुषः कश्चिदेभिर्गुणगुणैर्युतः ॥ ००५ ॥

किं तु सङ्क्षेपतः शीलं प्रयत्ने नेह दुर्लभम् ।
वक्ष्यामि तु यथामात्यान्यादृशांश्च करिष्यसि ॥ ००६ ॥

चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्सात्त्विकाञ्शुचीन् ।
त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके ॥ ००७ ॥

अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं चरेत् ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥ ००८ ॥

मतिस्मृतिसमायुक्तं विनीतं समदर्शनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥ ००९ ॥

विवर्जितानां व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥ ०१० ॥

ततः संप्रेषयेद्राष्ट्रे राष्ट्रायाथ च दर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥ ०११ ॥

न चापि गूढं कार्यं ते ग्राह्यं कार्योपघातकम् ।
कार्ये खलु विपन्ने त्वां सोऽधर्मस्तांश्च पीडयेत् ॥ ०१२ ॥

विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव ।
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥ ०१३ ॥

प्रजाः पालयतोऽसम्यगधर्मेणेह भूपतेः ।
हार्दं भयं संभवति स्वर्गश्चास्य विरुध्यते ॥ ०१४ ॥

अथ योऽधर्मतः पाति राजामात्योऽथ वात्मजः ।
धर्मासने नियुक्तः सन्धर्ममूलं नरर्षभ ॥ ०१५ ॥

कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः ॥ ०१६ ॥

बलात्कृतानां बलिभिः कृपणं बहु जल्पताम् ।
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥ ०१७ ॥

ततः साक्षिबलं साधु द्वैधे वादकृतं भवेत् ।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥ ०१८ ॥

अपराधानुरूपं च दण्डं पापेषु पातयेत् ।
उद्वेजयेद्धनैर्ऋद्धान्दरिद्रान्वधबन्धनैः ॥ ०१९ ॥

विनयैरपि दुर्वृत्तान्प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ ०२० ॥

राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।
आजीवकस्य स्तेनस्य वर्णसङ्करकस्य च ॥ ०२१ ॥

सम्यक्प्रणयतो दण्डं भूमिपस्य विशां पते ।
युक्तस्य वा नास्त्यधर्मो धर्म एवेह शाश्वतः ॥ ०२२ ॥

कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमाप्नुयात् ॥ ०२३ ॥

न परस्य श्रवादेव परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयेत वा ॥ ०२४ ॥

न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि ।
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह ॥ ०२५ ॥

यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ ०२६ ॥

कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः ॥ ०२७ ॥

एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥ ०२८ ॥

धर्मार्थशास्त्रतत्त्वज्ञः संधिविग्रहको भवेत् ।
मतिमान्धृतिमान्धीमान्रहस्यविनिगूहिता ॥ ०२९ ॥

कुलीनः सत्यसंपन्नः शक्तोऽमात्यः प्रशंसितः ।
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥ ०३० ॥

व्यूहयन्त्रायुधीयानां तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ०३१ ॥

विश्वासयेत्परांश्चैव विश्वसेन्न तु कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥ ०३२ ॥

एतच्छास्त्रार्थतत्त्वं तु तवाख्यातं मयानघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥ ०३३ ॥

---

# अध्याय ०८७

युधिष्ठिर उवाच ॥

कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

यत्र कौन्तेय वस्तव्यं सपुत्रभ्रातृबन्धुना ।
न्याय्यं तत्र परिप्रष्टुं गुप्तिं वृत्तिं च भारत ॥ ००२ ॥

तस्मात्ते वर्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ॥ ००३ ॥

षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं यद्बाहुल्यं वापि संभवेत् ॥ ००४ ॥

धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ॥ ००५ ॥

यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसङ्कुलम् ॥ ००६ ॥

विद्वांसः शिल्पिनो यत्र निचयाश्च सुसञ्चिताः ।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ००७ ॥

ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम् ।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ ००८ ॥

सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम् ।
शूराढ्यजनसंपन्नं ब्रह्मघोषानुनादितम् ॥ ००९ ॥

समाजोत्सवसंपन्नं सदापूजितदैवतम् ।

वश्यामात्यबलो राजा तत्पुरं स्वयमावसेत् ॥ ०१० ॥

तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ॥ ०११ ॥

भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत् ।
निचयान्वर्धयेत्सर्वांस्तथा यन्त्रगदागदान् ॥ ०१२ ॥

काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान् ।
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च ॥ ०१३ ॥

शणं सर्जरसं धान्यमायुधानि शरांस्तथा ।
चर्म स्नायु तथा वेत्रं मुञ्जबल्बजधन्वनान् ॥ ०१४ ॥

आशयाश्चोदपानाश्च प्रभूतसलिला वराः ।
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः ॥ ०१५ ॥

सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥ ०१६ ॥

प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः ।
कुलीनाः सत्त्वसंपन्ना युक्ताः सर्वेषु कर्मसु ॥ ०१७ ॥

पूजयेद्धार्मिकान्राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान्स्वकर्मसु ॥ ०१८ ॥

बाह्यमाभ्यन्तरं चैव पौरजानपदं जनम् ।
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ ०१९ ॥

चारान्मन्त्रं च कोशं च मन्त्रं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ ०२० ॥

उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ ०२१ ॥

ततस्तथा विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान्पुजयता नित्यं द्विषतश्च निगृह्णता ॥ ०२२ ॥

यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम् ॥ ०२३ ॥

कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ ०२४ ॥

आश्रमेषु यथाकालं चेलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृत्यानवमन्य च ॥ ०२५ ॥

आत्मानं सर्वकार्याणि तापसे राज्यमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥ ०२६ ॥

सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥ ०२७ ॥

तस्मिन्कुर्वीत विश्वासं राजा कस्याञ्चिदापदि ।
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥ ०२८ ॥

तस्मिन्निधीनादधीत प्रज्ञां पर्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ ०२९ ॥

अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।
अटवीष्वपरः कार्यः सामन्तनगरेषु च ॥ ०३० ॥

तेषु सत्कारसंस्कारान्संविभागांश्च कारयेत् ।
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥ ०३१ ॥

ते कस्याञ्चिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः ॥ ०३२ ॥

एष ते लक्षणोद्देशः सङ्क्षेपेण प्रकीर्तितः ।
यादृशं नगरं राजा स्वयमावस्तुमर्हति ॥ ०३३ ॥

---

# अध्याय ०८८

युधिष्ठिर उवाच ॥

राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव च सङ्ग्रहम् ।
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ ००१ ॥

भीष्म उवाच ॥

राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव च सङ्ग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ ००२ ॥

ग्रामस्याधिपतिः कार्यो दशग्राम्यस्तथापरः ।
द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत् ॥ ००३ ॥

ग्रामे यान्ग्रामदोषांश्च ग्रामिकः परिपालयेत् ।
तान्ब्रूयाद्दशपायासौ स तु विंशतिपाय वै ॥ ००४ ॥

सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने ।

ग्रामाणां शतपालाय सर्वमेव निवेदयेत्  ॥ ००५  ॥

यानि ग्रामीणभोज्यानि ग्रामिकस्तान्युपाश्नुयात् ।
दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः  ॥ ००६  ॥

ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ।
महान्तं भरतश्रेष्ठ सुस्फीतजनसङ्कुलम्  ॥ ००७  ॥

तत्र ह्यनेकमायत्तं राज्ञो भवति भारत  ॥ ००७  ॥

शाखानगरमर्हस्तु सहस्रपतिरुत्तमम् ।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रिय उद्यतः  ॥ ००८  ॥

तथा यद्ग्रामकृत्यं स्याद्ग्रामिकृत्यं च ते स्वयम् ।
धर्मज्ञः सचिवः कश्चित्तत्प्रपश्येदतन्द्रितः  ॥ ००९  ॥

नगरे नगरे च स्यादेकः सर्वार्थचिन्तकः ।
उच्चैःस्थाने घोररूपो नक्षत्राणामिव ग्रहः  ॥ ०१०  ॥

भवेत्स तान्परिक्रामेत्सर्वानेव सदा स्वयम्  ॥ ०१०  ॥

विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजः कारयेत्करान्  ॥ ०११  ॥

उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ।
शिल्पप्रतिकरानेव शिल्पिनः प्रति कारयेत्  ॥ ०१२  ॥

उच्चावचकरा न्याय्याः पूर्वराज्ञां युधिष्ठिर ।
यथा यथा न हीयेरंस्तथा कुर्यान्महीपतिः  ॥ ०१३  ॥

फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।

फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तयेत्  ॥ ०१४  ॥

यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः  ॥ ०१५  ॥

नोच्छिन्द्यादात्मनो मूलं परेषां वापि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा संप्रीतिदर्शनः  ॥ ०१६  ॥

प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् ।
प्रद्विष्टस्य कुतः श्रेयः संप्रियो लभते प्रियम्  ॥ ०१७  ॥

वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः पीडां सहति भारत  ॥ ०१८  ॥

न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत्  ॥ ०१९  ॥

यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः ।
सञ्जातमुपजीवन्स लभते सुमहत्फलम्  ॥ ०२०  ॥

आपदर्थं हि निचयान्राजान इह चिन्वते ।
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा  ॥ ०२१  ॥

पौरजानपदान्सर्वान्संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वानभ्यन्तरानपि  ॥ ०२२  ॥

बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् ।
एवं न संप्रकुप्यन्ते जनाः सुखितदुःखिताः  ॥ ०२३  ॥

प्रागेव तु करादानमनुभाष्य पुनः पुनः ।
संनिपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत्  ॥ ०२४  ॥

इयमापत्समुत्पन्ना परचक्रभयं महत् ।
अपि नान्ताय कल्पेत वेणोरिव फलागमः ॥ ०२५ ॥

अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥ ०२६ ॥

अस्यामापदि घोरायां संप्राप्ते दारुणे भये ।
परित्राणाय भवतां प्रार्थयिष्ये धनानि वः ॥ ०२७ ॥

प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ ०२८ ॥

कलत्रमादितः कृत्वा नश्येत्स्वं स्वयमेव हि ।
अपि चेत्पुत्रदारार्थमर्थसञ्चय इष्यते ॥ ०२९ ॥

नन्दामि वः प्रभावेन पुत्राणामिव चोदये ।
यथाशक्त्यनुगृह्णामि राष्ट्रस्यापीडया च वः ॥ ०३० ॥

आपत्स्वेव च वोढव्यं भवद्भिः सद्गवैरिव ।
न वः प्रियतरं कार्यं धनं कस्याञ्चिदापदि ॥ ०३१ ॥

इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्युगमादाय कालवित् ॥ ०३२ ॥

प्रचारं भृत्यभरणं व्ययं गोग्रामतो भयम् ।
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करान् ॥ ०३३ ॥

उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥ ०३४ ॥

सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।
गोमिनां पार्थ कर्तव्यं संविभागाः प्रियाणि च ॥ ०३५ ॥

अजस्रमुपयोक्तव्यं फलं गोमिषु सर्वतः ।
प्रभावयति राष्ट्रं च व्यवहारं कृषिं तथा ॥ ०३६ ॥

तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान्संप्रणयन्मृदून् ॥ ०३७ ॥

सर्वत्र क्षेमचरणं सुलभं तात गोमिभिः ।
न ह्यतः सदृशं किञ्चिद्धनमस्ति युधिष्ठिर ॥ ०३८ ॥

---

# अध्याय ०८९

युधिष्ठिर उवाच ॥

यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत तदा तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

यथादेशं यथाकालमपि चैव यथाबलम् ।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥ ००२ ॥

यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा धर्म्याणि सर्वाणि राजा राष्ट्रे प्रवर्तयेत् ॥ ००३ ॥

मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न विपातयेत् ।

वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥ ००४ ॥

जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिप ।
व्याघ्रीव च हरेत्पुत्रमदष्ट्वा मा पतेदिति ॥ ००५ ॥

अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः कामं वृद्धिं समाचरेत् ॥ ००६ ॥

दमयन्निव दम्यानां शश्वद्भारं प्रवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥ ००७ ॥

सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः ।
उचितेनैव भोक्तव्यास्ते भविष्यन्ति यत्नतः ॥ ००८ ॥

तस्मात्सर्वसमारम्भो दुर्लभः पुरुषव्रजः ।
यथामुख्यान्सान्त्वयित्वा भोक्तव्य इतरो जनः ॥ ००९ ॥

ततस्तान्भेदयित्वाथ परस्परविवक्षितान् ।
भुञ्जीत सान्त्वयित्वैव यथासुखमयत्नतः ॥ ०१० ॥

न चास्थाने न चाकाले करानेभ्योऽनुपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥ ०११ ॥

उपायान्प्रब्रवीम्येतान्न मे माया विवक्षिता ।
अनुपायेन दमयन्प्रकोपयति वाजिनः ॥ ०१२ ॥

पानागाराणि वेशाश्च वेशप्रापणिकास्तथा ।
कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः ॥ ०१३ ॥

नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः ।
एते राष्ट्रे हि तिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः ॥ ०१४ ॥

न केनचिद्याचितव्यः कश्चित्किञ्चिदनापदि ।
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥ ०१५ ॥

सर्वे तथा न जीवेयुर्न कुर्युः कर्म चेदिह ।
सर्व एव त्रयो लोका न भवेयुरसंशयम् ॥ ०१६ ॥

प्रभुर्नियमने राजा य एतान्न नियच्छति ।
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ॥ ०१७ ॥

तथा कृतस्य धर्मस्य चतुर्भागमुपाश्नुते ॥ ०१७ ॥

स्थानान्येतानि सङ्गम्य प्रसङ्गे भूतिनाशनः ।
कामप्रसक्तः पुरुषः किमकार्यं विवर्जयेत् ॥ ०१८ ॥

आपद्येव तु याचेरन्येषां नास्ति परिग्रहः ।
दातव्यं धर्मतस्तेभ्यस्त्वनुक्रोशाद्दयार्थिना ॥ ०१९ ॥

मा ते राष्ट्रे याचनका मा ते भूयुश्च दस्यवः ।
इष्टादातार एवैते नैते भूतस्य भावकाः ॥ ०२० ॥

ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
ते ते राष्ट्रे प्रवर्तन्तां मा भूतानामभावकाः ॥ ०२१ ॥

दण्ड्यास्ते च महाराज धनादानप्रयोजनाः ।
प्रयोगं कारयेयुस्तान्यथा बलिकरांस्तथा ॥ ०२२ ॥

कृषिगोरक्ष्यवाणिज्यं यच्चान्यत्किञ्चिदीदृशम् ।
पुरुषैः कारयेत्कर्म बहुभिः सह कर्मिभिः ॥ ०२३ ॥

नरश्चेत्कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः ।

संशयं लभते किञ्चित्तेन राजा विगर्ह्यते ॥ ०२४ ॥

धनिनः पूजयेन्नित्यं यानाच्छादनभोजनैः ।
वक्तव्याश्चानुगृह्णीध्वं पूजाः सह मयेति ह ॥ ०२५ ॥

अङ्गमेतन्महद्राज्ञां धनिनो नाम भारत ।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥ ०२६ ॥

प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च ।
तपस्वी सत्यवादी च बुद्धिमांश्चाभिरक्षति ॥ ०२७ ॥

तस्मादेतेषु सर्वेषु प्रीतिमान्भव पार्थिव ।
सत्यमार्जवमक्रोधमानृशंस्यं च पालय ॥ ०२८ ॥

एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसे ।
सत्यार्जवपरो राजन्मित्रकोशसमन्वितः ॥ ०२९ ॥

---

# अध्याय ०९०

भीष्म उवाच ॥

वनस्पतीन्भक्ष्यफलान्न छिन्द्युर्विषये तव ।
ब्राह्मणानां मूलफलं धर्म्यमाहुर्मनीषिणः ॥ ००१ ॥

ब्राह्मणेभ्योऽतिरिक्तं च भुञ्जीरन्नितरे जनाः ।
न ब्राह्मणोपरोधेन हरेदन्यः कथञ्चन ॥ ००२ ॥

विप्रश्चेत्त्यागमातिष्ठेदाख्यायावृत्तिकर्शितः ।

परिकल्प्यास्य वृत्तिः स्यात्सदारस्य नराधिप ॥ ००३ ॥

स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि ।
कस्मिन्निदानीं मर्यादामयं लोकः करिष्यति ॥ ००४ ॥

असंशयं निवर्तेत न चेद्वक्ष्यत्यतः परम् ।
पूर्वं परोक्षं कर्तव्यमेतत्कौन्तेय शासनम् ॥ ००५ ॥

आहुरेतज्जना ब्रह्मन्न चैतच्छ्रद्दधाम्यहम् ।
निमन्त्र्यश्च भवेद्भोगैरवृत्त्या चेत्तदाचरेत् ॥ ००६ ॥

कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनम् ।
ऊर्ध्वं चैव त्रयी विद्या सा भूतान्भावयत्युत ॥ ००७ ॥

तस्यां प्रयतमानायां ये स्युस्तत्परिपन्थिनः ।
दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ॥ ००८ ॥

शत्रूञ्जहि प्रजा रक्ष यजस्व क्रतुभिर्नृप ।
युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ॥ ००९ ॥

संरक्ष्यान्पालयेद्राजा यः स राजार्यकृत्तमः ।
ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ॥ ०१० ॥

सदैव राज्ञा बोद्धव्यं सर्वलोकाद्युधिष्ठिर ।
तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ॥ ०११ ॥

अन्तरेभ्यः परान्रक्षन्परेभ्यः पुनरन्तरान् ।
परान्परेभ्यः स्वान्स्वेभ्यः सर्वान्पालय नित्यदा ॥ ०१२ ॥

आत्मानं सर्वतो रक्षन्राजा रक्षेत मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्हि विदुषो जनाः ॥ ०१३ ॥

किं छिद्रं कोऽनुषङ्गो मे किं वास्त्यविनिपातितम् ।
कुतो मामास्त्रवेद्दोष इति नित्यं विचिन्तयेत् ॥ ०१४ ॥

गुप्तैश्चारैरनुमतैः पृथिवीमनुचारयेत् ।
सुनीतं यदि मे वृत्तं प्रशंसन्ति न वा पुनः ॥ ०१५ ॥

कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥ ०१५ ॥

धर्मज्ञानां धृतिमतां सङ्ग्रामेष्वपलायिनाम् ।
राष्ट्रं च येऽनुजीवन्ति ये च राज्ञोऽनुजीविनः ॥ ०१६ ॥

अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये च त्वाभिप्रशंसेयुर्निन्देयुरथ वा पुनः ॥ ०१७ ॥

सर्वान्सुपरिणीतांस्तान्कारयेत युधिष्ठिर ॥ ०१७ ॥

एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ ०१८ ॥

तुल्यबाहुबलानां च गुणैरपि निषेविनाम् ।
कथं स्यादधिकः कश्चित्स तु भुञ्जीत मानवान् ॥ ०१९ ॥

ये चरा ह्यचरानद्युरदंष्ट्रान्दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजगा भुजगानिव ॥ ०२० ॥

एतेभ्यश्चाप्रमत्तः स्यात्सदा यत्तो युधिष्ठिर ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ०२१ ॥

कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ते करार्दिताः ।
क्रीणन्तो बहु वाल्पेन कान्तारकृतनिश्रमाः ॥ ०२२ ॥

कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः ।
ये वहन्ति धुरं राज्ञां संभरन्तीतरानपि ॥ ०२३ ॥

इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा ।
मनुष्योरगरक्षांसि वयांसि पशवस्तथा ॥ ०२४ ॥

एषा ते राष्ट्रवृत्तिश्च राष्ट्रगुप्तिश्च भारत ।
एतमेवार्थमाश्रित्य भूयो वक्ष्यामि पाण्डव ॥ ०२५ ॥

---

# उतथ्यगीता

## अध्याय ०९१

भीष्म उवाच ॥

यानङ्गिराः क्षत्रधर्मानुतथ्यो ब्रह्मवित्तमः ।
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ॥ ००१ ॥

स यथानुशशासैनमुतथ्यो ब्रह्मवित्तमः ।
तत्ते सर्वं प्रवक्ष्यामि निखिलेन युधिष्ठिर ॥ ००२ ॥

उतथ्य उवाच ॥

धर्माय राजा भवति न कामकरणाय तु ।
मान्धातरेवं जानीहि राजा लोकस्य रक्षिता ॥ ००३ ॥

राजा चरति वै धर्मं देवत्वायैव गच्छति ।
न चेद्धर्मं स चरति नरकायैव गच्छति ॥ ००४ ॥

धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति ।
तं राजा साधु यः शास्ति स राजा पृथिवीपतिः ॥ ००५ ॥

राजा परमधर्मात्मा लक्ष्मीवान्पाप उच्यते ।
देवाश्च गर्हां गच्छन्ति धर्मो नास्तीति चोच्यते ॥ ००६ ॥

अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते ।
तदेव मङ्गलं सर्वं लोकः समनुवर्तते ॥ ००७ ॥

उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् ।
भयमाहुर्दिवारात्रं यदा पापो न वार्यते ॥ ००८ ॥

न वेदाननुवर्तन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ॥ ००९ ॥

वध्यानामिव सर्वेषां मनो भवति विह्वलम् ।
मनुष्याणां महाराज यदा पापो न वार्यते ॥ ०१० ॥

उभौ लोकावभिप्रेक्ष्य राजानमृषयः स्वयम् ।
असृजन्सुमहद्भूतमयं धर्मो भविष्यति ॥ ०११ ॥

यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते ।
यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः ॥ ०१२ ॥

वृषो हि भगवान्धर्मो यस्तस्य कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥ ०१३ ॥

धर्मे वर्धति वर्धन्ति सर्वभूतानि सर्वदा ।

तस्मिन्ह्रसति हीयन्ते तस्माद्धर्मं प्रवर्धयेत्  ॥ ०१४  ॥

धनात्स्रवति धर्मो हि धारणाद्वेति निश्चयः ।
अकार्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः  ॥ ०१५  ॥

प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयंभुवा ।
तस्मात्प्रवर्धयेद्धर्मं प्रजानुग्रहकारणात्  ॥ ०१६  ॥

तस्माद्धि राजशार्दूल धर्मः श्रेष्ठ इति स्मृतः ।
स राजा यः प्रजाः शास्ति साधुकृत्पुरुषर्षभः  ॥ ०१७  ॥

कामक्रोधावनादृत्य धर्ममेवानुपालयेत् ।
धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम  ॥ ०१८  ॥

धर्मस्य ब्राह्मणा योनिस्तस्मात्तान्पूजयेत्सदा ।
ब्राह्मणानां च मान्धातः कामान्कुर्यादमत्सरी  ॥ ०१९  ॥

तेषां ह्यकामकरणाद्राज्ञः सञ्जायते भयम् ।
मित्राणि च न वर्धन्ते तथामित्रीभवन्त्यपि  ॥ ०२०  ॥

ब्राह्मणान्वै तदासूयाद्यदा वैरोचनो बलिः ।
अथास्माच्छ्रीरपाक्रामद्यास्मिन्नासीत्प्रतापिनी  ॥ ०२१  ॥

ततस्तस्मादपक्रम्य सागच्छत्पाकशासनम् ।
अथ सोऽन्वतपत्पश्चाच्छ्रियं दृष्ट्वा पुरंदरे  ॥ ०२२  ॥

एतत्फलमसूयाया अभिमानस्य चाभिभो ।
तस्माद्बुध्यस्व मान्धातर्मा त्वा जह्यात्प्रतापिनी  ॥ ०२३  ॥

दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः ।
तेन देवासुरा राजन्नीताः सुबहुशो वशम्  ॥ ०२४  ॥

राजर्षयश्च बहवस्तस्माद्बुध्यस्व पार्थिव ।
राजा भवति तं जित्वा दासस्तेन पराजितः ॥ ०२५ ॥

स यथा दर्पसहितमधर्मं नानुसेवसे ।
तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि ॥ ०२६ ॥

मत्तात्प्रमत्तात्पोगण्डादुन्मत्ताच्च विशेषतः ।
तदभ्यासादुपावर्तादहितानां च सेवनात् ॥ ०२७ ॥

निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ॥ ०२८ ॥

एतेभ्यो नित्ययत्तः स्यान्नक्तञ्चर्यां च वर्जयेत् ।
अत्यायं चातिमानं च दम्भं क्रोधं च वर्जयेत् ॥ ०२९ ॥

अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च ।
परभार्यासु कन्यासु नाचरेन्मैथुनं नृपः ॥ ०३० ॥

कुलेषु पापरक्षांसि जायन्ते वर्णसङ्करात् ।
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥ ०३१ ॥

एते चान्ये च जायन्ते यदा राजा प्रमाद्यति ।
तस्माद्राज्ञा विशेषेण वर्तितव्यं प्रजाहिते ॥ ०३२ ॥

क्षत्रियस्य प्रमत्तस्य दोषः सञ्जायते महान् ।
अधर्माः संप्रवर्तन्ते प्रजासङ्करकारकाः ॥ ०३३ ॥

अशीते विद्यते शीतं शीते शीतं न विद्यते ।
अवृष्टिरतिवृष्टिश्च व्याधिश्चाविशति प्रजाः ॥ ०३४ ॥

नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथापरे ।
उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ ०३५ ॥

अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति ।
प्रजाश्च तस्य क्षीयन्ते ताश्च सोऽनु विनश्यति ॥ ०३६ ॥

द्वावाददाते ह्येकस्य द्वयोश्च बहवोऽपरे ।
कुमार्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥ ०३७ ॥

ममैतदिति नैकस्य मनुष्येष्ववतिष्ठते ।
त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठति ॥ ०३८ ॥

---

# अध्याय ०९२

उतथ्य उवाच ॥

कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।
संपद्यदैषा भवति सा बिभर्ति सुखं प्रजाः ॥ ००१ ॥

यो न जानाति निर्हन्तुं वस्त्राणां रजको मलम् ।
रक्तानि वा शोधयितुं यथा नास्ति तथैव सः ॥ ००२ ॥

एवमेव द्विजेन्द्राणां क्षत्रियाणां विशामपि ।
शूद्राश्चतुर्णां वर्णानां नानाकर्मस्ववस्थिताः ॥ ००३ ॥

कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ॥ ००४ ॥

तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम् ।
शीलदोषान्विनिर्हन्तुं स पिता स प्रजापतिः ॥ ००५ ॥

कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ ००६ ॥

चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च ।
सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमाद्यति ॥ ००७ ॥

राजैव कर्ता भूतानां राजैव च विनाशकः ।
धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः ॥ ००८ ॥

राज्ञो भार्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा ।
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥ ००९ ॥

हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः ।
अधर्मवृत्ते नृपतौ सर्वे सीदन्ति पार्थिव ॥ ०१० ॥

दुर्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते ।
अबलं तन्महद्भूतं यस्मिन्सर्वं प्रतिष्ठितम् ॥ ०११ ॥

यच्च भूतं स भजते भूता ये च तदन्वयाः ।
अधर्मस्थे हि नृपतौ सर्वे सीदन्ति पार्थिव ॥ ०१२ ॥

दुर्बलस्य हि यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ ०१३ ॥

दुर्बलांस्तात बुध्येथा नित्यमेवाविमानितान् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुः सबान्धवम् ॥ ०१४ ॥

न हि दुर्बलदग्धस्य कुले किञ्चित्प्ररोहति ।

आमूलं निर्दहत्येव मा स्म दुर्बलमासदः ॥ ०१५ ॥

अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम् ।
बलस्याबलदग्धस्य न किञ्चिदवशिष्यते ॥ ०१६ ॥

विमानितो हतोत्क्रुष्टस्त्रातारं चेन्न विन्दति ।
अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥ ०१७ ॥

मा स्म तात बले स्थेया बाधिष्ठा मापि दुर्बलम् ।
मा त्वा दुर्बलचक्षूंषि धक्ष्यन्त्यग्निरिवाश्रयम् ॥ ०१८ ॥

यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशासताम् ॥ ०१९ ॥

यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥ ०२० ॥

यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति ।
महान्दैवकृतस्तत्र दण्डः पतति दारुणः ॥ ०२१ ॥

युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुदोषेण राजानं घ्नन्ति तादृशाः ॥ ०२२ ॥

राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् ॥ ०२३ ॥

यदा युक्ता नयन्त्यर्थान्कामादर्थवशेन वा ।
कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥ ०२४ ॥

महावृक्षो जायते वर्धते च ; तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश्छिद्यते दह्यते वा ; तदाश्रया अनिकेता भवन्ति ॥ ०२५ ॥

यदा राष्ट्रे धर्ममग्र्यं चरन्ति ; संस्कारं वा राजगुणं ब्रुवाणाः ।
तैरेवाधर्मश्चरितो धर्ममोहा ;त्तूर्णं जह्यात्सुकृतं दुष्कृतं च ॥ ०२६ ॥

यत्र पापा ज्ञायमानाश्चरन्ति ; सतां कलिर्विन्दति तत्र राज्ञः ।
यदा राजा शास्ति नरान्नशिष्या ;न्न तद्राज्यं वर्धते भूमिपाल ॥ ०२७ ॥

यश्चामात्यं मानयित्वा यथार्हं ; मन्त्रे च युद्धे च नृपो नियुञ्ज्यात् ।
प्रवर्धते तस्य राष्ट्रं नृपस्य ; भुङ्क्ते महीं चाप्यखिलां चिराय ॥ ०२८ ॥

अत्रापि सुकृतं कर्म वाचं चैव सुभाषिताम् ।
समीक्ष्य पूजयन्राजा धर्मं प्राप्नोत्यनुत्तमम् ॥ ०२९ ॥

संविभज्य यदा भुङ्क्ते न चान्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ०३० ॥

त्रायते हि यदा सर्वं वाचा कायेन कर्मणा ।
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥ ०३१ ॥

यदा शारणिकान्राजा पुत्रवत्परिरक्षति ।
भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ॥ ०३२ ॥

यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयान्वितः ।
कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ॥ ०३३ ॥

कृपणानाथवृद्धानां यदाश्रु व्यपमार्ष्टि वै ।
हर्षं सञ्जनयन्नृणां स राज्ञो धर्म उच्यते ॥ ०३४ ॥

विवर्धयति मित्राणि तथारींश्चापकर्षति ।
संपूजयति साधूंश्च स राज्ञो धर्म उच्यते ॥ ०३५ ॥

सत्यं पालयति प्राप्त्या नित्यं भूमिं प्रयच्छति ।
पूजयत्यतिथीन्भृत्यान्स राज्ञो धर्म उच्यते ॥ ०३६ ॥

निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ ।
अस्मि.ण्ल्लोके परे चैव राजा तत्प्राप्नुते फलम् ॥ ०३७ ॥

यमो राजा धार्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन्भवति प्राणान्नसंयच्छंस्तु पापकः ॥ ०३८ ॥

ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमन्य च ।
यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ॥ ०३९ ॥

यमो यच्छति भूतानि सर्वाण्येवाविशेषतः ।
तस्य राज्ञानुकर्तव्यं यन्तव्या विधिवत्प्रजाः ॥ ०४० ॥

सहस्राक्षेण राजा हि सर्व एवोपमीयते ।
स पश्यति हि यं धर्मं स धर्मः पुरुषर्षभ ॥ ०४१ ॥

अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम् ।
भूतानां सत्त्वजिज्ञासां साध्वसाधु च सर्वदा ॥ ०४२ ॥

सङ्ग्रहः सर्वभूतानां दानं च मधुरा च वाक् ।
पौरजानपदाश्चैव गोप्तव्याः स्वा यथा प्रजाः ॥ ०४३ ॥

न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम् ।
भारो हि सुमहांस्तात राज्यं नाम सुदुष्करम् ॥ ०४४ ॥

तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम् ।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनापि वा ॥ ०४५ ॥

अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः ।

सर्वा बुद्धीः परीक्षेथास्तापसाश्रमिणामपि ॥ ०४६ ॥

ततस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम् ।
स्वदेशे परदेशे वा न ते धर्मो विनश्यति ॥ ०४७ ॥

धर्मश्चार्थश्च कामश्च धर्म एवोत्तरो भवेत् ।
अस्मि.ण्ल्लोके परे चैव धर्मवित्सुखमेधते ॥ ०४८ ॥

त्यजन्ति दारान्प्राणांश्च मनुष्याः प्रतिपूजिताः ।
सङ्ग्रहश्चैव भूतानां दानं च मधुरा च वाक् ॥ ०४९ ॥

अप्रमादश्च शौचं च तात भूतिकरं महत् ।
एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ॥ ०५० ॥

अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः ।
नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ॥ ०५१ ॥

एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ।
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय ॥ ०५२ ॥

तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम् ।
आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ ॥ ०५३ ॥

धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत ।
देवर्षिपितृगन्धर्वाः कीर्तयन्त्यमितौजसः ॥ ०५४ ॥

भीष्म उवाच ॥

स एवमुक्तो मान्धाता तेनोतथ्येन भारत ।
कृतवानविशङ्कस्तदेकः प्राप च मेदिनीम् ॥ ०५५ ॥

भवानपि तथा सम्यङ्मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्षन्स्वर्गे स्थानमवाप्स्यसि ॥ ०५६ ॥

---

# वामदेवगीता

## अध्याय ०९३

युधिष्ठिर उवाच ॥

कथं धर्मे स्थातुमिच्छन्राजा वर्तेत धार्मिकः ।
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ॥ ००२ ॥

राजा वसुमना नाम कौसल्यो बलवाञ्शुचिः ।
महर्षिं परिपप्रच्छ वामदेवं यशस्विनम् ॥ ००३ ॥

धर्मार्थसहितं वाक्यं भगवन्ननुशाधि माम् ।
येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्मतः ॥ ००४ ॥

तमब्रवीद्वामदेवस्तपस्वी जपतां वरः ।
हेमवर्णमुपासीनं ययातिमिव नाहुषम् ॥ ००५ ॥

धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।

धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम्  ॥ ००६  ॥

अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः ।
ऋतां च कुरुते बुद्धिं स धर्मेण विरोचते  ॥ ००७  ॥

अधर्मदर्शी यो राजा बलादेव प्रवर्तते ।
क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ  ॥ ००८  ॥

असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा ।
सहैव परिवारेण क्षिप्रमेवावसीदति  ॥ ००९  ॥

अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति  ॥ ०१०  ॥

अथाददानः कल्याणमनसूयुर्जितेन्द्रियः ।
वर्धते मतिमान्राजा स्रोतोभिरिव सागरः  ॥ ०११  ॥

न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः ।
बुद्धितो मित्रतश्चापि सततं वसुधाधिपः  ॥ ०१२  ॥

एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता ।
एतानि श्रृण्व.ण्ल्लभते यशः कीर्तिं श्रियः प्रजाः  ॥ ०१३  ॥

एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः ।
अर्थान्समीक्ष्यारभते स ध्रुवं महदश्नुते  ॥ ०१४  ॥

अदाता ह्यनतिस्नेहो दण्डेनावर्तयन्प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति  ॥ ०१५  ॥

अथ पापं कृतं बुद्ध्या न च पश्यत्यबुद्धिमान् ।
अकीर्त्यापि समायुक्तो मृतो नरकमश्नुते  ॥ ०१६  ॥

अथ मानयितुर्दातुः शुक्लस्य रसवेदिनः ।
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥ ०१७ ॥

यस्य नास्ति गुरुर्धर्मे न चान्याननुपृच्छति ।
सुखतन्त्रोऽर्थलाभेषु न चिरं महदश्नुते ॥ ०१८ ॥

गुरुप्रधानो धर्मेषु स्वयमर्थान्ववेक्षिता ।
धर्मप्रधानो लोकेषु सुचिरं महदश्नुते ॥ ०१९ ॥

---

# अध्याय ०९४

वामदेव उवाच ॥

यत्राधर्मं प्रणयते दुर्बले बलवत्तरः ।
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ॥ ००१ ॥

राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम् ।
अविनीतमनुष्यं तत्क्षिप्रं राष्ट्रं विनश्यति ॥ ००२ ॥

यद्वृत्तिमुपजीवन्ति प्रकृतिस्थस्य मानवाः ।
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥ ००३ ॥

साहसप्रकृतिर्यत्र कुरुते किञ्चिदुल्बणम् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ ००४ ॥

योऽत्यन्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते ।

जितानामजितानां च क्षत्रधर्मादपैति सः ॥ ००५ ॥

द्विषन्तं कृतकर्माणं गृहीत्वा नृपती रणे ।
यो न मानयते द्वेषात्क्षत्रधर्मादपैति सः ॥ ००६ ॥

शक्तः स्यात्सुमुखो राजा कुर्यात्कारुण्यमापदि ।
प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ॥ ००७ ॥

अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत् ।
नचिरेण प्रियः स स्याद्योऽप्रियः प्रियमाचरेत् ॥ ००८ ॥

मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ००९ ॥

नापत्रपेत प्रश्नेषु नाभिभव्यां गिरं सृजेत् ।
न त्वरेत न चासूयेत्तथा सङ्गृह्यते परः ॥ ०१० ॥

प्रिये नातिभृशं हृष्येदप्रिये न च सञ्ज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ॥ ०११ ॥

यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ।
तस्य कर्माणि सिध्यन्ति न च संत्यज्यते श्रिया ॥ ०१२ ॥

निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस्तद्वै वृत्तं सतामिह ॥ ०१३ ॥

अप्रकीर्णेन्द्रियं प्राज्ञमत्यन्तानुगतं शुचिम् ।
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥ ०१४ ॥

एवमेव गुणैर्युक्तो यो न रज्यति भूमिपम् ।
भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि ॥ ०१५ ॥

मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम्  ॥ ०१६  ॥

त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् ।
कार्ये महति यो युञ्ज्याद्धीयते स नृपः श्रियः  ॥ ०१७  ॥

रक्षितात्मा तु यो राजा रक्ष्यान्यश्चानुरक्षति ।
प्रजाश्च तस्य वर्धन्ते ध्रुवं च महदश्नुते  ॥ ०१८  ॥

ये केचिद्भूमिपतयस्तान्सर्वानन्ववेक्षयेत् ।
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते  ॥ ०१९  ॥

अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत् ।
श्येनानुचरितैर्ह्येते निपतन्ति प्रमाद्यतः  ॥ ०२०  ॥

दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः ।
अबलानभियुञ्जीत न तु ये बलवत्तराः  ॥ ०२१  ॥

विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयन् ।
आहवे निधनं कुर्याद्राजा धर्मपरायणः  ॥ ०२२  ॥

मरणान्तमिदं सर्वं नेह किञ्चिदनामयम् ।
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत्  ॥ ०२३  ॥

रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रचिन्त्यं सुखं काले पञ्चभिर्वर्धते मही  ॥ ०२४  ॥

एतानि यस्य गुप्तानि स राजा राजसत्तम ।
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम्  ॥ ०२५  ॥

नैतान्येकेन शक्यानि सातत्येनान्ववेक्षितुम् ।
एतेष्वाप्तान्प्रतिष्ठाप्य राजा भुङ्क्ते महीं चिरम् ॥ ०२६ ॥

दातारं संविभक्तारं मार्दवोपगतं शुचिम् ।
असंत्यक्तमनुष्यं च तं जनाः कुर्वते प्रियम् ॥ ०२७ ॥

यस्तु निःश्रेयसं ज्ञात्वा ज्ञानं तत्प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ ०२८ ॥

योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि विमना नचिरादिव ॥ ०२९ ॥

अग्राम्यचरितां बुद्धिमत्यन्तं यो न बुध्यते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ ०३० ॥

मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् ।
स वै व्यसनमासाद्य गाधमार्तो न विन्दति ॥ ०३१ ॥

यः कल्याणगुणाञ्ज्ञातीन्द्वेषान्नैवाभिमन्यते ।
अदृढात्मा दृढक्रोधो नास्यार्थो रमतेऽन्तिके ॥ ०३२ ॥

अथ यो गुणसंपन्नान्हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ०३३ ॥

नाकाले प्रणयेदर्थान्नाप्रिये जातु सञ्ज्वरेत् ।
प्रिये नातिभृशं हृष्येद्युज्येतारोग्यकर्मणि ॥ ०३४ ॥

के मानुरक्ता राजानः के भयात्समुपाश्रिताः ।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ॥ ०३५ ॥

न जातु बलवान्भूत्वा दुर्बले विश्वसेत्कचित् ।

भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ०३६ ॥

अपि सर्वैर्गुणैर्युक्तं भर्तारं प्रियवादिनम् ।
अभिद्रुह्यति पापात्मा तस्माद्धि विभिषेज्जनात् ॥ ०३७ ॥

एतां राजोपनिषदं ययातिः स्माह नाहुषः ।
मनुष्यविजये युक्तो हन्ति शत्रूननुत्तमान् ॥ ०३८ ॥

---

# अध्याय ०९५

वामदेव उवाच ॥

अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः ।
जघन्यमाहुर्विजयं यो युद्धेन नराधिप ॥ ००१ ॥

न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति ।
न हि दुर्बलमूलस्य राज्ञो लाभो विधीयते ॥ ००२ ॥

यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।
संतुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ॥ ००३ ॥

यस्य योधाः सुसंतुष्टाः सान्त्विताः सूपधास्थिताः ।
अल्पेनापि स दण्डेन महीं जयति भूमिपः ॥ ००४ ॥

पौरजानपदा यस्य स्वनुरक्ताः सुपूजिताः ।
सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ॥ ००५ ॥

प्रभावकालावधिकौ यदा मन्येत चात्मनः ।

तदा लिप्सेत मेधावी परभूमिं धनान्युत ॥ ००६ ॥

भोगेष्वदयमानस्य भूतेषु च दयावतः ।
वर्धते त्वरमाणस्य विषयो रक्षितात्मनः ॥ ००७ ॥

तक्षत्यात्मानमेवैष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ॥ ००८ ॥

न वै द्विषन्तः क्षीयन्ते राज्ञो नित्यमपि घ्नतः ।
क्रोधं नियन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥ ००९ ॥

यदार्यजनविद्विष्टं कर्म तन्नाचरेद्बुधः ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥ ०१० ॥

नैनमन्येऽवजानन्ति नात्मना परितप्यते ।
कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ॥ ०११ ॥

इदंवृत्तं मनुष्येषु वर्तते यो महीपतिः ।
उभौ लोकौ विनिर्जित्य विजये संप्रतिष्ठते ॥ ०१२ ॥

भीष्म उवाच ॥

इत्युक्तो वामदेवेन सर्वं तत्कृतवान्नृपः ।
तथा कुर्वंस्त्वमप्येतौ लोकौ जेता न संशयः ॥ ०१३ ॥

---

# अध्याय ०९६

युधिष्ठिर उवाच ॥

अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि ।
कस्तस्य धर्म्यो विजय एतत्पृष्टो ब्रवीहि मे ॥ ००१ ॥

भीष्म उवाच ॥

ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ॥ ००२ ॥

मम धर्म्यं बलिं दत्त किं वा मां प्रतिपत्स्यथ ।
ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ॥ ००३ ॥

ते चेदक्षत्रियाः सन्तो विरुध्येयुः कथञ्चन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥ ००४ ॥

अशक्तं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः ।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ॥ ००५ ॥

युधिष्ठिर उवाच ॥

अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत् ।
कथं स प्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ॥ ००६ ॥

भीष्म उवाच ॥

नासंनद्धो नाकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन वाच्यश्च विसृजस्व क्षिपामि च ॥ ००७ ॥

स चेत्संनद्ध आगच्छेत्संनद्धव्यं ततो भवेत् ।
स चेत्ससैन्य आगच्छेत्ससैन्यस्तमथाह्वयेत्  ॥ ००८  ॥

स चेन्निकृत्या युध्येत निकृत्या तं प्रयोधयेत् ।
अथ चेद्धर्मतो युध्येद्धर्मेणैव निवारयेत्  ॥ ००९  ॥

नाश्वेन रथिनं यायादुदियाद्रथिनं रथी ।
व्यसने न प्रहर्तव्यं न भीताय जिताय च  ॥ ०१०  ॥

नेषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् ।
जयार्थमेव योद्धव्यं न क्रुध्येदजिघांसतः  ॥ ०११  ॥

साधूनां तु मिथोभेदात्साधुश्चेद्व्यसनी भवेत् ।
सव्रणो नाभिहन्तव्यो नानपत्यः कथञ्चन  ॥ ०१२  ॥

भग्नशस्त्रो विपन्नाश्वश्छिन्नज्यो हतवाहनः ।
चिकित्स्यः स्यात्स्वविषये प्राप्यो वा स्वगृहान्भवेत्  ॥ ०१३  ॥

निर्व्रणोऽपि च मोक्तव्य एष धर्मः सनातनः  ॥ ०१३  ॥

तस्माद्धर्मेण योद्धव्यं मनुः स्वायंभुवोऽब्रवीत् ।
सत्सु नित्यं सतां धर्मस्तमास्थाय न नाशयेत्  ॥ ०१४  ॥

यो वै जयत्यधर्मेण क्षत्रियो वर्धमानकः ।
आत्मानमात्मना हन्ति पापो निकृतिजीवनः  ॥ ०१५  ॥

कर्म चैतदसाधूनामसाधुं साधुना जयेत् ।
धर्मेण निधनं श्रेयो न जयः पापकर्मणा  ॥ ०१६  ॥

नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
मूलान्यस्य प्रशाखाश्च दहन्समनुगच्छति  ॥ ०१७  ॥

पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति ।
स वर्धमानः स्तेयेन पापः पापे प्रसज्जति ॥ ०१८ ॥

न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव ।
अश्रद्दधानभावाच्च विनाशमुपगच्छति ॥ ०१९ ॥

स बद्धो वारुणैः पाशैरमर्त्य इव मन्यते ।
महादृतिरिवाध्मातः स्वकृतेन विवर्धते ॥ ०२० ॥

ततः समूलो ह्रियते नदीकूलादिव द्रुमः ।
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि ॥ ०२१ ॥

तस्माद्धर्मेण विजयं कामं लिप्सेत भूमिपः ॥ ०२१ ॥

---

# अध्याय ०९७

भीष्म उवाच ॥

नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः ।
अधर्मविजयं लब्ध्वा कोऽनुमन्येत भूमिपः ॥ ००१ ॥

अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च ।
सादयत्येष राजानं महीं च भरतर्षभ ॥ ००२ ॥

विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥ ००३ ॥

बलेनावजितो यश्च न तं युध्येत भूमिपः ।
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत् ॥ ००४ ॥

नार्वाक्संवत्सरात्कन्या स्प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत्सहसाहृतम् ॥ ००५ ॥

न तु वन्ध्यं धनं तिष्ठेत्पिबेयुर्ब्राह्मणाः पयः ।
युञ्जीरन्वाप्यनडुहः क्षन्तव्यं वा तदा भवेत् ॥ ००६ ॥

राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते ।
नान्यो राजानमभ्यसेदराजन्यः कथञ्चन ॥ ००७ ॥

अनीकयोः संहतयोर्यदीयाद्ब्राह्मणोऽन्तरा ।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥ ००८ ॥

मर्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत् ॥ ००८ ॥

अथ चेल्लङ्घयेदेनां मर्यादां क्षत्रियब्रुवः ।
अप्रशस्यस्तदूर्ध्वं स्यादनादेयश्च संसदि ॥ ००९ ॥

या तु धर्मविलोपेन मर्यादाभेदनेन च ।
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः ॥ ०१० ॥

धर्मलब्धाद्धि विजयात्को लाभोऽभ्यधिको भवेत् ॥ ०१० ॥

सहसा नाम्य भूतानि क्षिप्रमेव प्रसादयेत् ।
सान्त्वेन भोगदानेन स राज्ञां परमो नयः ॥ ०११ ॥

भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः ।
अमित्रान्पर्युपासीरन्व्यसनौघप्रतीक्षिणः ॥ ०१२ ॥

अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।
संदुष्टाः सर्वतो राजन्राजव्यसनकाङ्क्षिणः ॥ ०१३ ॥

नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथञ्चन ।
जीवितं ह्यप्यतिच्छिन्नः संत्यजत्येकदा नरः ॥ ०१४ ॥

अल्पेनापि हि संयुक्तस्तुष्यत्येवापराधिकः ।
शुद्धं जीवितमेवापि तादृशो बहु मन्यते ॥ ०१५ ॥

यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।
संतुष्टभृत्यसचिवो दृढमूलः स पार्थिवः ॥ ०१६ ॥

ऋत्विक्पुरोहिताचार्या ये चान्ये श्रुतसंमताः ।
पूजार्हाः पूजिता यस्य स वै लोकजिदुच्यते ॥ ०१७ ॥

एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः ।
अन्वेव चैन्द्रं विजयं व्यजिगीषन्त पार्थिवाः ॥ ०१८ ॥

भूमिवर्जं पुरं राजा जित्वा राजानमाहवे ।
अमृताश्चौषधीः शश्वदाजहार प्रतर्दनः ॥ ०१९ ॥

अग्निहोत्राण्यग्निशेषं हविर्भाजनमेव च ।
आजहार दिवोदासस्ततो विप्रकृतोऽभवत् ॥ ०२० ॥

सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ ।
अन्यत्र श्रोत्रियस्वाच्च तापसस्वाच्च भारत ॥ ०२१ ॥

उच्चावचानि वृत्तानि धर्मज्ञानां युधिष्ठिर ।
आसन्राज्ञां पुराणानां सर्वं तन्मम रोचते ॥ ०२२ ॥

सर्वविद्यातिरेकाद्वा जयमिच्छेन्महीपतिः ।

न मायया न दम्भेन य इच्छेद्भूतिमात्मनः ॥ ०२३ ॥

---

# अध्याय ०९८

युधिष्ठिर उवाच ॥

क्षत्रधर्मान्न पापीयान्धर्मोऽस्ति भरतर्षभ ।
अभियाने च युद्धे च राजा हन्ति महाजनम् ॥ ००१ ॥

अथ स्म कर्मणा येन लोकाञ्जयति पार्थिवः ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ ००२ ॥

भीष्म उवाच ॥

निग्रहेण च पापानां साधूनां प्रग्रहेण च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥ ००३ ॥

उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥ ००४ ॥

अपविध्यन्ति पापानि दानयज्ञतपोबलैः ।
अनुग्रहेण भूतानां पुण्यमेषां प्रवर्धते ॥ ००५ ॥

यथैव क्षेत्रनिर्दाता निर्दन्वै क्षेत्रमेकदा ।
हिनस्ति कक्षं धान्यं च न च धान्यं विनश्यति ॥ ००६ ॥

एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्यानथैकदा ।
तस्यैषा निष्कृतिः कृत्स्ना भूतानां भावनं पुनः ॥ ००७ ॥

यो भूतानि धनज्यानाद्वधात्क्लेशाच्च रक्षति ।
दस्युभ्यः प्राणदानात्स धनदः सुखदो विराट् ॥ ००८ ॥

स सर्वयज्ञैरीजानो राजाथाभयदक्षिणैः ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ००९ ॥

ब्राह्मणार्थे समुत्पन्ने योऽभिनिःसृत्य युध्यते ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥ ०१० ॥

अभीतो विकिरञ्शत्रून्प्रतिगृह्णञ्शरांस्तथा ।
न तस्मात्त्रिदशाः श्रेयो भुवि पश्यन्ति किञ्चन ॥ ०११ ॥

तस्य यावन्ति शस्त्राणि त्वचं भिन्दन्ति संयुगे ।
तावतः सोऽश्नुते लोकान्सर्वकामदुहोऽक्षयान् ॥ ०१२ ॥

न तस्य रुधिरं गात्रादावेधेभ्यः प्रवर्तते ।
स ह तेनैव रक्तेन सर्वपापैः प्रमुच्यते ॥ ०१३ ॥

यानि दुःखानि सहते व्रणानामभितापने ।
न ततोऽस्ति तपो भूय इति धर्मविदो विदुः ॥ ०१४ ॥

पृष्ठतो भीरवः संख्ये वर्तन्तेऽधमपूरुषाः ।
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवनम् ॥ ०१५ ॥

यदि शूरस्तथा क्षेमे प्रतिरक्षेत्तथा भये ।
प्रतिरूपं जनाः कुर्युर्न च तद्वर्तते तथा ॥ ०१६ ॥

यदि ते कृतमाज्ञाय नमस्कुर्युः सदैव तम् ।
युक्तं न्याय्यं च कुर्युस्ते न च तद्वर्तते तथा ॥ ०१७ ॥

पुरुषाणां समानानां दृश्यते महदन्तरम् ।
सङ्ग्रामेऽनीकवेलायामुत्क्रुष्टेऽभिपतत्सु च ॥ ०१८ ॥

पतत्यभिमुखः शूरः परान्भीरुः पलायते ।
आस्थायास्वर्ग्यमध्वानं सहायान्विषमे त्यजन् ॥ ०१९ ॥

मा स्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान् ।
ये सहायान्रणे हित्वा स्वस्तिमन्तो गृहान्ययुः ॥ ०२० ॥

अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः ।
त्यागेन यः सहायानां स्वान्प्राणांस्त्रातुमिच्छति ॥ ०२१ ॥

तं हन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना ।
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः ॥ ०२२ ॥

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन् ॥ ०२३ ॥

अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥ ०२४ ॥

न गृहे मरणं तात क्षत्रियाणां प्रशस्यते ।
शौटीराणामशौटीरमधर्म्यं कृपणं च तत् ॥ ०२५ ॥

इदं दुःखमहो कष्टं पापीय इति निष्टनन् ।
प्रतिध्वस्तमुखः पूतिरमात्यान्बहु शोचयन् ॥ ०२६ ॥

अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति ।
वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति ॥ ०२७ ॥

रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः ।

तीक्ष्णैः शस्त्रैः सुविक्लिष्टः क्षत्रियो मृत्युमर्हति ॥ ०२८ ॥

शूरो हि सत्यमन्युभ्यामाविष्टो युध्यते भृशम् ।
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥ ०२९ ॥

स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् ।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥ ०३० ॥

सर्वो योधः परं त्यक्तुमाविष्टस्त्यक्तजीवितः ।
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ॥ ०३१ ॥

---

# इन्द्राम्बरीषसंवादः

## अध्याय ०९९

युधिष्ठिर उवाच ॥

के लोका युध्यमानानां शूराणामनिवर्तिनाम् ।
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अम्बरीषस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ ००२ ॥

अम्बरीषो हि नाभागः स्वर्गं गत्वा सुदुर्लभम् ।
ददर्श सुरलोकस्थं शक्रेण सचिवं सह ॥ ००३ ॥

सर्वतेजोमयं दिव्यं विमानवरमास्थितम् ।
उपर्युपरि गच्छन्तं स्वं वै सेनापतिं प्रभुम्  ॥ ००४  ॥

स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः ।
ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम्  ॥ ००५  ॥

सागरान्तां महीं कृत्स्नामनुशिष्य यथाविधि ।
चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्मकाम्यया  ॥ ००६  ॥

ब्रह्मचर्येण घोरेण आचार्यकुलसेवया ।
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम्  ॥ ००७  ॥

अतिथीनन्नपानेन पितॄंश्च स्वधया तथा ।
ऋषीन्स्वाध्यायदीक्षाभिर्देवान्यज्ञैरनुत्तमैः  ॥ ००८  ॥

क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि ।
उदीक्षमाणः पृतनां जयामि युधि वासव  ॥ ००९  ॥

देवराज सुदेवोऽयं मम सेनापतिः पुरा ।
आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम्  ॥ ०१०  ॥

नानेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजातयः ।
तर्पिता विधिवच्छक्र सोऽयं कस्मादतीव माम्  ॥ ०११  ॥

इन्द्र उवाच  ॥

एतस्य विततस्तात सुदेवस्य बभूव ह ।
सङ्ग्रामयज्ञः सुमहान्यश्चान्यो युध्यते नरः  ॥ ०१२  ॥

संनद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम् ।

युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः ॥ ०१३ ॥

अम्बरीष उवाच ॥

कानि यज्ञे हवींष्यत्र किमाज्यं का च दक्षिणा ।
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो ॥ ०१४ ॥

इन्द्र उवाच ॥

ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा ।
हवींषि परमांसानि रुधिरं त्वाज्यमेव च ॥ ०१५ ॥

सृगालगृध्रकाकोलाः सदस्यास्तत्र सत्रिणः ।
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे ॥ ०१६ ॥

प्रासतोमरसंघाताः खड्गशक्तिपरश्वधाः ।
ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः ॥ ०१७ ॥

चापवेगायतस्तीक्ष्णः परकायावदारणः ।
ऋजुः सुनिशितः पीतः सायकोऽस्य स्रुवो महान् ॥ ०१८ ॥

द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः ।
हस्तिहस्तगतः खड्गः स्फ्यो भवेत्तस्य संयुगे ॥ ०१९ ॥

ज्वलितैर्निशितैः पीतैः प्रासशक्तिपरश्वधैः ।
शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु ॥ ०२० ॥

आवेगाद्यत्तु रुधिरं सङ्ग्रामे स्यन्दते भुवि ।
सास्य पूर्णाहुतिर्होत्रे समृद्धा सर्वकामधुक् ॥ ०२१ ॥

छिन्धि भिन्धीति यस्यैतच्छ्रूयते वाहिनीमुखे ।

सामानि सामगास्तस्य गायन्ति यमसादने ॥ ०२२ ॥

हविर्धानं तु तस्याहुः परेषां वाहिनीमुखम् ।
कुञ्जराणां हयानां च वर्मिणां च समुच्चयः ॥ ०२३ ॥

अग्निः श्येनचितो नाम तस्य यज्ञे विधीयते ॥ ०२३ ॥

उत्तिष्ठति कबन्धोऽत्र सहस्रे निहते तु यः ।
स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ॥ ०२४ ॥

इडोपहूतं क्रोशन्ति कुञ्जरा अङ्कुशेरिताः ।
व्याघुष्टतलनादेन वषट्कारेण पार्थिव ॥ ०२५ ॥

उद्गाता तत्र सङ्ग्रामे त्रिसामा दुन्दुभिः स्मृतः ॥ ०२५ ॥

ब्रह्मस्वे ह्रियमाणे यः प्रियां युद्धे तनुं त्यजेत् ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥ ०२६ ॥

भर्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न च निवर्तेत तस्य लोका यथा मम ॥ ०२७ ॥

नीलचन्द्राकृतैः खड्गैर्बाहुभिः परिघोपमैः ।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥ ०२८ ॥

यस्तु नावेक्षते कञ्चित्सहायं विजये स्थितः ।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम ॥ ०२९ ॥

यस्य तोमरसंघाटा भेरीमण्डूककच्छपा ।
वीरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ॥ ०३० ॥

असिचर्मप्लवा सिन्धुः केशशैवलशाद्वला ।

अश्वनागरथैश्चैव संभिन्नैः कृतसङ्क्रमा ॥ ०३१ ॥

पताकाध्वजवानीरा हतवाहनवाहिनी ।
शोणितोदा सुसंपूर्णा दुस्तरा पारगैर्नरैः ॥ ०३२ ॥

हतनागमहानक्रा परलोकवहाशिवा ।
ऋष्टिखड्गध्वजानूका गृध्रकङ्कवडप्लवा ॥ ०३३ ॥

पुरुषादानुचरिता भीरूणां कश्मलावहा ।
नदी योधमहायज्ञे तदस्यावभृथं स्मृतम् ॥ ०३४ ॥

वेदी यस्य त्वमित्राणां शिरोभिरवकीर्यते ।
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम ॥ ०३५ ॥

पत्नीशाला कृता यस्य परेषां वाहिनीमुखम् ।
हविर्धानं स्ववाहिन्यस्तदस्याहुर्मनीषिणः ॥ ०३६ ॥

सदश्वान्तरयोधाग्निराग्नीध्रश्चोत्तरां दिशम् ।
शत्रुसेनाकलत्रस्य सर्वलोकानदूरतः ॥ ०३७ ॥

यदा तूभयतो व्यूहो भवत्याकाशमग्रतः ।
सास्य वेदी तथा यज्ञे नित्यं वेदास्त्रयोऽग्नयः ॥ ०३८ ॥

यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः ।
अप्रतिष्ठं स नरकं याति नास्त्यत्र संशयः ॥ ०३९ ॥

यस्य शोणितवेगेन नदी स्यात्समभिप्लुता ।
केशमांसास्थिसङ्कीर्णा स गच्छेत्परमां गतिम् ॥ ०४० ॥

यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
स विष्णुविक्रमक्रामी बृहस्पतिसमः क्रतुः ॥ ०४१ ॥

नायकं वा प्रमाणं वा यो वा स्यात्तत्र पूजितः ।
जीवग्राहं निगृह्णाति तस्य लोका यथा मम ॥ ०४२ ॥

आहवे निहतं शूरं न शोचेत कदाचन ।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ॥ ०४३ ॥

न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम् ।
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे ॥ ०४४ ॥

वराप्सरःसहस्राणि शूरमायोधने हतम् ।
त्वरमाणा हि धावन्ति मम भर्ता भवेदिति ॥ ०४५ ॥

एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥ ०४६ ॥

वृद्धं बलं न हन्तव्यं नैव स्त्री न च वै द्विजः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥ ०४७ ॥

अहं वृत्रं बलं पाकं शतमायं विरोचनम् ।
दुरावार्यं च नमुचिं नैकमायं च शम्बरम् ॥ ०४८ ॥

विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः ।
प्रह्रादं च निहत्याजौ ततो देवाधिपोऽभवम् ॥ ०४९ ॥

भीष्म उवाच ॥

इत्येतच्छक्रवचनं निशम्य प्रतिगृह्य च ।
योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान् ॥ ०५० ॥

# अध्याय १००

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रतर्दनो मैथिलश्च सङ्ग्रामं यत्र चक्रतुः ॥ ००१ ॥

यज्ञोपवीती सङ्ग्रामे जनको मैथिलो यथा ।
योधानुद्धर्षयामास तन्निबोध युधिष्ठिर ॥ ००२ ॥

जनको मैथिलो राजा महात्मा सर्वतत्त्ववित् ।
योधान्स्वान्दर्शयामास स्वर्गं नरकमेव च ॥ ००३ ॥

अभीतानामिमे लोका भास्वन्तो हन्त पश्यत ।
पूर्णा गन्धर्वकन्याभिः सर्वकामदुहोऽक्षयाः ॥ ००४ ॥

इमे पलायमानानां नरकाः प्रत्युपस्थिताः ।
अकीर्तिः शाश्वती चैव पतितव्यमनन्तरम् ॥ ००५ ॥

तान्दृष्ट्वारीन्विजयतो भूत्वा संत्यागबुद्धयः ।
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥ ००६ ॥

त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ।
इत्युक्तास्ते नृपतिना योधाः परपुरञ्जय ॥ ००७ ॥

व्यजयन्त रणे शत्रून्हर्षयन्तो जनेश्वरम् ।
तस्मादात्मवता नित्यं स्थातव्यं रणमूर्धनि ॥ ००८ ॥

गजानां रथिनो मध्ये रथानामनु सादिनः ।
सादिनामन्तरा स्थाप्यं पादातमिह दंशितम्  ॥ ००९  ॥

य एवं व्यूहते राजा स नित्यं जयते द्विषः ।
तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर  ॥ ०१०  ॥

सर्वे सुकृतमिच्छन्तः सुयुद्धेनातिमन्यवः ।
क्षोभयेयुरनीकानि सागरं मकरा इव  ॥ ०११  ॥

हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम् ।
जितां च भूमिं रक्षेत भग्नान्नात्यनुसारयेत्  ॥ ०१२  ॥

पुनरावर्तमानानां निराशानां च जीविते ।
न वेगः सुसहो राजंस्तस्मान्नात्यनुसारयेत्  ॥ ०१३  ॥

न हि प्रहर्तुमिच्छन्ति शूराः प्राद्रवतां भयात् ।
तस्मात्पलायमानानां कुर्यान्नात्यनुसारणम्  ॥ ०१४  ॥

चराणामचरा ह्यन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः  ॥ ०१५  ॥

समानपृष्ठोदरपाणिपादाः ; पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।
अतो भयार्ताः प्रणिपत्य भूयः ; कृत्वाञ्जलीनुपतिष्ठन्ति शूरान्  ॥ ०१६  ॥

शूरबाहुषु लोकोऽयं लम्बते पुत्रवत्सदा ।
तस्मात्सर्वास्ववस्थासु शूरः संमानमर्हति  ॥ ०१७  ॥

न हि शौर्यात्परं किञ्चित्त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम्  ॥ ०१८  ॥

# अध्याय १०१

युधिष्ठिर उवाच ॥

यथा जयार्थिनः सेनां नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

सत्येन हि स्थिता धर्मा उपपत्त्या तथापरे ।
साध्वाचारतया केचित्तथैवौपयिका अपि ॥ ००२ ॥

उपायधर्मान्वक्ष्यामि सिद्धार्थानर्थधर्मयोः ॥ ००२ ॥

निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ।
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ॥ ००३ ॥

कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ॥ ००३ ॥

उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
जानन्वक्रां न सेवेत प्रतिबाधेत चागताम् ॥ ००४ ॥

अमित्रा एव राजानं भेदेनोपचरन्त्युत ।
तां राजा निकृतिं जानन्यथामित्रान्प्रबाधते ॥ ००५ ॥

गजानां पार्श्वचर्माणि गोवृषाजगराणि च ।
शल्यकङ्कटलोहानि तनुत्राणि मतानि च ॥ ००६ ॥

शितपीतानि शस्त्राणि संनाहाः पीतलोहिताः ।

नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ते ॥ ००७ ॥

ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः ।
फलकान्यथ चर्माणि प्रतिकल्प्यान्यनेकशः ॥ ००८ ॥

अभिनीतानि शस्त्राणि योधाश्च कृतनिश्रमाः ॥ ००८ ॥

चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते ।
पक्वसस्या हि पृथिवी भवत्यम्बुमती तथा ॥ ००९ ॥

नैवातिशीतो नात्युष्णः कालो भवति भारत ।
तस्मात्तदा योजयेत परेषां व्यसनेषु वा ॥ ०१० ॥

एतेषु योगाः सेनायाः प्रशस्ताः परबाधने ॥ ०१० ॥

जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते ।
चारैर्हि विहिताभ्यासः कुशलैर्वनगोचरैः ॥ ०११ ॥

नव्यारण्यैर्न शक्येत गन्तुं मृगगणैरिव ।
तस्मात्सर्वासु सेनासु योजयन्ति जयार्थिनः ॥ ०१२ ॥

आवासस्तोयवान्दुर्गः पर्याकाशः प्रशस्यते ।
परेषामुपसर्पाणां प्रतिषेधस्तथा भवेत् ॥ ०१३ ॥

आकाशं तु वनाभ्याशे मन्यन्ते गुणवत्तरम् ।
बहुभिर्गुणजातैस्तु ये युद्धकुशला जनाः ॥ ०१४ ॥

उपन्यासोऽपसर्पाणां पदातीनां च गूहनम् ।
अथ शत्रुप्रतीघातमापदर्थं परायणम् ॥ ०१५ ॥

सप्तर्षीन्पृष्ठतः कृत्वा युध्येरन्नचला इव ।

अनेन विधिना राजञ्जिगीषेतापि दुर्जयान् ॥ ०१६ ॥

यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः ।
पूर्वं पूर्वं ज्याय एषां संनिपाते युधिष्ठिर ॥ ०१७ ॥

अकर्दमामनुदकाममर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥ ०१८ ॥

समा निरुदकाकाशा रथभूमिः प्रशस्यते ।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् ॥ ०१९ ॥

बहुदुर्गा महावृक्षा वेत्रवेणुभिरास्तृता ।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च ॥ ०२० ॥

पदातिबहुला सेना दृढा भवति भारत ।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते ॥ ०२१ ॥

पदातिनागबहुला प्रावृट्काले प्रशस्यते ।
गुणानेतान्प्रसंख्याय देशकालौ प्रयोजयेत् ॥ ०२२ ॥

एवं सञ्चिन्त्य यो याति तिथिनक्षत्रपूजितः ।
विजयं लभते नित्यं सेनां सम्यक्प्रयोजयन् ॥ ०२३ ॥

प्रसुप्तांस्तृषिताञ्श्रान्तान्प्रकीर्णान्नाभिघातयेत् ।
मोक्षे प्रयाणे चलने पानभोजनकालयोः ॥ ०२४ ॥

अतिक्षिप्तान्व्यतिक्षिप्तान्विहतान्प्रतनूकृतान् ।
सुविस्रम्भान्कृतारम्भानुपन्यासप्रतापितान् ॥ ०२५ ॥

बहिश्चरानुपन्यासान्कृत्वा वेश्मानुसारिणः ॥ ०२५ ॥

पारंपर्यागते द्वारे ये केचिदनुवर्तिनः ।
परिचर्यावरोद्धारो ये च केचन वल्गिनः ॥ ०२६ ॥

अनीकं ये प्रभिन्दन्ति भिन्नं ये स्थगयन्ति च ।
समानाशनपानास्ते कार्या द्विगुणवेतनाः ॥ ०२७ ॥

दशाधिपतयः कार्याः शताधिपतयस्तथा ।
तेषां सहस्राधिपतिं कुर्याच्छूरमतन्द्रितम् ॥ ०२८ ॥

यथामुख्यं संनिपात्य वक्तव्याः स्म शपामहे ।
यथा जयार्थं सङ्ग्रामे न जह्याम परस्परम् ॥ ०२९ ॥

इहैव ते निवर्तन्तां ये नः केचन भीरवः ।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ॥ ०३० ॥

आत्मानं च स्वपक्षं च पलायन्हन्ति संयुगे ।
द्रव्यनाशो वधोऽकीर्तिरयशश्च पलायने ॥ ०३१ ॥

अमनोज्ञासुखा वाचः पुरुषस्य पलायतः ।
प्रतिस्पन्दौष्ठदन्तस्य न्यस्तसर्वायुधस्य च ॥ ०३२ ॥

हित्वा पलायमानस्य सहायान्प्राणसंशये ।
अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा ॥ ०३३ ॥

मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ ०३४ ॥

अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम् ।
जयिनं सुहृदस्तात वन्दनैर्मङ्गलेन च ॥ ०३५ ॥

यस्य स्म व्यसने राजन्ननुमोदन्ति शत्रवः ।

तदसह्यतरं दुःखमहं मन्ये वधादपि ॥ ०३६ ॥

श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च ।
सा भीरूणां परान्याति शूरस्तामधिगच्छति ॥ ०३७ ॥

ते वयं स्वर्गमिच्छन्तः सङ्ग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ ०३८ ॥

एवं संशप्तशपथाः समभित्यक्तजीविताः ।
अमित्रवाहिनीं वीराः संप्रगाहन्त्यभीरवः ॥ ०३९ ॥

अग्रतः पुरुषानीकमसिचर्मवतां भवेत् ।
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ॥ ०४० ॥

परेषां प्रतिघातार्थं पदातीनां च गूहनम् ।
अपि ह्यस्मिन्परे गृद्धा भवेयुर्ये पुरोगमाः ॥ ०४१ ॥

ये पुरस्तादभिमताः सत्त्ववन्तो मनस्विनः ।
ते पूर्वमभिवर्तेरंस्तानन्वगितरे जनाः ॥ ०४२ ॥

अपि चोद्धर्षणं कार्यं भीरूणामपि यत्नतः ।
स्कन्धदर्शनमात्रं तु तिष्ठेयुर्वा समीपतः ॥ ०४३ ॥

संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ ०४४ ॥

संप्रयुद्धे प्रहृष्टे वा सत्यं वा यदि वानृतम् ।
प्रगृह्य बाहून्क्रोशेत भग्ना भग्नाः परा इति ॥ ०४५ ॥

आगतं नो मित्रबलं प्रहरध्वमभीतवत् ।
शब्दवन्तोऽनुधावेयुः कुर्वन्तो भैरवं रवम् ॥ ०४६ ॥

क्ष्वेडाः किलकिलाः शङ्खाः क्रकचा गोविषाणिकान् ।
भेरीमृदङ्गपणवान्नादयेयुश्च कुञ्जरान् ॥ ०४७ ॥

---

# अध्याय १०२

युधिष्ठिर उवाच ॥

किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत ।
किंसंनाहाः कथंशस्त्रा जनाः स्युः संयुगे नृप ॥ ००१ ॥

भीष्म उवाच ॥

यथाचरितमेवात्र शस्त्रपत्रं विधीयते ।
आचारादेव पुरुषस्तथा कर्मसु वर्तते ॥ ००२ ॥

गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः ।
आभीरवः सुबलिनस्तद्बलं सर्वपारगम् ॥ ००३ ॥

सर्वशस्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः ।
प्राच्या मातङ्गयुद्धेषु कुशलाः शठयोधिनः ॥ ००४ ॥

तथा यवनकाम्बोजा मथुरामभितश्च ये ।
एते नियुद्धकुशला दाक्षिणात्यासिचर्मिणः ॥ ००५ ॥

सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः ।
प्राय एष समुद्दिष्टो लक्षणानि तु मे शृणु ॥ ००६ ॥

सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः ।
पारावतकुलिङ्गाक्षाः सर्वे शूराः प्रमाथिनः ॥ ००७ ॥

मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथापरे ।
प्रवादिनः सुचण्डाश्च क्रोधिनः किंनरीस्वनाः ॥ ००८ ॥

मेघस्वनाः क्रुद्धमुखाः केचित्करभनिस्वनाः ।
जिह्मनासानुजङ्घाश्च दूरगा दूरपातिनः ॥ ००९ ॥

बिडालकुब्जास्तनवस्तनुकेशास्तनुत्वचः ।
शूराश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥ ०१० ॥

गोधानिमीलिताः केचिन्मृदुप्रकृतयोऽपि च ।
तुरङ्गगतिनिर्घोषास्ते नराः पारयिष्णवः ॥ ०११ ॥

सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः ।
प्रवादितेन नृत्यन्ति हृष्यन्ति कलहेषु च ॥ ०१२ ॥

गम्भीराक्षा निःसृताक्षाः पिङ्गला भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः ॥ ०१३ ॥

जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽपि च ।
वक्रबाह्वङ्गुलीसक्ताः कृशा धमनिसंतताः ॥ ०१४ ॥

प्रविशन्त्यतिवेगेन संपरायेऽभ्युपस्थिते ।
वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥ ०१५ ॥

दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः ।
उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डकाः ॥ ०१६ ॥

उद्वृत्ताश्चैव सुग्रीवा विनता विहगा इव ।

पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखा इव ॥ ०१७ ॥

उग्रस्वना मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शिनः ॥ ०१८ ॥

त्यक्तात्मानः सर्व एते अन्त्यजा ह्यनिवर्तिनः ।
पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते ॥ ०१९ ॥

अधार्मिका भिन्नवृत्ताः साध्वेवैषां पराभवः ।
एवमेव प्रकुप्यन्ति राज्ञोऽप्येते ह्यभीक्ष्णशः ॥ ०२० ॥

---

# अध्याय १०३

युधिष्ठिर उवाच ॥

जैत्र्या वा कानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानीहेच्छामि वेदितुम् ॥ ००१ ॥

भीष्म उवाच ॥

जैत्र्या वा यानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ ००२ ॥

दैवं पूर्वं विकुरुते मानुषे कालचोदिते ।
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ॥ ००३ ॥

प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गलानि च कुर्वन्तः शमयन्त्यहितान्यपि ॥ ००४ ॥

उदीर्णमनसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्यां जयं वदेत् ॥ ००५ ॥

अन्वेनां वायवो वान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथादित्यस्य रश्मयः ॥ ००६ ॥

गोमायवश्चानुलोमा वडा गृध्राश्च सर्वशः ।
आचरेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥ ००७ ॥

प्रसन्नभाः पावक ऊर्ध्वरश्मिः ; प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां प्रवान्ति ; जयस्यैतद्भाविनो रूपमाहुः ॥ ००८ ॥

गम्भीरशब्दाश्च महास्वनाश्च ; शङ्खाश्च भेर्यश्च नदन्ति यत्र ।
युयुत्सवश्चाप्रतीपा भवन्ति ; जयस्यैतद्भाविनो रूपमाहुः ॥ ००९ ॥

इष्टा मृगाः पृष्ठतो वामतश्च ; संप्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणाः सिद्धिमाहु ;र्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ ०१० ॥

मङ्गल्यशब्दाः शकुना वदन्ति ; हंसाः क्रौञ्चाः शतपत्राश्च चाषाः ।
हृष्टा योधाः सत्त्ववन्तो भवन्ति ; जयस्यैतद्भाविनो रूपमाहुः ॥ ०११ ॥

शस्त्रैः पत्रैः कवचैः केतुभिश्च ; सुभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया ; येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ ०१२ ॥

शुश्रूषवश्चानभिमानिनश्च ; परस्परं सौहृदमास्थिताश्च ।
येषां योधाः शौचमनुष्ठिताश्च ; जयस्यैतद्भाविनो रूपमाहुः ॥ ०१३ ॥

शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः ।
धैर्यं चाविशते योधान्विजयस्य मुखं तु तत् ॥ ०१४ ॥

इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः ।
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधति ॥ ०१५ ॥

संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैवावर्तने पूर्वं प्रयतेथास्तथो युधि ॥ ०१६ ॥

जघन्य एष विजयो यद्युद्धं नाम भारत ।
यादृच्छिको युधि जयो दैवो वेति विचारणम् ॥ ०१७ ॥

अपामिव महावेगस्त्रस्ता मृगगणा इव ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥ ०१८ ॥

भग्ना इत्येव भज्यन्ते विद्वांसोऽपि नकारणम् ।
उदारसारा महती रुरुसंघोपमा चमूः ॥ ०१९ ॥

परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः ।
अपि पञ्चाशतिः शूरा मृद्नन्ति परवाहिनीम् ॥ ०२० ॥

अथ वा पञ्च षड्सप्त सहिताः कृतनिश्चयाः ।
कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥ ०२१ ॥

संनिपातो न गन्तव्यः शक्ये सति कथञ्चन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥ ०२२ ॥

संसर्पणाद्धि सेनाया भयं भीरून्प्रबाधते ।
वज्रादिव प्रज्वलितादियं क्व नु पतिष्यति ॥ ०२३ ॥

अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च ॥ ०२४ ॥

विषयो व्यथते राजन्सर्वः सस्थाणुजङ्गमः ।

शस्त्रप्रतापतप्तानां मज्जा सीदति देहिनाम् ॥ ०२५ ॥

तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः ।
संपीड्यमाना हि परे योगमायान्ति सर्वशः ॥ ०२६ ॥

अन्तराणां च भेदार्थं चारानभ्यवचारयेत् ।
यश्च तस्मात्परो राजा तेन संधिः प्रशस्यते ॥ ०२७ ॥

न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा ।
यथा सार्धममित्रेण सर्वतः प्रतिबाधनम् ॥ ०२८ ॥

क्षमा वै साधुमाया हि न हि साध्वक्षमा सदा ।
क्षमायाश्चाक्षमायाश्च विद्धि पार्थ प्रयोजनम् ॥ ०२९ ॥

विजित्य क्षममाणस्य यशो राज्ञोऽभिवर्धते ।
महापराधा ह्यप्यस्मिन्विश्वसन्ति हि शत्रवः ॥ ०३० ॥

मन्यते कर्शयित्वा तु क्षमा साध्विति शम्बरः ।
असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥ ०३१ ॥

नैतत्प्रशंसन्त्याचार्या न च साधु निदर्शनम् ।
अक्लेशेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ॥ ०३२ ॥

द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर ।
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ॥ ०३३ ॥

प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च कृपायेत शोचन्निव रुदन्निव ॥ ०३४ ॥

न मे प्रियं यत्स हतः संप्राहैवं पुरो वचः ।
न चकर्थ च मे वाक्यमुच्यमानः पुनः पुनः ॥ ०३५ ॥

अहो जीवितमाकाङ्क्षे नेदृशो वधमर्हति ।
सुदुर्लभाः सुपुरुषाः सङ्ग्रामेष्वपलायिनः ॥ ०३६ ॥

कृतं ममाप्रियं तेन येनायं निहतो मृधे ।
इति वाचा वदन्हन्तॄन्पूजयेत रहोगतः ॥ ०३७ ॥

हन्तॄणां चाहतानां च यत्कुर्युरपराधिनः ।
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसङ्ग्रहम् ॥ ०३८ ॥

एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरन् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥ ०३९ ॥

विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ॥ ०४० ॥

तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ०४१ ॥

---

# इन्द्रबृहस्पतिसंवादः

## अध्याय १०४

युधिष्ठिर उवाच ॥

कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव ।
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ ००२ ॥

बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः ।
उपसङ्गम्य पप्रच्छ वासवः परवीरहा ॥ ००३ ॥

अहितेषु कथं ब्रह्मन्वर्तयेयमतन्द्रितः ।
असमुच्छिद्य चैवेनान्नियच्छेयमुपायतः ॥ ००४ ॥

सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥ ००५ ॥

ततो धर्मार्थकामानां कुशलः प्रतिभानवान् ।
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ॥ ००६ ॥

न जातु कलहेनेच्छेन्नियन्तुमपकारिणः ।
बालसंसेवितं ह्येतद्यदमर्षो यदक्षमा ॥ ००७ ॥

न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ॥ ००७ ॥

क्रोधं बलममर्षं च नियम्यात्मजमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥ ००८ ॥

प्रियमेव वदेन्नित्यं नाप्रियं किञ्चिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कण्ठायासं च वर्जयेत् ॥ ००९ ॥

यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः ।
तान्द्विजान्कुरुते वश्यांस्तथा युक्तो महीपतिः ॥ ०१० ॥

वशं चोपनयेच्छत्रूंन्निहन्याच्च पुरंदर ॥ ०१० ॥

न नित्यं परिभूयारीन्सुखं स्वपिति वासव ।
जागर्त्यैव च दुष्टात्मा सङ्करेऽग्निरिवोत्थितः ॥ ०११ ॥

न संनिपातः कर्तव्यः सामान्ये विजये सति ।
विश्वास्यैवोपसंन्यास्यो वशे कृत्वा रिपुः प्रभो ॥ ०१२ ॥

संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः ।
उपेक्षमाणोऽवज्ञाते हृदयेनापराजितः ॥ ०१३ ॥

अथास्य प्रहरेत्काले किञ्चिद्विचलिते पदे ।
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ ०१४ ॥

आदिमध्यावसानज्ञः प्रच्छन्नं च विचारयेत् ।
बलानि दूषयेदस्य जानंश्चैव प्रमाणतः ॥ ०१५ ॥

भेदेनोपप्रदानेन संसृजन्नौषधैस्तथा ।
न त्वेव चेलसंसर्गं रचयेदरिभिः सह ॥ ०१६ ॥

दीर्घकालमपि क्षान्त्वा विहन्यादेव शात्रवान् ।
कालाकाङ्क्षी यामयेच्च यथा विस्रम्भमाप्नुयुः ॥ ०१७ ॥

न सद्योऽरीन्विनिर्हन्याद्दृष्टस्य विजयोऽज्वरः ।
न यः शल्यं घट्टयति नवं च कुरुते व्रणम् ॥ ०१८ ॥

प्राप्ते च प्रहरेत्काले न स संवर्तते पुनः ।
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपुं प्रति ॥ ०१९ ॥

यः कालो हि व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम् ।

दुर्लभः स पुनः कालः कालधर्मचिकीर्षुणा ॥ ०२० ॥

और्जस्थ्यं विजयेदेवं सङ्गृह्णन्साधुसंमतान् ।
कालेन साधयेन्नित्यं नाप्राप्तेऽभिनिपीडयेत् ॥ ०२१ ॥

विहाय कामं क्रोधं च तथाहङ्कारमेव च ।
युक्तो विवरमन्विच्छेदहितानां पुरंदर ॥ ०२२ ॥

मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाश्च विविधाः शक्र साधयन्त्यविचक्षणम् ॥ ०२३ ॥

निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥ ०२४ ॥

यदैवैकेन शक्येत गुह्यं कर्तुं तदाचरेत् ।
यच्छन्ति सचिवा गुह्यं मिथो विद्रावयन्त्यपि ॥ ०२५ ॥

अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥ ०२६ ॥

भेदं च प्रथमं युञ्ज्यात्तूष्णींदण्डं तथैव च ।
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा ॥ ०२७ ॥

प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः ।
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ॥ ०२८ ॥

प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न तु जातु विशङ्कयेत् ॥ ०२९ ॥

स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत् ।
न च तेष्वाश्वसेद्द्रुग्ध्वा जाग्रतीह निराकृताः ॥ ०३० ॥

न ह्यतो दुष्करं कर्म किञ्चिदस्ति सुरोत्तम ।
यथा विविधवृत्तानामैश्वर्यममराधिप ॥ ०३१ ॥

तथा विविधशीलानामपि संभव उच्यते ।
यतेत योगमास्थाय मित्रामित्रानवारयन् ॥ ०३२ ॥

मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मातीक्ष्णो मामृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥ ०३३ ॥

यथा वप्रे वेगवति सर्वतःसंप्लुतोदके ।
नित्यं विवरणाद्बाधस्तथा राज्यं प्रमाद्यतः ॥ ०३४ ॥

न बनूनभियुञ्जीत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरंदर ॥ ०३५ ॥

एकैकमेषां निष्पिंषञ्शिष्टेषु निपुणं चरेत् ।
न च शक्तोऽपि मेधावी सर्वानेवारभेन्नृपः ॥ ०३६ ॥

यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला स्वनुरक्ता षडङ्गिनी ॥ ०३७ ॥

यदा बहुविधां वृद्धिं मन्यते प्रतिलोमतः ।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ॥ ०३८ ॥

न साम दण्डोपनिषत्प्रशस्यते ; न मार्दवं शत्रुषु यात्रिकं सदा ।
न सस्यघातो न च सङ्करक्रिया ; न चापि भूयः प्रकृतेर्विचारणा ॥ ०३९ ॥

मायाविभेदानुपसर्जनानि ; पापं तथैव स्पशसंप्रयोगात् ।
आप्तैर्मनुष्यैरुपचारयेत ; पुरेषु राष्ट्रेषु च संप्रयुक्तः ॥ ०४० ॥

पुराणि चैषामनुसृत्य भूमिपाः ; पुरेषु भोगान्निखिलानिहाजयन् ।
पुरेषु नीतिं विहितां यथाविधि ; प्रयोजयन्तो बलवृत्रसूदन ॥ ०४१ ॥

प्रदाय गूढानि वसूनि नाम ; प्रच्छिद्य भोगानवधाय च स्वान् ।
दुष्टाः स्वदोषैरिति कीर्तयित्वा ; पुरेषु राष्ट्रेषु च योजयन्ति ॥ ०४२ ॥

तथैव चान्यै रतिशास्त्रवेदिभिः ; स्वलङ्कृतैः शास्त्रविधानदृष्टिभिः ।
सुशिक्षितैर्भाष्यकथाविशारदैः ; परेषु कृत्यानुपधारयस्व ॥ ०४३ ॥

इन्द्र उवाच ॥

कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम ।
कथं दुष्टं विजानीयादेतत्पृष्टो ब्रवीहि मे ॥ ०४४ ॥

बृहस्पतिरुवाच ॥

परोक्षमगुणानाह सद्गुणानभ्यसूयति ।
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥ ०४५ ॥

तूष्णींभावेऽपि हि ज्ञानं न चेद्भवति कारणम् ।
विश्वासमोष्ठसंदंशं शिरसश्च प्रकम्पनम् ॥ ०४६ ॥

करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते ।
अदृष्टितो विकुरुते दृष्ट्वा वा नाभिभाषते ॥ ०४७ ॥

पृथगेत्य समश्नाति नेदमद्य यथाविधि ।
आसने शयने याने भावा लक्ष्या विशेषतः ॥ ०४८ ॥

आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम् ।
विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ॥ ०४९ ॥

एतान्येवं यथोक्तानि बुध्येथास्त्रिदशाधिप ।
पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ॥ ०५० ॥

इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम ।
निशाम्य शास्त्रतत्त्वार्थं यथावदमरेश्वर ॥ ०५१ ॥

भीष्म उवाच ॥

स तद्वचः शत्रुनिबर्हणे रत ;स्तथा चकारावितथं बृहस्पतेः ।
चचार काले विजयाय चारिहा ; वशं च शत्रूननयत्पुरंदरः ॥ ०५२ ॥

---

# कालकवृक्षीयम्

## अध्याय १०५

युधिष्ठिर उवाच ॥

धार्मिकोऽर्थानसंप्राप्य राजामात्यैः प्रबाधितः ।
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन्कथं चरेत् ॥ ००१ ॥

भीष्म उवाच ॥

अत्रायं क्षेमदर्शीयमितिहासोऽनुगीयते ।
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ ००२ ॥

क्षेमदर्शं नृपसुतं यत्र क्षीणबलं पुरा ।
मुनिः कालकवृक्षीय आजगामेति नः श्रुतम् ॥ ००३ ॥

तं पप्रच्छोपसङ्गृह्य कृच्छ्रामापदमास्थितः ॥ ००३ ॥

अर्थेषु भागी पुरुष ईहमानः पुनः पुनः ।
अलब्ध्वा मद्विधो राज्यं ब्रह्मन्किं कर्तुमर्हति ॥ ००४ ॥

अन्यत्र मरणात्स्तेयादन्यत्र परसंश्रयात् ।
क्षुद्रादन्यत्र चाचारात्तन्ममाचक्ष्व सत्तम ॥ ००५ ॥

व्याधिना चाभिपन्नस्य मानसेनेतरेण वा ।
बहुश्रुतः कृतप्रज्ञस्त्वद्विधः शरणं भवेत् ॥ ००६ ॥

निर्विद्य हि नरः कामान्नियम्य सुखमेधते ।
त्यक्त्वा प्रीतिं च शोकं च लब्ध्वाप्रीतिमयं वसु ॥ ००७ ॥

सुखमर्थाश्रयं येषामनुशोचामि तानहम् ।
मम ह्यर्थाः सुबहवो नष्टाः स्वप्न इवागताः ॥ ००८ ॥

दुष्करं बत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये ।
वयं त्वेनान्परित्यक्तुमसतोऽपि न शक्नुमः ॥ ००९ ॥

इमामवस्थां संप्राप्तं दीनमार्तं श्रियश्च्युतम् ।
यदन्यत्सुखमस्तीह तद्ब्रह्मन्ननुशाधि माम् ॥ ०१० ॥

कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता ।
मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ॥ ०११ ॥

पुरस्तादेव ते बुद्धिरियं कार्या विजानतः ।
अनित्यं सर्वमेवेदमहं च मम चास्ति यत् ॥ ०१२ ॥

यत्किञ्चिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत् ।

एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥ ०१३ ॥

यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति ।
एवं विदितवेद्यस्त्वमधर्मेभ्यः प्रमोक्ष्यसे ॥ ०१४ ॥

यच्च पूर्वे समाहारे यच्च पूर्वतरे परे ।
सर्वं तन्नास्ति तच्चैव तज्ज्ञात्वा कोऽनुसञ्ज्वरेत् ॥ ०१५ ॥

भूत्वा च न भवत्येतदभूत्वा च भवत्यपि ।
शोके न ह्यस्ति सामर्थ्यं शोकं कुर्यात्कथं नरः ॥ ०१६ ॥

क्व नु तेऽद्य पिता राजन्क्व नु तेऽद्य पितामहः ।
न त्वं पश्यसि तानद्य न त्वा पश्यन्ति तेऽपि च ॥ ०१७ ॥

आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनुशोचसि ।
बुद्ध्या चैवानुबुध्यस्व ध्रुवं हि न भविष्यसि ॥ ०१८ ॥

अहं च त्वं च नृपते शत्रवः सुहृदश्च ते ।
अवश्यं न भविष्यामः सर्वं च न भविष्यति ॥ ०१९ ॥

ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥ ०२० ॥

अपि चेन्महतो वित्ताद्विप्रमुच्येत पूरुषः ।
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥ ०२१ ॥

अनागतं यन्न ममेति विद्या ;दतिक्रान्तं यन्न ममेति विद्यात् ।
दिष्टं बलीय इति मन्यमाना ;स्ते पण्डितास्तत्सतां स्थानमाहुः ॥ ०२२ ॥

अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते ।
बुद्धिपौरुषसंपन्नास्त्वया तुल्याधिका जनाः ॥ ०२३ ॥

न च त्वमिव शोचन्ति तस्मात्त्वमपि मा शुचः ।
किं नु त्वं तैर्न वै श्रेयांस्तुल्यो वा बुद्धिपौरुषैः ॥ ०२४ ॥

राजपुत्र उवाच ॥

यादृच्छिकं ममासीत्तद्राज्यमित्येव चिन्तये ।
ह्रियते सर्वमेवेदं कालेन महता द्विज ॥ ०२५ ॥

तस्यैवं ह्रियमाणस्य स्रोतसेव तपोधन ।
फलमेतत्प्रपश्यामि यथालब्धेन वर्तये ॥ ०२६ ॥

मुनिरुवाच ॥

अनागतमतीतं च यथा तथ्यविनिश्चयात् ।
नानुशोचसि कौसल्य सर्वार्थेषु तथा भव ॥ ०२७ ॥

अवाप्यान्कामयस्वार्थान्नानवाप्यान्कदाचन ।
प्रत्युत्पन्नाननुभवन्मा शुचस्त्वमनागतान् ॥ ०२८ ॥

यथा लब्धोपपन्नार्थस्तथा कौसल्य रंस्यसे ।
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥ ०२९ ॥

पुरस्ताद्भूतपूर्वत्वाद्धीनभाग्यो हि दुर्मतिः ।
धातारं गर्हते नित्यं लब्धार्थांश्च न मृष्यते ॥ ०३० ॥

अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान् ।
एतस्मात्कारणादेतद्दुःखं भूयोऽनुवर्तते ॥ ०३१ ॥

ईर्ष्यातिच्छेदसंपन्ना राजन्पुरुषमानिनः ।
कच्चित्त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ॥ ०३२ ॥

सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा ।
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते जनाः ॥ ०३२ ॥

अभिविष्यन्दते श्रीर्हि सत्यपि द्विषतो जनात् ॥ ०३३ ॥

श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः ।
त्यागधर्मविदो वीराः स्वयमेव त्यजन्त्युत ॥ ०३४ ॥

बहु सङ्कसुकं दृष्ट्वा विवित्सासाधनेन च ।
तथान्ये संत्यजन्त्येनं मत्वा परमदुर्लभम् ॥ ०३५ ॥

त्वं पुनः प्राज्ञरूपः सन्कृपणं परितप्यसे ।
अकाम्यान्कामयानोऽर्थान्पराचीनानुपद्रुतान् ॥ ०३६ ॥

तां बुद्धिमुपजिज्ञासुस्त्वमेवैनान्परित्यज ।
अनर्थांश्चार्थरूपेण अर्थांश्चानर्थरूपतः ॥ ०३७ ॥

अर्थायैव हि केषाञ्चिद्धननाशो भवत्युत ।
अनन्त्यं तं सुखं मत्वा श्रियमन्यः परीक्षते ॥ ०३८ ॥

रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते ।
तथा तस्येहमानस्य समारम्भो विनश्यति ॥ ०३९ ॥

कृच्छ्राल्लब्धमभिप्रेतं यदा कौसल्य नश्यति ।
तदा निर्विद्यते सोऽर्थात्परिभग्नक्रमो नरः ॥ ०४० ॥

धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः ।
परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ॥ ०४१ ॥

जीवितं संत्यजन्त्येके धनलोभपरा नराः ।

न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ॥ ०४२ ॥

पश्य तेषां कृपणतां पश्य तेषामबुद्धिताम् ।
अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ॥ ०४३ ॥

सञ्चये च विनाशान्ते मरणान्ते च जीविते ।
संयोगे विप्रयोगान्ते को नु विप्रणयेन्मनः ॥ ०४४ ॥

धनं वा पुरुषं राजन्पुरुषो वा पुनर्धनम् ।
अवश्यं प्रजहात्येतत्तद्विद्वान्कोऽनुसञ्ज्वरेत् ॥ ०४५ ॥

अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ।
पश्य बुद्ध्या मनुष्याणां राजन्नापदमात्मनः ॥ ०४६ ॥

नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरम् ॥ ०४६ ॥

प्रतिषिद्धानवाप्येषु दुर्लभेष्वहितेषु च ।
प्रतिकृष्टेषु भावेषु व्यतिकृष्टेष्वसंभवे ॥ ०४७ ॥

प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ॥ ०४७ ॥

अल्पमिच्छन्नचपलो मृदुर्दान्तः सुसंशितः ।
ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति ॥ ०४८ ॥

न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ॥ ०४९ ॥

अपि मूलफलाजीवो रमस्वैको महावने ।
वाग्यतः सङ्गृहीतात्मा सर्वभूतदयान्वितः ॥ ०५० ॥

सदृशं पण्डितस्यैतदीषादन्तेन दन्तिना ।

यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति ॥ ०५१ ॥

महाह्रदः सङ्क्षुभित आत्मनैव प्रसीदति ।
एतदेवङ्गतस्याहं सुखं पश्यामि केवलम् ॥ ०५२ ॥

असंभवे श्रियो राजन्हीनस्य सचिवादिभिः ।
दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ॥ ०५३ ॥

---

# अध्याय १०६

मुनिरुवाच ॥

अथ चेत्पौरुषं किञ्चित्क्षत्रियात्मनि पश्यसि ।
ब्रवीमि हन्त ते नीतिं राज्यस्य प्रतिपत्तये ॥ ००१ ॥

तां चेच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि ।
शृणु सर्वमशेषेण यत्त्वां वक्ष्यामि तत्त्वतः ॥ ००२ ॥

आचरिष्यसि चेत्कर्म महतोऽर्थानवाप्स्यसि ।
राज्यं राज्यस्य मन्त्रं वा महतीं वा पुनः श्रियम् ॥ ००३ ॥

यद्येतद्रोचते राजन्पुनर्ब्रूहि ब्रवीमि ते ॥ ००३ ॥

राजपुत्र उवाच ॥

ब्रवीतु भगवान्नीतिमुपपन्नोऽस्म्यहं प्रभो ।
अमोघमिदमद्यास्तु त्वया सह समागतम् ॥ ००४ ॥

मुनिरुवाच ॥

हित्वा स्तम्भं च मानं च क्रोधहर्षौ भयं तथा ।
प्रत्यमित्रं निषेवस्व प्रणिपत्य कृताञ्जलिः ॥ ००५ ॥

तमुत्तमेन शौचेन कर्मणा चाभिराधय ।
दातुमर्हति ते वृत्तिं वैदेहः सत्यसङ्गरः ॥ ००६ ॥

प्रमाणं सर्वभूतेषु प्रग्रहं च गमिष्यसि ।
ततः सहायान्सोत्साहा.ण्ल्लप्स्यसेऽव्यसनाञ्शुचीन् ॥ ००७ ॥

वर्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः ।
अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ॥ ००८ ॥

तेनैव त्वं धृतिमता श्रीमता चाभिसत्कृतः ।
प्रमाणं सर्वभूतेषु गत्वा प्रग्रहणं महत् ॥ ००९ ॥

ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम् ।
अन्तरैर्भेदयित्वारीन्बिल्वं बिल्वेन शातय ॥ ०१० ॥

परैर्वा संविदं कृत्वा बलमप्यस्य घातय ॥ ०१० ॥

अलभ्या ये शुभा भावाः स्त्रियश्चाच्छादनानि च ।
शय्यासनानि यानानि महार्हाणि गृहाणि च ॥ ०११ ॥

पक्षिणो मृगजातानि रसा गन्धाः फलानि च ।
तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः ॥ ०१२ ॥

यद्येव प्रतिषेद्धव्यो यद्युपेक्षणमर्हति ।
न जातु विवृतः कार्यः शत्रुर्विनयमिच्छता ॥ ०१३ ॥

वसस्व परमामित्रविषये प्राज्ञसंमते ।
भजस्व श्वेतकाकीयैर्मित्राधममनर्थकैः ॥ ०१४ ॥

आरम्भांश्चास्य महतो दुष्करांस्त्वं प्रयोजय ।
नदीबन्धविरोधांश्च बलवद्भिर्विरुध्यताम् ॥ ०१५ ॥

उद्यानानि महार्हाणि शयनान्यासनानि च ।
प्रतिभोगसुखेनैव कोशमस्य विरेचय ॥ ०१६ ॥

यज्ञदानप्रशंसास्मै ब्राह्मणेष्वनुवर्ण्यताम् ।
ते त्वत्प्रियं करिष्यन्ति तं चेष्यन्ति वृका इव ॥ ०१७ ॥

असंशयं पुण्यशीलः प्राप्नोति परमां गतिम् ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति पार्थिवः ॥ ०१८ ॥

कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति ॥ ०१८ ॥

उभयत्र प्रसक्तस्य धर्मे चाधर्म एव च ।
बलार्थमूलं व्युच्छिद्येत्तेन नन्दन्ति शत्रवः ॥ ०१९ ॥

निन्द्यास्य मानुषं कर्म दैवमस्योपवर्णय ।
असंशयं दैवपरः क्षिप्रमेव विनश्यति ॥ ०२० ॥

याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम् ।
ततो गच्छत्वसिद्धार्थः पीड्यमानो महाजनम् ॥ ०२१ ॥

त्यागधर्मविदं मुण्डं कञ्चिदस्योपवर्णय ।
अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयम् ॥ ०२२ ॥

सिद्धेनौषधयोगेन सर्वशत्रुविनाशिना ।
नागानश्वान्मनुष्यांश्च कृतकैरुपघातय ॥ ०२३ ॥

एते चान्ये च बहवो दम्भयोगाः सुनिश्चिताः ।
शक्या विषहता कर्तुं नक्लीबेन नृपात्मज ॥ ०२४ ॥

---

# अध्याय १०७

राजपुत्र उवाच ॥

न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् ।
नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् ॥ ००१ ॥

पुरस्तादेव भगवन्मयैतदपवर्जितम् ।
येन मां नाभिशङ्केत यद्वा कृत्स्नं हितं भवेत् ॥ ००२ ॥

आनृशंस्येन धर्मेण लोके ह्यस्मिञ्जिजीविषुः ।
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ॥ ००३ ॥

मुनिरुवाच ॥

उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शन ॥ ००४ ॥

उभयोरेव वामर्थे यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ ००५ ॥

त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ ००६ ॥

यस्त्वं प्रव्रजितो राज्याद्व्यसनं चोत्तमं गतः ।
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम्  ॥ ००७  ॥

आगन्ता मद्गृहं तात वैदेहः सत्यसङ्गरः ।
यथाहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम्  ॥ ००८  ॥

भीष्म उवाच  ॥

तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ।
अयं राजकुले जातो विदिताभ्यन्तरो मम  ॥ ००९  ॥

आदर्श इव शुद्धात्मा शारदश्चन्द्रमा इव ।
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः  ॥ ०१०  ॥

तेन ते संधिरेवास्तु विश्वसास्मिन्यथा मयि ।
न राज्यमनमात्येन शक्यं शास्तुममित्रहन्  ॥ ०११  ॥

अमात्यः शूर एव स्याद्बुद्धिसंपन्न एव च ।
ताभ्यां चैव भयं राज्ञः पश्य राज्यस्य योजनम्  ॥ ०१२  ॥

धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी  ॥ ०१२  ॥

कृतात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
सुसङ्गृहीतस्त्वेवैष त्वया धर्मपुरोगमः  ॥ ०१३  ॥

संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान्  ॥ ०१३  ॥

यद्ययं प्रतियुध्येत्त्वां स्वकर्म क्षत्रियस्य तत् ।
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे  ॥ ०१४  ॥

त्वं चापि प्रतियुध्येथा विजिगीषुव्रते स्थितः ।

अयुद्धैव नियोगान्मे वशे वैदेह ते स्थितः ॥ ०१५ ॥

स त्वं धर्ममवेक्षस्व त्यक्त्वाधर्ममसांप्रतम् ।
न हि कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि ॥ ०१६ ॥

नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः ॥ ०१७ ॥

आत्मन्येव हि संदृश्यावुभौ जयपराजयौ ।
निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥ ०१८ ॥

इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
अभिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ ०१९ ॥

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः ।
श्रेयस्कामो यथा ब्रूयादुभयोर्यत्क्षमं भवेत् ॥ ०२० ॥

तथा वचनमुक्तोऽस्मि करिष्यामि च तत्तथा ।
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥ ०२१ ॥

ततः कौशल्यमाहूय वैदेहो वाक्यमब्रवीत् ।
धर्मतो नीतितश्चैव बलेन च जितो मया ॥ ०२२ ॥

सोऽहं त्वया त्वात्मगुणैर्जितः पार्थिवसत्तम ।
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् ॥ ०२३ ॥

नावमन्ये च ते बुद्धिं नावमन्ये च पौरुषम् ।
नावमन्ये जयामीति जितवद्वर्ततां भवान् ॥ ०२४ ॥

यथावत्पूजितो राजन्गृहं गन्तासि मे गृहात् ।
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥ ०२५ ॥

वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत्  ॥ ०२६  ॥

ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मः सह्यौ जयपराजयौ  ॥ ०२७  ॥

---

# अध्याय १०८

युधिष्ठिर उवाच  ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
धर्मो वृत्तं च वृत्तिश्च वृत्त्युपायफलानि च  ॥ ००१  ॥

राज्ञां वृत्तं च कोशश्च कोशसञ्जननं महत् ।
अमात्यगुणवृद्धिश्च प्रकृतीनां च वर्धनम्  ॥ ००२  ॥

षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च ।
दुष्टस्य च परिज्ञानमदुष्टस्य च लक्षणम्  ॥ ००३  ॥

समहीनाधिकानां च यथावल्लक्षणोच्चयः ।
मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्धता  ॥ ००४  ॥

क्षीणसङ्ग्रहवृत्तिश्च यथावत्संप्रकीर्तिता ।
लघुनादेशरूपेण ग्रन्थयोगेन भारत  ॥ ००५  ॥

विजिगीषोस्तथावृत्तमुक्तं चैव तथैव ते ।

गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर  ॥ ००६  ॥

यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ।
अरीन्हि विजिगीषन्ते सुहृदः प्राप्नुवन्ति च  ॥ ००७  ॥

भेदमूलो विनाशो हि गणानामुपलभ्यते ।
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः  ॥ ००८  ॥

एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप ।
यथा च ते न भिद्येरंस्तच्च मे ब्रूहि पार्थिव  ॥ ००९  ॥

भीष्म उवाच  ॥

गणानां च कुलानां च राज्ञां च भरतर्षभ ।
वैरसंदीपनावेतौ लोभामर्षौ जनाधिप  ॥ ०१०  ॥

लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
तौ क्षयव्ययसंयुक्तावन्योन्यजनिताश्रयौ  ॥ ०११  ॥

चारमन्त्रबलादानैः सामदानविभेदनैः ।
क्षयव्ययभयोपायैः कर्शयन्तीतरेतरम्  ॥ ०१२  ॥

तत्र दानेन भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात्  ॥ ०१३  ॥

भेदाद्गणा विनश्यन्ति भिन्नाः सूपजपाः परैः ।
तस्मात्संघातयोगेषु प्रयतेरन्गणाः सदा  ॥ ०१४  ॥

अर्था ह्येवाधिगम्यन्ते संघातबलपौरुषात् ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु  ॥ ०१५  ॥

ज्ञानवृद्धान्प्रशंसन्तः शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥ ०१६ ॥

धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत्संप्रवर्तन्तो विवर्धन्ते गणोत्तमाः ॥ ०१७ ॥

पुत्रान्भ्रातॄन्निगृह्णन्तो विनये च सदा रताः ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥ ०१८ ॥

चारमन्त्रविधानेषु कोशसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥ ०१९ ॥

प्राज्ञाञ्शूरान्महेष्वासान्कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥ ०२० ॥

द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान्गणानुत्तारयन्ति ते ॥ ०२१ ॥

क्रोधो भेदो भयो दण्डः कर्शनं निग्रहो वधः ।
नयन्त्यरिवशं सद्यो गणान्भरतसत्तम ॥ ०२२ ॥

तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥ ०२३ ॥

मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शन ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥ ०२४ ॥

गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ।
पृथग्गणस्य भिन्नस्य विमतस्य ततोऽन्यथा ॥ ०२५ ॥

अर्थाः प्रत्यवसीदन्ति तथानर्था भवन्ति च ॥ ०२५ ॥

तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥ ०२६ ॥

कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य राजन्कुर्वन्ति गणसंभेदकारिकाम् ॥ ०२७ ॥

आभ्यन्तरं भयं रक्ष्यं सुरक्ष्यं बाह्यतो भयम् ।
अभ्यन्तराद्भयं जातं सद्यो मूलं निकृन्तति ॥ ०२८ ॥

अकस्मात्क्रोधलोभाद्वा मोहाद्वापि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥ ०२९ ॥

जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा ।
न तु शौर्येण बुद्ध्या वा रूपद्रव्येण वा पुनः ॥ ०३० ॥

भेदाच्चैव प्रमादाच्च नाम्यन्ते रिपुभिर्गणाः ।
तस्मात्संघातमेवाहुर्गणानां शरणं महत् ॥ ०३१ ॥

---

# अध्याय १०९

युधिष्ठिर उवाच ॥

महानयं धर्मपथो बहुशाखश्च भारत ।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ ००१ ॥

किं कार्यं सर्वधर्माणां गरीयो भवतो मतम् ।

यथायं पुरुषो धर्ममिह च प्रेत्य चाप्नुयात् ॥ ००२ ॥

भीष्म उवाच ॥

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र युक्तो नरो लोकान्यशश्च महदश्नुते ॥ ००३ ॥

यदेते ह्यभिजानीयुः कर्म तात सुपूजिताः ।
धर्म्यं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥ ००४ ॥

न तैरनभ्यनुज्ञातो धर्ममन्यं प्रकल्पयेत् ।
यमेतेऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥ ००५ ॥

एत एव त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥ ००६ ॥

पिता ह्यग्निर्गार्हपत्यो माताग्निर्दक्षिणः स्मृतः ।
गुरुराहवनीयस्तु साग्नित्रेता गरीयसी ॥ ००७ ॥

त्रिष्वप्रमाद्यन्नेतेषु त्री.ण्ल्लोकानवजेष्यसि ।
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथापरम् ॥ ००८ ॥

ब्रह्मलोकं गुरोर्वृत्त्या नित्यमेव चरिष्यसि ॥ ००८ ॥

सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ।
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ॥ ००९ ॥

नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत् ।
नित्यं परिचरेच्चैव तद्वै सुकृतमुत्तमम् ॥ ०१० ॥

कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे च जनाधिप ॥ ०१० ॥

सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ०११ ॥

नैवायं न परो लोकस्तस्य चैव परंतप ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ॥ ०१२ ॥

न चास्मिन्न परे लोके यशस्तस्य प्रकाशते ।
न चान्यदपि कल्याणं पारत्रं समुदाहृतम् ॥ ०१३ ॥

तेभ्य एव तु तत्सर्वं कृत्यया विसृजाम्यहम् ।
तदासीन्मे शतगुणं सहस्रगुणमेव च ॥ ०१४ ॥

तस्मान्मे संप्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ ०१४ ॥

दशैव तु सदाचार्यः श्रोत्रियानतिरिच्यते ।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ॥ ०१५ ॥

पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि ।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥ ०१६ ॥

गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः ॥ ०१६ ॥

उभौ हि मातापितरौ जन्मनि व्युपयुज्यतः ।
शरीरमेतौ सृजतः पिता माता च भारत ॥ ०१७ ॥

आचार्यशिष्टा या जातिः सा दिव्या साजरामरा ॥ ०१७ ॥

अवध्या हि सदा माता पिता चाप्यपकारिणौ ।
न संदुष्यति तत्कृत्वा न च ते दूषयन्ति तम् ॥ ०१८ ॥

धर्माय यतमानानां विदुर्देवाः सहर्षिभिः ॥ ०१८ ॥

य आवृणोत्यवितथेन कर्णा ;वृतं ब्रुवन्नमृतं संप्रयच्छन् ।
तं वै मन्ये पितरं मातरं च ; तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ०१९ ॥

विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते ; प्रत्यासन्नं मनसा कर्मणा वा ।
यथैव ते गुरुभिर्भावनीया ;स्तथा तेषां गुरवोऽप्यर्चनीयाः ॥ ०२० ॥

तस्मात्पूजयितव्याश्च संविभज्याश्च यत्नतः ।
गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता ॥ ०२१ ॥

येन प्रीताश्च पितरस्तेन प्रीतः पितामहः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ ०२२ ॥

येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम् ।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ॥ ०२३ ॥

ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह ॥ ०२३ ॥

न केनचन वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् ।
न च माता न च पिता तादृशो यादृशो गुरुः ॥ ०२४ ॥

न तेऽवमानमर्हन्ति न च ते दूषयन्ति तम् ।
गुरूणामेव सत्कारं विदुर्देवाः सहर्षिभिः ॥ ०२५ ॥

उपाध्यायं पितरं मातरं च ; येऽभिद्रुह्यन्ति मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं ; तस्मान्नान्यः पापकृदस्ति लोके ॥ ०२६ ॥

मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुमः ॥ ०२७ ॥

एतत्सर्वमतिदेशेन सृष्टं; यत्कर्तव्यं पुरुषेणेह लोके ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं; सर्वान्धर्माननुसृत्यैतदुक्तम्  ॥ ०२८  ॥

---

# अध्याय ११०

युधिष्ठिर उवाच  ॥

कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ  ॥ ००१  ॥

सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः  ॥ ००२  ॥

किं स्वित्सत्यं किमनृतं किं स्विद्धर्म्यं सनातनम् ।
कस्मिन्काले वदेत्सत्यं कस्मिन्कालेऽनृतं वदेत्  ॥ ००३  ॥

भीष्म उवाच  ॥

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यद्भूलोके सुदुर्ज्ञातं तत्ते वक्ष्यामि भारत  ॥ ००४  ॥

भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं वाप्यनृतं भवेत्  ॥ ००५  ॥

तादृशे मुह्यते बालो यत्र सत्यमनिष्ठितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित्  ॥ ००६  ॥

अप्यनार्योऽकृतप्रज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ००७ ॥

किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।
सुमहत्प्राप्नुयात्पापं गङ्गायामिव कौशिकः ॥ ००८ ॥

तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्वचः ।
दुष्करः प्रतिसंख्यातुं तर्केणात्र व्यवस्यति ॥ ००९ ॥

प्रभावार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥ ०१० ॥

धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ ०११ ॥

श्रुतिधर्म इति ह्येके नेत्याहुरपरे जनाः ।
न तु तत्प्रत्यसूयामो न हि सर्वं विधीयते ॥ ०१२ ॥

येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित् ।
तेभ्यस्तन्न तदाख्येयं स धर्म इति निश्चयः ॥ ०१३ ॥

अकूजनेन चेन्मोक्षो नात्र कूजेत्कथञ्चन ।
अवश्यं कूजितव्यं वा शङ्केरन्वाप्यकूजनात् ॥ ०१४ ॥

श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ।
यः पापैः सह संबन्धान्मुच्यते शपथादिति ॥ ०१५ ॥

न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ ०१६ ॥

स्वशरीरोपरोधेन वरमादातुमिच्छतः ।

सत्यसंप्रतिपत्त्यर्थं ये ब्रूयुः साक्षिणः क्वचित् ॥ ०१७ ॥

अनुक्त्वा तत्र तद्वाच्यं सर्वे तेऽनृतवादिनः ॥ ०१७ ॥

प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात् ॥ ०१८ ॥

परेषां धर्ममाकाङ्क्षन्नीचः स्याद्धर्मभिक्षुकः ॥ ०१८ ॥

प्रतिश्रुत्य तु दातव्यं श्वःकार्यस्तु बलात्कृतः ।
यः कश्चिद्धर्मसमयात्प्रच्युतोऽधर्ममास्थितः ॥ ०१९ ॥

शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम् ।
सर्वोपायैर्निहन्तव्यः पापो निकृतिजीवनः ॥ ०२० ॥

धनमित्येव पापानां सर्वेषामिह निश्चयः ।
येऽविषह्या ह्यसंभोज्या निकृत्या पतनं गताः ॥ ०२१ ॥

च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ।
धनादानाद्दुःखतरं जीविताद्विप्रयोजनम् ॥ ०२२ ॥

अयं वो रोचतां धर्म इति वाच्यः प्रयत्नतः ।
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ॥ ०२३ ॥

तथागतं च यो हन्यान्नासौ पापेन लिप्यते ।
स्वकर्मणा हतं हन्ति हत एव स हन्यते ॥ ०२४ ॥

तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥ ०२४ ॥

यथा काकश्च गृध्रश्च तथैवोपधिजीविनः ।
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥ ०२५ ॥

यस्मिन्यथा वर्तते यो मनुष्य ;स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः ; साध्वाचारः साधुना प्रत्युदेयः ॥ ०२६ ॥

---

# अध्याय १११

युधिष्ठिर उवाच ॥

क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः ।
दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ ००२ ॥

ये दम्भान्न जपन्ति स्म येषां वृत्तिश्च संवृता ।
विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ ००३ ॥

वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः ।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ ००४ ॥

मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ।
वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ॥ ००५ ॥

स्वेषु दारेषु वर्तन्ते न्यायवृत्तेष्वृतावृतौ ।
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ॥ ००६ ॥

ये न लोभान्नयन्त्यर्थान्राजानो रजसावृताः ।
विषयान्परिरक्षन्तो दुर्गाण्यतितरन्ति ते ॥ ००७ ॥

आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम् ।
धर्मेण जयमिच्छन्तो दुर्गाण्यतितरन्ति ते ॥ ००८ ॥

ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ॥ ००९ ॥

ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥ ०१० ॥

अनध्यायेषु ये विप्राः स्वाध्यायं नैव कुर्वते ।
तपोनित्याः सुतपसो दुर्गाण्यतितरन्ति ते ॥ ०११ ॥

कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः ।
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते ॥ ०१२ ॥

ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ।
विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ ०१३ ॥

ये च संशान्तरजसः संशान्ततमसश्च ये ।
सत्ये स्थिता महात्मानो दुर्गाण्यतितरन्ति ते ॥ ०१४ ॥

येषां न कश्चित्त्रसति त्रसन्ति न च कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते ॥ ०१५ ॥

परश्रिया न तप्यन्ते ये सन्तः पुरुषर्षभाः ।
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते ॥ ०१६ ॥

सर्वान्देवान्नमस्यन्ति सर्वान्धर्मांश्च शृण्वते ।
ये श्रद्दधाना दान्ताश्च दुर्गाण्यतितरन्ति ते ॥ ०१७ ॥

ये न मानितमिच्छन्ति मानयन्ति च ये परम् ।
मान्यमाना न मन्यन्ते दुर्गाण्यतितरन्ति ते ॥ ०१८ ॥

ये श्राद्धानि च कुर्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः ।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥ ०१९ ॥

ये क्रोधं नैव कुर्वन्ति क्रुद्धान्संशमयन्ति च ।
न च कुप्यन्ति भृत्येभ्यो दुर्गाण्यतितरन्ति ते ॥ ०२० ॥

मधु मांसं च ये नित्यं वर्जयन्तीह मानवाः ।
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते ॥ ०२१ ॥

यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥ ०२२ ॥

ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं ये च दुर्गाण्यतितरन्ति ते ॥ ०२३ ॥

य एष रक्तपद्माक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च संबन्धी च तवाच्युतः ॥ ०२४ ॥

य इमान्सकला.ण्ल्लोकांश्चर्मवत्परिवेष्टयेत् ।
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ ०२५ ॥

स्थितः प्रियहिते जिष्णोः स एष पुरुषर्षभ ।
राजंस्तव च दुर्धर्षो वैकुण्ठः पुरुषोत्तमः ॥ ०२६ ॥

य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।

ते तरन्तीह दुर्गाणि न मेऽत्रास्ति विचारणा ॥ ०२७ ॥

दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
पाठयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ ०२८ ॥

इति कृत्यसमुद्देशः कीर्तितस्ते मयानघ ।
संतरेद्येन दुर्गाणि परत्रेह च मानवः ॥ ०२९ ॥

---

# व्याघ्रगोमायुसंवादः

## अध्याय ११२

युधिष्ठिर उवाच ॥

असौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शिनः ।
ईदृशान्पुरुषांस्तात कथं विद्यामहे वयम् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्याघ्रगोमायुसंवादं तं निबोध युधिष्ठिर ॥ ००२ ॥

पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः ।
परहिंसारुचिः क्रूरो बभूव पुरुषाधमः ॥ ००३ ॥

स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् ।
गोमायुत्वं च संप्राप्तो दूषितः पूर्वकर्मणा ॥ ००४ ॥

संस्मृत्य पूर्वजातिं स निर्वेदं परमं गतः ।
न भक्षयति मांसानि परैरुपहृतान्यपि ॥ ००५ ॥

अहिंस्रः सर्वभूतेषु सत्यवाक्सुदृढव्रतः ।
चकार च यथाकाममाहारं पतितैः फलैः ॥ ००६ ॥

श्मशाने तस्य चावासो गोमायोः संमतोऽभवत् ।
जन्मभूम्यनुरोधाच्च नान्यद्वासमरोचयत् ॥ ००७ ॥

तस्य शौचममृष्यन्तः सर्वे ते सहजातयः ।
चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ॥ ००८ ॥

वसन्पितृवने रौद्रे शौचं लप्सितुमिच्छसि ।
इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ॥ ००९ ॥

तत्समो वा भवास्माभिर्भक्ष्यान्दास्यामहे वयम् ।
भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदस्ति ते ॥ ०१० ॥

इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः ।
मधुरैः प्रश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ॥ ०११ ॥

अप्रमाणं प्रसूतिर्मे शीलतः क्रियते कुलम् ।
प्रार्थयिष्ये तु तत्कर्म येन विस्तीर्यते यशः ॥ ०१२ ॥

श्मशाने यदि वासो मे समाधिर्मे निशाम्यताम् ।
आत्मा फलति कर्माणि नाश्रमो धर्मलक्षणम् ॥ ०१३ ॥

आश्रमे यो द्विजं हन्याद्गां वा दद्यादनाश्रमे ।
किं नु तत्पातकं न स्यात्तद्वा दत्तं वृथा भवेत् ॥ ०१४ ॥

भवन्तः सर्वलोभेन केवलं भक्षणे रताः ।
अनुबन्धे तु ये दोषास्तान्न पश्यन्ति मोहिताः ॥ ०१५ ॥

अप्रत्ययकृतां गर्ह्यामर्थापनयदूषिताम् ।
इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ ०१६ ॥

तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः ।
कृत्वात्मसदृशां पूजां साचिव्येऽवर्धयत्स्वयम् ॥ ०१७ ॥

सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह ।
व्रियन्तामीप्सिता भोगाः परिहार्याश्च पुष्कलाः ॥ ०१८ ॥

तीक्ष्णा वयमिति ख्याता भवतो ज्ञापयामहे ।
मृदुपूर्वं घातिनस्ते श्रेयश्चाधिगमिष्यति ॥ ०१९ ॥

अथ संपूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः ।
गोमायुः प्रश्रितं वाक्यं बभाषे किंचिदानतः ॥ ०२० ॥

सदृशं मृगराजैतत्तव वाक्यं मदन्तरे ।
यत्सहायान्मृगयसे धर्मार्थकुशलाञ्शुचीन् ॥ ०२१ ॥

न शक्यमनमात्येन महत्त्वमनुशासितुम् ।
दुष्टामात्येन वा वीर शरीरपरिपन्थिना ॥ ०२२ ॥

सहायाननुरक्तांस्तु यतेतानुपसंहितान् ।
परस्परमसंघुष्टान्विजिगीषूनलोलुपान् ॥ ०२३ ॥

तानतीतोपधान्प्राज्ञान्हिते युक्तान्मनस्विनः ।
पूजयेथा महाभागान्यथाचार्यान्यथा पितॄन् ॥ ०२४ ॥

न त्वेवं मम संतोषाद्रोचतेऽन्यन्मृगाधिप ।

न कामये सुखान्भोगानैश्वर्यं वा त्वदाश्रयम् ॥ ०२५ ॥

न योक्ष्यति हि मे शीलं तव भृत्यैः पुरातनैः ।
ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे ॥ ०२६ ॥

संश्रयः श्लाघनीयस्त्वमन्येषामपि भास्वताम् ।
कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः ॥ ०२७ ॥

दीर्घदर्शी महोत्साहः स्थूललक्ष्यो महाबलः ।
कृती चामोघकर्तासि भाव्यैश्च समलङ्कृतः ॥ ०२८ ॥

किं तु स्वेनास्मि संतुष्टो दुःखा वृत्तिरनुष्ठिता ।
सेवायाश्चापि नाभिज्ञः स्वच्छन्देन वनेचरः ॥ ०२९ ॥

राजोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम् ।
वनचर्या च निःसङ्गा निर्भया निरवग्रहा ॥ ०३० ॥

नृपेणाहूयमानस्य यत्तिष्ठति भयं हृदि ।
न तत्तिष्ठति तुष्टानां वने मूलफलाशिनाम् ॥ ०३१ ॥

पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ०३२ ॥

अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः ।
उपघातैर्यथा भृत्या दूषिता निधनं गताः ॥ ०३३ ॥

यदि त्वेतन्मया कार्यं मृगेन्द्रो यदि मन्यते ।
समयं कृतमिच्छामि वर्तितव्यं यथा मयि ॥ ०३४ ॥

मदीया माननीयास्ते श्रोतव्यं च हितं वचः ।
कल्पिता या च ते वृत्तिः सा भवेत्तव सुस्थिरा ॥ ०३५ ॥

न मन्त्रयेयमन्यैस्ते सचिवैः सह कर्हिचित् ।
नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥ ०३६ ॥

एक एकेन सङ्गम्य रहो ब्रूयां हितं तव ।
न च ते ज्ञातिकार्येषु प्रष्टव्योऽहं हिताहिते ॥ ०३७ ॥

मया संमन्त्र्य पश्चाच्च न हिंस्याः सचिवास्त्वया ।
मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ॥ ०३८ ॥

एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः ।
प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रयोनितः ॥ ०३९ ॥

तं तथा सत्कृतं दृष्ट्वा युज्यमानं च कर्मणि ।
प्राद्विषन्कृतसंघाताः पूर्वभृत्या मुहुर्मुहुः ॥ ०४० ॥

मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रवेश्य च ।
दोषेषु समतां नेतुमैच्छन्नशुभबुद्धयः ॥ ०४१ ॥

अन्यथा ह्युचिताः पूर्वं परद्रव्यापहारिणः ।
अशक्ताः किञ्चिदादातुं द्रव्यं गोमायुयन्त्रिताः ॥ ०४२ ॥

व्युत्थानं चात्र काङ्क्षद्भिः कथाभिः प्रविलोभ्यते ।
धनेन महता चैव बुद्धिरस्य विलोभ्यते ॥ ०४३ ॥

न चापि स महाप्राज्ञस्तस्माद्धैर्याच्चचाल ह ।
अथास्य समयं कृत्वा विनाशाय स्थिताः परे ॥ ०४४ ॥

ईप्सितं च मृगेन्द्रस्य मांसं यत्तत्र संस्कृतम् ।
अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि ॥ ०४५ ॥

यदर्थं चाप्यपहृतं येन यच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम्  ॥ ०४६  ॥

समयोऽयं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया ग्राह्यो राजन्मैत्रीमिहेच्छता  ॥ ०४७  ॥

भोजने चोपहर्तव्ये तन्मांसं न स्म दृश्यते ।
मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्युत  ॥ ०४८  ॥

कृतकैश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम् ।
सचिवेनोपनीतं ते विदुषा प्राज्ञमानिना  ॥ ०४९  ॥

सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ।
बभूवामर्षितो राजा वधं चास्याभ्यरोचयत्  ॥ ०५०  ॥

छिद्रं तु तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः ।
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गेषु वर्तते  ॥ ०५१  ॥

इदं चास्येदृशं कर्म वाल्लभ्येन तु रक्ष्यते ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैष तादृशः  ॥ ०५२  ॥

वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ।
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः  ॥ ०५३  ॥

कार्यार्थं भोजनार्थेषु व्रतेषु कृतवाञ्श्रमम्  ॥ ०५३  ॥

मांसापनयनं ज्ञात्वा व्याघ्रस्तेषां तु तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति  ॥ ०५४  ॥

शार्दूलवचनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत्  ॥ ०५५  ॥

पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंवृतम् ।
कर्मसंघर्षजैर्दोषैर्दुष्यत्यशुचिभिः शुचिः ॥ ०५६ ॥

नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥ ०५७ ॥

लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ॥ ०५८ ॥

अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपकाः ॥ ०५८ ॥

बहवः पण्डिता लुब्धाः सर्वे मायोपजीविनः ।
कुर्युर्दोषमदोषस्य बृहस्पतिमतेरपि ॥ ०५९ ॥

शून्यात्तच्च गृहान्मांसं यदद्यापहृतं तव ।
नेच्छते दीयमानं च साधु तावद्विमृश्यताम् ॥ ०६० ॥

असत्याः सत्यसङ्काशाः सत्याश्चासत्यदर्शिनः ।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥ ०६१ ॥

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि न खद्योते हुताशनः ॥ ०६२ ॥

तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्ह्यर्थान्न पश्चात्परितप्यते ॥ ०६३ ॥

न दुष्करमिदं पुत्र यत्प्रभुर्घातयेत्परम् ।
श्लाघनीया च वर्या च लोके प्रभवतां क्षमा ॥ ०६४ ॥

स्थापितोऽयं पुत्र त्वया सामन्तेष्वधि विश्रुतः ।

दुःखेनासाद्यते पात्रं धार्यतामेष ते सुहृत्  ॥ ०६५  ॥

दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति  ॥ ०६६  ॥

तस्माद्थारिसंघाताद्गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाख्यातं यथैतत्कपटं कृतम्  ॥ ०६७  ॥

ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः  ॥ ०६८  ॥

अनुज्ञाप्य मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत  ॥ ०६९  ॥

शार्दूलस्तत्र गोमायुं स्नेहात्प्रस्नुतलोचनः ।
अवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन्  ॥ ०७०  ॥

तं स गोमायुरालोक्य स्नेहादागतसंभ्रमम् ।
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा  ॥ ०७१  ॥

पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि  ॥ ०७२  ॥

स्वसंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः ।
स्वयं चोपहृता भृत्या ये चाप्युपहृताः परैः  ॥ ०७३  ॥

परिक्षीणाश्च लुब्धाश्च क्रूराः काराभितापिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः  ॥ ०७४  ॥

संतापिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हिताः सोपहिताः सर्वे ते परसाधनाः  ॥ ०७५  ॥

अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासमहमेष्यामि वा पुनः ॥ ०७६ ॥

समर्थ इति सङ्गृह्य स्थापयित्वा परीक्ष्य च ।
कृतं च समयं भित्त्वा त्वयाहमवमानितः ॥ ०७७ ॥

प्रथमं यः समाख्यातः शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥ ०७८ ॥

एवं चावमतस्येह विश्वासं किं प्रयास्यसि ।
त्वयि चैव ह्यविश्वासे ममोद्वेगो भविष्यति ॥ ०७९ ॥

शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः ।
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥ ०८० ॥

दुःखेन श्लेष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्तते ॥ ०८१ ॥

कश्चिदेव हि भीतस्तु दृश्यते न परात्मनोः ।
कार्यापेक्षा हि वर्तन्ते भावाः स्निग्धास्तु दुर्लभाः ॥ ०८२ ॥

सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् ।
समर्थो वाप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥ ०८३ ॥

अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रकर्तुं बुद्धिलाघवात् ॥ ०८४ ॥

एवं बहुविधं सान्त्वमुक्त्वा धर्मार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥ ०८५ ॥

अगृह्यानुनयं तस्य मृगेन्द्रस्य स बुद्धिमान् ।
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ  ॥ ०८६  ॥

---

# उष्ट्रशिरोग्रीवकथनम्

## अध्याय ११३

युधिष्ठिर उवाच  ॥

किं पार्थिवेन कर्तव्यं किं च कृत्वा सुखी भवेत् ।
तन्ममाचक्ष्व तत्त्वेन सर्वं धर्मभृतां वर  ॥ ००१  ॥

भीष्म उवाच  ॥

हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यैकनिश्चयम् ।
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत्  ॥ ००२  ॥

न त्वेवं वर्तितव्यं स्म यथेदमनुशुश्रुमः ।
उष्ट्रस्य सुमहद्वृत्तं तन्निबोध युधिष्ठिर  ॥ ००३  ॥

जातिस्मरो महानुष्ट्रः प्राजापत्ययुगोद्भवः ।
तपः सुमहदातिष्ठदरण्ये संशितव्रतः  ॥ ००४  ॥

तपसस्तस्य चान्ते वै प्रीतिमानभवत्प्रभुः ।
वरेण छन्दयामास ततश्चैनं पितामहः  ॥ ००५  ॥

उष्ट्र उवाच  ॥

भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् ।
योजनानां शतं साग्रं या गच्छेच्चरितुं विभो ॥ ००६ ॥

भीष्म उवाच ॥

एवमस्त्विति चोक्तः स वरदेन महात्मना ।
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम् ॥ ००७ ॥

स चकार तदालस्यं वरदानात्स दुर्मतिः ।
न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ॥ ००८ ॥

स कदाचित्प्रसार्यैवं तां ग्रीवां शतयोजनाम् ।
चचाराश्रान्तहृदयो वातश्चागात्ततो महान् ॥ ००९ ॥

स गुहायां शिरोग्रीवं निधाय पशुरात्मनः ।
आस्ताथ वर्षमभ्यागात्सुमहत्प्लावयज्जगत् ॥ ०१० ॥

अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः ।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ॥ ०११ ॥

स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः ।
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ ॥ ०१२ ॥

यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः ।
तदा सङ्कोचने यत्नमकरोद्भृशदुःखितः ॥ ०१३ ॥

यावदूर्ध्वमधश्चैव ग्रीवां सङ्क्षिपते पशुः ।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ ०१४ ॥

स हत्वा भक्षयित्वा च जम्बुकोष्ट्रं ततस्तदा ।

विगते वातवर्षे च निश्चक्राम गुहामुखात्  ॥ ०१५  ॥

एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा ।
आलस्यस्य क्रमात्पश्य महद्दोषमुपागतम्  ॥ ०१६  ॥

त्वमप्येतं विधिं त्यक्त्वा योगेन नियतेन्द्रियः ।
वर्तस्व बुद्धिमूलं हि विजयं मनुरब्रवीत्  ॥ ०१७  ॥

बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च  ॥ ०१८  ॥

राज्यं तिष्ठति दक्षस्य सङ्गृहीतेन्द्रियस्य च ।
गुप्तमन्त्रश्रुतवतः सुसहायस्य चानघ  ॥ ०१९  ॥

परीक्ष्यकारिणोऽर्थाश्च तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम्  ॥ ०२०  ॥

इदं हि सद्भिः कथितं विधिज्ञैः ; पुरा महेन्द्रप्रतिमप्रभाव ।
मयापि चोक्तं तव शास्त्रदृष्ट्या ; त्वमत्र युक्तः प्रचरस्व राजन्  ॥ ०२१  ॥

---

# सरित्सागरसंवादः

## अध्याय ११४

युधिष्ठिर उवाच  ॥

राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः  ॥ ००१  ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥ ००२ ॥

सुरारिनिलयः शश्वत्सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ॥ ००३ ॥

समूलशाखान्पश्यामि निहतांश्छायिनो द्रुमान् ।
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसम् ॥ ००४ ॥

अकायश्चाल्पसारश्च वेतसः कूलजश्च वः ।
अवज्ञाय नशक्यो वा किञ्चिद्वा तेन वः कृतम् ॥ ००५ ॥

तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् ।
यथा कूलानि चेमानि भित्त्वा नानीयते वशम् ॥ ००६ ॥

ततः प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ॥ ००७ ॥

तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत्स्थानं प्रातिलोम्यादचेतसः ॥ ००८ ॥

वेतसो वेगमायान्तं दृष्ट्वा नमति नेतरः ।
स च वेगेऽभ्यतिक्रान्ते स्थानमासाद्य तिष्ठति ॥ ००९ ॥

कालज्ञः समयज्ञश्च सदा वश्यश्च नोद्रुमः ।
अनुलोमस्तथास्तब्धस्तेन नाभ्येति वेतसः ॥ ०१० ॥

मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।

ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥ ०११ ॥

यो हि शत्रोर्विवृद्धस्य प्रभोर्वधविनाशने ।
पूर्वं न सहते वेगं क्षिप्रमेव स नश्यति ॥ ०१२ ॥

सारासारं बलं वीर्यमात्मनो द्विषतश्च यः ।
जानन्विचरति प्राज्ञो न स याति पराभवम् ॥ ०१३ ॥

एवमेव यदा विद्वान्मन्येतातिबलं रिपुम् ।
संश्रयेद्वैतसीं वृत्तिमेवं प्रज्ञानलक्षणम् ॥ ०१४ ॥

---

# अध्याय ११५

युधिष्ठिर उवाच ॥

विद्वान्मूर्खप्रगल्भेन मृदुस्तीक्ष्णेन भारत ।
आक्रुश्यमानः सदसि कथं कुर्यादरिंदम ॥ ००१ ॥

भीष्म उवाच ॥

श्रूयतां पृथिवीपाल यथैषोऽर्थोऽनुगीयते ।
सदा सुचेताः सहते नरस्येहाल्पचेतसः ॥ ००२ ॥

अरुष्यन्क्रुश्यमानस्य सुकृतं नाम विन्दति ।
दुष्कृतं चात्मनो मर्षी रुष्यत्येवापमार्ष्टि वै ॥ ००३ ॥

टिट्टिभं तमुपेक्षेत वाशमानमिवातुरम् ।
लोकविद्वेषमापन्नो निष्फलं प्रतिपद्यते ॥ ००४ ॥

इति स श्लाघते नित्यं तेन पापेन कर्मणा ।
इदमुक्तो मया कश्चित्संमतो जनसंसदि ॥ ००५ ॥

स तत्र व्रीडितः शुष्को मृतकल्पोऽवतिष्ठति ॥ ००५ ॥

श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः ।
उपेक्षितव्यो दान्तेन तादृशः पुरुषाधमः ॥ ००६ ॥

यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेत्सदा ।
प्राकृतो हि प्रशंसन्वा निन्दन्वा किं करिष्यति ॥ ००७ ॥

वने काक इवाबुद्धिर्वाशमानो निरर्थकम् ॥ ००७ ॥

यदि वाग्भिः प्रयोगः स्यात्प्रयोगे पापकर्मणः ।
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ ००८ ॥

निषेकं विपरीतं स आचष्टे वृत्तचेष्टया ।
मयूर इव कौपीनं नृत्यन्संदर्शयन्निव ॥ ००९ ॥

यस्यावाच्यं न लोकेऽस्ति नाकार्यं वापि किञ्चन ।
वाचं तेन न संदध्याच्छुचिः सङ्क्लिष्टकर्मणा ॥ ०१० ॥

प्रत्यक्षं गुणवादी यः परोक्षं तु विनिन्दकः ।
स मानवः श्ववल्लोके नष्टलोकपरायणः ॥ ०११ ॥

तादृग्जनशतस्यापि यद्ददाति जुहोति च ।
परोक्षेणापवादेन तन्नाशयति स क्षणात् ॥ ०१२ ॥

तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसम् ।
वर्जयेत्साधुभिर्वर्ज्यं सारमेयामिषं यथा ॥ ०१३ ॥

परिवादं ब्रुवाणो हि दुरात्मा वै महात्मने ।
प्रकाशयति दोषान्स्वान्सर्पः फणमिवोच्छ्रितम् ॥ ०१४ ॥

तं स्वकर्माणि कुर्वाणं प्रतिकर्तुं य इच्छति ।
भस्मकूट इवाबुद्धिः खरो रजसि मज्जति ॥ ०१५ ॥

मनुष्यशालावृकमप्रशान्तं ; जनापवादे सततं निविष्टम् ।
मातङ्गमुन्मत्तमिवोन्नदन्तं ; त्यजेत तं श्वानमिवातिरौद्रम् ॥ ०१६ ॥

अधीरजुष्टे पथि वर्तमानं ; दमादपेतं विनयाच्च पापम् ।
अरिव्रतं नित्यमभूतिकामं ; धिगस्तु तं पापमतिं मनुष्यम् ॥ ०१७ ॥

प्रत्युच्यमानस्तु हि भूय एभि ;र्निशाम्य मा भूस्त्वमथार्तरूपः ।
उच्चस्य नीचेन हि संप्रयोगं ; विगर्हयन्ति स्थिरबुद्धयो ये ॥ ०१८ ॥

क्रुद्धो दशार्धेन हि ताडयेद्वा ; स पांसुभिर्वापकिरेत्तुषैर्वा ।
विवृत्य दन्तांश्च विभीषयेद्वा ; सिद्धं हि मूर्खे कुपिते नृशंसे ॥ ०१९ ॥

विगर्हणां परमदुरात्मना कृतां ; सहेत यः संसदि दुर्जनान्नरः ।
पठेदिदं चापि निदर्शनं सदा ; न वाङ्मयं स लभति किञ्चिदप्रियम् ॥ ०२० ॥

---

# अध्याय ११६

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ संशयो मे महानयम् ।
स च्छेत्तव्यस्त्वया राजन्भवान्कुलकरो हि नः ॥ ००१ ॥

पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम् ।
कथितो वाक्यसञ्चारस्ततो विज्ञापयामि ते ॥ ००२ ॥

यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयम् ।
आयत्यां च तदात्वे च क्षेमवृद्धिकरं च यत् ॥ ००३ ॥

पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत् ।
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ॥ ००४ ॥

अभिषिक्तो हि यो राजा राज्यस्थो मित्रसंवृतः ।
असुहृत्समुपेतो वा स कथं रञ्जयेत्प्रजाः ॥ ००५ ॥

यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः ।
इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ॥ ००६ ॥

तस्य भृत्या विगुणतां यान्ति सर्वे कुलोद्गताः ।
न च भृत्यफलैरर्थैः स राजा संप्रयुज्यते ॥ ००७ ॥

एतान्मे संशयस्थस्य राजधर्मान्सुदुर्लभान् ।
बृहस्पतिसमो बुद्ध्या भवाञ्शंसितुमर्हति ॥ ००८ ॥

शंसिता पुरुषव्याघ्र त्वं नः कुलहिते रतः ।
क्षत्ता चैव पटुप्रज्ञो यो नः शंसति सर्वदा ॥ ००९ ॥

त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम् ।
अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखम् ॥ ०१० ॥

कीदृषाः संनिकर्षस्था भृत्याः स्युर्वा गुणान्विताः ।
कीदृशैः किङ्कुलीनैर्वा सह यात्रा विधीयते ॥ ०११ ॥

न ह्येको भृत्यरहितो राजा भवति रक्षिता ।
राज्यं चेदं जनः सर्वस्तत्कुलीनोऽभिशंसति ॥ ०१२ ॥

न हि प्रशास्तुं राज्यं हि शक्यमेकेन भारत ।
असहायवता तात नैवार्थाः केचिदप्युत ॥ ०१३ ॥

लब्धुं लब्ध्वा चापि सदा रक्षितुं भरतर्षभ ॥ ०१३ ॥

भीष्म उवाच ॥

यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः ।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ ०१४ ॥

मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः ।
नृपतेर्मतिदाः सन्ति संबन्धज्ञानकोविदाः ॥ ०१५ ॥

अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ ०१६ ॥

समदुःखसुखा यस्य सहायाः सत्यकारिणः ।
अर्थचिन्तापरा यस्य स राज्यफलमश्नुते ॥ ०१७ ॥

यस्य नार्तो जनपदः संनिकर्षगतः सदा ।
अक्षुद्रः सत्पथालम्बी स राज्यफलभाग्भवेत् ॥ ०१८ ॥

कोशाक्षपटलं यस्य कोशवृद्धिकरैर्जनैः ।
आप्तैस्तुष्टैश्च सततं धार्यते स नृपोत्तमः ॥ ०१९ ॥

कोष्ठागारमसंहार्यैराप्तैः सञ्चयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् ॥ ०२० ॥

व्यवहारश्च नगरे यस्य कर्मफलोदयः ।
दृश्यते शङ्खलिखितः स धर्मफलभाग्भवेत्  ॥ ०२१  ॥

सङ्गृहीतमनुष्यश्च यो राजा राजधर्मवित् ।
षड्वर्गं प्रतिगृह्णन्स धर्मात्फलमुपाश्नुते  ॥ ०२२  ॥

---

# श्वर्षिसंवादः

## अध्याय ११७

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निदर्शनकरं लोके सज्जनाचरितं सदा  ॥ ००१  ॥

अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः  ॥ ००२  ॥

वने महति कस्मिंश्चिदमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः  ॥ ००३  ॥

दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः  ॥ ००४  ॥

तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः ।
सर्वसत्त्वाः समीपस्था भवन्ति वनचारिणः  ॥ ००५  ॥

सिंहव्याघ्राः सशरभा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ ००६ ॥

ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ॥ ००७ ॥

दत्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्छ्वा महामुनिम् ॥ ००८ ॥

भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः ।
फलमूलोत्कराहारः शान्तः शिष्टाकृतिर्यथा ॥ ००९ ॥

तस्यर्षेरुपविष्टस्य पादमूले महामुनेः ।
मनुष्यवद्गतो भावः स्नेहबद्धोऽभवद्भृशम् ॥ ०१० ॥

ततोऽभ्ययान्महावीर्यो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यन्तसंदुष्टः क्रूरः काल इवान्तकः ॥ ०११ ॥

लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधाभग्नः प्रार्थयानस्तदामिषम् ॥ ०१२ ॥

तं दृष्ट्वा क्रूरमायान्तं जीवितार्थी नराधिप ।
प्रोवाच श्वा मुनिं तत्र यत्तच्छृणु महामते ॥ ०१३ ॥

श्वशत्रुर्भगवन्नत्र द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने ॥ ०१४ ॥

मुनिरुवाच ॥

न भयं द्वीपिनः कार्यं मृत्युतस्ते कथञ्चन ।
एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥ ०१५ ॥

भीष्म उवाच ॥

ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः ।
चित्राङ्गो विस्फुरन्हृष्टो वने वसति निर्भयः ॥ ०१६ ॥

ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।
द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः ॥ ०१७ ॥

व्याघ्रं दृष्ट्वा क्षुधाभग्नं दंष्ट्रिणं वनगोचरम् ।
द्वीपी जीवितरक्षार्थमृषिं शरणमेयिवान् ॥ ०१८ ॥

ततः संवासजं स्नेहमृषिणा कुर्वता सदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभिर्बलवत्तरः ॥ ०१९ ॥

ततो दृष्ट्वा स शार्दूलो नाभ्यहंस्तं विशां पते ॥ ०१९ ॥

स तु श्वा व्याघ्रतां प्राप्य बलवान्पिशिताशनः ।
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ॥ ०२० ॥

यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ॥ ०२१ ॥

व्याघ्रस्तूटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः ।
नागश्चागात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥ ०२२ ॥

प्रभिन्नकरटः प्रांशुः पद्मी विततमस्तकः ।
सुविषाणो महाकायो मेघगम्भीरनिस्वनः ॥ ०२३ ॥

तं दृष्ट्वा कुञ्जरं मत्तमायान्तं मदगर्वितम् ।
व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ॥ ०२४ ॥

ततोऽनयत्कुञ्जरतां तं व्याघ्रमृषिसत्तमः ।
महामेघोपमं दृष्ट्वा तं स भीतोऽभवद्गजः ॥ ०२५ ॥

ततः कमलषण्डानि शल्लकीगहनानि च ।
व्यचरत्स मुदा युक्तः पद्मरेणुविभूषितः ॥ ०२६ ॥

कदाचिद्रममाणस्य हस्तिनः सुमुखं तदा ।
ऋषेस्तस्योटजस्थस्य कालोऽगच्छन्निशानिशम् ॥ ०२७ ॥

अथाजगाम तं देशं केसरी केसरारुणः ।
गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः ॥ ०२८ ॥

तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयाकुलः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ ०२९ ॥

ततः स सिंहतां नीतो नागेन्द्रो मुनिना तदा ।
वन्यं नागणयत्सिंहं तुल्यजातिसमन्वयात् ॥ ०३० ॥

दृष्ट्वा च सोऽनशत्सिंहो वन्यो भीसन्नवाग्बलः ।
स चाश्रमेऽवसत्सिंहस्तस्मिन्नेव वने सुखी ॥ ०३१ ॥

न त्वन्ये क्षुद्रपशवस्तपोवननिवासिनः ।
व्यदृश्यन्त भयत्रस्ता जीविताकाङ्क्षिणः सदा ॥ ०३२ ॥

कदाचित्कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान्क्षतजाहारो नानासत्त्वभयङ्करः ॥ ०३३ ॥

अष्टपादूर्ध्वचरणः शरभो वनगोचरः ।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ॥ ०३४ ॥

तं मुनिः शरभं चक्रे बलोत्कटमरिंदम ।

ततः स शरभो वन्यो मुनेः शरभमग्रतः ॥ ०३५ ॥

दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्भयात् ॥ ०३५ ॥

स एवं शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शारभ्यं सुखमाप्तवान् ॥ ०३६ ॥

ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात् ।
दिशः संप्राद्रवन्राजन्भयाज्जीवितकाङ्क्षिणः ॥ ०३७ ॥

शरभोऽप्यतिसंदुष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं शान्तं नैच्छत्स पिशिताशनः ॥ ०३८ ॥

ततो रुधिरतर्षेण बलिना शरभोऽन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ॥ ०३९ ॥

ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च महाप्राज्ञो मुनिः श्वानं तमुक्तवान् ॥ ०४० ॥

श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रो नागो मदपटुर्नागः सिंहत्वमाप्तवान् ॥ ०४१ ॥

सिंहोऽतिबलसंयुक्तो भूयः शरभतां गतः ।
मया स्नेहपरीतेन न विमृष्टः कुलान्वयः ॥ ०४२ ॥

यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात्स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ॥ ०४३ ॥

ततो मुनिजनद्वेषाद्दुष्टात्मा श्वाकृतोऽबुधः ।
ऋषिणा शरभः शप्तः स्वं रूपं पुनराप्तवान् ॥ ०४४ ॥

# अध्याय ११८

भीष्म उवाच ॥

स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुङ्कृतः पापस्तपोवनबहिष्कृतः ॥ ००१ ॥

एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमम् ॥ ००२ ॥

अनुक्रोशं बलं वीर्यं भावं संप्रशमं क्षमाम् ।
भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुशिक्षिताः ॥ ००३ ॥

नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीननराकीर्णो न राजा सुखमेधते ॥ ००४ ॥

कुलजः प्रकृतो राज्ञा तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ॥ ००५ ॥

अकुलीनस्तु पुरुषः प्रकृतः साधुसङ्क्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥ ००६ ॥

कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ॥ ००७ ॥

कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम् ।
अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम् ॥ ००८ ॥

सचिवं देशकालज्ञं सर्वसङ्ग्रहणे रतम् ।
सत्कृतं युक्तमनसं हितैषिणमतन्द्रितम् ॥ ००९ ॥

युक्ताचारं स्वविषये संधिविग्रहकोविदम् ।
राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥ ०१० ॥

खातकव्यूहतत्त्वज्ञं बलहर्षणकोविदम् ।
इङ्गिताकारतत्त्वज्ञं यात्रायानविशारदम् ॥ ०११ ॥

हस्तिशिक्षासु तत्त्वज्ञमहङ्कारविवर्जितम् ।
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तकारिणम् ॥ ०१२ ॥

चोक्षं चोक्षजनाकीर्णं सुवेषं सुखदर्शनम् ।
नायकं नीतिकुशलं गुणषष्ठ्या समन्वितम् ॥ ०१३ ॥

अस्तब्धं प्रश्रितं शक्तं मृदुवादिनमेव च ।
धीरं श्लक्ष्णं महर्द्धिं च देशकालोपपादकम् ॥ ०१४ ॥

सचिवं यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ ०१५ ॥

एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।
एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ ०१६ ॥

धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः ॥ ०१७ ॥

मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥ ०१८ ॥

दानाच्छेदे स्वयङ्कारी सुद्वारः सुखदर्शनः ।

आर्तहस्तप्रदो नित्यमाप्तंमन्यो नये रतः ॥ ०१९ ॥

नाहंवादी न निर्द्वंद्वो न यत्किञ्चनकारकः ।
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥ ०२० ॥

सङ्गृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा ।
दाता भृत्यजनावेक्षी न क्रोधी सुमहामनाः ॥ ०२१ ॥

युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।
चारनेत्रः परावेक्षी धर्मार्थकुशलः सदा ॥ ०२२ ॥

राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ।
योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगुणैर्वृताः ॥ ०२३ ॥

अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणाः ।
न विमानयितव्याश्च राज्ञा वृद्धिमभीप्सता ॥ ०२४ ॥

योधाः समरशौटीराः कृतज्ञाः शस्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंयुताः ॥ ०२५ ॥

अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥ ०२६ ॥

सर्वसङ्ग्रहणे युक्तो नृपो भवति यः सदा ।
उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ॥ ०२७ ॥

शक्या अश्वसहस्रेण वीरारोहेण भारत ।
सङ्गृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा ॥ ०२८ ॥

# अध्याय ११९

भीष्म उवाच ॥

एवं शुनासमान्भृत्यान्स्वस्थाने यो नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ ००१ ॥

न श्वा स्वस्थानमुत्क्रम्य प्रमाणमभि सत्कृतः ।
आरोप्यः श्वा स्वकात्स्थानादुत्क्रम्यान्यत्प्रपद्यते ॥ ००२ ॥

स्वजातिकुलसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
प्रकर्तव्या बुधा भृत्या नास्थाने प्रक्रिया क्षमा ॥ ००३ ॥

अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥ ००४ ॥

शरभः शरभस्थाने सिंहः सिंह इवोर्जितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ ००५ ॥

कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ००६ ॥

यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ००७ ॥

न बालिशा न च क्षुद्रा न चाप्रतिमितेन्द्रियाः ।
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥ ००८ ॥

साधवः कुशलाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षा नराः स्युः पारिपार्श्वकाः ॥ ००९ ॥

न्यग्भूतास्तत्पराः क्षान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वे स्वे स्थानेऽपरिक्रुष्टास्ते स्यू राज्ञो बहिश्चराः ॥ ०१० ॥

सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ ०११ ॥

यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ ०१२ ॥

एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुंधराम् ॥ ०१३ ॥

नावैद्यो नानृजुः पार्श्वे नाविद्यो नामहाधनः ।
सङ्ग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ ०१४ ॥

बाणवद्विसृता यान्ति स्वामिकार्यपरा जनाः ।
ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् ॥ ०१५ ॥

कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशमूलकरो भव ॥ ०१६ ॥

कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसञ्चितम् ।
सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव ॥ ०१७ ॥

नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः ।
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते ॥ ०१८ ॥

ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसंवृतः ।
पौरकार्यहितान्वेषी भव कौरवनन्दन ॥ ०१९ ॥

एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया ।

श्वा ते निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥ ०२० ॥

---

# अध्याय १२०

युधिष्ठिर उवाच ॥

राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ ००१ ॥

तदेव विस्तरेणोक्तं पूर्वैर्दृष्टं सतां मतम् ।
प्रणयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ ००२ ॥

भीष्म उवाच ॥

रक्षणं सर्वभूतानामिति क्षत्रे परं मतम् ।
तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ॥ ००३ ॥

यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।
तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ॥ ००४ ॥

तैक्ष्ण्यं जिह्मत्वमादान्त्यं सत्यमार्जवमेव च ।
मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ॥ ००५ ॥

यस्मिन्नर्थे हितं यत्स्यात्तद्वर्णं रूपमाविशेत् ।
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥ ००६ ॥

नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी ।

श्लक्ष्णाक्षरतनुः श्रीमान्भवेच्छास्त्रविशारदः ॥ ००७ ॥

आपद्द्वारेषु यत्तः स्याज्जलप्रस्रवणेष्विव ।
शैलवर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ॥ ००८ ॥

अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम् ।
नित्यमुद्यतदण्डः स्यादाचरेच्चाप्रमादतः ॥ ००९ ॥

लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिवाप्लवन् ॥ ००९ ॥

मृजावान्स्यात्स्वयूथ्येषु भावानि चरणैः क्षिपेत् ।
जातपक्षः परिस्पन्देद्रक्षेद्वैकल्यमात्मनः ॥ ०१० ॥

दोषान्विवृणुयाच्छत्रोः परपक्षान्विधूनयेत् ।
काननेष्विव पुष्पाणि बर्हीवार्थान्समाचरेत् ॥ ०११ ॥

उच्छ्रितानाश्रयेत्स्फीतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामविज्ञातां गुप्तं शरणमाश्रयेत् ॥ ०१२ ॥

प्रावृषीवासितग्रीवो मज्जेत निशि निर्जने ।
मायूरेण गुणेनैव स्त्रीभिश्चालक्षितश्चरेत् ॥ ०१३ ॥

न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ॥ ०१३ ॥

चारभूमिष्वभिगमान्पाशांश्च परिवर्जयेत् ।
पीडयेच्चापि तां भूमिं प्रणश्येद्गहने पुनः ॥ ०१४ ॥

हन्यात्क्रुद्धानतिविषान्ये जिह्मगतयोऽहितान् ।
नाश्रयेद्बालबर्हाणि सन्निवासानि वासयेत् ॥ ०१५ ॥

सदा बर्हिनिभः कामं प्रसक्तिकृतमाचरेत् ।

सर्वतश्चाददेत्प्रज्ञां पतङ्गान्गहनेष्विव ॥ ०१६ ॥

एवं मयूरवद्राजा स्वराष्ट्रं परिपालयेत् ॥ ०१६ ॥

आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ।
आत्मसंयमनं बुद्ध्या परबुद्ध्यावतारणम् ॥ ०१७ ॥

बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥ ०१७ ॥

परं चाश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ॥ ०१८ ॥

सान्त्वयोगमतिः प्राज्ञः कार्याकार्यविचारकः ॥ ०१८ ॥

निगूढबुद्धिर्धीरः स्याद्वक्तव्ये वक्ष्यते तथा ।
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः ॥ ०१९ ॥

स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ॥ ०१९ ॥

अनुयुञ्जीत कृत्यानि सर्वाण्येव महीपतिः ।
आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥ ०२० ॥

क्षुद्रं क्रूरं तथा प्राज्ञं शूरं चार्थविशारदम् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥ ०२१ ॥

अप्यदृष्ट्वा नियुक्तानि अनुरूपेषु कर्मसु ।
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवायता ॥ ०२२ ॥

धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यः स पर्वत इवाचलः ॥ ०२३ ॥

व्यवसायं समाधाय सूर्यो रश्मिमिवायताम् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ ०२४ ॥

कुलप्रकृतिदेशानां धर्मज्ञान्मृदुभाषिणः ।
मध्ये वयसि निर्दोषान्हिते युक्ताञ्जितेन्द्रियान् ॥ ०२५ ॥

अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान् ।
स्थापयेत्सर्वकार्येषु राजा धर्मार्थरक्षिणः ॥ ०२६ ॥

एतेनैव प्रकारेण कृत्यानामागतिं गतिम् ।
युक्तः समनुतिष्ठेत तुष्टश्चारैरुपस्कृतः ॥ ०२७ ॥

अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुधैव वसुंधरा ॥ ०२८ ॥

व्यक्तश्चानुग्रहो यस्य यथार्थश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् ॥ ०२९ ॥

नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवोत्पतन् ।
चारांश्च नचरान्विद्यात्तथा बुद्ध्या न सञ्चरेत् ॥ ०३० ॥

कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ॥ ०३१ ॥

यथा क्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत सञ्चयम् ॥ ०३२ ॥

यद्धि गुप्तावशिष्टं स्यात्तद्धितं धर्मकामयोः ।
सञ्चयानुविसर्गी स्याद्राजा शास्त्रविदात्मवान् ॥ ०३३ ॥

नाल्पमर्थं परिभवेन्नावमन्येत शात्रवान् ।

बुद्ध्यावबुध्येदात्मानं न चाबुद्धिषु विश्वसेत्  ॥ ०३४  ॥

धृतिर्दाक्ष्यं संयमो बुद्धिरग्र्या ; धैर्यं शौर्यं देशकालोऽप्रमादः ।
स्वल्पस्य वा महतो वापि वृद्धौ ; धनस्यैतान्यष्ट समिन्धनानि  ॥ ०३५  ॥

अग्निस्तोको वर्धते ह्याज्यसिक्तो ; बीजं चैकं बहुसाहस्रमेति ।
क्षयोदयौ विपुलौ संनिशाम्य ; तस्मादल्पं नावमन्येत विद्वान्  ॥ ०३६  ॥

बालोऽबालः स्थविरो वा रिपुर्यः ; सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत ; कालज्ञाता पार्थिवानां वरिष्ठः  ॥ ०३७  ॥

हरेत्कीर्तिं धर्ममस्योपरुन्ध्या ;दर्थे दीर्घं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा ; तस्माच्छत्रौ नैव हेडेद्यतात्मा  ॥ ०३८  ॥

क्षयं शत्रोः सञ्चयं पालनं चा ;प्युभौ चार्थौ सहितौ धर्मकामौ ।
अतश्चान्यन्मतिमान्संदधीत ; तस्माद्राजा बुद्धिमन्तं श्रयेत  ॥ ०३९  ॥

बुद्धिर्दीप्ता बलवन्तं हिनस्ति ; बलं बुद्ध्या वर्धते पाल्यमानम् ।
शत्रुर्बुद्ध्या सीदते वर्धमानो ; बुद्धेः पश्चात्कर्म यत्तत्प्रशस्तम्  ॥ ०४०  ॥

सर्वान्कामान्कामयानो हि धीरः ; सत्त्वेनाल्पेनाप्नुते हीनदेहः ।
यथात्मानं प्रार्थयतेऽर्थमानैः ; श्रेयःपात्रं पूरयते ह्यनल्पम्  ॥ ०४१  ॥

तस्माद्राजा प्रगृहीतः परेषु ; मूलं लक्ष्म्याः सर्वतोऽभ्याददीत ।
दीर्घं कालमपि संपीड्यमानो ; विद्युत्संपातमिव मानोर्जितः स्यात्  ॥ ०४२  ॥

विद्या तपो वा विपुलं धनं वा ; सर्वमेतद्व्यवसायेन शक्यम् ।
ब्रह्म यत्तं निवसति देहवत्सु ; तस्माद्विद्याद्व्यवसायं प्रभूतम्  ॥ ०४३  ॥

यत्रासते मतिमन्तो मनस्विनः ; शक्रो विष्णुर्यत्र सरस्वती च ।
वसन्ति भूतानि च यत्र नित्यं ; तस्माद्विद्वान्नावमन्येत देहम्  ॥ ०४४  ॥

लुब्धं हन्यात्संप्रदानेन नित्यं ; लुब्धस्तृप्तिं परवित्तस्य नैति ।
सर्वो लुब्धः कर्मगुणोपभोगे ; योऽर्थैर्हीनो धर्मकामौ जहाति ॥ ०४५ ॥

धनं भोज्यं पुत्रदारं समृद्धिं ; सर्वो लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे ; तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥ ०४६ ॥

संदर्शने सत्पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान्द्विषतां प्राज्ञः सर्वानर्थांस्तु सूदयेत् ॥ ०४७ ॥

धर्मान्वितेषु विज्ञातो मन्त्री गुप्तश्च पाण्डव ।
आप्तो राजन्कुलीनश्च पर्याप्तो राज्यसङ्ग्रहे ॥ ०४८ ॥

विधिप्रवृत्तान्नरदेवधर्मा ;नुक्तान्समासेन निबोध बुद्ध्या ।
इमान्विदध्याद्यनुसृत्य यो वै ; राजा महीं पालयितुं स शक्तः ॥ ०४९ ॥

अनीतिजं यद्यविधानजं सुखं ; हठप्रणीतं विविधं प्रदृश्यते ।
न विद्यते तस्य गतिर्महीपते ;र्न विद्यते राष्ट्रजमुत्तमं सुखम् ॥ ०५० ॥

धनैर्विशिष्टान्मतिशीलपूजिता ;न्गुणोपपन्नान्युधि दृष्टविक्रमान् ।
गुणेषु दृष्टानचिरादिहात्मवा ;न्सतोऽभिसंधाय निहन्ति शात्रवान् ॥ ०५१ ॥

पश्येदुपायान्विविधैः क्रियापथै ;र्न चानुपायेन मतिं निवेशयेत् ।
श्रियं विशिष्टां विपुलं यशो धनं ; न दोषदर्शी पुरुषः समश्नुते ॥ ०५२ ॥

प्रीतिप्रवृत्तौ विनिवर्तने तथा ; सुहृत्सु विज्ञाय निवृत्य चोभयोः ।
यदेव मित्रं गुरुभारमावहे ;त्तदेव सुस्निग्धमुदाहरेद्बुधः ॥ ०५३ ॥

एतान्मयोक्तांस्तव राजधर्मा ;न्नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन ; सर्वो हि लोकोत्तमधर्ममूलः ॥ ०५४ ॥

# अध्याय १२१

युधिष्ठिर उवाच ॥

अयं पितामहेनोक्तो राजधर्मः सनातनः ।
ईश्वरश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् ॥ ००१ ॥

देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः ॥ ००२ ॥

सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।
सर्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो ॥ ००३ ॥

इत्येतदुक्तं भवता सर्वं दण्ड्यं चराचरम् ।
दृश्यते लोकमासक्तं ससुरासुरमानुषम् ॥ ००४ ॥

एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ ।
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ॥ ००५ ॥

किमात्मकः कथंभूतः कतिमूर्तिः कथंप्रभुः ।
जागर्ति स कथं दण्डः प्रजास्ववहितात्मकः ॥ ००६ ॥

कश्च पूर्वापरमिदं जागर्ति परिपालयन् ।
कश्च विज्ञायते पूर्वं कोऽपरो दण्डसञ्ज्ञितः ॥ ००७ ॥

किंसंस्थश्च भवेद्दण्डः का चास्य गतिरिष्यते ॥ ००७ ॥

भीष्म उवाच ॥

श्रृणु कौरव्य यो दण्डो व्यवहार्यो यथा च सः ।
यस्मिन्हि सर्वमायत्तं स दण्ड इह केवलः ॥ ००८ ॥

धर्मस्याख्या महाराज व्यवहार इतीष्यते ।
तस्य लोपः कथं न स्याल्लोकेष्ववहितात्मनः ॥ ००९ ॥

इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ॥ ००९ ॥

अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः ।
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ॥ ०१० ॥

प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥ ०१० ॥

अथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
जन्म चोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥ ०११ ॥

प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः ।
व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ॥ ०१२ ॥

दण्डात्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोच्छिखः ॥ ०१३ ॥

नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥ ०१४ ॥

जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरावरः ॥ ०१५ ॥

असिर्गदा धनुः शक्तिस्त्रिशूलं मुद्गरः शरः ।

मुसलं परशुश्चक्रं प्रासो दण्डर्ष्टितोमराः ॥ ०१६ ॥

सर्वप्रहरणीयानि सन्ति यानीह कानिचित् ।
दण्ड एव हि सर्वात्मा लोके चरति मूर्तिमान् ॥ ०१७ ॥

भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा ।
घातयन्नभिधावंश्च दण्ड एव चरत्युत ॥ ०१८ ॥

असिर्विशसनो धर्मस्तीक्ष्णवर्त्मा दुरासदः ।
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः ॥ ०१९ ॥

शास्त्रं ब्राह्मणमन्त्रश्च शास्ता प्राग्वचनं गतः ।
धर्मपालोऽक्षरो देवः सत्यगो नित्यगो ग्रहः ॥ ०२० ॥

असङ्गो रुद्रतनयो मनुज्येष्ठः शिवङ्करः ।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥ ०२१ ॥

दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः ।
शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते ॥ ०२२ ॥

यथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती ।
दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः ॥ ०२३ ॥

अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ॥ ०२४ ॥

कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः ।
अप्रसादः प्रसादश्च हर्षः क्रोधः शमो दमः ॥ ०२५ ॥

दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये ।
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम् ॥ ०२६ ॥

अन्तश्चादिश्च मध्यं च कृत्यानां च प्रपञ्चनम् ।
मदः प्रमादो दर्पश्च दम्भो धैर्यं नयानयौ ॥ ०२७ ॥

अशक्तिः शक्तिरित्येव मानस्तम्भौ व्ययाव्ययौ ।
विनयश्च विसर्गश्च कालाकालौ च भारत ॥ ०२८ ॥

अनृतं ज्ञाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च ।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ ॥ ०२९ ॥

तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा ।
विराद्धिश्चैव राद्धिश्च कार्याकार्ये बलाबले ॥ ०३० ॥

असूया चानसूया च धर्माधर्मौ तथैव च ।
अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ॥ ०३१ ॥

तेजः कर्मणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता ।
एवं दण्डस्य कौरव्य लोकेऽस्मिन्बहुरूपता ॥ ०३२ ॥

न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य चान्योन्यं घ्नन्ति नैव युधिष्ठिर ॥ ०३३ ॥

दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥ ०३४ ॥

व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर ।
सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥ ०३५ ॥

धर्मयुक्ता द्विजाः श्रेष्ठा वेदयुक्ता भवन्ति च ।
बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः ॥ ०३६ ॥

प्रीताश्च देवता नित्यमिन्द्रे परिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥ ०३७ ॥

प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।
तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ॥ ०३८ ॥

एवंप्रयोजनश्चैव दण्डः क्षत्रियतां गतः ।
रक्षन्प्रजाः प्रजागर्ति नित्यं सुविहितोऽक्षरः ॥ ०३९ ॥

ईश्वरः पुरुषः प्राणः सत्त्वं वित्तं प्रजापतिः ।
भूतात्मा जीव इत्येव नामभिः प्रोच्यतेऽष्टभिः ॥ ०४० ॥

अददद्दण्ड एवास्मै ध्रुवमैश्वर्यमेव च ।
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ॥ ०४१ ॥

कुलबाहुधनामात्याः प्रज्ञा चोक्ता बलानि च ।
आहार्यं चाष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥ ०४२ ॥

हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च ।
दैशिकाश्चारकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥ ०४३ ॥

अष्टाङ्गस्य तु युक्तस्य हस्तिनो हस्तियायिनः ।
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ ०४४ ॥

भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः ।
कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ ०४५ ॥

सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः ।
राज्यस्य दण्ड एवाङ्गं दण्डः प्रभव एव च ॥ ०४६ ॥

ईश्वरेण प्रयत्नेन धारणे क्षत्रियस्य हि ।

दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम् ॥ ०४७ ॥

राज्ञां पूज्यतमो नान्यो यथाधर्मप्रदर्शनः ॥ ०४७ ॥

ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ।
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथापरः ॥ ०४८ ॥

तस्माद्यः सहितो दृष्टो भर्तृप्रत्ययलक्षणः ॥ ०४८ ॥

व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथापरः ॥ ०४९ ॥

उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।
ज्ञेयो न स नरेन्द्रस्थो दण्डप्रत्यय एव च ॥ ०५० ॥

दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥ ०५१ ॥

यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शकः ।
धर्मप्रत्यय उत्पन्नो यथाधर्मः कृतात्मभिः ॥ ०५२ ॥

व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर ।
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥ ०५३ ॥

यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च यो दृष्टः स धर्म इति नः श्रुतः ॥ ०५४ ॥

यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ॥ ०५४ ॥

ब्रह्मा प्रजापतिः पूर्वं बभूवाथ पितामहः ।
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ॥ ०५५ ॥

समनुष्योरगवतां कर्ता चैव स भूतकृत्  ॥ ०५५  ॥

ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमवोचाम व्यवहारनिदर्शनम्  ॥ ०५६  ॥

माता पिता च भ्राता च भार्या चाथ पुरोहितः ।
नादण्ड्यो विद्यते राज्ञां यः स्वधर्मे न तिष्ठति  ॥ ०५७  ॥

---

# वसुहोममान्धातृसंवादः

## अध्याय १२२

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान्वसुहोम इति श्रुतः  ॥ ००१  ॥

स राजा धर्मनित्यः सन्सह पत्न्या महातपाः ।
मुञ्जपृष्ठं जगामाथ देवर्षिगणपूजितम्  ॥ ००२  ॥

तत्र शृङ्गे हिमवतो मेरौ कनकपर्वते ।
यत्र मुञ्जवटे रामो जटाहरणमादिशत्  ॥ ००३  ॥

तदाप्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः  ॥ ००४  ॥

स तत्र बहुभिर्युक्तः सदा श्रुतिमयैर्गुणैः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥ ००५ ॥

तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यागच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥ ००६ ॥

सोऽभिसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टं तपसा विनयेनाभ्यतिष्ठत ॥ ००७ ॥

वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत् ।
अष्टाङ्गस्य च राज्यस्य पप्रच्छ कुशलं तदा ॥ ००८ ॥

सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अपृच्छद्वसुहोमस्तं राजन्किं करवाणि ते ॥ ००९ ॥

सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमम् ।
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥ ०१० ॥

बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं विज्ञातं ते नराधिप ॥ ०११ ॥

तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वापि पूर्वं जागर्ति किं वा परममुच्यते ॥ ०१२ ॥

कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ।
ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्यवेतनम् ॥ ०१३ ॥

वसुहोम उवाच ॥

शृणु राजन्यथा दण्डः संभूतो लोकसङ्ग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ ०१४ ॥

ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ।
ऋत्विजं नात्मना तुल्यं ददर्शेति हि नः श्रुतम् ॥ ०१५ ॥

स गर्भं शिरसा देवो वर्षपूगानधारयत् ।
पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् ॥ ०१६ ॥

स क्षुपो नाम संभूतः प्रजापतिररिंदम ।
ऋत्विगासीत्तदा राजन्यज्ञे तस्य महात्मनः ॥ ०१७ ॥

तस्मिन्प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
हृष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥ ०१८ ॥

तस्मिन्नन्तर्हिते चाथ प्रजानां सङ्करोऽभवत् ।
नैव कार्यं न चाकार्यं भोज्याभोज्यं न विद्यते ॥ ०१९ ॥

पेयापेयं कुतः सिद्धिर्हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नासीत्परस्वं स्वं च वै समम् ॥ ०२० ॥

परस्परं विलुम्पन्ते सारमेया इवामिषम् ।
अबलं बलिनो जघ्नुर्निर्मर्यादमवर्तत ॥ ०२१ ॥

ततः पितामहो विष्णुं भगवन्तं सनातनम् ।
संपूज्य वरदं देवं महादेवमथाब्रवीत् ॥ ०२२ ॥

अत्र साध्वनुकम्पां वै कर्तुमर्हसि केवलम् ।
सङ्करो न भवेदत्र यथा वै तद्विधीयताम् ॥ ०२३ ॥

ततः स भगवान्ध्यात्वा चिरं शूलजटाधरः ।
आत्मानमात्मना दण्डमसृजद्देवसत्तमः ॥ ०२४ ॥

तस्माच्च धर्मचरणां नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिः सा त्रिषु लोकेषु विश्रुता ॥ ०२५ ॥

भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः ।
तस्य तस्य निकायस्य चकारैकैकमीशरम् ॥ ०२६ ॥

देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितृणामकरोत्पतिम् ॥ ०२७ ॥

धनानां रक्षसां चापि कुबेरमपि चेश्वरम् ।
पर्वतानां पतिं मेरुं सरितां च महोदधिम् ॥ ०२८ ॥

अपां राज्ये सुराणां च विदधे वरुणं प्रभुम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥ ०२९ ॥

रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥ ०३० ॥

वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥ ०३१ ॥

वीरुधामंशुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥ ०३२ ॥

कालं सर्वेशमकरोत्संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥ ०३३ ॥

ईश्वरः सर्वदेहस्तु राजराजो धनाधिपः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥ ०३४ ॥

तमेकं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।

प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥ ०३५ ॥

महादेवस्ततस्तस्मिन्वृत्ते यज्ञे यथाविधि ।
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥ ०३६ ॥

विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥ ०३७ ॥

भृगुर्ददावृषिभ्यस्तु तं दण्डं धर्मसंहितम् ।
ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ॥ ०३८ ॥

क्षुपस्तु मनवे प्रादादादित्यतनयाय च ।
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ॥ ०३९ ॥

तं ददौ सूर्यपुत्रस्तु मनुर्वै रक्षणात्मकम् ॥ ०३९ ॥

विभज्य दण्डः कर्तव्यो धर्मेण न यदृच्छया ।
दुर्वाचा निग्रहो बन्धो हिरण्यं बाह्यतःक्रिया ॥ ०४० ॥

व्यङ्गत्वं च शरीरस्य वधो वा नाल्पकारणात् ।
शरीरपीडास्तास्तास्तु देहत्यागो विवासनम् ॥ ०४१ ॥

आनुपूर्व्या च दण्डोऽसौ प्रजा जागर्ति पालयन् ।
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ॥ ०४२ ॥

अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ।
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ॥ ०४३ ॥

धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ।
व्यवसायात्ततस्तेजो जागर्ति परिपालयन् ॥ ०४४ ॥

ओषध्यस्तेजसस्तस्मादोषधिभ्यश्च पर्वताः ।
पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ॥ ०४५ ॥

जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि ।
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ॥ ०४६ ॥

ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः ।
पितामहान्महादेवो जागर्ति भगवाञ्शिवः ॥ ०४७ ॥

विश्वेदेवाः शिवाच्चापि विश्वेभ्यश्च तथर्षयः ।
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ॥ ०४८ ॥

देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ।
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः ॥ ०४९ ॥

स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ॥ ०४९ ॥

प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च ।
सर्वसङ्क्षेपको दण्डः पितामहसमः प्रभुः ॥ ०५० ॥

जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत ।
ईश्वरः सर्वलोकस्य महादेवः प्रजापतिः ॥ ०५१ ॥

देवदेवः शिवः शर्वो जागर्ति सततं प्रभुः ।
कपर्दी शङ्करो रुद्रो भवः स्थाणुरुमापतिः ॥ ०५२ ॥

इत्येष दण्डो विख्यात आदौ मध्ये तथावरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥ ०५३ ॥

भीष्म उवाच ॥

इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः ।
श्रुत्वा च सम्यग्वर्तेत स कामानाप्नुयान्नृपः ॥ ०५४ ॥

इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥ ०५५ ॥

---

## कामन्दा ण्गारिष्टसंवादः

## अध्याय १२३

युधिष्ठिर उवाच ॥

तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ ००१ ॥

धर्मार्थकामाः किंमूलास्त्रयाणां प्रभवश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् ॥ ००२ ॥

भीष्म उवाच ॥

यदा ते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ ००३ ॥

धर्ममूलस्तु देहोऽर्थः कामोऽर्थफलमुच्यते ।
सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः ॥ ००४ ॥

विषयाश्चैव कार्त्स्न्येन सर्व आहारसिद्धये ।

मूलमेतत्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ००५ ॥

धर्मः शरीरसङ्गुप्तिर्धर्मार्थं चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे चैते रजस्वलाः ॥ ००६ ॥

संनिकृष्टांश्चरेदेनान्न चैनान्मनसा त्यजेत् ।
विमुक्तस्तमसा सर्वान्धर्मादीन्कामनैष्ठिकान् ॥ ००७ ॥

श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयात्क्षणात् ।
बुद्ध्या बुध्येदिहार्थे न तदह्ना तु निकृष्टया ॥ ००८ ॥

अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोदमलः कामो भूयः स्वगुणवर्तितः ॥ ००९ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कामन्दस्य च संवादमङ्गारिष्ठस्य चोभयोः ॥ ०१० ॥

कामन्दमृषिमासीनमभिवाद्य नराधिपः ।
अङ्गारिष्ठोऽथ पप्रच्छ कृत्वा समयपर्ययम् ॥ ०११ ॥

यः पापं कुरुते राजा काममोहबलात्कृतः ।
प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् ॥ ०१२ ॥

अधर्मो धर्म इति ह योऽज्ञानादाचरेदिह ।
तं चापि प्रथितं लोके कथं राजा निवर्तयेत् ॥ ०१३ ॥

कामन्द उवाच ॥

यो धर्मार्थौ समुत्सृज्य काममेवानुवर्तते ।
स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्छति ॥ ०१४ ॥

प्रज्ञाप्रणाशको मोहस्तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ ०१५ ॥

दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ ०१६ ॥

तं प्रजा नानुवर्तन्ते ब्राह्मणा न च साधवः ।
ततः सङ्क्षयमाप्नोति तथा वध्यत्वमेति च ॥ ०१७ ॥

अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ॥ ०१८ ॥

अत्रैतदाहुराचार्याः पापस्य च निबर्हणम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ ०१९ ॥

महामना भवेद्धर्मे विवहेच्च महाकुले ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ॥ ०२० ॥

जपेदुदकशीलः स्यात्सुमुखो नान्यदास्थितः ।
धर्मान्वितान्संप्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥ ०२१ ॥

प्रसादयेन्मधुरय वाचाप्यथ च कर्मणा ।
इत्यस्मीति वदेन्नित्यं परेषां कीर्तयन्गुणान् ॥ ०२२ ॥

अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपि च कृच्छ्राणि शमयेन्नात्र संशयः ॥ ०२३ ॥

गुरवोऽपि परं धर्मं यद्ब्रूयुस्तत्तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ ०२४ ॥

# अध्याय १२४

युधिष्ठिर उवाच ॥

इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान्  ॥ ००१  ॥

यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते  ॥ ००२  ॥

कथं नु प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर  ॥ ००३  ॥

भीष्म उवाच ॥

पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागताम्  ॥ ००४  ॥

इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह ।
सभायां चावहसनं तत्सर्वं श्रृणु भारत  ॥ ००५  ॥

भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधनस्तदासीनः सर्वं पित्रे न्यवेदयत्  ॥ ००६  ॥

श्रुत्वा च धृतराष्ट्रोऽपि दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः  ॥ ००७  ॥

किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।

श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यसि ॥ ००८ ॥

यथा त्वं महदैश्वर्यं प्राप्तः परपुरञ्जय ।
किङ्करा भ्रातरः सर्वे मित्राः संबन्धिनस्तथा ॥ ००९ ॥

आच्छादयसि प्रावारानश्नासि पिशितोदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥ ०१० ॥

दुर्योधन उवाच ॥

दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ०११ ॥

दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरकल्माषान्रत्नानि विविधानि च ॥ ०१२ ॥

दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि मानद ॥ ०१३ ॥

धृतराष्ट्र उवाच ॥

यदीच्छसि श्रियं तात यादृशीं तां युधिष्ठिरे ।
विशिष्टां वा नरव्याघ्र शीलवान्भव पुत्रक ॥ ०१४ ॥

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत् ॥ ०१५ ॥

एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥ ०१६ ॥

एते हि पार्थिवाः सर्वे शीलवन्तो दमान्विताः ।

अतस्तेषां गुणक्रीता वसुधा स्वयमागमत्  ॥ ०१७  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत  ॥ ०१८  ॥

प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः ।
शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम्  ॥ ०१९  ॥

ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
उवाच च महाप्राज्ञः श्रेय इच्छामि वेदितुम्  ॥ ०२०  ॥

ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम् ।
कथयामास भगवान्देवेन्द्राय कुरूद्वह  ॥ ०२१  ॥

एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ क्व विशेषो भवेदिति  ॥ ०२२  ॥

बृहस्पतिरुवाच  ॥

विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ।
तत्रागमय भद्रं ते भूय एव पुरंदर  ॥ ०२३  ॥

धृतराष्ट्र उवाच  ॥

आत्मनस्तु ततः श्रेयो भार्गवात्सुमहायशाः ।
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः  ॥ ०२४  ॥

तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः  ॥ ०२५  ॥

भार्गवस्त्वाह धर्मज्ञः प्रह्लादस्य महात्मनः ।

ज्ञानमस्ति विशेषेण ततो हृष्टश्च सोऽभवत्  ॥ ०२६  ॥

स ततो ब्राह्मणो भूत्वा प्रह्रादं पाकशासनः ।
सृत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम्  ॥ ०२७  ॥

प्रह्रादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ ।
त्रैलोक्यराज्ये सक्तस्य ततो नोपदिशामि ते  ॥ ०२८  ॥

ब्राह्मणस्त्वब्रवीद्वाक्यं कस्मिन्काले क्षणो भवेत् ।
ततोपदिष्टमिच्छामि यद्यत्कार्यान्तरं भवेत्  ॥ ०२९  ॥

ततः प्रीतोऽभवद्राजा प्रह्रादो ब्रह्मवादिने ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा  ॥ ०३०  ॥

ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्वत्स मनसेच्छति  ॥ ०३१  ॥

पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे  ॥ ०३२  ॥

प्रह्राद उवाच  ॥

नासूयामि द्विजश्रेष्ठ राजास्मीति कदाचन ।
कव्यानि वदतां तात संयच्छामि वहामि च  ॥ ०३३  ॥

ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
ते मा कव्यपदे सक्तं शुश्रूषुमनसूयकम्  ॥ ०३४  ॥

धर्मात्मानं जितक्रोधं संयतं संयतेन्द्रियम् ।
समाचिन्वन्ति शास्तारः क्षौद्रं मध्विव मक्षिकाः  ॥ ०३५  ॥

सोऽहं वागग्रपिष्टानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ०३६ ॥

एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे कव्यमेतच्छ्रुत्वा प्रवर्तते ॥ ०३७ ॥

धृतराष्ट्र उवाच ॥

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ०३८ ॥

यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ ०३९ ॥

कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः ।
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥ ०४० ॥

ब्राह्मण उवाच ॥

यदि राजन्प्रसन्नस्त्वं मम चेच्छसि चेद्धितम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ०४१ ॥

धृतराष्ट्र उवाच ॥

ततः प्रीतश्च दैत्येन्द्रो भयं चास्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पतेजायमित्युत ॥ ०४२ ॥

एवमस्त्विति तं प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ०४३ ॥

दत्ते वरे गते विप्रे चिन्तासीन्महती ततः ।

प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥ ०४४ ॥

तस्य चिन्तयतस्तात छायाभूतं महाद्युते ।
तेजो विग्रहवत्तात शरीरमजहात्तदा ॥ ०४५ ॥

तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह ननु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ०४६ ॥

तस्मिन्द्विजवरे राजन्वत्स्याम्यहमनिन्दितम् ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ॥ ०४७ ॥

इत्युक्त्वान्तर्हितं तद्वै शक्रं चान्वविशत्प्रभो ॥ ०४७ ॥

तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ॥ ०४८ ॥

धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥ ०४९ ॥

ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥ ०५० ॥

को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यमस्म्यसुरेन्द्राग्र्य यास्येऽहं धर्ममन्विह ॥ ०५१ ॥

तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महात्मना ॥ ०५२ ॥

वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ०५२ ॥

तस्मिन्गते महाश्वेतः शरीरात्तस्य निर्ययौ ।

पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥ ०५३ ॥

इत्युक्त्वा च ययौ तत्र यतो वृत्तं नराधिप ॥ ०५३ ॥

ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।
तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येवमब्रवीत् ॥ ०५४ ॥

उषितास्मि सुखं वीर त्वयि सत्यपराक्रमे ।
त्वया त्यक्ता गमिष्यामि बलं यत्र ततो ह्यहम् ॥ ०५५ ॥

ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क्व यासि कमलालये ॥ ०५६ ॥

त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ०५७ ॥

श्रीरुवाच ॥

स शक्रो ब्रह्मचारी च यस्त्वया चोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥ ०५८ ॥

शीलेन हि त्वया लोकाः सर्वे धर्मज्ञ निर्जिताः ।
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ॥ ०५९ ॥

धर्मः सत्यं तथा वृत्तं बलं चैव तथा ह्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ ०६० ॥

भीष्म उवाच ॥

एवमुक्त्वा गता तु श्रीस्ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीदिदम् ॥ ०६१ ॥

शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ।
प्राप्यते च यथा शीलं तमुपायं वदस्व मे ॥ ०६२ ॥

धृतराष्ट्र उवाच ॥

सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
सङ्क्षेपतस्तु शीलस्य शृणु प्राप्तिं नराधिप ॥ ०६३ ॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥ ०६४ ॥

यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथञ्चन ॥ ०६५ ॥

तत्तु कर्म तथा कुर्याद्येन श्लाघेत संसदि ।
एतच्छीलं समासेन कथितं कुरुसत्तम ॥ ०६६ ॥

यद्यप्यशीला नृपते प्राप्नुवन्ति क्वचिच्छ्रियम् ।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥ ०६७ ॥

एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक ।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥ ०६८ ॥

भीष्म उवाच ॥

एतत्कथितवान्पुत्रे धृतराष्ट्रो नराधिप ।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ॥ ०६९ ॥

# ऋषभसुमित्रसंवादः

## अध्याय १२५

युधिष्ठिर उवाच ॥

शीलं प्रधानं पुरुषे कथितं ते पितामह ।
कथमाशा समुत्पन्ना या च सा तद्वदस्व मे ॥ ००१ ॥

संशयो मे महानेष समुत्पन्नः पितामह ।
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरञ्जय ॥ ००२ ॥

पितामहाशा महती ममासीद्धि सुयोधने ।
प्राप्ते युद्धे तु यद्युक्तं तत्कर्तायमिति प्रभो ॥ ००३ ॥

सर्वस्याशा सुमहती पुरुषस्योपजायते ।
तस्यां विहन्यमानायां दुःखो मृत्युरसंशयम् ॥ ००४ ॥

सोऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना ।
धार्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ॥ ००५ ॥

आशां महत्तरां मन्ये पर्वतादपि सद्रुमात् ।
आकाशादपि वा राजन्नप्रमेयैव वा पुनः ॥ ००६ ॥

एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा ।
दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ॥ ००७ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि युधिष्ठिर निबोध तत् ।

इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ॥ ००८ ॥

सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः ।
ससार स मृगं विद्धा बाणेन नतपर्वणा ॥ ००९ ॥

स मृगो बाणमादाय ययावमितविक्रमः ।
स च राजा बली तूर्णं ससार मृगमन्तिकात् ॥ ०१० ॥

ततो निम्नं स्थलं चैव स मृगोऽद्रवदाशुगः ।
मुहूर्तमेव राजेन्द्र समेन स पथागमत् ॥ ०११ ॥

ततः स राजा तारुण्यादौरसेन बलेन च ।
ससार बाणासनभृत्सखड्गो हंसवत्तदा ॥ ०१२ ॥

तीर्त्वा नदान्नदीश्चैव पल्वलानि वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैव वने चरन् ॥ ०१३ ॥

स तु कामान्मृगो राजन्नासाद्यासाद्य तं नृपम् ।
पुनरभ्येति जवनो जवेन महता ततः ॥ ०१४ ॥

स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः ।
प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकम् ॥ ०१५ ॥

पुनश्च जवमास्थाय जवनो मृगयूथपः ।
अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकम् ॥ ०१६ ॥

तस्य मर्मच्छिदं घोरं सुमित्रोऽमित्रकर्शनः ।
समादाय शरश्रेष्ठं कार्मुकान्निरवासृजत् ॥ ०१७ ॥

ततो गव्यूतिमात्रेण मृगयूथपयूथपः ।
तस्य बाणपथं त्यक्त्वा तस्थिवान्प्रहसन्निव ॥ ०१८ ॥

तस्मिन्निपतिते बाणे भूमौ प्रज्वलिते ततः ।
प्रविवेश महारण्यं मृगो राजाप्यथाद्रवत् ॥ ०१९ ॥

प्रविश्य तु महारण्यं तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत्पुनः ॥ ०२० ॥

तं कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मिन्पूजां चक्रुर्यथाविधि ॥ ०२१ ॥

ऋषयो राजशार्दूलमपृच्छन्स्वं प्रयोजनम् ।
केन भद्रमुखार्थेन संप्राप्तोऽसि तपोवनम् ॥ ०२२ ॥

पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर ।
एतदिच्छाम विज्ञातुं कुतः प्राप्तोऽसि मानद ॥ ०२३ ॥

कस्मिन्कुले हि जातस्त्वं किंनामासि ब्रवीहि नः ॥ ०२३ ॥

ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ ।
आचख्यौ तद्यथान्यायं परिचर्यां च भारत ॥ ०२४ ॥

हैहयानां कुले जातः सुमित्रो मित्रनन्दनः ।
चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः ॥ ०२५ ॥

बलेन महता गुप्तः सामात्यः सावरोधनः ॥ ०२५ ॥

मृगस्तु विद्धो बाणेन मया सरति शल्यवान् ।
तं द्रवन्तमनु प्राप्तो वनमेतद्यदृच्छया ॥ ०२६ ॥

भवत्सकाशे नष्टश्रीर्हताशः श्रमकर्शितः ॥ ०२६ ॥

किं नु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः ।
भवतामाश्रमं प्राप्तो हताशो नष्टलक्षणः ॥ ०२७ ॥

न राजलक्षणत्यागो न पुरस्य तपोधनाः ।
दुःखं करोति तत्तीव्रं यथाशा विहता मम ॥ ०२८ ॥

हिमवान्वा महाशैलः समुद्रो वा महोदधिः ।
महत्त्वान्नान्वपद्येतां रोदस्योरन्तरं यथा ॥ ०२९ ॥

आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः ॥ ०२९ ॥

भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ।
भवन्तः सुमहाभागास्तस्मात्प्रक्ष्यामि संशयम् ॥ ०३० ॥

आशावान्पुरुषो यः स्यादन्तरिक्षमथापि वा ।
किं नु ज्यायस्तरं लोके महत्त्वात्प्रतिभाति वः ॥ ०३१ ॥

एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ॥ ०३१ ॥

यदि गुह्यं तपोनित्या न वो ब्रूतेह माचिरम् ।
न हि गुह्यमतः श्रोतुमिच्छामि द्विजपुङ्गवाः ॥ ०३२ ॥

भवत्तपोविघातो वा येन स्याद्विरमे ततः ।
यदि वास्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ ०३३ ॥

एतत्कारणसामग्र्यं श्रोतुमिच्छामि तत्त्वतः ।
भवन्तो हि तपोनित्या ब्रूयुरेतत्समाहिताः ॥ ०३४ ॥

# अध्याय १२६

भीष्म उवाच ॥

ततस्तेषां समस्तानामृषीणामृषिसत्तमः ।
ऋषभो नाम विप्रर्षिः स्मयन्निव ततोऽब्रवीत् ॥ ००१ ॥

पुराहं राजशार्दूल तीर्थान्यनुचरन्प्रभो ।
समासादितवान्दिव्यं नरनारायणाश्रमम् ॥ ००२ ॥

यत्र सा बदरी रम्या ह्रदो वैहायसस्तथा ।
यत्र चाश्वशिरा राजन्वेदान्पठति शाश्वतान् ॥ ००३ ॥

तस्मिन्सरसि कृत्वाहं विधिवत्तर्पणं पुरा ।
पितॄणां देवतानां च ततोऽऽश्रममियां तदा ॥ ००४ ॥

रेमाते यत्र तौ नित्यं नरनारायणावृषी ।
अदूरादाश्रमं कञ्चिद्वासार्थमगमं ततः ॥ ००५ ॥

ततश्चीराजिनधरं कृशमुच्चमतीव च ।
अद्राक्षमृषिमायान्तं तनुं नाम तपोनिधिम् ॥ ००६ ॥

अन्यैर्नरैर्महाबाहो वपुषाष्टगुणान्वितम् ।
कृशता चापि राजर्षे न दृष्टा तादृशी क्वचित् ॥ ००७ ॥

शरीरमपि राजेन्द्र तस्य कानिष्ठिकासमम् ।
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ॥ ००८ ॥

शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च ।
तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ॥ ००९ ॥

दृष्ट्वाहं तं कृशं विप्रं भीतः परमदुर्मनाः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ ०१० ॥

निवेद्य नाम गोत्रं च पितरं च नरर्षभ ।
प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ ०११ ॥

ततः स कथयामास कथा धर्मार्थसंहिताः ।
ऋषिमध्ये महाराज तत्र धर्मभृतां वरः ॥ ०१२ ॥

तस्मिंस्तु कथयत्येव राजा राजीवलोचनः ।
उपायाज्जवनैरश्वैः सबलः सावरोधनः ॥ ०१३ ॥

स्मरन्पुत्रमरण्ये वै नष्टं परमदुर्मनाः ।
भूरिद्युम्नपिता धीमान्रघुश्रेष्ठो महायशाः ॥ ०१४ ॥

इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति पार्थिवः ।
एवमाशाकृतो राजंश्चरन्वनमिदं पुरा ॥ ०१५ ॥

दुर्लभः स मया द्रष्टुं नूनं परमधार्मिकः ।
एकः पुत्रो महारण्ये नष्ट इत्यसकृत्तदा ॥ ०१६ ॥

दुर्लभः स मया द्रष्टुमाशा च महती मम ।
तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ॥ ०१७ ॥

एतच्छ्रुत्वा स भगवांस्तनुर्मुनिवरोत्तमः ।
अवाक्शिरा ध्यानपरो मुहूर्तमिव तस्थिवान् ॥ ०१८ ॥

तमनुध्यान्तमालक्ष्य राजा परमदुर्मनाः ।
उवाच वाक्यं दीनात्मा मन्दं मन्दमिवासकृत् ॥ ०१९ ॥

दुर्लभं किं नु विप्रर्षे आशायाश्चैव किं भवेत् ।

ब्रवीतु भगवानेतद्यदि गुह्यं न तन्मयि ॥ ०२० ॥

महर्षिर्भगवांस्तेन पूर्वमासीद्विमानितः ।
बालिशां बुद्धिमास्थाय मन्दभाग्यतयात्मनः ॥ ०२१ ॥

अर्थयन्कलशं राजन्काञ्चनं वल्कलानि च ।
निर्विण्णः स तु विप्रर्षिर्निराशः समपद्यत ॥ ०२२ ॥

एवमुक्त्वाभिवाद्याथ तमृषिं लोकपूजितम् ।
श्रान्तो न्यषीदद्धर्मात्मा यथा त्वं नरसत्तम ॥ ०२३ ॥

अर्घ्यं ततः समानीय पाद्यं चैव महानृषिः ।
आरण्यकेन विधिना राज्ञे सर्वं न्यवेदयत् ॥ ०२४ ॥

ततस्ते मुनयः सर्वे परिवार्य नरर्षभम् ।
उपाविशन्पुरस्कृत्य सप्तर्षय इव ध्रुवम् ॥ ०२५ ॥

अपृच्छंश्चैव ते तत्र राजानमपराजितम् ।
प्रयोजनमिदं सर्वमाश्रमस्य प्रवेशनम् ॥ ०२६ ॥

राजोवाच ॥

वीरद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः ।
भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः ॥ ०२७ ॥

एकपुत्रः स विप्राग्र्य बाल एव च सोऽनघ ।
न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् ॥ ०२८ ॥

ऋषभ उवाच ॥

एवमुक्ते तु वचने राज्ञा मुनिरधोमुखः ।

तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम्  ॥ ०२९  ॥

स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः ।
आशाकृशं च राजेन्द्र तपो दीर्घं समास्थितः  ॥ ०३०  ॥

प्रतिग्रहमहं राज्ञां न करिष्ये कथञ्चन ।
अन्येषां चैव वर्णानामिति कृत्वा धियं तदा  ॥ ०३१  ॥

आशा हि पुरुषं बालं लालापयति तस्थुषी ।
तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः  ॥ ०३२  ॥

राजोवाच  ॥

आशायाः किं कृशत्वं च किं चेह भुवि दुर्लभम् ।
ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान्  ॥ ०३३  ॥

ऋषभ उवाच  ॥

ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत् ।
राजानं भगवान्विप्रस्ततः कृशतनुस्तनुः  ॥ ०३४  ॥

कृशत्वे न समं राजन्नाशाया विद्यते नृप ।
तस्या वै दुर्लभत्वात्तु प्रार्थिताः पार्थिवा मया  ॥ ०३५  ॥

राजोवाच  ॥

कृशाकृशे मया ब्रह्मन्गृहीते वचनात्तव ।
दुर्लभत्वं च तस्यैव वेदवाक्यमिव द्विज  ॥ ०३६  ॥

संशयस्तु महाप्राज्ञ सञ्जातो हृदये मम ।
तन्मे सत्तम तत्त्वेन वक्तुमर्हसि पृच्छतः  ॥ ०३७  ॥

त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदम् ।
यदि गुह्यं न ते विप्र लोकेऽस्मिन्किं नु दुर्लभम् ॥ ०३८ ॥

कृशतनुरुवाच ॥

दुर्लभोऽप्यथ वा नास्ति योऽर्थी धृतिमिवाप्नुयात् ।
सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते ॥ ०३९ ॥

संश्रुत्य नोपक्रियते परं शक्त्या यथार्हतः ।
सक्ता या सर्वभूतेषु साशा कृशतरी मया ॥ ०४० ॥

एकपुत्रः पिता पुत्रे नष्टे वा प्रोषिते तथा ।
प्रवृत्तिं यो न जानाति साशा कृशतरी मया ॥ ०४१ ॥

प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ।
तथा नरेन्द्र धनिनामाशा कृशतरी मया ॥ ०४२ ॥

ऋषभ उवाच ॥

एतच्छ्रुत्वा ततो राजन्स राजा सावरोधनः ।
संस्पृश्य पादौ शिरसा निपपात द्विजर्षभे ॥ ०४३ ॥

राजोवाच ॥

प्रसादये त्वा भगवन्पुत्रेणेच्छामि सङ्गतिम् ।
वृणीष्व च वरं विप्र यमिच्छसि यथाविधि ॥ ०४४ ॥

ऋषभ उवाच ॥

अब्रवीच्च हि तं वाक्यं राजा राजीवलोचनः ।

सत्यमेतद्यथा विप्र त्वयोक्तं नास्त्यतो मृषा ॥ ०४५ ॥

ततः प्रहस्य भगवांस्तनुर्धर्मभृतां वरः ।
पुत्रमस्यानयत्क्षिप्रं तपसा च श्रुतेन च ॥ ०४६ ॥

तं समानाय्य पुत्रं तु तदोपालभ्य पार्थिवम् ।
आत्मानं दर्शयामास धर्मं धर्मभृतां वरः ॥ ०४७ ॥

संदर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम् ।
विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ॥ ०४८ ॥

एतद्दृष्टं मया राजंस्ततश्च वचनं श्रुतम् ।
आशामपनयस्वाशु ततः कृशतरीमिमाम् ॥ ०४९ ॥

भीष्म उवाच ॥

स तत्रोक्तो महाराज ऋषभेण महात्मना ।
सुमित्रोऽपनयत्क्षिप्रमाशां कृशतरीं तदा ॥ ०५० ॥

एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम ।
स्थिरो भव यथा राजन्हिमवानचलोत्तमः ॥ ०५१ ॥

त्वं हि द्रष्टा च श्रोता च कृच्छ्रेष्वर्थकृतेष्विह ।
श्रुत्वा मम महाराज न संतप्तुमिहार्हसि ॥ ०५२ ॥

# यमगौतमसंवादः

## अध्याय १२७

युधिष्ठिर उवाच ॥

नामृतस्येव पर्याप्तिर्ममास्ति ब्रुवति त्वयि ।
तस्मात्कथय भूयस्त्वं धर्ममेव पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य च संवादं यमस्य च महात्मनः ॥ ००२ ॥

पारियात्रगिरिं प्राप्य गौतमस्याश्रमो महान् ।
उवास गौतमो यत्र कालं तदपि मे शृणु ॥ ००३ ॥

षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः ।
तमुग्रतपसं युक्तं तपसा भावितं मुनिम् ॥ ००४ ॥

उपयातो नरव्याघ्र लोकपालो यमस्तदा ।
तमपश्यत्सुतपसमृषिं वै गौतमं मुनिम् ॥ ००५ ॥

स तं विदित्वा ब्रह्मर्षिर्यममागतमोजसा ।
प्राञ्जलिः प्रयतो भूत्वा उपसृप्तस्तपोधनः ॥ ००६ ॥

तं धर्मराजो दृष्ट्वैव नमस्कृत्य नरर्षभम् ।
न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ॥ ००७ ॥

गौतम उवाच ॥

मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात् ।
कथं च लोकानश्नाति पुरुषो दुर्लभाञ्शुभान्  ॥ ००८  ॥

यम उवाच  ॥

तपःशौचवता नित्यं सत्यधर्मरतेन च ।
मातापित्रोरहरहः पूजनं कार्यमञ्जसा  ॥ ००९  ॥

अश्वमेधैश्च यष्टव्यं बहुभिः स्वाप्तदक्षिणैः ।
तेन लोकानुपाश्नाति पुरुषोऽद्भुतदर्शनान्  ॥ ०१०  ॥

---

# अध्याय १२८

युधिष्ठिर उवाच  ॥

मित्रैः प्रहीयमाणस्य बह्वमित्रस्य का गतिः ।
राज्ञः सङ्क्षीणकोशस्य बलहीनस्य भारत  ॥ ००१  ॥

दुष्टामात्यसहायस्य स्रुतमन्त्रस्य सर्वतः ।
राज्यात्प्रच्यवमानस्य गतिमन्यामपश्यतः  ॥ ००२  ॥

परचक्राभियातस्य दुर्बलस्य बलीयसा ।
असंविहितराष्ट्रस्य देशकालावजानतः  ॥ ००३  ॥

अप्राप्यं च भवेत्सान्त्वं भेदो वाप्यतिपीडनात् ।
जीवितं चार्थहेतोर्वा तत्र किं सुकृतं भवेत्  ॥ ००४  ॥

भीष्म उवाच  ॥

गुह्यं मा धर्ममप्राक्षीरतीव भरतर्षभ ।
अपृष्टो नोत्सहे वक्तुं धर्ममेनं युधिष्ठिर ॥ ००५ ॥

धर्मो ह्यणीयान्वचनाद्बुद्धेश्च भरतर्षभ ।
श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ॥ ००६ ॥

कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः ।
तादृशोऽयमनुप्रश्नः स व्यवस्यस्त्वया धिया ॥ ००७ ॥

उपायं धर्मबहुलं यात्रार्थं शृणु भारत ।
नाहमेतादृशं धर्मं बुभूषे धर्मकारणात् ॥ ००८ ॥

दुःखादान इहाढ्येषु स्यात्तु पश्चात्क्षमो मतः ॥ ००८ ॥

अनुगम्य गतीनां च सर्वासामेव निश्चयम् ।
यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते ॥ ००९ ॥

तथा तथा विजानाति विज्ञानं चास्य रोचते ॥ ००९ ॥

अविज्ञानादयोगश्च पुरुषस्योपजायते ।
अविज्ञानादयोगो हि योगो भूतिकरः पुनः ॥ ०१० ॥

अशङ्कमानो वचनमनसूयुरिदं शृणु ।
राज्ञः कोशक्षयादेव जायते बलसङ्क्षयः ॥ ०११ ॥

कोशं सञ्जनयेद्राजा निर्जलेभ्यो यथा जलम् ।
कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र सांप्रतम् ॥ ०१२ ॥

उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः ।
अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारत ॥ ०१३ ॥

प्राक्कोशः प्रोच्यते धर्मो बुद्धिर्धर्माद्गरीयसी ।
धर्मं प्राप्य न्यायवृत्तिमबलीयान्न विन्दति ॥ ०१४ ॥

यस्माद्धनस्योपपत्तिरेकान्तेन न विद्यते ।
तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः ॥ ०१५ ॥

अधर्मो जायते यस्मिन्निति वै कवयो विदुः ।
अनन्तरः क्षत्रियस्य इति वै विचिकित्ससे ॥ ०१६ ॥

यथास्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा ।
तत्कर्तव्यमिहेत्याहुर्नात्मानमवसादयेत् ॥ ०१७ ॥

सन्नात्मा नैव धर्मस्य न परस्य न चात्मनः ।
सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥ ०१८ ॥

तत्र धर्मविदां तात निश्चयो धर्मनैपुणे ।
उद्यमो जीवनं क्षत्रे बाहुवीर्यादिति श्रुतिः ॥ ०१९ ॥

क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति ।
अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत ॥ ०२० ॥

यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् ।
अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः ॥ ०२१ ॥

पीडितस्य किमद्वारमुत्पथो निधृतस्य वा ।
अद्वारतः प्रद्रवति यदा भवति पीडितः ॥ ०२२ ॥

तस्य कोशबलज्यान्या सर्वलोकपराभवः ।
भैक्षचर्या न विहिता न च विड्शूद्रजीविका ॥ ०२३ ॥

स्वधर्मानन्तरा वृत्तिर्यान्यानननुपजीवतः ।
वहतः प्रथमं कल्पमनुकल्पेन जीवनम् ॥ ०२४ ॥

आपद्गतेन धर्माणामन्यायेनोपजीवनम् ।
अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥ ०२५ ॥

क्षत्रिये संशयः कः स्यादित्येतन्निश्चितं सदा ।
आददीत विशिष्टेभ्यो नावसीदेत्कथञ्चन ॥ ०२६ ॥

हन्तारं रक्षितारं च प्रजानां क्षत्रियं विदुः ।
तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना ॥ ०२७ ॥

अन्यत्र राजन्हिंसाया वृत्तिर्नेहास्ति कस्यचित् ।
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥ ०२८ ॥

न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ॥ ०२९ ॥

परस्पराभिसंरक्षा राज्ञा राष्ट्रेण चापदि ।
नित्यमेवेह कर्तव्या एष धर्मः सनातनः ॥ ०३० ॥

राजा राष्ट्रं यथापत्सु द्रव्यौघैः परिरक्षति ।
राष्ट्रेण राजा व्यसने परिरक्ष्यस्तथा भवेत् ॥ ०३१ ॥

कोशं दण्डं बलं मित्रं यदन्यदपि सञ्चितम् ।
न कुर्वीतान्तरं राष्ट्रे राजा परिगते क्षुधा ॥ ०३२ ॥

बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः ।
अत्रैतच्छम्बरस्याहुर्महामायस्य दर्शनम् ॥ ०३३ ॥

धिक्तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।

अवृत्त्यान्त्यमनुष्योऽपि यो वै वेद शिबेर्वचः ॥ ०३४ ॥

राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम् ।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ॥ ०३५ ॥

नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम् ।
तदर्थं पीडयित्वा च दोषं न प्राप्तुमर्हति ॥ ०३६ ॥

अकार्यमपि यज्ञार्थं क्रियते यज्ञकर्मसु ।
एतस्मात्कारणाद्राजा न दोषं प्राप्तुमर्हति ॥ ०३७ ॥

अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थलक्षणम् ॥ ०३८ ॥

एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ॥ ०३८ ॥

यज्ञार्थमन्यद्भवति यज्ञे नार्थस्तथापरः ।
यज्ञस्यार्थार्थमेवान्यत्तत्सर्वं यज्ञसाधनम् ॥ ०३९ ॥

उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम् ।
यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ॥ ०४० ॥

द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ।
ते चापि निपतन्तोऽन्यान्निघ्नन्ति च वनस्पतीन् ॥ ०४१ ॥

एवं कोशस्य महतो ये नराः परिपन्थिनः ।
तानहत्वा न पश्यामि सिद्धिमत्र परंतप ॥ ०४२ ॥

धनेन जयते लोकावुभौ परमिमं तथा ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ॥ ०४३ ॥

सर्वोपायैराददीत धनं यज्ञप्रयोजनम् ।
न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ॥ ०४४ ॥

नैतौ संभवतो राजन्कथञ्चिदपि भारत ।
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥ ०४५ ॥

यदिदं दृश्यते वित्तं पृथिव्यामिह किञ्चन ।
ममेदं स्यान्ममेदं स्यादित्ययं काङ्क्षते जनः ॥ ०४६ ॥

न च राज्यसमो धर्मः कश्चिदस्ति परंतप ।
धर्मं शंसन्ति ते राज्ञामापदर्थमितोऽन्यथा ॥ ०४७ ॥

दानेन कर्मणा चान्ये तपसान्ये तपस्विनः ।
बुद्ध्या दाक्ष्येण चाप्यन्ये चिन्वन्ति धनसञ्चयान् ॥ ०४८ ॥

अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत् ।
सर्वं धनवतः प्राप्यं सर्वं तरति कोशवान् ॥ ०४९ ॥

कोशाद्धर्मश्च कामश्च परो लोकस्तथाप्ययम् ॥ ०४९ ॥

---

# आपद्धर्मपर्व

## अध्याय १२९

युधिष्ठिर उवाच ॥

क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।

विरक्तपौरराष्ट्रस्य निर्द्रव्यनिचयस्य च ॥ ००१ ॥

परिशङ्कितमुख्यस्य स्रुतमन्त्रस्य भारत ।
असंभावितमित्रस्य भिन्नामात्यस्य सर्वशः ॥ ००२ ॥

परचक्राभियातस्य दुर्बलस्य बलीयसा ।
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥ ००३ ॥

भीष्म उवाच ॥

बाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः ।
जवेन संधिं कुर्वीत पूर्वान्पूर्वान्विमोक्षयन् ॥ ००४ ॥

अधर्मविजिगीषुश्चेद्बलवान्पापनिश्चयः ।
आत्मनः संनिरोधेन संधिं तेनाभियोजयेत् ॥ ००५ ॥

अपास्य राजधानीं वा तरेदन्येन वापदम् ।
तद्भावभावे द्रव्याणि जीवन्पुनरुपार्जयेत् ॥ ००६ ॥

यास्तु स्युः केवलत्यागाच्छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं संत्यजेदर्थधर्मवित् ॥ ००७ ॥

अवरोधाज्जुगुप्सेत का सपत्नधने दया ।
न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन ॥ ००८ ॥

युधिष्ठिर उवाच ॥

आभ्यन्तरे प्रकुपिते बाह्ये चोपनिपीडिते ।
क्षीणे कोशे स्रुते मन्त्रे किं कार्यमवशिष्यते ॥ ००९ ॥

भीष्म उवाच ॥

क्षिप्रं वा संधिकामः स्यात्क्षिप्रं वा तीक्ष्णविक्रमः ।
पदापनयनं क्षिप्रमेतावत्सांपरायिकम्  ॥ ०१०  ॥

अनुरक्तेन पुष्टेन हृष्टेन जगतीपते ।
अल्पेनापि हि सैन्येन महीं जयति पार्थिवः  ॥ ०११  ॥

हतो वा दिवमारोहेद्विजयी क्षितिमावसेत् ।
युद्धे तु संत्यजन्प्राणाञ्शक्रस्यैति सलोकताम्  ॥ ०१२  ॥

सर्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च ।
विश्वासाद्विनयं कुर्याद्व्यवस्येद्वाप्युपानहौ  ॥ ०१३  ॥

अपक्रमितुमिच्छेद्वा यथाकामं तु सान्त्वयेत् ।
विलिङ्गमित्वा मित्रेण ततः स्वयमुपक्रमेत्  ॥ ०१४  ॥

---

# अध्याय १३०

युधिष्ठिर उवाच  ॥

हीने परमके धर्मे सर्वलोकातिलङ्घिनि ।
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने  ॥ ००१  ॥

केनास्मिन्ब्राह्मणो जीवेज्जघन्ये काल आगते ।
असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह  ॥ ००२  ॥

भीष्म उवाच  ॥

विज्ञानबलमास्थाय जीवितव्यं तथागते ।
सर्वं साध्वर्थमेवेदमसाध्वर्थं न किञ्चन ॥ ००३ ॥

असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं सङ्क्रमं कृत्वा कृत्स्नधर्मविदेव सः ॥ ००४ ॥

सुरोषेणात्मनो राजन्राज्ये स्थितिमकोपयन् ।
अदत्तमप्याददीत दातुर्वित्तं ममेति वा ॥ ००५ ॥

विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि ।
वृत्तविज्ञानवान्धीरः कस्तं किं वक्तुमर्हति ॥ ००६ ॥

येषां बलकृता वृत्तिर्नैषामन्याभिरोचते ।
तेजसाभिप्रवर्धन्ते बलवन्तो युधिष्ठिर ॥ ००७ ॥

यदेव प्रकृतं शास्त्रमविशेषेण विन्दति ।
तदेव मध्याः सेवन्ते मेधावी चाप्यथोत्तरम् ॥ ००८ ॥

ऋत्विक्पुरोहिताचार्यान्सत्कृतैरभिपूजितान् ।
न ब्राह्मणान्यातयेत दोषान्प्राप्नोति यातयन् ॥ ००९ ॥

एतत्प्रमाणं लोकस्य चक्षुरेतत्सनातनम् ।
तत्प्रमाणोऽवगाहेत तेन तत्साध्वसाधु वा ॥ ०१० ॥

बहूनि ग्रामवास्तव्या रोषाद्ब्रूयुः परस्परम् ।
न तेषां वचनाद्राजा सत्कुर्याद्यातयेत वा ॥ ०११ ॥

न वाच्यः परिवादो वै न श्रोतव्यः कथञ्चन ।
कर्णावेव पिधातव्यौ प्रस्थेयं वा ततोऽन्यतः ॥ ०१२ ॥

न वै सतां वृत्तमेतत्परिवादो न पैशुनम् ।

गुणानामेव वक्तारः सन्तः सत्सु युधिष्ठिर ॥ ०१३ ॥

यथा समधुरौ दम्यौ सुदान्तौ साधुवाहिनौ ।
धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः ॥ ०१४ ॥

यथा यथास्य वहतः सहायाः स्युस्तथापरे ॥ ०१४ ॥

आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ।
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ॥ ०१५ ॥

मार्दवादथ लोभाद्वा ते ब्रूयुर्वाक्यमीदृशम् ॥ ०१५ ॥

आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य यापनम् ।
न चार्षात्सदृशं किञ्चित्प्रमाणं विद्यते क्वचित् ॥ ०१६ ॥

देवा अपि विकर्मस्थं यातयन्ति नराधमम् ।
व्याजेन विन्दन्वित्तं हि धर्मात्तु परिहीयते ॥ ०१७ ॥

सर्वतः सत्कृतः सद्भिर्भूतिप्रभवकारणैः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥ ०१८ ॥

यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित् ।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ ०१९ ॥

यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत् ।
कक्षे रुधिरपातेन तथा धर्मपदं नयेत् ॥ ०२० ॥

एवं सद्भिर्विनीतेन पथा गन्तव्यमच्युत ।
राजर्षीणां वृत्तमेतदवगच्छ युधिष्ठिर ॥ ०२१ ॥

---

# अध्याय १३१

भीष्म उवाच ॥

स्वराष्ट्रात्परराष्ट्राच्च कोशं सञ्जनयेन्नृपः ।
कोशाद्धि धर्मः कौन्तेय राज्यमूलः प्रवर्तते ॥ ००१ ॥

तस्मात्सञ्जनयेत्कोशं संहृत्य परिपालयेत् ।
परिपाल्यानुगृह्णीयादेष धर्मः सनातनः ॥ ००२ ॥

न कोशः शुद्धशौचेन न नृशंसेन जायते ।
पदं मध्यममास्थाय कोशसङ्ग्रहणं चरेत् ॥ ००३ ॥

अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम् ।
अबलस्य कुतो राज्यमराज्ञः श्रीः कुतो भवेत् ॥ ००४ ॥

उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा ।
तस्मात्कोशं बलं मित्राण्यथ राजा विवर्धयेत् ॥ ००५ ॥

हीनकोशं हि राजानमवजानन्ति मानवाः ।
न चास्याल्पेन तुष्यन्ति कार्यमभ्युत्सहन्ति च ॥ ००६ ॥

श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम् ।
सास्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ॥ ००७ ॥

ऋद्धिमस्यानुवर्तन्ते पुरा विप्रकृता जनाः ।
शालावृका इवाजस्रं जिघांसूनिव विन्दति ॥ ००८ ॥

ईदृशस्य कुतो राज्ञः सुखं भरतसत्तम ॥ ००८ ॥

उद्यच्छेदेव न ग्लायेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित्  ॥ ००९  ॥

अप्यरण्यं समाश्रित्य चरेद्दस्युगणैः सह ।
न त्वेवोद्धृतमर्यादैर्दस्युभिः सहितश्चरेत्  ॥ ०१०  ॥

दस्यूनां सुलभा सेना रौद्रकर्मसु भारत  ॥ ०१०  ॥

एकान्तेन ह्यमर्यादात्सर्वोऽप्युद्विजते जनः ।
दस्यवोऽप्युपशङ्कन्ते निरनुक्रोशकारिणः  ॥ ०११  ॥

स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम् ।
अल्पाप्यथेह मर्यादा लोके भवति पूजिता  ॥ ०१२  ॥

नायं लोकोऽस्ति न पर इति व्यवसितो जनः ।
नालं गन्तुं च विश्वासं नास्तिके भयशङ्किनि  ॥ ०१३  ॥

यथा सद्भिः परादानमहिंसा दस्युभिस्तथा ।
अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु  ॥ ०१४  ॥

अयुध्यमानस्य वधो दारामर्शः कृतघ्नता ।
ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा  ॥ ०१५  ॥

स्त्रिया मोषः परिस्थानं दस्युष्वेतद्विगर्हितम्  ॥ ०१५  ॥

स एष एव भवति दस्युरेतानि वर्जयन् ।
अभिसंदधते ये न विनाशायास्य भारत  ॥ ०१६  ॥

नशेषमेवोपालभ्य न कुर्वन्तीति निश्चयः  ॥ ०१६  ॥

तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः ।
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत्  ॥ ०१७  ॥

सशेषकारिणस्तात शेषं पश्यन्ति सर्वतः ।
निःशेषकारिणो नित्यमशेषकरणाद्भयम्  ॥ ०१८  ॥

---

# अध्याय १३२

भीष्म उवाच  ॥

अत्र कर्मान्तवचनं कीर्तयन्ति पुराविदः ।
प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः  ॥ ००१  ॥

तत्र न व्यवधातव्यं परोक्षा धर्मयापना  ॥ ००१  ॥

अधर्मो धर्म इत्येतद्यथा वृकपदं तथा ।
धर्माधर्मफले जातु न ददर्शेह कश्चन  ॥ ००२  ॥

बुभूषेद्बलवानेव सर्वं बलवतो वशे ।
श्रियं बलममात्यांश्च बलवानिह विन्दति  ॥ ००३  ॥

यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम् ।
बह्वपथ्यं बलवति न किञ्चित्त्रायते भयात्  ॥ ००४  ॥

उभौ सत्याधिकारौ तौ त्रायेते महतो भयात् ।
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते  ॥ ००५  ॥

बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमः ।

धूमो वायोरिव वशं बलं धर्मोऽनुवर्तते ॥ ००६ ॥

अनीश्वरे बलं धर्मो द्रुमं वल्लीव संश्रिता ।
वश्यो बलवतां धर्मः सुखं भोगवतामिव ॥ ००७ ॥

नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि ॥ ००७ ॥

दुराचारः क्षीणबलः परिमाणं नियच्छति ।
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ॥ ००८ ॥

अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम् ।
जीवितं यदवक्षिप्तं यथैव मरणं तथा ॥ ००९ ॥

यदेनमाहुः पापेन चारित्रेण विनिक्षतम् ।
स भृशं तप्यतेऽनेन वाक्शल्येन परिक्षतः ॥ ०१० ॥

अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे ।
त्रयीं विद्यां निषेवेत तथोपासीत स द्विजान् ॥ ०११ ॥

प्रसादयेन्मधुरया वाचाप्यथ च कर्मणा ।
महामनाश्चैव भवेद्विवहेच्च महाकुले ॥ ०१२ ॥

इत्यस्मीति वदेदेवं परेषां कीर्तयन्गुणान् ।
जपेदुदकशीलः स्यात्पेशलो नातिजल्पनः ॥ ०१३ ॥

ब्रह्मक्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम् ।
उच्यमानोऽपि लोकेन बहु तत्तदचिन्तयन् ॥ ०१४ ॥

अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
सुखं वित्तं च भुञ्जीत वृत्तेनैतेन गोपयेत् ॥ ०१५ ॥

लोके च लभते पूजां परत्र च महत्फलम्  ॥ ०१५  ॥

---

# कापव्यानुशासनम्

## अध्याय १३३

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा दस्युः समर्यादः प्रेत्यभावे न नश्यति  ॥ ००१  ॥

प्रहर्ता मतिमाञ्शूरः श्रुतवाननृशंसवान् ।
रक्षन्नक्षयिणं धर्मं ब्रह्मण्यो गुरुपूजकः  ॥ ००२  ॥

निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः ।
कापव्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान्  ॥ ००३  ॥

अरण्ये सायपूर्वाह्णे मृगयूथप्रकोपिता ।
विधिज्ञो मृगजातीनां निपानानां च कोविदः  ॥ ००४  ॥

सर्वकाननदेशज्ञः पारियात्रचरः सदा ।
धर्मज्ञः सर्वभूतानाममोघेषुर्दृढायुधः  ॥ ००५  ॥

अप्यनेकशताः सेना एक एव जिगाय सः ।
स वृद्धावन्धपितरौ महारण्येऽभ्यपूजयत्  ॥ ००६  ॥

मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ।

सत्कृत्य भोजयामास सम्यक्परिचचार च ॥ ००७ ॥

आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपालयन् ।
अपि तेभ्यो मृगान्हत्वा निनाय च महावने ॥ ००८ ॥

ये स्म न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासज्य गेहेषु काल्य एव स गच्छति ॥ ००९ ॥

तं बहूनि सहस्राणि ग्रामणित्वेऽभिवव्रिरे ।
निर्मर्यादानि दस्यूनां निरनुक्रोशकारिणाम् ॥ ०१० ॥

दस्यव ऊचुः ॥

मुहूर्तदेशकालज्ञ प्राज्ञ शीलदृढायुध ।
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ॥ ०११ ॥

यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा ।
पालयास्मान्यथान्यायं यथा माता यथा पिता ॥ ०१२ ॥

कापव्य उवाच ॥

मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः ॥ ०१३ ॥

सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु युध्यता ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ॥ ०१४ ॥

सस्यं च नापहन्तव्यं सीरविघ्नं च मा कृथाः ।
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा ॥ ०१५ ॥

सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति ।

कार्या चापचितिस्तेषां सर्वस्वेनापि या भवेत् ॥ ०१६ ॥

यस्य ह्येते संप्ररुष्टा मन्त्रयन्ति पराभवम् ।
न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥ ०१७ ॥

यो ब्राह्मणान्परिभवेद्विनाशं वापि रोचयेत् ।
सूर्योदय इवावश्यं ध्रुवं तस्य पराभवः ॥ ०१८ ॥

इहैव फलमासीनः प्रत्याकाङ्क्षति शक्तितः ।
ये ये नो न प्रदास्यन्ति तांस्तान्सेनाभियास्यति ॥ ०१९ ॥

शिष्ट्यर्थं विहितो दण्डो न वधार्थं विनिश्चयः ।
ये च शिष्टान्प्रबाधन्ते धर्मस्तेषां वधः स्मृतः ॥ ०२० ॥

ये हि राष्ट्रोपरोधेन वृत्तिं कुर्वन्ति केचन ।
तदेव तेऽनु मीयन्ते कुणपं कृमयो यथा ॥ ०२१ ॥

ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥ ०२२ ॥

भीष्म उवाच ॥

तत्सर्वमुपचक्रुस्ते कापव्यस्यानुशासनम् ।
वृत्तिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥ ०२३ ॥

कापव्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामाचरन्क्षेमं दस्यून्पापान्निवर्तयन् ॥ ०२४ ॥

इदं कापव्यचरितं यो नित्यमनुकीर्तयेत् ।
नारण्येभ्यः स भूतेभ्यो भयमार्छेत्कदाचन ॥ ०२५ ॥

भयं तस्य न मर्त्येभ्यो नामर्त्येभ्यः कथञ्चन ।
न सतो नासतो राजन्स ह्यरण्येषु गोपतिः ॥ ०२६ ॥

---

# अध्याय १३४

भीष्म उवाच ॥

अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं सञ्जनयन्ति च ॥ ००१ ॥

न धनं यज्ञशीलानां हार्यं देवस्वमेव तत् ।
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति ॥ ००२ ॥

इमाः प्रजाः क्षत्रियाणां रक्ष्याश्चाद्याश्च भारत ।
धनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ॥ ००३ ॥

तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोग्या ह्योषधीश्छित्त्वा भोग्या एव पचन्त्युत ॥ ००४ ॥

यो वै न देवान्न पितॄन्न मर्त्यान्हविषार्चति ।
आनन्तिकां तां धनितामाहुर्वेदविदो जनाः ॥ ००५ ॥

हरेत्तद्द्रविणं राजन्धार्मिकः पृथिवीपतिः ।
न हि तत्प्रीणयेल्लोकान्न कोशं तद्विधं नृपः ॥ ००६ ॥

असाधुभ्यो निरादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं सङ्क्रमं कृत्वा मन्ये धर्मविदेव सः ॥ ००७ ॥

औद्भिज्जा जन्तवः केचिद्युक्तवाचो यथा तथा ।
अनिष्टतः संभवन्ति तथायज्ञः प्रतायते ॥ ००८ ॥

यथैव दंशमशकं यथा चाण्डपिपीलिकम् ।
सैव वृत्तिरयज्ञेषु तथा धर्मो विधीयते ॥ ००९ ॥

यथा ह्यकस्माद्भवति भूमौ पांसुतृणोलपम् ।
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मतरोऽपि च ॥ ०१० ॥

---

# शकुलाख्यानम्

## अध्याय १३५

भीष्म उवाच ॥

अत्रैव चेदमव्यग्रः शृणवाख्यानमनुत्तमम् ।
दीर्घसूत्रं समाश्रित्य कार्याकार्यविनिश्चये ॥ ००१ ॥

नातिगाधे जलस्थाये सुहृदः शकुलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥ ००२ ॥

अत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथापरः ।
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ॥ ००३ ॥

कदाचित्तज्जलस्थायं मत्स्यबन्धाः समन्ततः ।
निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ ००४ ॥

प्रक्षीयमाणं तं बुद्ध्वा जलस्थायं भयागमे ।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ ००५ ॥

इयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति ॥ ००६ ॥

अनागतमनर्थं हि सुनयैर्यः प्रबाधते ।
न स संशयमाप्नोति रोचतां वां व्रजामहे ॥ ००७ ॥

दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुच्यते ।
न तु कार्या त्वरा यावदिति मे निश्चिता मतिः ॥ ००८ ॥

अथ संप्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् ।
प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते ॥ ००९ ॥

एवमुक्तो निराक्रामद्दीर्घदर्शी महामतिः ।
जगाम स्रोतसैकेन गम्भीरसलिलाशयम् ॥ ०१० ॥

ततः प्रस्रुततोयं तं समीक्ष्य सलिलाशयम् ।
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ॥ ०११ ॥

विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये ।
अगच्छद्ग्रहणं तत्र दीर्घसूत्रः सहापरैः ॥ ०१२ ॥

उद्दानं क्रियमाणं च मत्स्यानां वीक्ष्य रज्जुभिः ।
प्रविश्यान्तरमन्येषामग्रसत्प्रतिपत्तिमान् ॥ ०१३ ॥

ग्रस्तमेव तदुद्दानं गृहीत्वास्त तथैव सः ।
सर्वानेव तु तांस्तत्र ते विदुर्ग्रथिता इति ॥ ०१४ ॥

ततः प्रक्षाल्यमानेषु मत्स्येषु विमले जले ।

त्यक्त्वा रज्जुं विमुक्तोऽभूच्छीघ्रं संप्रतिपत्तिमान्  ॥ ०१५  ॥

दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः ।
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः  ॥ ०१६  ॥

एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः  ॥ ०१७  ॥

आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स संशयमवाप्नोति यथा संप्रतिपत्तिमान्  ॥ ०१८  ॥

अनागतविधानं तु यो नरः कुरुते क्षमम् ।
श्रेयः प्राप्नोति सोऽत्यर्थं दीर्घदर्शी यथा ह्यसौ  ॥ ०१९  ॥

कलाः काष्ठा मुहूर्ताश्च दिना नाड्यः क्षणा लवाः ।
पक्षा मासाश्च ऋतवस्तुल्याः संवत्सराणि च  ॥ ०२०  ॥

पृथिवी देश इत्युक्तः कालः स च न दृश्यते ।
अभिप्रेतार्थसिद्ध्यर्थं न्यायतो यच्च तत्तथा  ॥ ०२१  ॥

एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।
प्रधानाविति निर्दिष्टौ कामेशाभिमतौ नृणाम्  ॥ ०२२  ॥

परीक्ष्यकारी युक्तस्तु सम्यक्समुपपादयेत् ।
देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात्  ॥ ०२३  ॥

# मार्जारमूषकसंवादः

## अध्याय १३६

युधिष्ठिर उवाच ॥

सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ ००१ ॥

तदिच्छामि परां बुद्धिं श्रोतुं भरतसत्तम ।
यथा राजन्न मुह्येत शत्रुभिः परिवारितः ॥ ००२ ॥

धर्मार्थकुशल प्राज्ञ सर्वशास्त्रविशारद ।
पृच्छामि त्वा कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ॥ ००३ ॥

शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्तेत पार्थिवः ।
एतदिच्छाम्यहं श्रोतुं सर्वमेव यथाविधि ॥ ००४ ॥

विषमस्थं हि राजानं शत्रवः परिपन्थिनः ।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ॥ ००५ ॥

सर्वतः प्रार्थ्यमानेन दुर्बलेन महाबलैः ।
एकेनैवासहायेन शक्यं स्थातुं कथं भवेत् ॥ ००६ ॥

कथं मित्रमरिं चैव विन्देत भरतर्षभ ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ॥ ००७ ॥

प्रज्ञातलक्षणे राजन्नमित्रे मित्रतां गते ।
कथं नु पुरुषः कुर्यात्किं वा कृत्वा सुखी भवेत् ॥ ००८ ॥

विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत् ।

कथं वा शत्रुमध्यस्थो वर्तेताबलवानिति ॥ ००९ ॥

एतद्वै सर्वकृत्यानां परं कृत्यं परंतप ।
नैतस्य कश्चिद्वक्तास्ति श्रोता चापि सुदुर्लभः ॥ ०१० ॥

ऋते शांतनवाद्भीष्मात्सत्यसंधाज्जितेन्द्रियात् ।
तदन्विष्य महाबाहो सर्वमेतद्वदस्व मे ॥ ०११ ॥

भीष्म उवाच ॥

त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः ।
श‍ृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥ ०१२ ॥

अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्ययोगात्कार्याणां तद्गत्या हि सदा गतिः ॥ ०१३ ॥

तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत् ।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये ॥ ०१४ ॥

संधातव्यं बुधैर्नित्यं व्यवस्यं च हितार्थिभिः ।
अमित्रैरपि संधेयं प्राणा रक्ष्याश्च भारत ॥ ०१५ ॥

यो ह्यमित्रैर्नरो नित्यं न संदध्यादपण्डितः ।
न सोऽर्थमाप्नुयात्किञ्चित्फलान्यपि च भारत ॥ ०१६ ॥

यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् ॥ ०१७ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मार्जारस्य च संवादं न्यग्रोधे मूषकस्य च ॥ ०१८ ॥

वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत् ।
लताजालपरिच्छन्नो नानाद्विजगणायुतः  ॥ ०१९  ॥

स्कन्धवान्मेघसङ्काशः शीतच्छायो मनोरमः ।
वैरन्त्यमभितो जातस्तरुर्व्यालमृगाकुलः  ॥ ०२०  ॥

तस्य मूलं समाश्रित्य कृत्वा शतमुखं बिलम् ।
वसति स्म महाप्राज्ञः पलितो नाम मूषकः  ॥ ०२१  ॥

शाखाश्च तस्य संश्रित्य वसति स्म सुखं पुरः ।
लोमशो नाम मार्जारः पक्षिसत्त्वावसादकः  ॥ ०२२  ॥

तत्र चागत्य चण्डालो वैरन्त्यकृतकेतनः ।
अयोजयत्तमुन्माथं नित्यमस्तं गते रवौ  ॥ ०२३  ॥

तत्र स्नायुमयान्पाशान्यथावत्संनिधाय सः ।
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम्  ॥ ०२४  ॥

तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः ।
कदाचित्तत्र मार्जारस्त्वप्रमत्तोऽप्यबध्यत  ॥ ०२५  ॥

तस्मिन्बद्धे महाप्राज्ञः शत्रौ नित्याततायिनि ।
तं कालं पलितो ज्ञात्वा विचचार सुनिर्भयः  ॥ ०२६  ॥

तेनानुचरता तस्मिन्वने विश्वस्तचारिणा ।
भक्षं विचरमाणेन नचिराद्दृष्टमामिषम्  ॥ ०२७  ॥

स तमुन्माथमारुह्य तदामिषमभक्षयत् ।
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन्  ॥ ०२८  ॥

आमिषे तु प्रसक्तः स कदाचिदवलोकयन् ।

अपश्यदपरं घोरमात्मनः शत्रुमागतम्  ॥ ०२९  ॥

शरप्रसूनसङ्काशं महीविवरशायिनम् ।
नकुलं हरिकं नाम चपलं ताम्रलोचनम्  ॥ ०३०  ॥

तेन मूषकगन्धेन त्वरमाणमुपागतम् ।
भक्षार्थं लेलिहद्वक्त्रं भूमावूर्ध्वमुखं स्थितम्  ॥ ०३१  ॥

शाखागतमरिं चान्यदपश्यत्कोटरालयम् ।
उलूकं चन्द्रकं नाम तीक्ष्णतुण्डं क्षपाचरम्  ॥ ०३२  ॥

गतस्य विषयं तस्य नकुलोलूकयोस्तदा ।
अथास्यासीदियं चिन्ता तत्प्राप्य सुमहद्भयम्  ॥ ०३३  ॥

आपद्यस्यां सुकष्टायां मरणे समुपस्थिते ।
समन्ताद्भय उत्पन्ने कथं कार्यं हितैषिणा  ॥ ०३४  ॥

स तथा सर्वतो रुद्धः सर्वत्र समदर्शनः ।
अभवद्भयसंतप्तश्चक्रे चेमां परां गतिम्  ॥ ०३५  ॥

आपद्विनाशभूयिष्ठा शतैकीयं च जीवितम् ।
समन्तसंशया चेयमस्मानापदुपस्थिता  ॥ ०३६  ॥

गतं हि सहसा भूमिं नकुलो मां समाप्नुयात् ।
उलूकश्चेह तिष्ठन्तं मार्जारः पाशसङ्क्षयात्  ॥ ०३७  ॥

न त्वेवास्मद्विधः प्राज्ञः संमोहं गन्तुमर्हति ।
करिष्ये जीविते यत्नं यावदुच्छ्वासनिग्रहम्  ॥ ०३८  ॥

न हि बुद्ध्यान्विताः प्राज्ञा नीतिशास्त्रविशारदाः ।
संभ्रमन्त्यापदं प्राप्य महतोऽर्थानवाप्य च  ॥ ०३९  ॥

न त्वन्यामिह मार्जाराद्गतिं पश्यामि सांप्रतम् ।
विषमस्थो ह्ययं जन्तुः कृत्यं चास्य महन्मया ॥ ०४० ॥

जीवितार्थी कथं त्वद्य प्रार्थितः शत्रुभिस्त्रिभिः ।
तस्मादिममहं शत्रुं मार्जारं संश्रयामि वै ॥ ०४१ ॥

क्षत्रविद्यां समाश्रित्य हितमस्योपधारये ।
येनेमं शत्रुसंघातं मतिपूर्वेण वञ्चये ॥ ०४२ ॥

अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः ।
मूढो ग्राहयितुं स्वार्थं सङ्गत्या यदि शक्यते ॥ ०४३ ॥

कदाचिद्व्यसनं प्राप्य संधिं कुर्यान्मया सह ।
बलिना संनिविष्टस्य शत्रोरपि परिग्रहः ॥ ०४४ ॥

कार्य इत्याहुराचार्या विषमे जीवितार्थिना ॥ ०४४ ॥

श्रेयान्हि पण्डितः शत्रुर्न च मित्रमपण्डितम् ।
मम ह्यमित्रे मार्जारे जीवितं संप्रतिष्ठितम् ॥ ०४५ ॥

हन्तैनं संप्रवक्ष्यामि हेतुमात्माभिरक्षणे ।
अपीदानीमयं शत्रुः सङ्गत्या पण्डितो भवेत् ॥ ०४६ ॥

ततोऽर्थगतितत्त्वज्ञः संधिविग्रहकालवित् ।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषकोऽब्रवीत् ॥ ०४७ ॥

सौहृदेनाभिभाषे त्वा कच्चिन्मार्जार जीवसि ।
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥ ०४८ ॥

न ते सौम्य विषत्तव्यं जीविष्यसि यथा पुरा ।

अहं त्वामुद्धरिष्यामि प्राणाञ्जह्यां हि ते कृते ॥ ०४९ ॥

अस्ति कश्चिदुपायोऽत्र पुष्कलः प्रतिभाति माम् ।
येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयो यथा मया ॥ ०५० ॥

मया ह्युपायो दृष्टोऽयं विचार्य मतिमात्मनः ।
आत्मार्थं च त्वदर्थं च श्रेयः साधारणं हि नौ ॥ ०५१ ॥

इदं हि नकुलोलूकं पापबुद्ध्यभितः स्थितम् ।
न धर्षयति मार्जार तेन मे स्वस्ति सांप्रतम् ॥ ०५२ ॥

कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते ।
नगशाखाग्रहस्तिष्ठंस्तस्याहं भृशमुद्विजे ॥ ०५३ ॥

सतां साप्तपदं सख्यं सवासो मेऽसि पण्डितः ।
सांवास्यकं करिष्यामि नास्ति ते मृत्युतो भयम् ॥ ०५४ ॥

न हि शक्नोषि मार्जार पाशं छेत्तुं विना मया ।
अहं छेत्स्यामि ते पाशं यदि मां त्वं न हिंससि ॥ ०५५ ॥

त्वमाश्रितो नगस्याग्रं मूलं त्वहमुपाश्रितः ।
चिरोषिताविहावां वै वृक्षेऽस्मिन्विदितं हि ते ॥ ०५६ ॥

यस्मिन्नाश्वसते कश्चिद्यश्च नाश्वसते क्वचित् ।
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नचेतसौ ॥ ०५७ ॥

तस्माद्विवर्धतां प्रीतिः सत्या सङ्गतिरस्तु नौ ।
कालातीतमपार्थं हि न प्रशंसन्ति पण्डिताः ॥ ०५८ ॥

अर्थयुक्तिमिमां तावद्यथाभूतां निशामय ।
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ॥ ०५९ ॥

कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् ।
स तारयति तत्काष्ठं स च काष्ठेन तार्यते ॥ ०६० ॥

ईदृशो नौ समायोगो भविष्यति सुनिस्तरः ।
अहं त्वां तारयिष्यामि त्वं च मां तारयिष्यसि ॥ ०६१ ॥

एवमुक्त्वा तु पलितस्तदर्थमुभयोर्हितम् ।
हेतुमद्ग्रहणीयं च कालाकाङ्क्षी व्यपैक्षत ॥ ०६२ ॥

अथ सुव्याहृतं तस्य श्रुत्वा शत्रुर्विचक्षणः ।
हेतुमद्ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत् ॥ ०६३ ॥

बुद्धिमान्वाक्यसंपन्नस्तद्वाक्यमनुवर्णयन् ।
तामवस्थामवेक्ष्यान्त्यां साम्नैव प्रत्यपूजयत् ॥ ०६४ ॥

ततस्तीक्ष्णाग्रदशनो वैडूर्यमणिलोचनः ।
मूषकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रवीत् ॥ ०६५ ॥

नन्दामि सौम्य भद्रं ते यो मां जीवन्तमिच्छसि ।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥ ०६६ ॥

अहं हि दृढमापन्नस्त्वमापन्नतरो मया ।
द्वयोरापन्नयोः संधिः क्रियतां मा विचारय ॥ ०६७ ॥

विधत्स्व प्राप्तकालं यत्कार्यं सिध्यतु चावयोः ।
मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ॥ ०६८ ॥

न्यस्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत्तथा ।
निदेशवशवर्ती च भवन्तं शरणं गतः ॥ ०६९ ॥

इत्येवमुक्तः पलितो मार्जारं वशमागतम् ।
वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत् ॥ ०७० ॥

उदारं यद्भवानाह नैतच्चित्रं भवद्विधे ।
विदितो यस्तु मार्गो मे हितार्थं शृणु तं मम ॥ ०७१ ॥

अहं त्वानुप्रवेक्ष्यामि नकुलान्मे महद्भयम् ।
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव मोक्षणे ॥ ०७२ ॥

उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम् ।
अहं छेत्स्यामि ते पाशान्सखे सत्येन ते शपे ॥ ०७३ ॥

तद्वचः सङ्गतं श्रुत्वा लोमशो युक्तमर्थवत् ।
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ॥ ०७४ ॥

स तं संपूज्य पलितं मार्जारः सौहृदे स्थितः ।
सुविचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव हि ॥ ०७५ ॥

क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा ।
तव प्राज्ञ प्रसादाद्धि क्षिप्रं प्राप्स्यामि जीवितम् ॥ ०७६ ॥

यद्यदेवङ्गतेनाद्य शक्यं कर्तुं मया तव ।
तदाज्ञापय कर्ताहं संधिरेवास्तु नौ सखे ॥ ०७७ ॥

अस्मात्ते संशयान्मुक्तः समित्रगणबान्धवः ।
सर्वकार्याणि कर्ताहं प्रियाणि च हितानि च ॥ ०७८ ॥

मुक्तश्च व्यसनादस्मात्सौम्याहमपि नाम ते ।
प्रीतिमुत्पादयेयं च प्रतिकर्तुं च शक्नुयाम् ॥ ०७९ ॥

ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषकस्तदा ।

प्रविवेश सुविस्रब्धः सम्यगर्थांश्चचार ह ॥ ०८० ॥

एवमाश्वासितो विद्वान्मार्जारेण स मूषकः ।
मार्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ॥ ०८१ ॥

लीनं तु तस्य गात्रेषु मार्जारस्याथ मूषकम् ।
तौ दृष्ट्वा नकुलोलूकौ निराशौ जग्मतुर्गृहान् ॥ ०८२ ॥

लीनस्तु तस्य गात्रेषु पलितो देशकालवित् ।
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैः शनैः ॥ ०८३ ॥

अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषकम् ।
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ॥ ०८४ ॥

तमत्वरन्तं पलितं पाशानां छेदने तदा ।
सञ्चोदयितुमारेभे मार्जारो मूषकं तदा ॥ ०८५ ॥

किं सौम्य नाभित्वरसे किं कृतार्थोऽवमन्यसे ।
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति सः ॥ ०८६ ॥

इत्युक्तस्त्वरता तेन मतिमान्पलितोऽब्रवीत् ।
मार्जारमकृतप्रज्ञं वश्यमात्महितं वचः ॥ ०८७ ॥

तूष्णीं भव न ते सौम्य त्वरा कार्या न संभ्रमः ।
वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ ०८८ ॥

अकाले कृत्यमारब्धं कर्तुं नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ ०८९ ॥

अकालविप्रमुक्तान्मे त्वत्त एव भयं भवेत् ।
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ ०९० ॥

यावत्पश्यामि चण्डालमायान्तं शस्त्रपाणिनम् ।
ततश्छेत्स्यामि ते पाशं प्राप्ते साधारणे भये ॥ ०९१ ॥

तस्मिन्काले प्रमुक्तस्त्वं तरुमेवाधिरोहसि ।
न हि ते जीवितादन्यत्किञ्चित्कृत्यं भविष्यति ॥ ०९२ ॥

ततो भवत्यतिक्रान्ते त्रस्ते भीते च लोमश ।
अहं बिलं प्रवेक्ष्यामि भवाञ्शाखां गमिष्यति ॥ ०९३ ॥

एवमुक्तस्तु मार्जारो मूषकेणात्मनो हितम् ।
वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ॥ ०९४ ॥

अथात्मकृत्यत्वरितः सम्यक्प्रश्रयमाचरन् ।
उवाच लोमशो वाक्यं मूषकं चिरकारिणम् ॥ ०९५ ॥

न ह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः ।
यथा त्वं मोक्षितः कृच्छ्रात्त्वरमाणेन वै मया ॥ ०९६ ॥

तथैव त्वरमाणेन त्वया कार्यं हितं मम ।
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ॥ ०९७ ॥

अथ वा पूर्ववैरं त्वं स्मरन्कालं विकर्षसि ।
पश्य दुष्कृतकर्मत्वं व्यक्तमायुःक्षयो मम ॥ ०९८ ॥

यच्च किञ्चिन्मयाज्ञानात्पुरस्ताद्विप्रियं कृतम् ।
न तन्मनसि कर्तव्यं क्षमये त्वां प्रसीद मे ॥ ०९९ ॥

तमेवंवादिनं प्राज्ञः शास्त्रविद्बुद्धिसंमतः ।
उवाचेदं वचः श्रेष्ठं मार्जारं मूषकस्तदा ॥ १०० ॥

श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः ।
ममापि त्वं विजानीहि स्वमर्थं परिगृह्णतः ॥ १०१ ॥

यन्मित्रं भीतवत्साध्यं यन्मित्रं भयसंहितम् ।
सुरक्षितं ततः कार्यं पाणिः सर्पमुखादिव ॥ १०२ ॥

कृत्वा बलवता संधिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्यानर्थाय कल्पते ॥ १०३ ॥

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित्सुहृत् ।
अर्थैरर्था निबध्यन्ते गजैर्वनगजा इव ॥ १०४ ॥

न हि कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १०५ ॥

तस्मिन्कालेऽपि च भवान्दिवाकीर्तिभयान्वितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥ १०६ ॥

छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यहं तदप्याशु निर्वृतो भव लोमश ॥ १०७ ॥

तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः ।
क्षयं जगाम सा रात्रिर्लोमशं चाविशद्भयम् ॥ १०८ ॥

ततः प्रभातसमये विकृतः कृष्णपिङ्गलः ।
स्थूलस्फिग्विकचो रूक्षः श्वचक्रपरिवारितः ॥ १०९ ॥

शङ्कुकर्णो महावक्त्रः पलितो घोरदर्शनः ।
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत ॥ ११० ॥

तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः ।

उवाच पलितं भीतः किमिदानीं करिष्यसि ॥ १११ ॥

अथ चापि सुसंत्रस्तौ तं दृष्ट्वा घोरदर्शनम् ।
क्षणेन नकुलोलूकौ नैराश्यं जग्मतुस्तदा ॥ ११२ ॥

बलिनौ मतिमन्तौ च संघातं चाप्युपागतौ ।
अशक्यौ सुनयात्तस्मात्संप्रधर्षयितुं बलात् ॥ ११३ ॥

कार्यार्थं कृतसंधी तौ दृष्ट्वा मार्जारमूषकौ ।
उलूकनकुलौ तूर्णं जग्मतुः स्वं स्वमालयम् ॥ ११४ ॥

ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषकः ।
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम् ॥ ११५ ॥

स च तस्माद्भयान्मुक्तो मुक्तो घोरेण शत्रुणा ।
बिलं विवेश पलितः शाखां भेजे च लोमशः ॥ ११६ ॥

उन्माथमप्यथादाय चण्डालो वीक्ष्य सर्वशः ।
विहताशः क्षणेनाथ तस्माद्देशादपाक्रमत् ॥ ११७ ॥

जगाम च स्वभवनं चण्डालो भरतर्षभ ॥ ११७ ॥

ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥ ११८ ॥

अकृत्वा संविदं काञ्चित्सहसाहमुपप्लुतः ।
कृतज्ञं कृतकल्याणं कच्चिन्मां नाभिशङ्कसे ॥ ११९ ॥

गत्वा च मम विश्वासं दत्त्वा च मम जीवितम् ।
मित्रोपभोगसमये किं त्वं नैवोपसर्पसि ॥ १२० ॥

कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति ।
न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्मतिः ॥ १२१ ॥

तत्कृतोऽहं त्वया मित्रं सामर्थ्यादात्मनः सखे ।
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२२ ॥

यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् ॥ १२३ ॥

अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥ १२४ ॥

ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषामनुशास्ता च मे भव ॥ १२५ ॥

अमात्यो मे भव प्राज्ञ पितेव हि प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ १२६ ॥

बुद्ध्या त्वमुशनाः साक्षाद्बले त्वधिकृता वयम् ।
त्वन्मन्त्रबलयुक्तो हि विन्देत जयमेव ह ॥ १२७ ॥

एवमुक्तः परं सान्त्वं मार्जारेण स मूषकः ।
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥ १२८ ॥

यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम् ।
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति माम् ॥ १२९ ॥

वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतम् ॥ १३० ॥

शत्रुरूपाश्च सुहृदो मित्ररूपाश्च शत्रवः ।

सान्त्वितास्ते न बुध्यन्ते रागलोभवशं गताः ॥ १३१ ॥

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ १३२ ॥

यो यस्मिञ्जीवति स्वार्थं पश्येत्तावत्स जीवति ।
स तस्य तावन्मित्रं स्याद्यावन्न स्याद्विपर्ययः ॥ १३३ ॥

नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम् ।
अर्थयुक्त्या हि जायन्ते मित्राणि रिपवस्तथा ॥ १३४ ॥

मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥ १३५ ॥

यो विश्वसति मित्रेषु न चाश्वसति शत्रुषु ।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥ १३६ ॥

अर्थयुक्तिमविज्ञाय यः शुभे कुरुते मतिम् ।
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ॥ १३७ ॥

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १३८ ॥

अर्थयुक्त्या हि दृश्यन्ते पिता माता सुतास्तथा ।
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः ॥ १३९ ॥

पुत्रं हि मातापितरु त्यजतः पतितं प्रियम् ।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥ १४० ॥

तं मन्ये निकृतिप्रज्ञं यो मोक्षं प्रत्यनन्तरम् ।
कृत्यं मृगयसे कर्तुं सुखोपायमसंशयम् ॥ १४१ ॥

अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः ।
पूर्वं निविष्टमुन्माथं चपलत्वान्न बुद्धवान् ॥ १४२ ॥

आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥ १४३ ॥

ब्रवीति मधुरं कश्चित्प्रियो मे ह भवानिति ।
तन्मिथ्याकरणं सर्वं विस्तरेणापि मे शृणु ॥ १४४ ॥

कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥ १४५ ॥

सख्यं सोदरयोर्भ्रात्रोर्दंपत्योर्वा परस्परम् ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥ १४६ ॥

यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः ॥ १४७ ॥

प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रहोमजपैरन्यः कार्यार्थं प्रीयते जनः ॥ १४८ ॥

उत्पन्ने कारणे प्रीतिर्नास्ति नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्तते ॥ १४९ ॥

किं नु तत्कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम् ॥ १५० ॥

कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ॥ १५१ ॥

न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते ।
अकालेऽविषमस्थस्य स्वार्थहेतुरयं तव ॥ १५२ ॥

तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे ।
अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे ॥ १५३ ॥

अद्यैव हि रिपुर्भूत्वा पुनरद्यैव सौहृदम् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ १५४ ॥

आसीत्तावत्तु मैत्री नौ यावद्धेतुरभूत्पुरा ।
सा गता सह तेनैव कालयुक्तेन हेतुना ॥ १५५ ॥

त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्वृत्तं प्रकृतिः शत्रुतां गता ॥ १५६ ॥

सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्रविशेयं कथं पाशं त्वत्कृतं तद्वदस्व मे ॥ १५७ ॥

त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥ १५८ ॥

त्वं हि सौम्य कृतार्थोऽद्य निर्वृत्तार्थास्तथा वयम् ।
न तेऽस्त्यन्यन्मया कृत्यं किञ्चिदन्यत्र भक्षणात् ॥ १५९ ॥

अहमन्नं भवान्भोक्ता दुर्बलोऽहं भवान्बली ।
नावयोर्विद्यते संधिर्नियुक्ते विषमे बले ॥ १६० ॥

संमन्येऽहं तव प्रज्ञां यन्मोक्षात्प्रत्यनन्तरम् ।
भक्ष्यं मृगयसे नूनं सुखोपायमसंशयम् ॥ १६१ ॥

भक्ष्यार्थमेव बद्धस्त्वं स मुक्तः प्रसृतः क्षुधा ।

शास्त्रज्ञमभिसंधाय नूनं भक्षयिताद्य माम्  ॥ १६२ ॥

जानामि क्षुधितं हि त्वामाहारसमयश्च ते ।
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः  ॥ १६३ ॥

यच्चापि पुत्रदारं स्वं तत्संनिसृजसे मयि ।
शुश्रूषां नाम मे कर्तुं सखे मम न तत्क्षमम्  ॥ १६४ ॥

त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।
कस्मान्मां ते न खादेयुर्हृष्टाः प्रणयिनस्त्वयि  ॥ १६५ ॥

नाहं त्वया समेष्यामि वृत्तो हेतुः समागमे ।
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मर्यते यदि  ॥ १६६ ॥

शत्रोरन्नाद्यभूतः सन्क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत्  ॥ १६७ ॥

स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
नाहं त्वया समेष्यामि निर्वृतो भव लोमश  ॥ १६८ ॥

बलवत्संनिकर्षो हि न कदाचित्प्रशस्यते ।
प्रशान्तादपि मे प्राज्ञ भेतव्यं बलिनः सदा  ॥ १६९ ॥

यदि त्वर्थेन मे कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कदाचन  ॥ १७० ॥

आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनं तथा ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना  ॥ १७१ ॥

ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि तिष्ठताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम्  ॥ १७२ ॥

न त्वात्मनः संप्रदानं धनरत्नवदिष्यते ।
आत्मा तु सर्वतो रक्ष्यो दारैरपि धनैरपि ॥ १७३ ॥

आत्मरक्षिततन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १७४ ॥

शत्रून्सम्यग्विजानन्ति दुर्बला ये बलीयसः ।
तेषां न चाल्यते बुद्धिरात्मार्थं कृतनिश्चया ॥ १७५ ॥

इत्यभिव्यक्तमेवासौ पलितेनावभर्त्सितः ।
मार्जारो व्रीडितो भूत्वा मूषकं वाक्यमब्रवीत् ॥ १७६ ॥

संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ।
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः ॥ १७७ ॥

न तु मामन्यथा साधो त्वं विज्ञातुमिहार्हसि ।
प्राणप्रदानजं त्वत्तो मम सौहृदमागतम् ॥ १७८ ॥

धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः ।
मित्रेषु वत्सलश्चास्मि त्वद्विधेषु विशेषतः ॥ १७९ ॥

तन्मामेवङ्गते साधो न यावयितुमर्हसि ।
त्वया हि याव्यमानोऽहं प्राणाञ्जह्यां सबान्धवः ॥ १८० ॥

धिक्शब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
मरणं धर्मतत्त्वज्ञ न मां शङ्कितुमर्हसि ॥ १८१ ॥

इति संस्तूयमानो हि मार्जारेण स मूषकः ।
मनसा भावगम्भीरं मार्जारं वाक्यमब्रवीत् ॥ १८२ ॥

साधुर्भवाञ्श्रुतार्थोऽस्मि प्रीयते न च विश्वसे ।
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥ १८३ ॥

न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥ १८४ ॥

शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् ॥ १८५ ॥

तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि संततिश्चैव सर्वं भवति जीवतः ॥ १८६ ॥

सङ्क्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥ १८७ ॥

वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्त्वाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ १८८ ॥

त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चण्डालाज्जातिकिल्बिषात् ॥ १८९ ॥

स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः ।
स्वबिलं हि जवेनाशु मार्जारः प्रययौ ततः ॥ १९० ॥

ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥ १९१ ॥

एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः ।
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः ॥ १९२ ॥

अरिणापि समर्थेन संधिं कुर्वीत पण्डितः ।

मूषकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥ १९३ ॥

इत्येष क्षत्रधर्मस्य मया मार्गोऽनुदर्शितः ।
विस्तरेण महीपाल सङ्क्षेपेण पुनः शृणु ॥ १९४ ॥

अन्योन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसंधातुमभूच्चैव तयोर्मतिः ॥ १९५ ॥

तत्र प्राज्ञोऽभिसंधत्ते सम्यग्बुद्धिबलाश्रयात् ।
अभिसंधीयते प्राज्ञः प्रमादादपि चाबुधैः ॥ १९६ ॥

तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
न ह्यप्रमत्तश्चलति चलितो वा विनश्यति ॥ १९७ ॥

कालेन रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्य इत्येव तत्त्वज्ञाः प्राहुर्नित्यं युधिष्ठिर ॥ १९८ ॥

एवं मत्वा महाराज शास्त्रार्थमभिगम्य च ।
अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् ॥ १९९ ॥

भीतवत्संविधिः कार्यः प्रतिसंधिस्तथैव च ।
भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगजा ॥ २०० ॥

न भयं विद्यते राजन्भीतस्यानागते भये ।
अभीतस्य तु विस्रम्भात्सुमहज्जायते भयम् ॥ २०१ ॥

न भीरुरिति चात्यन्तं मन्त्रोऽदेयः कथञ्चन ।
अविज्ञानाद्धि विज्ञाते गच्छेदास्पददर्शिषु ॥ २०२ ॥

तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
कार्याणां गुरुतां बुद्ध्वा नानृतं किञ्चिदाचरेत् ॥ २०३ ॥

एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर ।
श्रुत्वा त्वं सुहृदां मध्ये यथावत्समुपाचर ॥ २०४ ॥

उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं तथा ।
संधिविग्रहकालं च मोक्षोपायं तथापदि ॥ २०५ ॥

शत्रुसाधारणे कृत्ये कृत्वा संधिं बलीयसा ।
समागमं चरेद्युक्त्या कृतार्थो न च विश्वसेत् ॥ २०६ ॥

अविरुद्धां त्रिवर्गेण नीतिमेतां युधिष्ठिर ।
अभ्युत्तिष्ठ श्रुतादस्माद्भूयस्त्वं रञ्जयन्प्रजाः ॥ २०७ ॥

ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पाण्डव ।
ब्राह्मणा हि परं श्रेयो दिवि चेह च भारत ॥ २०८ ॥

एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ।
पूजिताः शुभकर्माणः पूर्वजित्या नराधिप ॥ २०९ ॥

राज्यं श्रेयः परं राजन्यशः कीर्तिं च लप्स्यसे ।
कुलस्य संततिं चैव यथान्यायं यथाक्रमम् ॥ २१० ॥

द्वयोरिमं भारत संधिविग्रहं ; सुभाषितं बुद्धिविशेषकारितम् ।
तथान्ववेक्ष्य क्षितिपेन सर्वदा ; निषेवितव्यं नृप शत्रुमण्डले ॥ २११ ॥

# ब्रह्मदत्तपूजनीसंवादः

## अध्याय १३७

युधिष्ठिर उवाच ॥

उक्तो मन्त्रो महाबाहो न विश्वासोऽस्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥ ००१ ॥

विश्वासाद्धि परं राज्ञो राजन्नुत्पद्यते भयम् ।
कथं वै नाश्वसन्राजा शत्रूञ्जयति पार्थिव ॥ ००२ ॥

एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति ।
अविश्वासकथामेतामुपश्रुत्य पितामह ॥ ००३ ॥

भीष्म उवाच ॥

श‍ृणु कौन्तेय यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य पार्थिव ॥ ००४ ॥

काम्पिल्ये ब्रह्मदत्तस्य अन्तःपुरनिवासिनी ।
पूजनी नाम शकुनी दीर्घकालं सहोषिता ॥ ००५ ॥

रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः ।
सर्वज्ञा सर्वधर्मज्ञा तिर्यग्योनिगतापि सा ॥ ००६ ॥

अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।
समकालं च राज्ञोऽपि देव्याः पुत्रो व्यजायत ॥ ००७ ॥

समुद्रतीरं गत्वा सा त्वाजहार फलद्वयम् ।

पुष्ट्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ॥ ००८ ॥

फलमेकं सुतायादाद्राजपुत्राय चापरम् ।
अमृतास्वादसदृशं बलतेजोविवर्धनम् ॥ ००९ ॥

तत्रागच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ॥ ००९ ॥

धात्र्या हस्तगतश्चापि तेनाक्रीडत पक्षिणा ।
शून्ये तु तमुपादाय पक्षिणं समजातकम् ॥ ०१० ॥

हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागमत् ॥ ०१० ॥

अथ सा शकुनी राजन्नागमत्फलहारिका ।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ ०११ ॥

बाष्पपूर्णमुखी दीना दृष्ट्वा सा तु हतं सुतम् ।
पूजनी दुःखसंतप्ता रुदती वाक्यमब्रवीत् ॥ ०१२ ॥

क्षत्रिये सङ्गतं नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे संभजन्तीह कृतार्थाः संत्यजन्ति च ॥ ०१३ ॥

क्षत्रियेषु न विश्वासः कार्यः सर्वोपघातिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ ०१४ ॥

अहमस्य करोम्यद्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ ०१५ ॥

सहसञ्जातवृद्धस्य तथैव सहभोजिनः ।
शरणागतस्य च वधस्त्रिविधं ह्यस्य किल्बिषम् ॥ ०१६ ॥

इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा ।

भित्त्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत्  ॥ ०१७  ॥

इच्छयैव कृतं पापं सद्य एवोपसर्पति ।
कृतप्रतिक्रियं तेषां न नश्यति शुभाशुभम्  ॥ ०१८  ॥

पापं कर्म कृतं किञ्चिन्न तस्मिन्यदि विद्यते ।
निपात्यतेऽस्य पुत्रेषु न चेत्पौत्रेषु नप्तृषु  ॥ ०१९  ॥

ब्रह्मदत्त उवाच  ॥

अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया ।
उभयं तत्समीभूतं वस पूजनि मा गमः  ॥ ०२०  ॥

पूजन्युवाच  ॥

सकृत्कृतापराधस्य तत्रैव परिलम्बतः ।
न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम्  ॥ ०२१  ॥

सान्त्वे प्रयुक्ते नृपते कृतवैरे न विश्वसेत् ।
क्षिप्रं प्रबध्यते मूढो न हि वैरं प्रशाम्यति  ॥ ०२२  ॥

अन्योन्यं कृतवैराणां पुत्रपौत्रं निगच्छति ।
पुत्रपौत्रे विनष्टे तु परलोकं निगच्छति  ॥ ०२३  ॥

सर्वेषां कृतवैराणामविश्वासः सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातकः  ॥ ०२४  ॥

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
कामं विश्वासयेदन्यान्परेषां तु न विश्वसेत्  ॥ ०२५  ॥

माता पिता बान्धवानां वरिष्ठौ ; भार्या जरा बीजमात्रं तु पुत्रः ।

भ्राता शत्रुः क्लिन्नपाणिर्वयस्य ; आत्मा ह्येकः सुखदुःखस्य वेत्ता ॥ ०२६ ॥

अन्योन्यकृतवैराणां न संधिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ ०२७ ॥

पूजितस्यार्थमानाभ्यां जन्तोः पूर्वापकारिणः ।
चेतो भवत्यविश्वस्तं पूर्वं त्रासयते बलात् ॥ ०२८ ॥

पूर्वं संमानना यत्र पश्चाच्चैव विमानना ।
जह्यात्तं सत्त्ववान्वासं संमानितविमानितः ॥ ०२९ ॥

उषितास्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्स्व व्रजाम्यहम् ॥ ०३० ॥

ब्रह्मदत्त उवाच ॥

यत्कृते प्रतिकुर्याद्वै न स तत्रापराध्नुयात् ।
अनृणस्तेन भवति वस पूजनि मा गमः ॥ ०३१ ॥

पूजन्युवाच ॥

न कृतस्य न कर्तुश्च सख्यं संधीयते पुनः ।
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥ ०३२ ॥

ब्रह्मदत्त उवाच ॥

कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः ।
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ ०३३ ॥

पूजन्युवाच ॥

नास्ति वैरमुपक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते बालस्तस्माच्छ्रेयो ह्यदर्शनम् ॥ ०३४ ॥

तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि ।
साम्ना ते विनिगृह्यन्ते गजा इव करेणुभिः ॥ ०३५ ॥

ब्रह्मदत्त उवाच ॥

संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य च विश्वासः श्वपचेन शुनो यथा ॥ ०३६ ॥

अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ०३७ ॥

पूजन्युवाच ॥

वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥ ०३८ ॥

तत्र दाता निहन्तव्यः क्षत्रियेण विशेषतः ।
प्रकाशं वाप्रकाशं वा बुद्ध्वा देशबलादिकम् ॥ ०३९ ॥

कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
छन्नं संतिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ ०४० ॥

न वित्तेन न पारुष्यैर्न सान्त्वेन न च श्रुतैः ।
वैराग्निः शाम्यते राजन्नौर्वाग्निरिव सागरे ॥ ०४१ ॥

न हि वैराग्निरुद्भूतः कर्म वाप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥ ०४२ ॥

सत्कृतस्यार्थमानाभ्यां स्यात्तु पूर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्म त्रासयते बलात्  ॥ ०४३  ॥

नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान् ।
विश्वासादुषिता पूर्वं नेदानीं विश्वसाम्यहम्  ॥ ०४४  ॥

ब्रह्मदत्त उवाच  ॥

कालेन क्रियते कार्यं तथैव विविधाः क्रियाः ।
कालेनैव प्रवर्तन्ते कः कस्येहापराध्यति  ॥ ०४५  ॥

तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव ह ।
कार्यते चैव कालेन तन्निमित्तं हि जीवति  ॥ ०४६  ॥

बध्यन्ते युगपत्केचिदेकैकस्य न चापरे ।
कालो दहति भूतानि संप्राप्याग्निरिवेन्धनम्  ॥ ०४७  ॥

नाहं प्रमाणं नैव त्वमन्योन्यकरणे शुभे ।
कालो नित्यमुपाधत्ते सुखं दुःखं च देहिनाम्  ॥ ०४८  ॥

एवं वसेह सस्नेहा यथाकालमहिंसिता ।
यत्कृतं तच्च मे क्षान्तं त्वं चैव क्षम पूजनि  ॥ ०४९  ॥

पूजन्युवाच  ॥

यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ।
कस्मात्त्वपचितिं यान्ति बान्धवा बान्धवे हते  ॥ ०५०  ॥

कस्माद्देवासुराः पूर्वमन्योन्यमभिजघ्निरे ।
यदि कालेन निर्याणं सुखदुःखे भवाभवौ  ॥ ०५१  ॥

भिषजो भेषजं कर्तुं कस्मादिच्छन्ति रोगिणे ।
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ०५२ ॥

प्रलापः क्रियते कस्मात्सुमहाञ्शोकमूर्छितैः ।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥ ०५३ ॥

तव पुत्रो ममापत्यं हतवान्हिंसितो मया ।
अनन्तरं त्वया चाहं बन्धनीया महीपते ॥ ०५४ ॥

अहं हि पुत्रशोकेन कृतपापा तवात्मजे ।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु ॥ ०५५ ॥

भक्षार्थं क्रीडनार्थं वा नरा वाञ्छन्ति पक्षिणः ।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ॥ ०५६ ॥

वधबन्धभयादेके मोक्षतन्त्रमुपागताः ।
मरणोत्पातजं दुःखमाहुर्धर्मविदो जनाः ॥ ०५७ ॥

सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः ।
दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम् ॥ ०५८ ॥

दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोगजम् ॥ ०५९ ॥

वैरबन्धकृतं दुःखं हिंसाजं स्त्रीकृतं तथा ।
दुःखं सुखेन सततं जनाद्विपरिवर्तते ॥ ०६० ॥

न दुःखं परदुःखे वै केचिदाहुरबुद्धयः ।
यो दुःखं नाभिजानाति स जल्पति महाजने ॥ ०६१ ॥

यस्तु शोचति दुःखार्तः स कथं वक्तुमुत्सहेत् ।

रसज्ञः सर्वदुःखस्य यथात्मनि तथा परे ॥ ०६२ ॥

यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम् ।
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम ॥ ०६३ ॥

आवयोः कृतमन्योन्यं तत्र संधिर्न विद्यते ।
स्मृत्वा स्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति ॥ ०६४ ॥

वैरमन्तिकमासज्य यः प्रीतिं कर्तुमिच्छति ।
मृन्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ॥ ०६५ ॥

निश्चितश्चार्थशास्त्रज्ञैरविश्वासः सुखोदयः ।
उशनाश्चाथ गाथे द्वे प्रह्लादायाब्रवीत्पुरा ॥ ०६६ ॥

ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।
ते श्रद्दधाना वध्यन्ते मधु शुष्कतृणैर्यथा ॥ ०६७ ॥

न हि वैराणि शाम्यन्ति कुलेष्वा दशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेद्विद्यते पुमान् ॥ ०६८ ॥

उपगुह्य हि वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि ॥ ०६९ ॥

सदा न विश्वसेद्राजन्पापं कृत्वेह कस्यचित् ।
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥ ०७० ॥

ब्रह्मदत्त उवाच ॥

नाविश्वासाच्चिन्वतेऽर्थान्नेहन्ते चापि किञ्चन ।
भयादेकतरान्नित्यं मृतकल्पा भवन्ति च ॥ ०७१ ॥

पूजन्युवाच ॥

यस्येह व्रणिनौ पादौ पद्भ्यां च परिसर्पति ।
क्षण्येते तस्य तौ पादौ सुगुप्तमभिधावतः ॥ ०७२ ॥

नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजात्यर्थं नेत्रयोर्भवति ध्रुवम् ॥ ०७३ ॥

दुष्टं पन्थानमाश्रित्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥ ०७४ ॥

यस्तु वर्षमविज्ञाय क्षेत्रं कृषति मानवः ।
हीनं पुरुषकारेण सस्यं नैवाप्नुते पुनः ॥ ०७५ ॥

यश्च तिक्तं कषायं वाप्यास्वादविधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ ०७६ ॥

पथ्यं भुक्त्वा नरो लोभाद्योऽन्यदश्नाति भोजनम् ।
परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ ०७७ ॥

दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तानां कर्म तन्त्रं दैवं क्लीबा उपासते ॥ ०७८ ॥

कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदानर्थैरकिञ्चनः ॥ ०७९ ॥

तस्मात्संशयितेऽप्यर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ॥ ०८० ॥

विद्या शौर्यं च दाक्ष्यं च बलं धैर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ॥ ०८१ ॥

निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनः ।
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥ ०८२ ॥

सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते ।
न विभीषयते कञ्चिद्भीषितो न बिभेति च ॥ ०८३ ॥

नित्यं बुद्धिमतो ह्यर्थः स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुरुते कर्म संयमात्प्रतितिष्ठति ॥ ०८४ ॥

गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमा सेगवामिव ॥ ०८५ ॥

गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥ ०८६ ॥

उत्पतेत्सरुजाद्देशाद्व्याधिदुर्भिक्षपीडितात् ।
अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः ॥ ०८७ ॥

तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रेण पार्थिव ॥ ०८८ ॥

कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥ ०८९ ॥

कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराज्ये निर्वृतिर्नास्ति कुदेशे न प्रजीव्यते ॥ ०९० ॥

कुमित्रे सङ्गतं नास्ति नित्यमस्थिरसौहृदे ।
अवमानः कुसंबन्धे भवत्यर्थविपर्यये ॥ ०९१ ॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ०९२ ॥

यत्र नास्ति बलात्कारः स राजा तीव्रशासनः ।
न चैव ह्यभिसंबन्धो दरिद्रं यो बुभूषति ॥ ०९३ ॥

भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः ।
एतत्सर्वं गुणवति धर्मनेत्रे महीपतौ ॥ ०९४ ॥

अधर्मज्ञस्य विलयं प्रजा गच्छन्त्यनिग्रहात् ।
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ॥ ०९५ ॥

बलिषड्भागमुद्धृत्य बलिं तमुपयोजयेत् ।
न रक्षति प्रजाः सम्यग्यः स पार्थिवतस्करः ॥ ०९६ ॥

दत्त्वाभयं यः स्वयमेव राजा ; न तत्प्रमाणं कुरुते यथावत् ।
स सर्वलोकादुपलभ्य पाप ;मधर्मबुद्धिर्निरयं प्रयाति ॥ ०९७ ॥

दत्त्वाभयं यः स्म राजा प्रमाणं कुरुते सदा ।
स सर्वसुखकृज्ज्ञेयः प्रजा धर्मेण पालयन् ॥ ०९८ ॥

पिता माता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ॥ ०९९ ॥

पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पकः ।
तस्मिन्मिथ्याप्रणीते हि तिर्यग्गच्छति मानवः ॥ १०० ॥

संभावयति मातेव दीनमभ्यवपद्यते ।
दहत्यग्निरिवानिष्टान्यमयन्भवते यमः ॥ १०१ ॥

इष्टेषु विसृजत्यर्थान्कुबेर इव कामदः ।

गुरुर्धर्मोपदेशेन गोप्ता च परिपालनात् ॥ १०२ ॥

यस्तु रञ्जयते राजा पौरजानपदान्गुणैः ।
न तस्य भ्रश्यते राज्यं गुणधर्मानुपालनात् ॥ १०३ ॥

स्वयं समुपजानन्हि पौरजानपदक्रियाः ।
स सुखं मोदते भूप इह लोके परत्र च ॥ १०४ ॥

नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥ १०५ ॥

प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स सर्वयज्ञफलभाग्राजा लोके महीयते ॥ १०६ ॥

बलिना विग्रहो राजन्न कथञ्चित्प्रशस्यते ।
बलिना विगृहीतस्य कुतो राज्यं कुतः सुखम् ॥ १०७ ॥

भीष्म उवाच ॥

सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम् ।
राजानं समनुज्ञाप्य जगामाथेप्सितां दिशम् ॥ १०८ ॥

एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम् ।
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि ॥ १०९ ॥

---

# कणिकशत्रुंतपसंवादः

## अध्याय १३८

युधिष्ठिर उवाच ॥

युगक्षयात्परिक्षीणे धर्मे लोके च भारत ।
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥ ००१ ॥

भीष्म उवाच ॥

हन्त ते कथयिष्यामि नीतिमापत्सु भारत ।
उत्सृज्यापि घृणां काले यथा वर्तेत भूमिपः ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भरद्वाजस्य संवादं राज्ञः शत्रुंतपस्य च ॥ ००३ ॥

राजा शत्रुंतपो नाम सौवीराणां महारथः ।
कणिङ्कमुपसङ्गम्य पप्रच्छार्थविनिश्चयम् ॥ ००४ ॥

अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते ।
वर्धितं पालयेत्केन पालितं प्रणयेत्कथम् ॥ ००५ ॥

तस्मै विनिश्चयार्थं स परिपृष्टार्थनिश्चयः ।
उवाच ब्राह्मणो वाक्यमिदं हेतुमदुत्तरम् ॥ ००६ ॥

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥ ००७ ॥

नित्यमुद्यतदण्डस्य भृशमुद्विजते जनः ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्ररोधयेत् ॥ ००८ ॥

एवमेव प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन्प्रधानो दण्ड उच्यते ॥ ००९ ॥

छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥ ०१० ॥

मूलमेवादितश्छिन्द्यात्परपक्षस्य पण्डितः ।
ततः सहायान्पक्षं च सर्वमेवानुसारयेत् ॥ ०११ ॥

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदां पदकालेषु कुर्वीत न विचारयेत् ॥ ०१२ ॥

वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः ।
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत् ॥ ०१३ ॥

सपत्नसहिते कार्ये कृत्वा संधिं न विश्वसेत् ।
अपक्रामेत्ततः क्षिप्रं कृतकार्यो विचक्षणः ॥ ०१४ ॥

शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत् ।
नित्यशश्चोद्विजेत्तस्मात्सर्पाद्वेश्मगतादिव ॥ ०१५ ॥

यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥ ०१६ ॥

अञ्जलिं शपथं सान्त्वं प्रणम्य शिरसा वदेत् ।
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता ॥ ०१७ ॥

वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ०१८ ॥

मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।
न तुषाग्निरिवानर्चिर्धूमायेत नरश्चिरम्  ॥ ०१९  ॥

नानर्थकेनार्थवत्त्वं कृतघ्नेन समाचरेत् ।
अर्थे तु शक्यते भोक्तुं कृतकार्योऽवमन्यते  ॥ ०२०  ॥

तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत्  ॥ ०२०  ॥

कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः ।
व्याडस्य भक्तिचित्रस्य यच्छ्रेष्ठं तत्समाचरेत्  ॥ ०२१  ॥

उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहान् ।
कुशलं चापि पृच्छेत यद्यप्यकुशलं भवेत्  ॥ ०२२  ॥

नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा न च मानिनः ।
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः  ॥ ०२३  ॥

नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः  ॥ ०२४  ॥

बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत्  ॥ ०२५  ॥

पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान्  ॥ ०२६  ॥

कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत्  ॥ ०२७  ॥

देशं कालं समासाद्य विक्रमेत विचक्षणः ।
देशकालाभ्यतीतो हि विक्रमो निष्फलो भवेत्  ॥ ०२८  ॥

कालाकालौ संप्रधार्य बलाबलमथात्मनः ।
परस्परबलं ज्ञात्वा तथात्मानं नियोजयेत्  ॥ ०२९  ॥

दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।
स मृत्युमुपगूह्यास्ते गर्भमश्वतरी यथा  ॥ ०३०  ॥

सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसङ्काशो न च शीर्येत कस्यचित्  ॥ ०३१  ॥

आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः  ॥ ०३२  ॥

भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत्  ॥ ०३३  ॥

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति  ॥ ०३४  ॥

अनागतं विजानीयाद्यच्छेद्भयमुपस्थितम् ।
पुनर्वृद्धिक्षयात्किञ्चिदभिवृत्तं निशामयेत्  ॥ ०३५  ॥

प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैष बुद्धिमतां नयः  ॥ ०३६  ॥

योऽरिणा सह संधाय सुखं स्वपिति विश्वसन् ।
स वृक्षाग्रप्रसुप्तो वा पतितः प्रतिबुध्यते  ॥ ०३७  ॥

कर्मणा येन तेनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्  ॥ ०३८  ॥

ये सपत्नाः सपत्नानां सर्वांस्तानपवत्सयेत् ।
आत्मनश्चापि बोद्धव्याश्चाराः प्रणिहिताः परैः ॥ ०३९ ॥

चारः सुविहितः कार्य आत्मनोऽथ परस्य च ।
पाषण्डांस्तापसादींश्च परराष्ट्रं प्रवेशयेत् ॥ ०४० ॥

उद्यानेषु विहारेषु प्रपास्वावसथेषु च ।
पानागारेषु वेशेषु तीर्थेषु च सभासु च ॥ ०४१ ॥

धर्माभिचारिणः पापाश्चारा लोकस्य कण्टकाः ।
समागच्छन्ति तान्बुद्ध्वा नियच्छेच्छमयेदपि ॥ ०४२ ॥

न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत् ।
विश्वस्तं भयमन्वेति नापरीक्ष्य च विश्वसेत् ॥ ०४३ ॥

विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना ।
अथास्य प्रहरेत्काले किञ्चिद्विचलिते पदे ॥ ०४४ ॥

अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितात् ।
भयं हि शङ्किताज्जातं समूलमपि कृन्तति ॥ ०४५ ॥

अवधानेन मौनेन काषायेण जटाजिनैः ।
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ॥ ०४६ ॥

पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत् ।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिवर्धनाः ॥ ०४७ ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य दण्डो भवति शासनम् ॥ ०४८ ॥

प्रत्युत्थानाभिवादाभ्यां संप्रदानेन कस्यचित् ।

प्रतिपुष्कलघाती स्यात्तीक्ष्णतुण्ड इव द्विजः ॥ ०४९ ॥

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ ०५० ॥

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ०५१ ॥

अमित्रं नैव मुञ्चेत ब्रुवन्तं करुणान्यपि ।
दुःखं तत्र न कुर्वीत हन्यात्पूर्वापकारिणम् ॥ ०५२ ॥

सङ्ग्रहानुग्रहे यत्नः सदा कार्योऽनसूयता ।
निग्रहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ॥ ०५३ ॥

प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् ।
अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेदथापि वा ॥ ०५४ ॥

निमन्त्रयेत सान्त्वेन संमानेन तितिक्षया ।
आशाकारणमित्येतत्कर्तव्यं भूतिमिच्छता ॥ ०५५ ॥

न शुष्कवैरं कुर्वीत न बाहुभ्यां नदीं तरेत् ।
अपार्थकमनायुष्यं गोविषाणस्य भक्षणम् ॥ ०५६ ॥

दन्ताश्च परिघृष्यन्ते रसश्चापि न लभ्यते ॥ ०५६ ॥

त्रिवर्गे त्रिविधा पीडानुबन्धास्त्रय एव च ।
अनुबन्धवधौ ज्ञात्वा पीडां हि परिवर्जयेत् ॥ ०५७ ॥

ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
पुनः पुनर्विवर्धेत स्वल्पोऽप्यनिवारितः ॥ ०५८ ॥

वर्धमानमृणं तिष्ठत्परिभूताश्च शत्रवः ।
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥ ०५९ ॥

नासम्यक्कृतकारी स्यादप्रमत्तः सदा भवेत् ।
कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ०६० ॥

वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
आकराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ०६१ ॥

गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ ०६२ ॥

श्रेणिमुख्योपजापेषु वल्लभानुनयेषु च ।
अमात्यान्परिरक्षेत भेदसंघातयोरपि ॥ ०६३ ॥

मृदुरित्यवमन्यन्ते तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले च तीक्ष्णः स्यान्मृदुकाले मृदुर्भवेत् ॥ ०६४ ॥

मृदुना सुमृदुं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किञ्चित्तस्मात्तीक्ष्णतरं मृदु ॥ ०६५ ॥

काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रूंश्चैवाधितिष्ठति ॥ ०६६ ॥

पण्डितेन विरुद्धः सन्दूरेऽस्मीति न विश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ०६७ ॥

न तत्तरेद्यस्य न पारमुत्तरे ;न्न तद्धरेद्यत्पुनराहरेत्परः ।
न तत्खनेद्यस्य न मूलमुत्खने ;न्न तं हन्याद्यस्य शिरो न पातयेत् ॥ ०६८ ॥

इतीदमुक्तं वृजिनाभिसंहितं ; न चैतदेवं पुरुषः समाचरेत् ।

परप्रयुक्तं तु कथं निशामये ;दतो मयोक्तं भवतो हितार्थिना ॥ ०६९ ॥

यथावदुक्तं वचनं हितं तदा ; निशम्य विप्रेण सुवीरराष्ट्रियः ।
तथाकरोद्वाक्यमदीनचेतनः ; श्रियं च दीप्तां बुभुजे सबान्धवः ॥ ०७० ॥

---

# विश्वामित्रश्वपचसंवादः

## अध्याय १३९

युधिष्ठिर उवाच ॥

हीने परमके धर्मे सर्वलोकातिलङ्घिनि ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ ००१ ॥

मर्यादासु प्रभिन्नासु क्षुभिते धर्मनिश्चये ।
राजभिः पीडिते लोके चोरैर्वापि विशां पते ॥ ००२ ॥

सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
कामान्मोहाच्च लोभाच्च भयं पश्यत्सु भारत ॥ ००३ ॥

अविश्वस्तेषु सर्वेषु नित्यभीतेषु पार्थिव ।
निकृत्या हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ००४ ॥

संप्रदीप्तेषु देशेषु ब्राह्मण्ये चाभिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ ००५ ॥

सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ।

केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥ ००६ ॥

अतित्यक्षुः पुत्रपौत्राननुक्रोशान्नराधिप ।
कथमापत्सु वर्तेत तन्मे ब्रूहि पितामह ॥ ००७ ॥

कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परंतप ॥ ००८ ॥

भीष्म उवाच ॥

राजमूला महाराज योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥ ००९ ॥

कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजमूलानि सर्वाणि मम नास्त्यत्र संशयः ॥ ०१० ॥

तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं तदा भवेत् ॥ ०११ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ ०१२ ॥

त्रेताद्वापरयोः संधौ पुरा दैवविधिक्रमात् ।
अनावृष्टिरभूद्घोरा राजन्द्वादशवार्षिकी ॥ ०१३ ॥

प्रजानामभिवृद्धानां युगान्ते पर्युपस्थिते ।
त्रेतानिर्मोक्षसमये द्वापरप्रतिपादने ॥ ०१४ ॥

न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥ ०१५ ॥

नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।
नद्यः सङ्क्षिप्ततोयौघाः क्वचिदन्तर्गताभवन् ॥ ०१६ ॥

सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विड्कान्यलक्ष्यन्त निसर्गाद्दैवकारितात् ॥ ०१७ ॥

उपशुष्कजलस्थाया विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ ०१८ ॥

उत्सन्नकृषिगोरक्ष्या निवृत्तविपणापणा ।
निवृत्तपूगसमया संप्रनष्टमहोत्सवा ॥ ०१९ ॥

अस्थिकङ्कालसङ्कीर्णा हाहाभूतजनाकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ ०२० ॥

क्वचिच्चोरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥ ०२१ ॥

गतदैवतसङ्कल्पा वृद्धबालविनाकृता ।
गोजाविमहिषैर्हीना परस्परहराहरा ॥ ०२२ ॥

हतविप्रा हतारक्षा प्रनष्टौषधिसञ्चया ।
श्यावभूतनरप्राया बभूव वसुधा तदा ॥ ०२३ ॥

तस्मिन्प्रतिभये काले क्षीणे धर्मे युधिष्ठिर ।
बभ्रमुः क्षुधिता मर्त्याः खादन्तः स्म परस्परम् ॥ ०२४ ॥

ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदैवताः ।
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ॥ ०२५ ॥

विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः ।

क्षुधा परिगतो धीमान्समन्तात्पर्यधावत ॥ ०२६ ॥

स कदाचित्परिपतञ्श्वपचानां निवेशनम् ।
हिंस्राणां प्राणिहन्तॄणामाससाद वने क्वचित् ॥ ०२७ ॥

विभिन्नकलशाकीर्णं श्वचर्माच्छादनायुतम् ।
वराहखरभग्नास्थिकपालघटसङ्कुलम् ॥ ०२८ ॥

मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमठम् ॥ ०२९ ॥

उलूकपक्षध्वजिभिर्देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥ ०३० ॥

तत्प्रविश्य क्षुधाविष्टो गाधेः पुत्रो महानृषिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ ०३१ ॥

न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः ।
मांसमन्नं मूलफलमन्यद्वा तत्र किञ्चन ॥ ०३२ ॥

अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ॥ ०३३ ॥

चिन्तयामास स मुनिः किं नु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥ ०३४ ॥

स ददर्श श्वमांसस्य कुतन्तीं विततां मुनिः ।
चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य च ॥ ०३५ ॥

स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न हीदानीमुपायोऽन्यो विद्यते प्राणधारणे ॥ ०३६ ॥

आपत्सु विहितं स्तेयं विशिष्टसमहीनतः ।
परं परं भवेत्पूर्वमस्तेयमिति निश्चयः ॥ ०३७ ॥

हीनादादेयमादौ स्यात्समानात्तदनन्तरम् ।
असंभवादाददीत विशिष्टादपि धार्मिकात् ॥ ०३८ ॥

सोऽहमन्तावसानानां हरमाणः परिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥ ०३९ ॥

एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः ।
तस्मिन्देशे प्रसुष्वाप पतितो यत्र भारत ॥ ०४० ॥

स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे ।
शनैरुत्थाय भगवान्प्रविवेश कुटीमठम् ॥ ०४१ ॥

स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्ष उवाचाप्रियदर्शनः ॥ ०४२ ॥

कः कुतन्तीं घट्टयति सुप्ते चण्डालपक्कणे ।
जागर्मि नावसुप्तोऽस्मि हतोऽसीति च दारुणः ॥ ०४३ ॥

विश्वामित्रोऽहमित्येव सहसा तमुवाच सः ।
सहसाभ्यागतभयः सोद्वेगस्तेन कर्मणा ॥ ०४४ ॥

चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसंभ्रान्त इयेषोत्पतितुं ततः ॥ ०४५ ॥

स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम् ॥ ०४६ ॥

विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् ।
क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम् ॥ ०४७ ॥

अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा ।
स्वधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ ०४८ ॥

अटन्भैक्षं न विन्दामि यदा युष्माकमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥ ०४९ ॥

तृषितः कलुषं पाता नास्ति ह्रीरशनार्थिनः ।
क्षुद्धर्मं दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥ ०५० ॥

अग्निर्मुखं पुरोधाश्च देवानां शुचिपाद्विभुः ।
यथा स सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ॥ ०५१ ॥

तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा समातिष्ठ यथा धर्मान्न हीयसे ॥ ०५२ ॥

मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्योरुजाघनी ॥ ०५३ ॥

नेदं सम्यग्व्यवसितं महर्षे कर्म वैकृतम् ।
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥ ०५४ ॥

साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥ ०५५ ॥

जानतोऽविहितो मार्गो न कार्यो धर्मसङ्करः ।
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ॥ ०५६ ॥

विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।

क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥ ०५७ ॥

निराहारस्य सुमहान्मम कालोऽभिधावतः ।
न विद्यतेऽभ्युपायश्च कश्चिन्मे प्राणधारणे ॥ ०५८ ॥

येन तेन विशेषेण कर्मणा येन केनचित् ।
अभ्युज्जीवेत्सीदमानः समर्थो धर्ममाचरेत् ॥ ०५९ ॥

ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भक्ष्यामि समयं क्षुधा ॥ ०६० ॥

यथा यथा वै जीवेद्धि तत्कर्तव्यमपीडया ।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥ ०६१ ॥

सोऽहं जीवितमाकाङ्क्षन्नभक्षस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ०६२ ॥

जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि च ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥ ०६३ ॥

श्वपच उवाच ॥

नैतत्खादन्प्राप्स्यसे प्राणमन्यं ; नायुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते मनोऽस्तु ; श्वभक्षणे श्वा ह्यभक्षो द्विजानाम् ॥ ०६४ ॥

विश्वामित्र उवाच ॥

न दुर्भिक्षे सुलभं मांसमन्य ;च्छ्वपाक नान्नं न च मेऽस्ति वित्तम् ।
क्षुधार्तश्चाहमगतिर्निराशः ; श्वमांसे चास्मिन्षड्रसान्साधु मन्ये ॥ ०६५ ॥

श्वपच उवाच ॥

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै द्विज ।
यदि शास्त्रं प्रमाणं ते माभक्ष्ये मानसं कृथाः ॥ ०६६ ॥

विश्वामित्र उवाच ॥

अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥ ०६७ ॥

श्वपच उवाच ॥

भिक्षामन्यामाहरेति न चैतत्कर्तुमर्हसि ।
न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ॥ ०६८ ॥

विश्वामित्र उवाच ॥

शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनादेतां भक्ष्यां मन्ये श्वजाघनीम् ॥ ०६९ ॥

श्वपच उवाच ॥

असता यत्समाचीर्णं न स धर्मः सनातनः ।
नावृत्तमनुकार्यं वै मा छलेनानृतं कृथाः ॥ ०७० ॥

विश्वामित्र उवाच ॥

न पातकं नावमतमृषिः सन्कर्तुमर्हसि ।
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्या श्वजाघनी ॥ ०७१ ॥

श्वपच उवाच ॥

यद्ब्राह्मणार्थे कृतमर्थितेन ; तेनर्षिणा तच्च भक्ष्याधिकारम् ।
स वै धर्मो यत्र न पापमस्ति ; सर्वैरुपायैर्हि स रक्षितव्यः ॥ ०७२ ॥

विश्वामित्र उवाच ॥

मित्रं च मे ब्राह्मणश्चायमात्मा ; प्रियश्च मे पूज्यतमश्च लोके ।
तं भर्तुकामोऽहमिमां हरिष्ये ; नृशंसानामीदृशानां न बिभ्ये ॥ ०७३ ॥

श्वपच उवाच ॥

कामं नरा जीवितं संत्यजन्ति ; न चाभक्ष्यैः प्रतिकुर्वन्ति तत्र ।
सर्वान्कामान्प्राप्नुवन्तीह विद्व ;न्प्रियस्व कामं सहितः क्षुधा वै ॥ ०७४ ॥

विश्वामित्र उवाच ॥

स्थाने तावत्संशयः प्रेत्यभावे ; निःसंशयं कर्मणां वा विनाशः ।
अहं पुनर्वर्त इत्याशयात्मा ; मूलं रक्षन्भक्षयिष्याम्यभक्ष्यम् ॥ ०७५ ॥

बुद्ध्यात्मके व्यस्तमस्तीति तुष्टो ; मोहादेकत्वं यथा चर्म चक्षुः ।
यद्यप्येनः संशयादाचरामि ; नाहं भविष्यामि यथा त्वमेव ॥ ०७६ ॥

श्वपच उवाच ॥

पतनीयमिदं दुःखमिति मे वर्तते मतिः ।
दुष्कृती ब्राह्मणं सन्तं यस्त्वामहमुपालभे ॥ ०७७ ॥

विश्वामित्र उवाच ॥

पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ।
न तेऽधिकारो धर्मेऽस्ति मा भूरात्मप्रशंसकः ॥ ०७८ ॥

श्वपच उवाच ॥

सुहृद्भूत्वानुशास्मि त्वा कृपा हि त्वयि मे द्विज ।
तदेवं श्रेय आधत्स्व मा लोभाच्छ्वानमादिथाः ॥ ०७९ ॥

विश्वामित्र उवाच ॥

सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर ।
जानेऽहं धर्मतोऽऽत्मानं श्वानीमुत्सृज जाघनीम् ॥ ०८० ॥

श्वपच उवाच ॥

नैवोत्सहे भवते दातुमेतां ; नोपेक्षितुं ह्रियमाणं स्वमन्नम् ।
उभौ स्यावः स्वमलेनावलिप्तौ ; दाताहं च त्वं च विप्र प्रतीच्छन् ॥ ०८१ ॥

विश्वामित्र उवाच ॥

अद्याहमेतद्वृजिनं कर्म कृत्वा ; जीवंश्चरिष्यामि महापवित्रम् ।
प्रपूतात्मा धर्ममेवाभिपत्स्ये ; यदेतयोर्गुरु तद्वै ब्रवीहि ॥ ०८२ ॥

श्वपच उवाच ॥

आत्मैव साक्षी किल लोककृत्ये ; त्वमेव जानासि यदत्र दुष्टम् ।
यो ह्याद्रियेद्भक्ष्यमिति श्वमांसं ; मन्ये न तस्यास्ति विवर्जनीयम् ॥ ०८३ ॥

विश्वामित्र उवाच ॥

उपादाने खादने वास्य दोषः ; कार्यो न्यायैर्नित्यमत्रापवादः ।
यस्मिन्न हिंसा नानृते वाक्यलेशो ; भक्ष्यक्रिया तत्र न तद्गरीयः ॥ ०८४ ॥

श्वपच उवाच ॥

यद्येष हेतुस्तव खादनस्य ; न ते वेदः कारणं नान्यधर्मः ।
तस्मादभक्ष्ये भक्षणाद्वा द्विजेन्द्र ; दोषं न पश्यामि यथेदमात्थ ॥ ०८५ ॥

विश्वामित्र उवाच ॥

न पातकं भक्षणमस्य दृष्टं ; सुरां पीत्वा पततीतीह शब्दः ।
अन्योन्यकर्माणि तथा तथैव ; न लेशमात्रेण कृत्यं हिनस्ति ॥ ०८६ ॥

श्वपच उवाच ॥

अस्थानतो हीनतः कुत्सिताद्वा ; तं विद्वांसं बाधते साधुवृत्तम् ।
स्थानं पुनर्यो लभते निषङ्गा ;त्तेनापि दण्डः सहितव्य एव ॥ ०८७ ॥

भीष्म उवाच ॥

एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ ०८८ ॥

ततो जग्राह पञ्चाङ्गीं जीवितार्थी महामुनिः ।
सदारस्तामुपाकृत्य वने यातो महामुनिः ॥ ०८९ ॥

एतस्मिन्नेव काले तु प्रववर्षाथ वासवः ।
सञ्जीवयन्प्रजाः सर्वा जनयामास चौषधीः ॥ ०९० ॥

विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्बिषः ।
कालेन महता सिद्धिमवाप परमाद्भुताम् ॥ ०९१ ॥

एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ ०९२ ॥

एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन्पुण्यमवाप्नोति नरो भद्राणि पश्यति ॥ ०९३ ॥

तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं यतात्मना ॥ ०९४ ॥

---

# अध्याय १४०

युधिष्ठिर उवाच ॥

यदिदं घोरमुद्दिष्टमश्रद्धेयमिवानृतम् ।
अस्ति स्विद्दस्युमर्यादा यामहं परिवर्जये ॥ ००१ ॥

संमुह्यामि विषीदामि धर्मो मे शिथिलीकृतः ।
उद्यमं नाधिगच्छामि कुतश्चित्परिचिन्तयन् ॥ ००२ ॥

भीष्म उवाच ॥

नैतच्छुद्धागमादेव तव धर्मानुशासनम् ।
प्रज्ञासमवतारोऽयं कविभिः संभृतं मधु ॥ ००३ ॥

बह्व्यः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः ।
नैकशाखेन धर्मेण यात्रैषा संप्रवर्तते ॥ ००४ ॥

बुद्धिसञ्जननं राज्ञां धर्ममाचरतां सदा ।
जयो भवति कौरव्य तदा तद्विद्धि मे वचः ॥ ००५ ॥

बुद्धिश्रेष्ठा हि राजानो जयन्ति विजयैषिणः ।

धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ॥ ००६ ॥

नैकशाखेन धर्मेण राज्ञां धर्मो विधीयते ।
दुर्बलस्य कुतः प्रज्ञा पुरस्तादनुदाहृता ॥ ००७ ॥

अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति ।
बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत ॥ ००८ ॥

पार्श्वतःकरणं प्रज्ञा विषूची त्वापगा इव ।
जनस्तूच्चारितं धर्मं विजानात्यन्यथान्यथा ॥ ००९ ॥

सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनोऽपरे ।
तद्वै यथातथं बुद्ध्वा ज्ञानमाददते सताम् ॥ ०१० ॥

परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।
वैषम्यमर्थविद्यानां नैरर्थ्यात्ख्यापयन्ति ते ॥ ०११ ॥

आजिजीविषवो विद्यां यशस्कामाः समन्ततः ।
ते सर्वे नरपापिष्ठा धर्मस्य परिपन्थिनः ॥ ०१२ ॥

अपक्वमतयो मन्दा न जानन्ति यथातथम् ।
सदा ह्यशास्त्रकुशलाः सर्वत्रापरिनिष्ठिताः ॥ ०१३ ॥

परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ।
विज्ञानमथ विद्यानां न सम्यगिति वर्तते ॥ ०१४ ॥

निन्दया परविद्यानां स्वां विद्यां ख्यापयन्ति ये ।
वागस्त्रा वाक्छुरीमत्त्वा दुग्धविद्याफला इव ॥ ०१५ ॥

तान्विद्यावणिजो विद्धि राक्षसानिव भारत ॥ ०१५ ॥

व्याजेन कृत्स्नो विदितो धर्मस्ते परिहास्यते ।
न धर्मवचनं वाचा न बुद्ध्या चेति नः श्रुतम् ॥ ०१६ ॥

इति बार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयम् ।
न त्वेव वचनं किञ्चिदनिमित्तादिहोच्यते ॥ ०१७ ॥

स्वविनीतेन शास्त्रेण व्यवस्यन्ति तथापरे ।
लोकयात्रामिहैके तु धर्ममाहुर्मनीषिणः ॥ ०१८ ॥

समुद्दिष्टं सतां धर्मं स्वयमूहेन्न पण्डितः ।
अमर्षाच्छास्त्रसंमोहादविज्ञानाच्च भारत ॥ ०१९ ॥

शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ।
आगतागमया बुद्ध्या वचनेन प्रशस्यते ॥ ०२० ॥

अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ।
अनपाहतमेवेदं नेदं शास्त्रमपार्थकम् ॥ ०२१ ॥

दैतेयानुशनाः प्राह संशयच्छेदने पुरा ।
ज्ञानमव्यपदेश्यं हि यथा नास्ति तथैव तत् ॥ ०२२ ॥

तेन त्वं छिन्नमूलेन कं तोषयितुमर्हसि ।
अतथ्यविहितं यो वा नेदं वाक्यमुपाश्नुयात् ॥ ०२३ ॥

उग्रायैव हि सृष्टोऽसि कर्मणे न त्ववेक्षसे ।
अङ्गेमामन्ववेक्षस्व राजनीतिं बुभूषितुम् ॥ ०२४ ॥

यया प्रमुच्यते त्वन्यो यदर्थं च प्रमोदते ॥ ०२४ ॥

अजोऽश्वः क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम् ।
तस्मान्नतीक्ष्णभूतानां यात्रा काचित्प्रसिध्यति ॥ ०२५ ॥

यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः ।
एषैव खलु मर्यादा यामयं परिवर्जयेत् ॥ ०२६ ॥

तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयेदुत ।
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥ ०२७ ॥

यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव ।
विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥ ०२८ ॥

कुलीनान्सचिवान्कृत्वा वेदविद्यासमन्वितान् ।
प्रशाधि पृथिवीं राजन्प्रजा धर्मेण पालयन् ॥ ०२९ ॥

विहीनजमकर्माणं यः प्रगृह्णाति भूमिपः ।
उभयस्याविशेषज्ञस्तद्वै क्षत्रं नपुंसकम् ॥ ०३० ॥

नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते ।
उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ॥ ०३१ ॥

कष्टः क्षत्रियधर्मोऽयं सौहृदं त्वयि यत्स्थितम् ।
उग्रे कर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ॥ ०३२ ॥

अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् ।
इति शक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥ ०३३ ॥

युधिष्ठिर उवाच ॥

अस्ति स्विद्दस्युमर्यादा यामन्यो नातिलङ्घयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ०३४ ॥

भीष्म उवाच ॥

ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपस्विनः ।
श्रुतचारित्रवृत्ताढ्यान्पवित्रं ह्येतदुत्तमम्  ॥ ०३५  ॥

या देवतासु वृत्तिस्ते सास्तु विप्रेषु सर्वदा ।
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप  ॥ ०३६  ॥

तेषां प्रीत्या यशो मुख्यमप्रीत्या तु विपर्ययः ।
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथा विषम्  ॥ ०३७  ॥

---

# कपोतलुब्धकसंवादः

## अध्याय १४१

युधिष्ठिर उवाच  ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरणं पालयानस्य यो धर्मस्तं वदस्व मे  ॥ ००१  ॥

भीष्म उवाच  ॥

महान्धर्मो महाराज शरणागतपालने ।
अर्हः प्रष्टुं भवांश्चैव प्रश्नं भरतसत्तम  ॥ ००२  ॥

नृगप्रभृतयो राजन्राजानः शरणागतान् ।
परिपाल्य महाराज संसिद्धिं परमां गताः  ॥ ००३  ॥

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ००४ ॥

युधिष्ठिर उवाच ॥

कथं कपोतेन पुरा शत्रुः शरणमागतः ।
स्वमांसैर्भोजितः कां च गतिं लेभे स भारत ॥ ००५ ॥

भीष्म उवाच ॥

शृणु राजन्कथां दिव्यां सर्वपापप्रणाशिनीम् ।
नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण ह ॥ ००६ ॥

इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं परिपप्रच्छ प्रणतो भरतर्षभ ॥ ००७ ॥

तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।
इयं यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ ००८ ॥

धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् ।
शृणुष्वावहितो राजन्गदतो मे महाभुज ॥ ००९ ॥

कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमतः ।
चचार पृथिवीं पापो घोरः शकुनिलुब्धकः ॥ ०१० ॥

काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः ।
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥ ०११ ॥

नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवः ।
स हि तैः संपरित्यक्तस्तेन घोरेण कर्मणा ॥ ०१२ ॥

स वै क्षारकमादाय द्विजान्हत्वा वने सदा ।
चकार विक्रयं तेषां पतङ्गानां नराधिप ॥ ०१३ ॥

एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत्सुमहान्कालो न चाधर्ममबुध्यत ॥ ०१४ ॥

तस्य भार्यासहायस्य रममाणस्य शाश्वतम् ।
दैवयोगविमूढस्य नान्या वृत्तिररोचत ॥ ०१५ ॥

ततः कदाचित्तस्याथ वनस्थस्य समुद्गतः ।
पातयन्निव वृक्षांस्तान्सुमहान्वातसंभ्रमः ॥ ०१६ ॥

मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम् ।
संछन्नं सुमुहूर्तेन नौस्थानेनेव सागरः ॥ ०१७ ॥

वारिधारासमूहैश्च संप्रहृष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुंधराम् ॥ ०१८ ॥

ततो धाराकुले लोके संभ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥ ०१९ ॥

नैव निम्नं स्थलं वापि सोऽविन्दत विहङ्गहा ।
पूरितो हि जलौघेन मार्गस्तस्य वनस्य वै ॥ ०२० ॥

पक्षिणो वातवेगेन हता लीनास्तदाभवन् ।
मृगाः सिंहा वराहाश्च स्थलान्याश्रित्य तस्थिरे ॥ ०२१ ॥

महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥ ०२२ ॥

स तु शीतहतैर्गात्रैर्जगामैव न तस्थिवान् ।

सोऽपश्यद्वनषण्डेषु मेघनीलं वनस्पतिम्  ॥ ०२३  ॥

ताराढ्यं कुमुदाकारमाकाशं निर्मलं च ह ।
मेघैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः  ॥ ०२४  ॥

दिशोऽवलोकयामास वेलां चैव दुरात्मवान् ।
दूरे ग्रामनिवेशश्च तस्माद्देशादिति प्रभो  ॥ ०२५  ॥

कृतबुद्धिर्वने तस्मिन्वस्तुं तां रजनीं तदा  ॥ ०२५  ॥

सोऽञ्जलिं प्रयतः कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन्दैवतानीह भारत  ॥ ०२६  ॥

स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताविष्टस्ततः सुष्वाप पक्षिहा  ॥ ०२७  ॥

---

# अध्याय १४२

भीष्म उवाच  ॥

अथ वृक्षस्य शाखायां विहङ्गः ससुहृज्जनः ।
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः  ॥ ००१  ॥

तस्य काल्यं गता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत  ॥ ००२  ॥

वातवर्षं महच्चासीन्न चागच्छति मे प्रिया ।
किं नु तत्कारणं येन साद्यापि न निवर्तते  ॥ ००३  ॥

अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ।
तया विरहितं हीदं शून्यमद्य गृहं मम ॥ ००४ ॥

यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥ ००५ ॥

पतिधर्मरता साध्वी प्राणेभ्योऽपि गरीयसी ।
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ॥ ००६ ॥

अनुरक्ता हिता चैव स्निग्धा चैव पतिव्रता ।
यस्य वै तादृशी भार्या धन्यः स मनुजो भुवि ॥ ००७ ॥

भार्या हि परमो नाथः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मि.ण्ल्लोकयात्रासहायिनी ॥ ००८ ॥

तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं किञ्चिन्नरस्यार्तस्य भेषजम् ॥ ००९ ॥

नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसाधनः ॥ ०१० ॥

एवं विलपतस्तस्य द्विजस्यार्तस्य तत्र वै ।
गृहीता शकुनघ्नेन भार्या शुश्राव भारतीम् ॥ ०११ ॥

न सा स्त्रीत्यभिभाषा स्याद्यस्या भर्ता न तुष्यति ।
अग्निसाक्षिकमप्येतद्भर्ता हि शरणं स्त्रियः ॥ ०१२ ॥

इति सञ्चिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनाथ यत्ता वचनमब्रवीत् ॥ ०१३ ॥

हन्त वक्ष्यामि ते श्रेयः श्रुत्वा च कुरु तत्तथा ।
शरणागतसंत्राता भव कान्त विशेषतः ॥ ०१४ ॥

एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै प्रयोजय ॥ ०१५ ॥

यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥ ०१६ ॥

यास्माकं विहिता वृत्तिः कापोती जातिधर्मतः ।
सा न्याय्यात्मवता नित्यं त्वद्विधेनाभिवर्तितुम् ॥ ०१७ ॥

यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥ ०१८ ॥

स त्वं संतानवानद्य पुत्रवानपि च द्विज ।
तत्स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य वै ॥ ०१९ ॥

पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ ०१९ ॥

इति सा शकुनी वाक्यं क्षारकस्था तपस्विनी ।
अतिदुःखान्विता प्रोच्य भर्तारं समुदैक्षत ॥ ०२० ॥

स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
हर्षेण महता युक्तो बाष्पव्याकुललोचनः ॥ ०२१ ॥

तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
पूजयामास यत्नेन स पक्षी पक्षिजीविनम् ॥ ०२२ ॥

उवाच च स्वागतं ते ब्रूहि किं करवाण्यहम् ।
संतापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ ०२३ ॥

तद्ब्रवीतु भवान्क्षिप्रं किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥ ०२४ ॥

शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ ०२५ ॥

पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ ०२६ ॥

तद्ब्रूहि त्वं सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥ ०२७ ॥

तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मा शीतं हिमत्राणं विधीयताम् ॥ ०२८ ॥

एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथाशुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥ ०२९ ॥

स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽभ्यदीदिपत् ॥ ०३० ॥

सुसंदीप्तं महत्कृत्वा तमाह शरणागतम् ।
प्रतापय सुविस्रब्धं स्वगात्राण्यकुतोभयः ॥ ०३१ ॥

स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहङ्गमम् ॥ ०३२ ॥

दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।
तद्वचः स प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ ०३३ ॥

न मेऽस्ति विभवो येन नाशयामि तव क्षुधाम् ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ ०३४ ॥

सञ्चयो नास्ति चास्माकं मुनीनामिव कानने ।
इत्युक्त्वा स तदा तत्र विवर्णवदनोऽभवत् ॥ ०३५ ॥

कथं नु खलु कर्तव्यमिति चिन्तापरः सदा ।
बभूव भरतश्रेष्ठ गर्हयन्वृत्तिमात्मनः ॥ ०३६ ॥

मुहूर्ताल्लब्धसञ्ज्ञस्तु स पक्षी पक्षिघातकम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ ०३७ ॥

इत्युक्त्वा शुष्कपर्णैः स संप्रज्वाल्य हुताशनम् ।
हर्षेण महता युक्तः कपोतः पुनरब्रवीत् ॥ ०३८ ॥

देवानां च मुनीनां च पितृणां च महात्मनाम् ।
श्रुतपूर्वो मया धर्मो महानतिथिपूजने ॥ ०३९ ॥

कुरुष्वानुग्रहं मेऽद्य सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ॥ ०४० ॥

ततः सत्यप्रतिज्ञो वै स पक्षी प्रहसन्निव ।
तमग्निं त्रिः परिक्रम्य प्रविवेश महीपते ॥ ०४१ ॥

अग्निमध्यं प्रविष्टं तं लुब्धो दृष्ट्वाथ पक्षिणम् ।
चिन्तयामास मनसा किमिदं नु कृतं मया ॥ ०४२ ॥

अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मः सुमहान्घोरो भविष्यति न संशयः ॥ ०४३ ॥

एवं बहुविधं भूरि विललाप स लुब्धकः ।

गर्हयन्स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम्  ॥ ०४४  ॥

---

# अध्याय १४३

भीष्म उवाच  ॥

ततस्तं लुब्धकः पश्यन्कृपयाभिपरिप्लुतः ।
कपोतमग्नौ पतितं वाक्यं पुनरुवाच ह  ॥ ००१  ॥

किमीदृशं नृशंसेन मया कृतमबुद्धिना ।
भविष्यति हि मे नित्यं पातकं हृदि जीवतः  ॥ ००२  ॥

स विनिन्दन्नथात्मानं पुनः पुनरुवाच ह ।
धिङ्मामस्तु सुदुर्बुद्धिं सदा निकृतिनिश्चयम्  ॥ ००३  ॥

शुभं कर्म परित्यज्य योऽहं शकुनिलुब्धकः  ॥ ००३  ॥

नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्वमांसं ददता कपोतेन महात्मना  ॥ ००४  ॥

सोऽहं त्यक्ष्ये प्रियान्प्राणान्पुत्रदारं विसृज्य च ।
उपदिष्टो हि मे धर्मः कपोतेनातिधर्मिणा  ॥ ००५  ॥

अद्य प्रभृति देहं स्वं सर्वभोगैर्विवर्जितम् ।
यथा स्वल्पं जलं ग्रीष्मे शोषयिष्याम्यहं तथा  ॥ ००६  ॥

क्षुत्पिपासातपसहः कृशो धमनिसंततः ।

उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम्  ॥ ००७  ॥

अहो देहप्रदानेन दर्शितातिथिपूजना ।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः  ॥ ००८  ॥

दृष्टो हि धर्मो धर्मिष्ठैर्यादृशो विहगोत्तमे  ॥ ००८  ॥

एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः  ॥ ००९  ॥

ततो यष्टिं शलाकाश्च क्षारकं पञ्जरं तथा ।
तांश्च बद्धा कपोतान्स संप्रमुच्योत्ससर्ज ह  ॥ ०१०  ॥

---

# अध्याय १४४

भीष्म उवाच  ॥

ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य भर्तारमथो रुदती शोकमूर्छिता  ॥ ००१  ॥

नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे ।
सर्वा वै विधवा नारी बहुपुत्रापि खेचर  ॥ ००२  ॥

शोच्या भवति बन्धूनां पतिहीना मनस्विनी  ॥ ००२  ॥

लालिताहं त्वया नित्यं बहुमानाच्च सान्त्विता ।
वचनैर्मधुरैः स्निग्धैरसकृत्सुमनोहरैः  ॥ ००३  ॥

कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
द्रुमाग्रेषु च रम्येषु रमिताहं त्वया प्रिय ॥ ००४ ॥

आकाशगमने चैव सुखिताहं त्वया सुखम् ।
विहृतास्मि त्वया कान्त तन्मे नाद्यास्ति किञ्चन ॥ ००५ ॥

मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥ ००६ ॥

नास्ति भर्तृसमो नाथो न च भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ ००७ ॥

न कार्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीनापि का नारी सती जीवितुमुत्सहेत् ॥ ००८ ॥

एवं विलप्य बहुधा करुणं सा सुदुःखिता ।
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ ००९ ॥

ततश्चित्राम्बरधरं भर्तारं सान्वपश्यत ।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ ०१० ॥

चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् ।
विमानशतकोटीभिरावृतं पुण्यकीर्तिभिः ॥ ०११ ॥

ततः स्वर्गगतः पक्षी भार्यया सह सङ्गतः ।
कर्मणा पूजितस्तेन रेमे तत्र स भार्यया ॥ ०१२ ॥

# अध्याय १४५

भीष्म उवाच ॥

विमानस्थौ तु तौ राज.ल्लुब्धको वै ददर्श ह ।
दृष्ट्वा तौ दंपती दुःखादचिन्तयत सद्गतिम् ॥ ००१ ॥

कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ ००२ ॥

महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवनः ।
निश्चेष्टो मारुताहारो निर्ममः स्वर्गकाङ्क्षया ॥ ००३ ॥

ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्मविभूषितम् ।
नानाद्विजगणाकीर्णं सरः शीतजलं शुभम् ॥ ००४ ॥

पिपासार्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः ॥ ००४ ॥

उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसर्पत संहृष्टः श्वापदाध्युषितं वनम् ॥ ००५ ॥

महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव च वनं निगृहीतः स कण्टकैः ॥ ००६ ॥

स कण्टकविभुग्नाङ्गो लोहितार्द्रीकृतच्छविः ।
बभ्राम तस्मिन्विजने नानामृगसमाकुले ॥ ००७ ॥

ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संघर्षात्सुमहान्हव्यवाहनः ॥ ००८ ॥

तद्वनं वृक्षसङ्कीर्णं लताविटपसङ्कुलम् ।

ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥ ००९ ॥

सज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्वितः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ ०१० ॥

ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत संवृद्धं पावकं लुब्धकस्तदा ॥ ०११ ॥

ततस्तेनाग्निना दग्धो लुब्धको नष्टकिल्बिषः ।
जगाम परमां सिद्धिं तदा भरतसत्तम ॥ ०१२ ॥

ततः स्वर्गस्थमात्मानं सोऽपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥ ०१३ ॥

एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥ ०१४ ॥

यापि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥ ०१५ ॥

एवमेतत्पुरा वृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥ ०१६ ॥

यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसापि प्रमाद्यतः ॥ ०१७ ॥

युधिष्ठिर महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ॥ ०१८ ॥

निष्कृतिर्न भवेत्तस्मिन्यो हन्याच्छरणागतम् ॥ ०१८ ॥

# इन्द्रोतशौनकपारिक्शितीयम्

## अध्याय १४६

युधिष्ठिर उवाच ॥

अबुद्धिपूर्वं यः पापं कुर्याद्भरतसत्तम ।
मुच्यते स कथं तस्मादेनसस्तद्वदस्व मे ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् ।
इन्द्रोतः शौनको विप्रो यदाह जनमेजयम् ॥ ००२ ॥

आसीद्राजा महावीर्यः पारिक्षिज्जनमेजयः ।
अबुद्धिपूर्वं ब्रह्महत्या तमागच्छन्महीपतिम् ॥ ००३ ॥

तं ब्राह्मणाः सर्व एव तत्यजुः सपुरोहिताः ।
जगाम स वनं राजा दह्यमानो दिवानिशम् ॥ ००४ ॥

स प्रजाभिः परित्यक्तश्चकार कुशलं महत् ।
अतिवेलं तपस्तेपे दह्यमानः स मन्युना ॥ ००५ ॥

तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपबृंहणम् ।
दह्यमानः पापकृत्या जगाम जनमेजयः ॥ ००६ ॥

वरिष्यमाण इन्द्रोतं शौनकं संशितव्रतम् ।
समासाद्योपजग्राह पादयोः परिपीडयन् ॥ ००७ ॥

ततो भीतो महाप्राज्ञो जगर्हे सुभृशं तदा ।
कर्ता पापस्य महतो भ्रूणहा किमिहागतः ॥ ००८ ॥

किं तवास्मासु कर्तव्यं मा मा स्प्राक्षीः कथञ्चन ।
गच्छ गच्छ न ते स्थानं प्रीणात्यस्मानिह ध्रुवम् ॥ ००९ ॥

रुधिरस्येव ते गन्धः शवस्येव च दर्शनम् ।
अशिवः शिवसङ्काशो मृतो जीवन्निवाटसि ॥ ०१० ॥

अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन् ।
प्रबुध्यसे प्रस्वपिषि वर्तसे चरसे सुखी ॥ ०११ ॥

मोघं ते जीवितं राजन्परिक्लिष्टं च जीवसि ।
पापायेव च सृष्टोऽसि कर्मणे ह यवीयसे ॥ ०१२ ॥

बहु कल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा देवतेज्याभिर्वन्दनेन तितिक्षया ॥ ०१३ ॥

पितृवंशमिमं पश्य त्वत्कृते नरकं गतम् ।
निरर्थाः सर्व एवैषामाशाबन्धास्त्वदाश्रयाः ॥ ०१४ ॥

यान्पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः सुखम् ।
तेषु ते सततं द्वेषो ब्राह्मणेषु निरर्थकः ॥ ०१५ ॥

इमं लोकं विमुच्य त्वमवाङ्मूर्धा पतिष्यसि ।
अशाश्वतीः शाश्वतीश्च समाः पापेन कर्मणा ॥ ०१६ ॥

अद्यमानो जन्तुगृध्रैः शितिकण्ठैरयोमुखैः ।
ततोऽपि पुनरावृत्तः पापयोनिं गमिष्यसि ॥ ०१७ ॥

यदिदं मन्यसे राजन्नायमस्ति परः कुतः ।
प्रतिस्मारयितारस्त्वां यमदूता यमक्षये ॥ ०१८ ॥

---

# अध्याय १४७

भीष्म उवाच ॥

एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः ।
गर्ह्यं भवान्गर्हयति निन्द्यं निन्दति मा भवान् ॥ ००१ ॥

धिक्कार्यं मा धिक्कुरुते तस्मात्त्वाहं प्रसादये ।
सर्वं हीदं स्वकृतं मे ज्वलाम्यग्नाविवाहितः ॥ ००२ ॥

स्वकर्माण्यभिसंधाय नाभिनन्दति मे मनः ।
प्राप्तं नूनं मया घोरं भयं वैवस्वतादपि ॥ ००३ ॥

तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् ।
सर्वमन्यून्विनीय त्वमभि मा वद शौनक ॥ ००४ ॥

महानसं ब्राह्मणानां भविष्याम्यर्थवान्पुनः ।
अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ॥ ००५ ॥

न हि नो ब्रह्मशप्तानां शेषो भवितुमर्हति ।
श्रुतीरलभमानानां संविदं वेदनिश्चयात् ॥ ००६ ॥

निर्विद्यमानः सुभृशं भूयो वक्ष्यामि सांप्रतम् ।
भूयश्चैवाभिनङ्क्षन्ति निर्धर्मा निर्जपा इव ॥ ००७ ॥

अर्वाक्क प्रतितिष्ठन्ति पुलिन्दशबरा इव ।
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथञ्चन ॥ ००८ ॥

अविज्ञायैव मे प्रज्ञां बालस्येव सुपण्डितः ।
ब्रह्मन्पितेव पुत्रेभ्यः प्रति मां वाञ्छ शौनक ॥ ००९ ॥

शौनक उवाच ॥

किमाश्चर्यं यतः प्राज्ञो बहु कुर्याद्धि सांप्रतम् ।
इति वै पण्डितो भूत्वा भूतानां नोपतप्यति ॥ ०१० ॥

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान् ।
जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपश्यति ॥ ०११ ॥

न चोपलभते तत्र न च कार्याणि पश्यति ।
निर्विण्णात्मा परोक्षो वा धिक्कृतः सर्वसाधुषु ॥ ०१२ ॥

विदित्वोभयतो वीर्यं माहात्म्यं वेद आगमे ।
कुरुष्वेह महाशान्तिं ब्रह्म शरणमस्तु ते ॥ ०१३ ॥

तद्वै पारत्रिकं चारु ब्राह्मणानामकुप्यताम् ।
अथ चेत्तप्यसे पापैर्धर्मं चेदनुपश्यसि ॥ ०१४ ॥

जनमेजय उवाच ॥

अनुतप्ये च पापेन न चाधर्मं चराम्यहम् ।
बुभूषुं भजमानं च प्रतिवाञ्छामि शौनक ॥ ०१५ ॥

शौनक उवाच ॥

छित्त्वा स्तम्भं च मानं च प्रीतिमिच्छामि ते नृप ।
सर्वभूतहिते तिष्ठ धर्मं चैव प्रतिस्मर ॥ ०१६ ॥

न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये ।
तां मे देवा गिरं सत्यां शृण्वन्तु ब्राह्मणैः सह ॥ ०१७ ॥

सोऽहं न केनचिच्चार्थी त्वां च धर्ममुपाह्वये ।
क्रोशतां सर्वभूतानामहो धिगिति कुर्वताम् ॥ ०१८ ॥

वक्ष्यन्ति मामधर्मज्ञा वक्ष्यन्त्यसुहृदो जनाः ।
वाचस्ताः सुहृदः श्रुत्वा सञ्ज्वरिष्यन्ति मे भृशम् ॥ ०१९ ॥

केचिदेव महाप्राज्ञाः परिज्ञास्यन्ति कार्यताम् ।
जानीहि मे कृतं तात ब्राह्मणान्प्रति भारत ॥ ०२० ॥

यथा ते मत्कृते क्षेमं लभेरंस्तत्तथा कुरु ।
प्रतिजानीहि चाद्रोहं ब्राह्मणानां नराधिप ॥ ०२१ ॥

जनमेजय उवाच ॥

नैव वाचा न मनसा न पुनर्जातु कर्मणा ।
द्रोग्धास्मि ब्राह्मणान्विप्र चरणावेव ते स्पृशे ॥ ०२२ ॥

---

# अध्याय १४८

शौनक उवाच ॥

तस्मात्तेऽहं प्रवक्ष्यामि धर्ममावृत्तचेतसे ।

श्रीमान्महाबलस्तुष्टो यस्त्वं धर्ममवेक्षसे ॥ ००१ ॥

पुरस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत् ॥ ००१ ॥

अनुगृह्णन्ति भूतानि स्वेन वृत्तेन पार्थिव ।
कृत्स्ने नूनं सदसती इति लोको व्यवस्यति ॥ ००२ ॥

यत्र त्वं तादृशो भूत्वा धर्ममद्यानुपश्यसि ॥ ००२ ॥

हित्वा सुरुचिरं भक्ष्यं भोगांश्च तप आस्थितः ।
इत्येतदपि भूतानामद्भुतं जनमेजय ॥ ००३ ॥

यो दुर्बलो भवेद्दाता कृपणो वा तपोधनः ।
अनाश्चर्यं तदित्याहुर्नातिदूरे हि वर्तते ॥ ००४ ॥

एतदेव हि कार्पण्यं समग्रमसमीक्षितम् ।
तस्मात्समीक्षयैव स्याद्भवेत्तस्मिंस्ततो गुणः ॥ ००५ ॥

यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥ ००६ ॥

तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥ ००७ ॥

पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम् ।
अपि ह्युदाहरन्तीमा गाथा गीता ययातिना ॥ ००८ ॥

यो मर्त्यः प्रतिपद्येत आयुर्जीवेत वा पुनः ।
यज्ञमेकान्ततः कृत्वा तत्संन्यस्य तपश्चरेत् ॥ ००९ ॥

पुण्यमाहुः कुरुक्षेत्रं सरस्वत्यां पृथूदकम् ।

यत्रावगाह्य पीत्वा वा नैवं श्वोमरणं तपेत्  ॥ ०१० ॥

महासरः पुष्कराणि प्रभासोत्तरमानसे ।
कालोदं त्वेव गन्तासि लब्धायुर्जीविते पुनः  ॥ ०११ ॥

सरस्वतीदृषद्वत्यौ सेवमानोऽनुसञ्चरेः ।
स्वाध्यायशीलः स्थानेषु सर्वेषु समुपस्पृशेः  ॥ ०१२ ॥

त्यागधर्मं पवित्राणां संन्यासं परमब्रवीत् ।
अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृताः  ॥ ०१३ ॥

यथा कुमारः सत्यो वै न पुण्यो न च पापकृत् ।
न ह्यस्ति सर्वभूतेषु दुःखमस्मिन्कुतः सुखम्  ॥ ०१४ ॥

एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम् ।
त्यजतां जीवितं प्रायो विवृते पुण्यपातके  ॥ ०१५ ॥

यत्त्वेव राज्ञो ज्यायो वै कार्याणां तद्वदामि ते ।
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च  ॥ ०१६ ॥

यस्यैवं बलमोजश्च स धर्मस्य प्रभुर्नरः ।
ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम्  ॥ ०१७ ॥

यथैवैनान्पुराक्षैप्सीस्तथैवैनान्प्रसादय ।
अपि धिक्क्रियमाणोऽपि त्यज्यमानोऽप्यनेकधा  ॥ ०१८ ॥

आत्मनो दर्शनं विद्वन्नाहन्तास्मीति मा क्रुधः ।
घटमानः स्वकार्येषु कुरु नैःश्रेयसं परम्  ॥ ०१९ ॥

हिमाग्निघोरसदृशो राजा भवति कश्चन ।
लाङ्गलाशनिकल्पो वा भवत्यन्यः परंतप  ॥ ०२० ॥

न निःशेषेण मन्तव्यमचिकित्स्येन वा पुनः ।
न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु ॥ ०२१ ॥

विकर्मणा तप्यमानः पादात्पापस्य मुच्यते ।
नैतत्कार्यं पुनरिति द्वितीयात्परिमुच्यते ॥ ०२२ ॥

चरिष्ये धर्ममेवेति तृतीयात्परिमुच्यते ॥ ०२२ ॥

कल्याणमनुमन्तव्यं पुरुषेण बुभूषता ।
ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते ॥ ०२३ ॥

ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते ॥ ०२३ ॥

तपश्चर्यापरः सद्यः पापाद्धि परिमुच्यते ।
संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते ॥ ०२४ ॥

त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते ॥ ०२४ ॥

यावतः प्राणिनो हन्यात्तज्जातीयान्स्वभावतः ।
प्रमीयमाणानुन्मोच्य भ्रूणहा विप्रमुच्यते ॥ ०२५ ॥

अपि वाप्सु निमज्जेत त्रिर्जपन्नघमर्षणम् ।
यथाश्वमेधावभृथस्तथा तन्मनुरब्रवीत् ॥ ०२६ ॥

क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा ।
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ॥ ०२७ ॥

बृहस्पतिं देवगुरुं सुरासुराः ; समेत्य सर्वे नृपतेऽन्वयुञ्जन् ।
धर्मे फलं वेत्थ कृते महर्षे ; तथेतरस्मिन्नरके पापलोके ॥ ०२८ ॥

उभे तु यस्य सुकृते भवेतां ; किं स्वित्तयोस्तत्र जयोत्तरं स्यात् ।
आचक्ष्व नः कर्मफलं महर्षे ; कथं पापं नुदते पुण्यशीलः ॥ ०२९ ॥

बृहस्पतिरुवाच ॥

कृत्वा पापं पूर्वमबुद्धिपूर्वं ; पुण्यानि यः कुरुते बुद्धिपूर्वम् ।
स तत्पापं नुदते पुण्यशीलो ; वासो यथा मलिनं क्षारयुक्त्या ॥ ०३० ॥

पापं कृत्वा न मन्येत नाहमस्मीति पूरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ०३१ ॥

छिद्राणि वसनस्येव साधुना विवृणोति यः ।
यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ०३२ ॥

यथादित्यः पुनरुद्यंस्तमः सर्वं व्यपोहति ।
कल्याणमाचरन्नेवं सर्वं पापं व्यपोहति ॥ ०३३ ॥

भीष्म उवाच ॥

एवमुक्त्वा स राजानमिन्द्रोतो जनमेजयम् ।
याजयामास विधिवद्वाजिमेधेन शौनकः ॥ ०३४ ॥

ततः स राजा व्यपनीतकल्मषः ; श्रिया युतः प्रज्वलिताग्निरूपया ।
विवेश राज्यं स्वममित्रकर्शनो ; दिवं यथा पूर्णवपुर्निशाकरः ॥ ०३५ ॥

---

# गृध्रजम्बुकसंवादः

## अध्याय १४९

भीष्म उवाच ॥

श्रृणु पार्थ यथावृत्तमितिहासं पुरातनम् ।
गृध्रजम्बुकसंवादं यो वृत्तो वैदिशे पुरा ॥ ००१ ॥

दुःखिताः केचिदादाय बालमप्राप्तयौवनम् ।
कुलसर्वस्वभूतं वै रुदन्तः शोकविह्वलाः ॥ ००२ ॥

बालं मृतं गृहीत्वाथ श्मशानाभिमुखाः स्थिताः ।
अङ्केनाङ्कं च सङ्क्रम्य रुरुदुर्भूतले तदा ॥ ००३ ॥

तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ।
एकात्मकमिमं लोके त्यक्त्वा गच्छत माचिरम् ॥ ००४ ॥

इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव हि ।
समानीतानि कालेन किं ते वै जात्वबान्धवाः ॥ ००५ ॥

संपश्यत जगत्सर्वं सुखदुःखैरधिष्ठितम् ।
संयोगो विप्रयोगश्च पर्यायेणोपलभ्यते ॥ ००६ ॥

गृहीत्वा ये च गच्छन्ति येऽनुयान्ति च तान्मृतान् ।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ ००७ ॥

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ००८ ॥

न पुनर्जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ००९ ॥

सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।
कृतान्तविहिते मार्गे को मृतं जीवयिष्यति ॥ ०१० ॥

कर्मान्तविहिते लोके चास्तं गच्छति भास्करे ।
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ ०११ ॥

ततो गृध्रवचः श्रुत्वा विक्रोशन्तस्तदा नृप ।
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ॥ ०१२ ॥

विनिश्चित्याथ च ततः संत्यजन्तः स्वमात्मजम् ।
निराशा जीविते तस्य मार्गमारुह्य धिष्ठिताः ॥ ०१३ ॥

ध्वाङ्क्षाभ्रसमवर्णस्तु बिलान्निःसृत्य जम्बुकः ।
गच्छमानान्स्म तानाह निर्घृणाः खलु मानवाः ॥ ०१४ ॥

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयम् ।
बहुरूपो मुहूर्तश्च जीवेतापि कदाचन ॥ ०१५ ॥

यूयं भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः ।
श्मशाने पुत्रमुत्सृज्य कस्माद्गच्छथ निर्घृणाः ॥ ०१६ ॥

न वोऽस्त्यस्मिन्सुते स्नेहो बाले मधुरभाषिणि ।
यस्य भाषितमात्रेण प्रसादमुपगच्छथ ॥ ०१७ ॥

न पश्यथ सुतस्नेहं यादृशः पशुपक्षिणाम् ।
न येषां धारयित्वा तान्कश्चिदस्ति फलागमः ॥ ०१८ ॥

चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् ।

परलोकगतिस्थानां मुनियज्ञक्रिया इव ॥ ०१९ ॥

तेषां पुत्राभिरामाणामिह लोके परत्र च ।
न गुणो दृश्यते कश्चित्प्रजाः संधारयन्ति च ॥ ०२० ॥

अपश्यतां प्रियान्पुत्रान्नैषां शोकोऽनुतिष्ठति ।
न च पुष्णन्ति संवृद्धास्ते मातापितरौ क्वचित् ॥ ०२१ ॥

मानुषाणां कुतः स्नेहो येषां शोको भविष्यति ।
इमं कुलकरं पुत्रं कथं त्यक्त्वा गमिष्यथ ॥ ०२२ ॥

चिरं मुञ्चत बाष्पं च चिरं स्नेहेन पश्यत ।
एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ॥ ०२३ ॥

क्षीणस्याथाभियुक्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठन्ति तत्रान्यो नावतिष्ठते ॥ ०२४ ॥

सर्वस्य दयिताः प्राणाः सर्वः स्नेहं च विन्दति ।
तिर्यग्योनिष्वपि सतां स्नेहं पश्यत यादृशम् ॥ ०२५ ॥

त्यक्त्वा कथं गच्छेथेमं पद्मलोलायताक्षकम् ।
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम् ॥ ०२६ ॥

भीष्म उवाच ॥

जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः ।
न्यवर्तन्त तदा सर्वे शवार्थं ते स्म मानुषाः ॥ ०२७ ॥

गृध्र उवाच ॥

अहो धिक्सुनृशंसेन जम्बुकेनाल्पमेधसा ।

क्षुद्रेणोक्ता हीनसत्त्वा मानुषाः किं निवर्तथ ॥ ०२८ ॥

पञ्चभूतपरित्यक्तं शून्यं काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टमात्मानं किं न शोचथ ॥ ०२९ ॥

तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्बिषात् ।
तपसा लभ्यते सर्वं विलापः किं करिष्यति ॥ ०३० ॥

अनिष्टानि च भाग्यानि जानीत सह मूर्तिभिः ।
येन गच्छति लोकोऽयं दत्त्वा शोकमनन्तकम् ॥ ०३१ ॥

धनं गाश्च सुवर्णं च मणिरत्नमथापि च ।
अपत्यं च तपोमूलं तपोयोगाच्च लभ्यते ॥ ०३२ ॥

यथाकृता च भूतेषु प्राप्यते सुखदुःखता ।
गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ॥ ०३३ ॥

न कर्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा ।
मार्गेणान्येन गच्छन्ति त्यक्त्वा सुकृतदुष्कृते ॥ ०३४ ॥

धर्मं चरत यत्नेन तथाधर्मान्निवर्तत ।
वर्तध्वं च यथाकालं दैवतेषु द्विजेषु च ॥ ०३५ ॥

शोकं त्यजत दैन्यं च सुतस्नेहान्निवर्तत ।
त्यज्यतामयमाकाशे ततः शीघ्रं निवर्तत ॥ ०३६ ॥

यत्करोति शुभं कर्म तथाधर्मं सुदारुणम् ।
तत्कर्तैव समश्नाति बान्धवानां किमत्र हि ॥ ०३७ ॥

इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम् ।
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ॥ ०३८ ॥

प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति शुभाशुभसमन्वितः ॥ ०३९ ॥

किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।
सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ॥ ०४० ॥

यौवनस्थांश्च बालांश्च वृद्धान्गर्भगतानपि ।
सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥ ०४१ ॥

जम्बुक उवाच ॥

अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पमेधसा ।
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ ०४२ ॥

समैः सम्यक्प्रयुक्तैश्च वचनैः प्रश्रयोत्तरैः ।
यद्गच्छथ जलस्थायं स्नेहमुत्सृज्य दुस्त्यजम् ॥ ०४३ ॥

अहो पुत्रवियोगेन मृतशून्योपसेवनात् ।
क्रोशतां वै भृशं दुःखं विवत्सानां गवामिव ॥ ०४४ ॥

अद्य शोकं विजानामि मानुषाणां महीतले ।
स्नेहं हि करुणं दृष्ट्वा ममाप्यश्रूण्यथागमन् ॥ ०४५ ॥

यत्नो हि सततं कार्यः कृतो दैवेन सिध्यति ।
दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ॥ ०४६ ॥

अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम् ।
प्रयत्नात्प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयाः ॥ ०४७ ॥

आत्ममांसोपवृत्तं च शरीरार्धमयीं तनुम् ।

पितॄणां वंशकर्तारं वने त्यक्त्वा क्व यास्यथ  ॥ ०४८  ॥

अथ वास्तं गते सूर्ये संध्याकाल उपस्थिते ।
ततो नेष्यथ वा पुत्रमिहस्था वा भविष्यथ  ॥ ०४९  ॥

गृध्र उवाच  ॥

अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम्  ॥ ०५०  ॥

मृता गर्भेषु जायन्ते म्रियन्ते जातमात्रकाः ।
विक्रमन्तो म्रियन्ते च यौवनस्थास्तथापरे  ॥ ०५१  ॥

अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि ।
जङ्गमाजङ्गमानां चाप्यायुरग्रेऽवतिष्ठते  ॥ ०५२  ॥

इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा ।
दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यदा  ॥ ०५३  ॥

अनिष्टानां सहस्राणि तथेष्टानां शतानि च ।
उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः  ॥ ०५४  ॥

त्यज्यतामेष निस्तेजाः शून्यः काष्ठत्वमागतः ।
अन्यदेहविषक्तो हि शावं काष्ठमुपासते  ॥ ०५५  ॥

भ्रान्तजीवस्य वै बाष्पं कस्माद्धित्वा न गच्छथ ।
निरर्थको ह्ययं स्नेहो निरर्थश्च परिग्रहः  ॥ ०५६  ॥

न चक्षुर्भ्यां न कर्णाभ्यां संश्शृणोति समीक्षते ।
तस्मादेनं समुत्सृज्य स्वगृहान्गाच्छताशु वै  ॥ ०५७  ॥

मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ।
मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ॥ ०५८ ॥

प्रज्ञाविज्ञानयुक्तेन बुद्धिसञ्ज्ञाप्रदायिना ।
वचनं श्राविता रूक्षं मानुषाः संनिवर्तत ॥ ०५९ ॥

जम्बुक उवाच ॥

इमं कनकवर्णाभं भूषणैः समलङ्कृतम् ।
गृध्रवाक्यात्कथं पुत्रं त्यजध्वं पितृपिण्डदम् ॥ ०६० ॥

न स्नेहस्य विरोधोऽस्ति विलापरुदितस्य वै ।
मृतस्यास्य परित्यागात्तापो वै भविता ध्रुवम् ॥ ०६१ ॥

श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ॥ ०६२ ॥

तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः ।
श्वोऽभूते धर्मनित्येन मृतः सञ्जीवितः पुनः ॥ ०६३ ॥

तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥ ०६४ ॥

भीष्म उवाच ॥

इत्युक्ताः संन्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ॥ ०६५ ॥

गृध्र उवाच ॥

अश्रुपातपरिक्लिन्नः पाणिस्पर्शनपीडितः ।

धर्मराजप्रयोगाच्च दीर्घां निद्रां प्रवेशितः ॥ ०६६ ॥

तपसापि हि संयुक्तो न काले नोपहन्यते ।
सर्वस्नेहावसानं तदिदं तत्प्रेतपत्तनम् ॥ ०६७ ॥

बालवृद्धसहस्राणि सदा संत्यज्य बान्धवाः ।
दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ॥ ०६८ ॥

अलं निर्बन्धमागम्य शोकस्य परिवारणम् ।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥ ०६९ ॥

नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम् ।
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ ०७० ॥

न वै मूर्तिप्रदानेन न जम्बुकशतैरपि ।
शक्यो जीवयितुं ह्येष बालो वर्षशतैरपि ॥ ०७१ ॥

अपि रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव वा ।
वरमस्मै प्रयच्छेयुस्ततो जीवेदयं शिशुः ॥ ०७२ ॥

न च बाष्पविमोक्षेण न चाश्वासकृतेन वै ।
न दीर्घरुदितेनेह पुनर्जीवो भविष्यति ॥ ०७३ ॥

अहं च क्रोष्टुकश्चैव यूयं चैवास्य बान्धवाः ।
धर्माधर्मौ गृहीत्वेह सर्वे वर्तामहेऽध्वनि ॥ ०७४ ॥

अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात्प्राज्ञो निवर्तयेत् ॥ ०७५ ॥

सत्यं धर्मं शुभं न्याय्यं प्राणिनां महतीं दयाम् ।
अजिह्मत्वमशाठ्यं च यत्नतः परिमार्गत ॥ ०७६ ॥

मातरं पितरं चैव बान्धवान्सुहृदस्तथा ।
जीवतो ये न पश्यन्ति तेषां धर्मविपर्ययः ॥ ०७७ ॥

यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथञ्चन ।
तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ॥ ०७८ ॥

भीष्म उवाच ॥

इत्युक्तास्तं सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः ।
दह्यमानाः सुतस्नेहात्प्रययुर्बान्धवा गृहान् ॥ ०७९ ॥

जम्बुक उवाच ॥

दारुणो मर्त्यलोकोऽयं सर्वप्राणिविनाशनः ।
इष्टबन्धुवियोगश्च तथैवाल्पं च जीवितम् ॥ ०८० ॥

बह्वलीकमसत्यं च प्रतिवादाप्रियंवदम् ।
इमं प्रेक्ष्य पुनर्भावं दुःखशोकाभिवर्धनम् ॥ ०८१ ॥

न मे मानुषलोकोऽयं मुहूर्तमपि रोचते ।
अहो धिग्गृध्रवाक्येन संनिवर्तथ मानुषाः ॥ ०८२ ॥

प्रदीप्ताः पुत्रशोकेन यथैवाबुद्धयस्तथा ।
कथं गच्छथ सस्नेहाः सुतस्नेहं विसृज्य च ॥ ०८३ ॥

श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः ॥ ०८३ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखान्विते लोके नेहास्त्येकमनन्तकम् ॥ ०८४ ॥

इमं क्षितितले न्यस्य बालं रूपसमन्वितम् ।
कुलशोकाकरं मूढाः पुत्रं त्यक्त्वा क्व यास्यथ ॥ ०८५ ॥

रूपयौवनसंपन्नं द्योतमानमिव श्रिया ।
जीवन्तमेनं पश्यामि मनसा नात्र संशयः ॥ ०८६ ॥

विनाशश्चाप्यनर्होऽस्य सुखं प्राप्स्यथ मानुषाः ।
पुत्रशोकाग्निदग्धानां मृतमप्यद्य वः क्षमम् ॥ ०८७ ॥

दुःखसंभावनां कृत्वा धारयित्वा स्वयं सुखम् ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ॥ ०८८ ॥

भीष्म उवाच ॥

तथा धर्मविरोधेन प्रियमिथ्याभिध्यायिना ।
श्मशानवासिना नित्यं रात्रिं मृगयता तदा ॥ ०८९ ॥

ततो मध्यस्थतां नीता वचनैरमृतोपमैः ।
जम्बुकेन स्वकार्यार्थं बान्धवास्तस्य धिष्ठिताः ॥ ०९० ॥

गृध्र उवाच ॥

अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः ।
दारुणः काननोद्देशः कौशिकैरभिनादितः ॥ ०९१ ॥

भीमः सुघोरश्च तथा नीलमेघसमप्रभः ।
अस्मिञ्शवं परित्यज्य प्रेतकार्याण्युपासत ॥ ०९२ ॥

भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः ।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ॥ ०९३ ॥

नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणाः ।
मृगेन्द्राः प्रतिनन्दन्ति रविरस्तं च गच्छति ॥ ०९४ ॥

चिताधूमेन नीलेन संरज्यन्ते च पादपाः ।
श्मशाने च निराहाराः प्रतिनन्दन्ति देहिनः ॥ ०९५ ॥

सर्वे विक्रान्तवीर्याश्च अस्मिन्देशे सुदारुणाः ।
युष्मान्प्रधर्षयिष्यन्ति विकृता मांसभोजनाः ॥ ०९६ ॥

दूराच्चायं वनोद्देशो भयमत्र भविष्यति ।
त्यज्यतां काष्ठभूतोऽयं मृष्यतां जाम्बुकं वचः ॥ ०९७ ॥

यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च ।
श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ ॥ ०९८ ॥

जम्बुक उवाच ॥

स्थीयतां नेह भेतव्यं यावत्तपति भास्करः ।
तावदस्मिन्सुतस्नेहादनिर्वेदेन वर्तत ॥ ०९९ ॥

स्वैरं रुदत विस्रब्धाः स्वैरं स्नेहेन पश्यत ।
स्थीयतां यावदादित्यः किं वः क्रव्यादभाषितैः ॥ १०० ॥

यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीत मोहितात्मानः सुतो वो न भविष्यति ॥ १०१ ॥

भीष्म उवाच ॥

गृध्रोऽनस्तमिते त्वाह गतेऽस्तमिति जम्बुकः ।
मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ ॥ १०२ ॥

स्वकार्यदक्षिणौ राजन्गृध्रो जम्बुक एव च ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ १०३ ॥

तयोर्विज्ञानविदुषोर्द्वयोर्जम्बुकपत्रिणोः ।
वाक्यैरमृतकल्पैर्हि प्रातिष्ठन्त व्रजन्ति च ॥ १०४ ॥

शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा ।
स्वकार्यकुशलाभ्यां ते संभ्राम्यन्ते ह नैपुणात् ॥ १०५ ॥

तथा तयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः ।
बान्धवानां स्थितानां च उपातिष्ठत शङ्करः ॥ १०६ ॥

ततस्तानाह मनुजान्वरदोऽस्मीति शूलभृत् ।
ते प्रत्यूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः ॥ १०७ ॥

एकपुत्रविहीनानां सर्वेषां जीवितार्थिनाम् ।
पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि ॥ १०८ ॥

एवमुक्तः स भगवान्वारिपूर्णेन पाणिना ।
जीवं तस्मै कुमाराय प्रादाद्वर्षशताय वै ॥ १०९ ॥

तथा गोमायुगृध्राभ्यामददत्क्षुद्विनाशनम् ।
वरं पिनाकी भगवान्सर्वभूतहिते रतः ॥ ११० ॥

ततः प्रणम्य तं देवं श्रेयोहर्षसमन्विताः ।
कृतकृत्याः सुखं हृष्टाः प्रातिष्ठन्त तदा विभो ॥ १११ ॥

अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च ।
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ॥ ११२ ॥

पश्य देवस्य संयोगं बान्धवानां च निश्चयम् ।

कृपणानां हि रुदतां कृतमश्रुप्रमार्जनम्  ॥ ११३  ॥

पश्य चाल्पेन कालेन निश्चयान्वेषणेन च ।
प्रसादं शङ्करात्प्राप्य दुःखिताः सुखमाप्नुवन्  ॥ ११४  ॥

ते विस्मिताः प्रहृष्टाश्च पुत्रसञ्जीवनात्पुनः ।
बभूवुर्भरतश्रेष्ठ प्रसादाच्छङ्करस्य वै  ॥ ११५  ॥

ततस्ते त्वरिता राजञ्श्रुत्वा शोकमघोद्भवम् ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः  ॥ ११६  ॥

एषा बुद्धिः समस्तानां चातुर्वर्ण्ये निदर्शिता  ॥ ११६  ॥

धर्मार्थमोक्षसंयुक्तमितिहासमिमं शुभम् ।
श्रुत्वा मनुष्यः सततमिह प्रेत्य च मोदते  ॥ ११७  ॥

---

# शल्मलिपवनसंवादः

## अध्याय १५०

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं भरतश्रेष्ठ शल्मलेः पवनस्य च  ॥ ००१  ॥

हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।
वर्षपूगाभिसंवृद्धः शाखास्कन्धपलाशवान्  ॥ ००२  ॥

तत्र स्म मत्ता मातङ्गा धर्मार्ताः श्रमकर्शिताः ।
विश्रमन्ति महाबाहो तथान्या मृगजातयः ॥ ००३ ॥

नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः ।
शुकशारिकसंघुष्टः फलवान्पुष्पवानपि ॥ ००४ ॥

सार्थिका वणिजश्चापि तापसाश्च वनौकसः ।
वसन्ति वासान्मार्गस्थाः सुरम्ये तरुसत्तमे ॥ ००५ ॥

तस्या ता विपुलाः शाखा दृष्ट्वा स्कन्धांश्च सर्वतः ।
अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥ ००६ ॥

अहो नु रमणीयस्त्वमहो चासि मनोरमः ।
प्रीयामहे त्वया नित्यं तरुप्रवर शल्मले ॥ ००७ ॥

सदैव शकुनास्तात मृगाश्चाधस्तथा गजाः ।
वसन्ति तव संहृष्टा मनोहरतरास्तथा ॥ ००८ ॥

तव शाखा महाशाख स्कन्धं च विपुलं तथा ।
न वै प्रभग्नान्पश्यामि मारुतेन कथञ्चन ॥ ००९ ॥

किं नु ते मारुतस्तात प्रीतिमानथ वा सुहृत् ।
त्वां रक्षति सदा येन वनेऽस्मिन्पवनो ध्रुवम् ॥ ०१० ॥

विवान्हि पवनः स्थानाद्वृक्षानुच्चावचानपि ।
पर्वतानां च शिखराण्याचालयति वेगवान् ॥ ०११ ॥

शोषयत्येव पातालं विवान्गन्धवहः शुचिः ।
ह्रदांश्च सरितश्चैव सागरांश्च तथैव ह ॥ ०१२ ॥

त्वां संरक्षेत पवनः सखित्वेन न संशयः ।
तस्माद्बहलशाखोऽसि पर्णवान्पुष्पवानपि ॥ ०१३ ॥

इदं च रमणीयं ते प्रतिभाति वनस्पते ।
यदिमे विहगास्तात रमन्ते मुदितास्त्वयि ॥ ०१४ ॥

एषां पृथक्समस्तानां श्रूयते मधुरः स्वरः ।
पुष्पसंमोदने काले वाशतां सुमनोहरम् ॥ ०१५ ॥

तथेमे मुदिता नागाः स्वयूथकुलशोभिनः ।
घर्मार्तास्त्वां समासाद्य सुखं विन्दन्ति शल्मले ॥ ०१६ ॥

तथैव मृगजातीभिरन्याभिरुपशोभसे ।
तथा सार्थाधिवासैश्च शोभसे मेरुवद्द्रुम ॥ ०१७ ॥

ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैरपि ।
त्रिविष्टपसमं मन्ये तवायतनमेव ह ॥ ०१८ ॥

बन्धुत्वादथ वा सख्याच्छल्मले नात्र संशयः ।
पालयत्येव सततं भीमः सर्वत्रगोऽनिलः ॥ ०१९ ॥

न्यग्भावं परमं वायोः शल्मले त्वमुपागतः ।
तवाहमस्मीति सदा येन रक्षति मारुतः ॥ ०२० ॥

न तं पश्याम्यहं वृक्षं पर्वतं वापि तं दृढम् ।
यो न वायुबलाद्भग्नः पृथिव्यामिति मे मतिः ॥ ०२१ ॥

त्वं पुनः कारणैर्नूनं शल्मले रक्ष्यसे सदा ।
वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् ॥ ०२२ ॥

शल्मलिरुवाच ॥

न मे वायुः सखा ब्रह्मन्न बन्धुर्न च मे सुहृत् ।
परमेष्ठी तथा नैव येन रक्षति मानिलः ॥ ०२३ ॥

मम तेजोबलं वायोर्भीममपि हि नारद ।
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥ ०२४ ॥

आगच्छन्परमो वायुर्मया विष्टम्भितो बलात् ।
रुजन्द्रुमान्पर्वतांश्च यच्चान्यदपि किञ्चन ॥ ०२५ ॥

स मया बहुशो भग्नः प्रभञ्जन्वै प्रभञ्जनः ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ ०२६ ॥

नारद उवाच ॥

शल्मले विपरीतं ते दर्शनं नात्र संशयः ।
न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित् ॥ ०२७ ॥

इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः ।
न तेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥ ०२८ ॥

यद्धि किञ्चिदिह प्राणि शल्मले चेष्टते भुवि ।
सर्वत्र भगवान्वायुश्चेष्टाप्राणकरः प्रभुः ॥ ०२९ ॥

एष चेष्टयते सम्यक्प्राणिनः सम्यगायतः ।
असम्यगायतो भूयश्चेष्टते विकृतो नृषु ॥ ०३० ॥

स त्वमेवंविधं वायुं सर्वसत्त्वभृतां वरम् ।
न पूजयसि पूज्यं तं किमन्यद्बुद्धिलाघवात् ॥ ०३१ ॥

असारश्चासि दुर्बुद्धे केवलं बहु भाषसे ।

क्रोधादिभिरवच्छन्नो मिथ्या वदसि शल्मले ॥ ०३२ ॥

मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति ।
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥ ०३३ ॥

चन्दनैः स्पन्दनैः शालैः सरलैर्देवदारुभिः ।
वेतसैर्बन्धनैश्चापि ये चान्ये बलवत्तराः ॥ ०३४ ॥

तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ।
ते हि जानन्ति वायोश्च बलमात्मन एव च ॥ ०३५ ॥

तस्मात्ते वै नमस्यन्ति श्वसनं द्रुमसत्तमाः ।
त्वं तु मोहान्न जानीषे वायोर्बलमनन्तकम् ॥ ०३६ ॥

---

# अध्याय १५१

भीष्म उवाच ॥

एवमुक्त्वा तु राजेन्द्र शल्मलिं ब्रह्मवित्तमः ।
नारदः पवने सर्वं शल्मलेर्वाक्यमब्रवीत् ॥ ००१ ॥

हिमवत्पृष्ठजः कश्चिच्छल्मलिः परिवारवान् ।
बृहन्मूलो बृहच्छाखः स त्वां वायोऽवमन्यते ॥ ००२ ॥

बह्वन्याक्षेपयुक्तानि त्वामाह वचनानि सः ।
न युक्तानि मया वायो तानि वक्तुं त्वयि प्रभो ॥ ००३ ॥

जानामि त्वामहं वायो सर्वप्राणभृतां वरम् ।
वरिष्ठं च गरिष्ठं च क्रोधे वैवस्वतं यथा ॥ ००४ ॥

एवं तु वचनं श्रुत्वा नारदस्य समीरणः ।
शल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ ००५ ॥

शल्मले नारदे यत्तत्त्वयोक्तं मद्विगर्हणम् ।
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ॥ ००६ ॥

नाहं त्वा नाभिजानामि विदितश्चासि मे द्रुम ।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः ॥ ००७ ॥

तस्य विश्रमणादेव प्रसादो यः कृतस्तव ।
रक्ष्यसे तेन दुर्बुद्धे नात्मवीर्याद्द्रुमाधम ॥ ००८ ॥

यन्मा त्वमवजानीषे यथान्यं प्राकृतं तथा ।
दर्शयाम्येष आत्मानं यथा मामवभोत्स्यसे ॥ ००९ ॥

एवमुक्तस्ततः प्राह शल्मलिः प्रहसन्निव ।
पवन त्वं वने क्रुद्धो दर्शयात्मानमात्मना ॥ ०१० ॥

मयि वै त्यज्यतां क्रोधः किं मे क्रुद्धः करिष्यसि ।
न ते बिभेमि पवन यद्यपि त्वं स्वयंप्रभुः ॥ ०११ ॥

इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः ।
दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥ ०१२ ॥

अथ निश्चित्य मनसा शल्मलिर्वातकारितम् ।
पश्यमानस्तदात्मानमसमं मातरिश्वनः ॥ ०१३ ॥

नारदे यन्मया प्रोक्तं पवनं प्रति तन्मृषा ।

असमर्थो ह्यहं वायोर्बलेन बलवान्हि सः ॥ ०१४ ॥

मारुतो बलवान्नित्यं यथैनं नारदोऽब्रवीत् ।
अहं हि दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ ०१५ ॥

किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः ।
तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरणात् ॥ ०१६ ॥

यदि तां बुद्धिमास्थाय चरेयुः पर्णिनो वने ।
अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः ॥ ०१७ ॥

तेऽत्र बाला न जानन्ति यथा नैनान्समीरणः ।
समीरयेत सङ्क्रुद्धो यथा जानाम्यहं तथा ॥ ०१८ ॥

ततो निश्चित्य मनसा शल्मलिः क्षुभितस्तदा ।
शाखाः स्कन्धान्प्रशाखाश्च स्वयमेव व्यशातयत् ॥ ०१९ ॥

स परित्यज्य शाखाश्च पत्राणि कुसुमानि च ।
प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः ॥ ०२० ॥

ततः क्रुद्धः श्वसन्वायुः पातयन्वै महाद्रुमान् ।
आजगामाथ तं देशं स्थितो यत्र स शल्मलिः ॥ ०२१ ॥

तं हीनपर्णं पतिताग्रशाखं; विशीर्णपुष्पं प्रसमीक्ष्य वायुः ।
उवाच वाक्यं स्मयमान एनं; मुदा युतं शल्मलिं रुग्णशाखम् ॥ ०२२ ॥

अहमप्येवमेव त्वां कुर्वाणः शल्मले रुषा ।
आत्मना यत्कृतं कृत्स्नं शाखानामपकर्षणम् ॥ ०२३ ॥

हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशवान् ।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगोऽभवः ॥ ०२४ ॥

एतच्छ्रुत्वा वचो वायोः शल्मलिर्व्रीडितस्तदा ।
अतप्यत वचः स्मृत्वा नारदो यत्तदाब्रवीत्  ॥ ०२५  ॥

एवं यो राजशार्दूल दुर्बलः सन्बलीयसा ।
वैरमासज्जते बालस्तप्यते शल्मलिर्यथा  ॥ ०२६  ॥

तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः ।
शोचेद्धि वैरं कुर्वाणो यथा वै शल्मलिस्तथा  ॥ ०२७  ॥

न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु ।
शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम्  ॥ ०२८  ॥

वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना ।
बुद्धिर्बुद्धिमतो याति तूलेष्विव हुताशनः  ॥ ०२९  ॥

न हि बुद्ध्या समं किञ्चिद्विद्यते पुरुषे नृप ।
तथा बलेन राजेन्द्र न समोऽस्तीति चिन्तयेत्  ॥ ०३०  ॥

तस्मात्क्षमेत बालाय जडाय बधिराय च ।
बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन्  ॥ ०३१  ॥

अक्षौहिण्यो दशैका च सप्त चैव महाद्युते ।
बलेन न समा राजन्नर्जुनस्य महात्मनः  ॥ ०३२  ॥

हतास्ताश्चैव भग्नाश्च पाण्डवेन यशस्विना ।
चरता बलमास्थाय पाकशासनिना मृधे  ॥ ०३३  ॥

उक्तास्ते राजधर्माश्च आपद्धर्माश्च भारत ।
विस्तरेण महाराज किं भूयः प्रब्रवीमि ते  ॥ ०३४  ॥

# अध्याय १५२

युधिष्ठिर उवाच ॥

पापस्य यदधिष्ठानं यतः पापं प्रवर्तते ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ ॥ ००१ ॥

भीष्म उवाच ॥

पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप ।
एको लोभो महाग्राहो लोभात्पापं प्रवर्तते ॥ ००२ ॥

अतः पापमधर्मश्च तथा दुःखमनुत्तमम् ।
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ ००३ ॥

लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ।
लोभान्मोहश्च माया च मानस्तम्भः परासुता ॥ ००४ ॥

अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसङ्क्षयः ।
अभिध्याप्रज्ञता चैव सर्वं लोभात्प्रवर्तते ॥ ००५ ॥

अन्यायश्चावितर्कश्च विकर्मसु च याः क्रियाः ।
कूटविद्यादयश्चैव रूपैश्वर्यमदस्तथा ॥ ००६ ॥

सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम् ।
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वयुक्तता ॥ ००७ ॥

हरणं परवित्तानां परदाराभिमर्शनम्  ॥ ००७  ॥

वाग्वेगो मानसो वेगो निन्दावेगस्तथैव च ।
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः  ॥ ००८  ॥

ईर्ष्यावेगश्च बलवान्मिथ्यावेगश्च दुस्त्यजः ।
रसवेगश्च दुर्वारः श्रोत्रवेगश्च दुःसहः  ॥ ००९  ॥

कुत्सा विकत्था मात्सर्यं पापं दुष्करकारिता ।
साहसानां च सर्वेषामकार्याणां क्रियास्तथा  ॥ ०१०  ॥

जातौ बाल्येऽथ कौमारे यौवने चापि मानवः ।
न संत्यजत्यात्मकर्म यन्न जीर्यति जीर्यतः  ॥ ०११  ॥

यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह ।
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः  ॥ ०१२  ॥

न प्रहृष्यति लाभैर्यो यश्च कामैर्न तृप्यति  ॥ ०१२  ॥

यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः ।
ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा  ॥ ०१३  ॥

स लोभः सह मोहेन विजेतव्यो जितात्मना  ॥ ०१३  ॥

दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम्  ॥ ०१४  ॥

सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः  ॥ ०१५  ॥

द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।

अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥ ०१६ ॥

धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ॥ ०१६ ॥

कुर्वते च बहून्मार्गांस्तांस्तान्हेतुबलाश्रिताः ।
सर्वं मार्गं विलुम्पन्ति लोभाज्ञानेषु निष्ठिताः ॥ ०१७ ॥

धर्मस्याह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
या या विक्रियते संस्था ततः साभिप्रपद्यते ॥ ०१८ ॥

दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽतिमानिता ।
तत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ॥ ०१९ ॥

एतानशिष्टान्बुध्यस्व नित्यं लोभसमन्वितान् ॥ ०१९ ॥

शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान् ।
येषु वृत्तिभयं नास्ति परलोकभयं न च ॥ ०२० ॥

नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ।
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ॥ ०२१ ॥

सुखं दुःखं परं येषां सत्यं येषां परायणम् ।
दातारो न गृहीतारो दयावन्तस्तथैव च ॥ ०२२ ॥

पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ।
सर्वोपकारिणो धीराः सर्वधर्मानुपालकाः ॥ ०२३ ॥

सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ।
न ते चालयितुं शक्या धर्मव्यापारपारगाः ॥ ०२४ ॥

न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम् ।

न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः ॥ ०२५ ॥

ते सेव्याः साधुभिर्नित्यं येष्वहिंसा प्रतिष्ठिता ।
कामक्रोधव्यपेता ये निर्ममा निरहङ्कृताः ॥ ०२६ ॥

सुव्रताः स्थिरमर्यादास्तानुपास्स्व च पृच्छ च ॥ ०२६ ॥

न गवार्थं यशोर्थं वा धर्मस्तेषां युधिष्ठिर ।
अवश्यकार्य इत्येव शरीरस्य क्रियास्तथा ॥ ०२७ ॥

न भयं क्रोधचापल्यं न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदास्थिताः ॥ ०२८ ॥

येष्वलोभस्तथामोहो ये च सत्यार्जवे रताः ।
तेषु कौन्तेय रज्येथा येष्वतन्द्रीकृतं मनः ॥ ०२९ ॥

ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।
निर्ममा निरहङ्काराः सत्त्वस्थाः समदर्शिनः ॥ ०३० ॥

लाभालाभौ सुखदुःखे च तात ; प्रियाप्रिये मरणं जीवितं च ।
समानि येषां स्थिरविक्रमाणां ; बुद्धात्मनां सत्त्वमवस्थितानाम् ॥ ०३१ ॥

सुखप्रियैस्तान्सुमहाप्रतापा ;न्यत्तोऽप्रमत्तश्च समर्थयेथाः ।
दैवात्सर्वे गुणवन्तो भवन्ति ; शुभाशुभा वाक्प्रलापा यथैव ॥ ०३२ ॥

# अध्याय १५३

युधिष्ठिर उवाच ॥

अनर्थानामधिष्ठानमुक्तो लोभः पितामह ।
अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः ॥ ००१ ॥

भीष्म उवाच ॥

करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमम् ।
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ ००२ ॥

अज्ञानान्निरयं याति तथाज्ञानेन दुर्गतिम् ।
अज्ञानात्क्लेशमाप्नोति तथापत्सु निमज्जति ॥ ००३ ॥

युधिष्ठिर उवाच ॥

अज्ञानस्य प्रवृत्तिं च स्थानं वृद्धिं क्षयोदयौ ।
मूलं योगं गतिं कालं कारणं हेतुमेव च ॥ ००४ ॥

श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव ।
अज्ञानप्रभवं हीदं यद्दुःखमुपलभ्यते ॥ ००५ ॥

भीष्म उवाच ॥

रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्रीरालस्यमेव च ॥ ००६ ॥

इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः ॥ ००७ ॥

एतया या प्रवृत्तिश्च वृद्ध्यादीन्यांश्च पृच्छसि ।

विस्तरेण महाबाहो श्रृणु तच्च विशां पते ॥ ००८ ॥

उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चातिलोभश्चाप्येकं जानीहि पार्थिव ॥ ००९ ॥

लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते ।
स्थाने स्थानं क्षये क्षैण्यमुपैति विविधां गतिम् ॥ ०१० ॥

मूलं लोभस्य महतः कालात्मगतिरेव च ।
छिन्नेऽच्छिन्ने तथा लोभे कारणं काल एव हि ॥ ०११ ॥

तस्याज्ञानात्तु लोभो हि लोभादज्ञानमेव च ।
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् ॥ ०१२ ॥

जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ॥ ०१३ ॥

प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना ।
त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि ॥ ०१४ ॥

---

# अध्याय १५४

युधिष्ठिर उवाच ॥

स्वाध्यायकृतयत्नस्य ब्राह्मणस्य पितामह ।
धर्मकामस्य धर्मात्मन्किं नु श्रेय इहोच्यते ॥ ००१ ॥

बहुधादर्शने लोके श्रेयो यदिह मन्यसे ।

अस्मि.ण्ल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ ००२ ॥

महानयं धर्मपथो बहुशाखश्च भारत ।
किं स्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ ००३ ॥

धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः ।
यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः ॥ ००४ ॥

भीष्म उवाच ॥

हन्त ते कथयिष्यामि येन श्रेयः प्रपत्स्यसे ।
पीत्वामृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि ॥ ००५ ॥

धर्मस्य विधयो नैके ते ते प्रोक्ता महर्षिभिः ।
स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ००६ ॥

दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ००७ ॥

नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिवर्तते ॥ ००८ ॥

दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ ००९ ॥

दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम ।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् ॥ ०१० ॥

प्रेत्य चापि मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि समायुक्तो महान्तं धर्ममश्नुते ॥ ०११ ॥

सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं पर्यैति लोकांश्च मनश्चास्य प्रसीदति ॥ ०१२ ॥

अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान् ॥ ०१३ ॥

आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ ०१४ ॥

क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियावजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥ ०१५ ॥

अकार्पण्यमसंरम्भः संतोषः प्रियवादिता ।
अविवित्सानसूया चाप्येषां समुदयो दमः ॥ ०१६ ॥

गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम् ।
जनवादोऽमृषावादः स्तुतिनिन्दाविवर्जनम् ॥ ०१७ ॥

कामः क्रोधश्च लोभश्च दर्पः स्तम्भो विकत्थनम् ।
मोह ईर्ष्यावमानश्चेत्येतद्दान्तो न सेवते ॥ ०१८ ॥

अनिन्दितो ह्यकामात्माथाल्पेच्छोऽथानसूयकः ।
समुद्रकल्पः स नरो न कदाचन पूर्यते ॥ ०१९ ॥

अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम् ।
पूर्वसंबन्धिसंयोगान्नैतद्दान्तो निषेवते ॥ ०२० ॥

सर्वा ग्राम्यास्तथारण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते ॥ ०२१ ॥

मैत्रोऽथ शीलसंपन्नः सुसहायपरश्च यः ।

मुक्तश्च विविधैः सङ्गैस्तस्य प्रेत्य महत्फलम्  ॥ ०२२  ॥

सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः ।
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते  ॥ ०२३  ॥

कर्म यच्छुभमेवेह सद्भिराचरितं च यत् ।
तदेव ज्ञानयुक्तस्य मुनेर्धर्मो न हीयते  ॥ ०२४  ॥

निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते  ॥ ०२५  ॥

अभयं यस्य भूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन  ॥ ०२६  ॥

अवाचिनोति कर्माणि न च संप्रचिनोति ह ।
समः सर्वेषु भूतेषु मैत्रायणगतिश्चरेत्  ॥ ०२७  ॥

शकुनीनामिवाकाशे जले वारिचरस्य वा ।
यथा गतिर्न दृश्येत तथा तस्य न संशयः  ॥ ०२८  ॥

गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः  ॥ ०२९  ॥

संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः ।
संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह  ॥ ०३०  ॥

कामेषु चाप्यनावृत्तः प्रसन्नात्मात्मविच्छुचिः ।
प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते  ॥ ०३१  ॥

यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम् ।
गुहायां पिहितं नित्यं तद्दमेनाभिपद्यते  ॥ ०३२  ॥

ज्ञानारामस्य बुद्धस्य सर्वभूताविरोधिनः ।
नावृत्तिभयमस्तीह परलोके भयं कुतः ॥ ०३३ ॥

एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ०३४ ॥

एतस्य तु महाप्राज्ञ दोषस्य सुमहान्गुणः ।
क्षमायां विपुला लोकाः सुलभा हि सहिष्णुना ॥ ०३५ ॥

दान्तस्य किमरण्येन तथादान्तस्य भारत ।
यत्रैव हि वसेद्दान्तस्तदरण्यं स आश्रमः ॥ ०३६ ॥

वैशंपायन उवाच ॥

एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः ।
अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ॥ ०३७ ॥

पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम् ।
तपः प्रति स चोवाच तस्मै सर्वं कुरूद्वह ॥ ०३८ ॥

---

# अध्याय १५५

भीष्म उवाच ॥

सर्वमेतत्तपोमूलं कवयः परिचक्षते ।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्यते ॥ ००१ ॥

प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ ००२ ॥

तपसो ह्यानुपूर्व्येण फलमूलानिलाशनाः ।
त्री.ण्ल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥ ००३ ॥

औषधान्यगदादीनि तिस्रो विद्याश्च संस्कृताः ।
तपसैव हि सिध्यन्ति तपोमूलं हि साधनम् ॥ ००४ ॥

यद्दुरापं दुराम्नायं दुराधर्षं दुरुत्सहम् ।
सर्वं तत्तपसा शक्यं तपो हि दुरतिक्रमम् ॥ ००५ ॥

सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापाद्विमुच्यते ॥ ००६ ॥

तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः ।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥ ००७ ॥

अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः ।
एतेभ्यो हि महाराज तपो नानशनात्परम् ॥ ००८ ॥

न दुष्करतरं दानान्नातिमातरमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति संन्यासः परमं तपः ॥ ००९ ॥

इन्द्रियाणीह रक्षन्ति धनधान्याभिगुप्तये ।
तस्मादर्थे च धर्मे च तपो नानशनात्परम् ॥ ०१० ॥

ऋषयः पितरो देवा मनुष्या मृगसत्तमाः ।
यानि चान्यानि भूतानि स्थावराणि चराणि च ॥ ०११ ॥

तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते ।

इत्येवं तपसा देवा महत्त्वं चाप्यवाप्नुवन् ॥ ०१२ ॥

इमानीष्टविभागानि फलानि तपसा सदा ।
तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात् ॥ ०१३ ॥

---

# अध्याय १५६

युधिष्ठिर उवाच ॥

सत्यं धर्मे प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह ॥ ००१ ॥

सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत्किं च कथं चैव तदुच्यते ॥ ००२ ॥

भीष्म उवाच ॥

चातुर्वर्ण्यस्य धर्माणां सङ्करो न प्रशस्यते ।
अविकारितमं सत्यं सर्ववर्णेषु भारत ॥ ००३ ॥

सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ ००४ ॥

सत्यं धर्मस्तपो योगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सत्ये सर्वं प्रतिष्ठितम् ॥ ००५ ॥

आचारानिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥ ००६ ॥

प्राप्यते हि यथा सत्यं तच्च श्रोतुं त्वमर्हसि ।
सत्यं त्रयोदशविधं सर्वलोकेषु भारत ॥ ००७ ॥

सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥ ००८ ॥

त्यागो ध्यानमथार्यत्वं धृतिश्च सततं स्थिरा ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ ००९ ॥

सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते ॥ ०१० ॥

आत्मनीष्टे तथानिष्टे रिपौ च समता तथा ।
इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा ॥ ०११ ॥

दमो नान्यस्पृहा नित्यं धैर्यं गाम्भीर्यमेव च ।
अभयं क्रोधशमनं ज्ञानेनैतदवाप्यते ॥ ०१२ ॥

अमात्सर्यं बुधाः प्राहुर्दानं धर्मे च संयमम् ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ ०१३ ॥

अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते सर्वतः साधुः साध्वाप्नोति च सत्यवान् ॥ ०१४ ॥

कल्याणं कुरुते गाढं ह्रीमान्न श्लाघते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ ०१५ ॥

धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते ।
लोकसङ्ग्रहणार्थं तु सा तु धैर्येण लभ्यते ॥ ०१६ ॥

त्यागः स्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ ०१७ ॥

आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागत्वमेव च ॥ ०१८ ॥

धृतिर्नाम सुखे दुःखे यथा नाप्नोति विक्रियाम् ।
तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः ॥ ०१९ ॥

सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ ०२० ॥

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ ०२१ ॥

एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः ।
भजन्ते सत्यमेवेह बृंहयन्ति च भारत ॥ ०२२ ॥

नान्तः शक्यो गुणानां हि वक्तुं सत्यस्य भारत ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ ०२३ ॥

नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ ०२४ ॥

उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ ०२५ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ ०२६ ॥

# अध्याय १५७

युधिष्ठिर उवाच ॥

यतः प्रभवति क्रोधः कामश्च भरतर्षभ ।
शोकमोहौ विवित्सा च परासुत्वं तथा मदः ॥ ००१ ॥

लोभो मात्सर्यमीर्ष्या च कुत्सासूया कृपा तथा ।
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥ ००२ ॥

भीष्म उवाच ॥

त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः ।
उपासते महाराज समस्ताः पुरुषानिह ॥ ००३ ॥

एते प्रमत्तं पुरुषमप्रमत्ता नुदन्ति हि ।
वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषेतरान् ॥ ००४ ॥

एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते ।
इति मर्त्यो विजानीयात्सततं भरतर्षभ ॥ ००५ ॥

एतेषामुदयं स्थानं क्षयं च पुरुषोत्तम ।
हन्त ते वर्तयिष्यामि तन्मे निगदतः शृणु ॥ ००६ ॥

लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते ।
क्षमया तिष्ठते राजञ्श्रीमांश्च विनिवर्तते ॥ ००७ ॥

सङ्कल्पाज्जायते कामः सेव्यमानो विवर्धते ।
अवद्यदर्शनाद्व्येति तत्त्वज्ञानाच्च धीमताम् ॥ ००८ ॥

विरुद्धानि हि शास्त्राणि पश्यन्तीहाल्पबुद्धयः ।
विवित्सा जायते तत्र तत्त्वज्ञानान्निवर्तते ॥ ००९ ॥

प्रीतेः शोकः प्रभवति वियोगात्तस्य देहिनः ।
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति ॥ ०१० ॥

परासुता क्रोधलोभादभ्यासाच्च प्रवर्तते ।
दयया सर्वभूतानां निर्वेदात्सा निवर्तते ॥ ०११ ॥

सत्त्वत्यागात्तु मात्सर्यमहितानि च सेवते ।
एतत्तु क्षीयते तात साधूनामुपसेवनात् ॥ ०१२ ॥

कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम् ।
एभिरेव तु विज्ञातैर्मदः सद्यः प्रणश्यति ॥ ०१३ ॥

ईर्ष्या कामात्प्रभवति संघर्षाच्चैव भारत ।
इतरेषां तु मर्त्यानां प्रज्ञया सा प्रणश्यति ॥ ०१४ ॥

विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसङ्गतैः ।
कुत्सा सञ्जायते राजन्नुपेक्षाभिः प्रशाम्यति ॥ ०१५ ॥

प्रतिकर्तुमशक्याय बलस्थायापकारिणे ।
असूया जायते तीव्रा कारुण्याद्विनिवर्तते ॥ ०१६ ॥

कृपणान्सततं दृष्ट्वा ततः सञ्जायते कृपा ।
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ॥ ०१७ ॥

एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश ।
एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश ॥ ०१८ ॥

त्वया सर्वात्मना नित्यं विजिता जेष्यसे च तान्  ॥ ०१८  ॥

---

# अध्याय १५८

युधिष्ठिर उवाच  ॥

आनृशंस्यं विजानामि दर्शनेन सतां सदा ।
नृशंसान्न विजानामि तेषां कर्म च भारत  ॥ ००१  ॥

कण्टकान्कूपमग्निं च वर्जयन्ति यथा नराः ।
तथा नृशंसकर्माणं वर्जयन्ति नरा नरम्  ॥ ००२  ॥

नृशंसो ह्यधमो नित्यं प्रेत्य चेह च भारत ।
तस्माद्ब्रवीहि कौरव्य तस्य धर्मविनिश्चयम्  ॥ ००३  ॥

भीष्म उवाच  ॥

स्पृहास्यान्तर्हिता चैव विदितार्था च कर्मणा ।
आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते च यः  ॥ ००४  ॥

दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकः शठः ।
असंभोगी च मानी च तथा सङ्गी विकत्थनः  ॥ ००५  ॥

सर्वातिशङ्की परुषो बालिशः कृपणस्तथा ।
वर्गप्रशंसी सततमाश्रमद्वेषसङ्करी  ॥ ००६  ॥

हिंसाविहारी सततमविशेषगुणागुणः ।

बह्लीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ॥ ००७ ॥

धर्मशीलं गुणोपेतं पाप इत्यवगच्छति ।
आत्मशीलानुमानेन न विश्वसिति कस्यचित् ॥ ००८ ॥

परेषां यत्र दोषः स्यात्तद्गुह्यं संप्रकाशयेत् ।
समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत् ॥ ००९ ॥

तथोपकारिणं चैव मन्यते वञ्चितं परम् ।
दत्त्वापि च धनं काले संतपत्युपकारिणे ॥ ०१० ॥

भक्ष्यं भोज्यमथो लेह्यं यच्चान्यत्साधु भोजनम् ।
प्रेक्षमाणेषु योऽश्नीयान्नृशंस इति तं विदुः ॥ ०११ ॥

ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते ।
स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते ॥ ०१२ ॥

एष ते भरतश्रेष्ठ नृशंसः परिकीर्तितः ।
सदा विवर्जनीयो वै पुरुषेण बुभूषता ॥ ०१३ ॥

---

# अध्याय १५९

भीष्म उवाच ॥

कृतार्थो यक्ष्यमाणश्च सर्ववेदान्तगश्च यः ।
आचार्यपितृभार्यार्थं स्वाध्यायार्थमथापि वा ॥ ००१ ॥

एते वै साधवो दृष्टा ब्राह्मणा धर्मभिक्षवः ।
अस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ ००२ ॥

अन्यत्र दक्षिणा या तु देया भरतसत्तम ।
अन्येभ्यो हि बहिर्वेद्यां नाकृतान्नं विधीयते ॥ ००३ ॥

सर्वरत्नानि राजा च यथार्हं प्रतिपादयेत् ।
ब्राह्मणाश्चैव यज्ञाश्च सहान्नाः सहदक्षिणाः ॥ ००४ ॥

यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ ००५ ॥

यज्ञश्चेत्प्रतिविद्धः स्यादङ्गेनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ००६ ॥

यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात्तस्य तद्द्रव्यं यज्ञार्थं पार्थिवो हरेत् ॥ ००७ ॥

आहरेद्वेश्मतः किञ्चित्कामं शूद्रस्य द्रव्यतः ।
न हि वेश्मनि शूद्रस्य कश्चिदस्ति परिग्रहः ॥ ००८ ॥

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ ००९ ॥

अदातृभ्यो हरेन्नित्यं व्याख्याप्य नृपतिः प्रभो ।
तथा ह्याचरतो धर्मो नृपतेः स्यादथाखिलः ॥ ०१० ॥

तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ ०११ ॥

खलात्क्षेत्रात्तथागाराद्यतो वाप्युपपद्यते ॥ ०११ ॥

आख्यातव्यं नृपस्यैतत्पृच्छतोऽपृच्छतोऽपि वा ।
न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित्  ॥ ०१२  ॥

क्षत्रियस्य हि बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा ।
श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत्  ॥ ०१३  ॥

अथैनं परिरक्षेत पिता पुत्रमिवौरसम्  ॥ ०१३  ॥

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
अविकल्पः पुराधर्मो धर्मवादैस्तु केवलम्  ॥ ०१४  ॥

विश्वैस्तु देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु मरणाद्भीतैर्लिङ्गप्रतिनिधिः कृतः  ॥ ०१५  ॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम्  ॥ ०१६  ॥

न ब्राह्मणान्वेदयेत कश्चिद्राजनि मानवः ।
अवीर्यो वेदनाद्विद्यात्सुवीर्यो वीर्यवत्तरम्  ॥ ०१७  ॥

तस्माद्राज्ञा सदा तेजो दुःसहं ब्रह्मवादिनाम् ।
मन्ता शास्ता विधाता च ब्राह्मणो देव उच्यते  ॥ ०१८  ॥

तस्मिन्नाकुशलं ब्रूयान्न शुक्तामीरयेद्गिरम्  ॥ ०१८  ॥

क्षत्रियो बाहुवीर्येण तरत्यापदमात्मनः ।
धनेन वैश्यः शूद्रश्च मन्त्रैर्होमैश्च वै द्विजः  ॥ ०१९  ॥

न वै कन्या न युवतिर्नामन्त्रो न च बालिशः ।
परिवेष्टाग्निहोत्रस्य भवेन्नासंस्कृतस्तथा  ॥ ०२०  ॥

नरके निपतन्त्येते जुह्वानाः स च यस्य तत् ॥ ०२० ॥

प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणाम् ।
अनाहिताग्निरिति स प्रोच्यते धर्मदर्शिभिः ॥ ०२१ ॥

पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथञ्चन ॥ ०२२ ॥

प्रजाः पशूंश्च स्वर्गं च हन्ति यज्ञो ह्यदक्षिणः ।
इन्द्रियाणि यशः कीर्तिमायुश्चास्योपकृन्तति ॥ ०२३ ॥

उदक्या ह्यासते ये च ये च केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥ ०२४ ॥

उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
उषित्वा द्वादश समाः शूद्रकर्मेह गच्छति ॥ ०२५ ॥

अनार्यां शयने बिभ्रदुज्झन्बिभ्रच्च यो द्विजाम् ।
अब्राह्मणो मन्यमानस्तृणेष्वासीत पृष्ठतः ॥ ०२६ ॥

तथा स शुध्यते राजञ्शृणु चात्र वचो मम ॥ ०२६ ॥

यदेकरात्रेण करोति पापं ; कृष्णं वर्णं ब्राह्मणः सेवमानः ।
स्थानासनाभ्यां विचरन्व्रती सं ;स्त्रिभिर्वर्षैः शमयेदात्मपापम् ॥ ०२७ ॥

न नर्मयुक्तं वचनं हिनस्ति ; न स्त्रीषु राजन्न विवाहकाले ।
न गुर्वर्थे नात्मनो जीवितार्थे ; पञ्चानृतान्याहुरपातकानि ॥ ०२८ ॥

श्रद्दधानः शुभां विद्यां हीनादपि समाचरेत् ।
सुवर्णमपि चामेध्यादाददीतेति धारणा ॥ ०२९ ॥

स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।
अदुष्टा हि स्त्रियो रत्नमाप इत्येव धर्मतः ॥ ०३० ॥

गोब्राह्मणहितार्थं च वर्णानां सङ्करेषु च ।
गृह्णीयात्तु धनुर्वैश्यः परित्राणाय चात्मनः ॥ ०३१ ॥

सुरापानं ब्रह्महत्या गुरुतल्पमथापि वा ।
अनिर्देश्यानि मन्यन्ते प्राणान्तानीति धारणा ॥ ०३२ ॥

सुवर्णहरणं स्तैन्यं विप्रासङ्गश्च पातकम् ।
विहरन्मद्यपानं चाप्यगम्यागमनं तथा ॥ ०३३ ॥

पतितैः संप्रयोगाच्च ब्राह्मणैर्योनितस्तथा ।
अचिरेण महाराज तादृशो वै भवत्युत ॥ ०३४ ॥

संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥ ०३५ ॥

एतानि च ततोऽन्यानि निर्देश्यानीति धारणा ।
निर्देश्यकेन विधिना कालेनाव्यसनी भवेत् ॥ ०३६ ॥

अन्नं तिर्यङ्ङ होतव्यं प्रेतकर्मण्यपातिते ।
त्रिषु त्वेतेषु पूर्वेषु न कुर्वीत विचारणाम् ॥ ०३७ ॥

अमात्यान्वा गुरून्वापि जह्याद्धर्मेण धार्मिकः ।
प्रायश्चित्तमकुर्वाणैर्नैतैरर्हति संविदम् ॥ ०३८ ॥

अधर्मकारी धर्मेण तपसा हन्ति किल्बिषम् ।
ब्रुवन्स्तेन इति स्तेनं तावत्प्राप्नोति किल्बिषम् ॥ ०३९ ॥

अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात्  ॥ ०३९  ॥

त्रिभागं ब्रह्महत्यायाः कन्या प्राप्नोति दुष्यती ।
यस्तु दूषयिता तस्याः शेषं प्राप्नोति किल्बिषम्  ॥ ०४०  ॥

ब्राह्मणायावगूर्येह स्पृष्ट्वा गुरुतरं भवेत् ।
वर्षाणां हि शतं पापः प्रतिष्ठां नाधिगच्छति  ॥ ०४१  ॥

सहस्रं त्वेव वर्षाणां निपात्य नरके वसेत् ।
तस्मान्नैवावगूर्याद्धि नैव जातु निपातयेत्  ॥ ०४२  ॥

शोणितं यावतः पांसून्सङ्गृह्णीयाद्द्विजक्षतात् ।
तावतीः स समा राजन्नरके परिवर्तते  ॥ ०४३  ॥

भ्रूणहाहवमध्ये तु शुध्यते शस्त्रपातितः ।
आत्मानं जुहुयाद्वह्नौ समिद्धे तेन शुध्यति  ॥ ०४४  ॥

सुरापो वारुणीमुष्णां पीत्वा पापाद्विमुच्यते ।
तया स काये निर्दग्धे मृत्युना प्रेत्य शुध्यति  ॥ ०४५  ॥

लोकांश्च लभते विप्रो नान्यथा लभते हि सः  ॥ ०४५  ॥

गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः ।
सूर्मीं ज्वलन्तीमाश्लिष्य मृत्युना स विशुध्यति  ॥ ०४६  ॥

अथ वा शिश्नवृषणावादायाञ्जलिना स्वयम् ।
नैरृतीं दिशमास्थाय निपतेत्स त्वजिह्मगः  ॥ ०४७  ॥

ब्राह्मणार्थेऽपि वा प्राणान्संत्यजेत्तेन शुध्यति ।
अश्वमेधेन वापीष्ट्वा गोमेधेनापि वा पुनः  ॥ ०४८  ॥

अग्निष्टोमेन वा सम्यगिह प्रेत्य च पूयते ॥ ०४८ ॥

तथैव द्वादश समाः कपाली ब्रह्महा भवेत् ।
ब्रह्मचारी चरेद्भैक्षं स्वकर्मोदाहरन्मुनिः ॥ ०४९ ॥

एवं वा तपसा युक्तो ब्रह्महा सवनी भवेत् ।
एवं वा गर्भमज्ञाता चात्रेयीं योऽभिगच्छति ॥ ०५० ॥

द्विगुणा ब्रह्महत्या वै आत्रेयीव्यसने भवेत् ॥ ०५० ॥

सुरापो नियताहारो ब्रह्मचारी क्षमाचरः ।
ऊर्ध्वं त्रिभ्योऽथ वर्षेभ्यो यजेताग्निष्टुता परम् ॥ ०५१ ॥

ऋषभैकसहस्रं गा दत्त्वा शुभमवाप्नुयात् ॥ ०५१ ॥

वैश्यं हत्वा तु वर्षे द्वे ऋषभैकशताश्च गाः ।
शूद्रं हत्वाब्दमेवैकमृषभैकादशाश्च गाः ॥ ०५२ ॥

श्वबर्बरखरान्हत्वा शौद्रमेव व्रतं चरेत् ।
मार्जारचाषमण्डूकान्काकं भासं च मूषकम् ॥ ०५३ ॥

उक्तः पशुसमो धर्मो राजन्प्राणिनिपातनात् ।
प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्वशः ॥ ०५४ ॥

तल्पे चान्यस्य चौर्ये च पृथक्संवत्सरं चरेत् ।
त्रीणि श्रोत्रियभार्यायां परदारे तु द्वे स्मृते ॥ ०५५ ॥

काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत् ।
स्थानासनाभ्यां विहरेत्त्रिरह्नोऽभ्युदितादपः ॥ ०५६ ॥

एवमेव निराचान्तो यश्चाग्नीनपविध्यति ॥ ०५६ ॥

त्यजत्यकारणे यश्च पितरं मातरं तथा ।
पतितः स्यात्स कौरव्य तथा धर्मेषु निश्चयः ॥ ०५७ ॥

ग्रासाच्छादनमत्यर्थं दद्यादिति निदर्शनम् ।
भार्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः ॥ ०५८ ॥

यत्पुंसां परदारेषु तच्चैनां चारयेद्व्रतम् ॥ ०५८ ॥

श्रेयांसं शयने हित्वा या पापीयांसमृच्छति ।
श्वभिस्तां खादयेद्राजा संस्थाने बहुसंवृते ॥ ०५९ ॥

पुमांसं बन्धयेत्प्राज्ञः शयने तप्त आयसे ।
अप्यादधीत दारूणि तत्र दह्येत पापकृत् ॥ ०६० ॥

एष दण्डो महाराज स्त्रीणां भर्तृव्यतिक्रमे ।
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो भवेत् ॥ ०६१ ॥

द्वे तस्य त्रीणि वर्षाणि चत्वारि सहसेविनः ।
कुचरः पञ्च वर्षाणि चरेद्भैक्षं मुनिव्रतः ॥ ०६२ ॥

परिवित्तिः परिवेत्ता यया च परिविद्यते ।
पाणिग्राहश्च धर्मेण सर्वे ते पतिताः स्मृताः ॥ ०६३ ॥

चरेयुः सर्व एवैते वीरहा यद्व्रतं चरेत् ।
चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये ॥ ०६४ ॥

परिवेत्ता प्रयच्छेत परिवित्ताय तां स्नुषाम् ।
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयान्प्रत्यनन्तरम् ॥ ०६५ ॥

एनसो मोक्षमाप्नोति सा च तौ चैव धर्मतः ॥ ०६५ ॥

अमानुषीषु गोवर्जमनावृष्टिर्न दुष्यति ।
अधिष्ठातारमत्तारं पशूनां पुरुषं विदुः ॥ ०६६ ॥

परिधायोर्ध्ववालं तु पात्रमादाय मृन्मयम् ।
चरेत्सप्त गृहान्भैक्षं स्वकर्म परिकीर्तयन् ॥ ०६७ ॥

तत्रैव लब्धभोजी स्याद्द्वादशाहात्स शुध्यति ।
चरेत्संवत्सरं चापि तद्व्रतं यन्निराकृति ॥ ०६८ ॥

भवेत्तु मानुषेष्वेवं प्रायश्चित्तमनुत्तमम् ।
दानं वादानसक्तेषु सर्वमेव प्रकल्पयेत् ॥ ०६९ ॥

अनास्तिकेषु गोमात्रं प्राणमेकं प्रचक्षते ॥ ०६९ ॥

श्ववराहमनुष्याणां कुक्कुटस्य खरस्य च ।
मांसं मूत्रपुरीषं च प्राश्य संस्कारमर्हति ॥ ०७० ॥

ब्राह्मणस्य सुरापस्य गन्धमाघ्राय सोमपः ।
अपस्त्र्यहं पिबेदुष्णास्त्र्यहमुष्णं पयः पिबेत् ॥ ०७१ ॥

त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्त्र्यहम् ॥ ०७१ ॥

एवमेतत्समुद्दिष्टं प्रायश्चित्तं सनातनम् ।
ब्राह्मणस्य विशेषेण तत्त्वज्ञानेन जायते ॥ ०७२ ॥

# खड्गोत्पत्तिः

## अध्याय १६०

वैशंपायन उवाच ॥

कथान्तरमथासाद्य खड्गयुद्धविशारदः ।
नकुलः शरतल्पस्थमिदमाह पितामहम् ॥ ००१ ॥

धनुः प्रहरणं श्रेष्ठमिति वादः पितामह ।
मतस्तु मम धर्मज्ञ खड्ग एव सुसंशितः ॥ ००२ ॥

विशीर्णे कार्मुके राजन्प्रक्षीणेषु च वाजिषु ।
खड्गेन शक्यते युद्धे साध्वात्मा परिरक्षितुम् ॥ ००३ ॥

शरासनधरांश्चैव गदाशक्तिधरांस्तथा ।
एकः खड्गधरो वीरः समर्थः प्रतिबाधितुम् ॥ ००४ ॥

अत्र मे संशयश्चैव कौतूहलमतीव च ।
किं स्वित्प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥ ००५ ॥

कथं चोत्पादितः खड्गः कस्यार्थाय च केन वा ।
पूर्वाचार्यं च खड्गस्य प्रब्रूहि प्रपितामह ॥ ००६ ॥

तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
सर्वकौशलसंयुक्तं सूक्ष्मचित्रार्थवच्छुभम् ॥ ००७ ॥

ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम् ।
शिक्षान्यायोपसंपन्नं द्रोणशिष्याय पृच्छते ॥ ००८ ॥

उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः ।

शरतल्पगतो भीष्मो नकुलाय महात्मने ॥ ००९ ॥

तत्त्वं श्रृणुष्व माद्रेय यदेतत्परिपृच्छसि ।
प्रबोधितोऽस्मि भवता धातुमानिव पर्वतः ॥ ०१० ॥

सलिलैकार्णवं तात पुरा सर्वमभूदिदम् ।
निष्प्रकम्पमनाकाशमनिर्देश्यमहीतलम् ॥ ०११ ॥

तमःसंवृतमस्पर्शमतिगम्भीरदर्शनम् ।
निःशब्दं चाप्रमेयं च तत्र जज्ञे पितामहः ॥ ०१२ ॥

सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान् ।
आकाशमसृजच्चोर्ध्वमधो भूमिं च नैर्ऋतिम् ॥ ०१३ ॥

नभः सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा ।
संवत्सरानहोरात्रानृतूनथ लवान्क्षणान् ॥ ०१४ ॥

ततः शरीरं लोकस्थं स्थापयित्वा पितामहः ।
जनयामास भगवान्पुत्रानुत्तमतेजसः ॥ ०१५ ॥

मरीचिमृषिमत्रिं च पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठाङ्गिरसौ चोभौ रुद्रं च प्रभुमीश्वरम् ॥ ०१६ ॥

प्राचेतसस्तथा दक्षः कन्याः षष्टिमजीजनत् ।
ता वै ब्रह्मर्षयः सर्वाः प्रजार्थं प्रतिपेदिरे ॥ ०१७ ॥

ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा ।
गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च ॥ ०१८ ॥

पतत्रिमृगमीनाश्च प्लवङ्गाश्च महोरगाः ।
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः ॥ ०१९ ॥

औद्भिदाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ।
जज्ञे तात तथा सर्वं जगत्स्थावरजङ्गमम् ॥ ०२० ॥

भूतसर्गमिमं कृत्वा सर्वलोकपितामहः ।
शाश्वतं वेदपठितं धर्मं च युयुजे पुनः ॥ ०२१ ॥

तस्मिन्धर्मे स्थिता देवाः सहाचार्यपुरोहिताः ।
आदित्या वसवो रुद्राः ससाध्या मरुदश्विनः ॥ ०२२ ॥

भृग्वत्र्यङ्गिरसः सिद्धाः काश्यपश्च तपोधनः ।
वसिष्ठगौतमागस्त्यास्तथा नारदपर्वतौ ॥ ०२३ ॥

ऋषयो वालखिल्याश्च प्रभासाः सिकतास्तथा ।
घृताचाः सोमवायव्या वैखानसमरीचिपाः ॥ ०२४ ॥

अकृष्टाश्चैव हंसाश्च ऋषयोऽथाग्नियोनिजाः ।
वानप्रस्थाः पृश्नयश्च स्थिता ब्रह्मानुशासने ॥ ०२५ ॥

दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनम् ।
धर्मस्यापचयं चक्रुः क्रोधलोभसमन्विताः ॥ ०२६ ॥

हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः ।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥ ०२७ ॥

एते चान्ये च बहवः सगणा दैत्यदानवाः ।
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः ॥ ०२८ ॥

सर्वे स्म तुल्यजातीया यथा देवास्तथा वयम् ।
इत्येवं हेतुमास्थाय स्पर्धमानाः सुरर्षिभिः ॥ ०२९ ॥

न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत ।
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः ॥ ०३० ॥

न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः ॥ ०३० ॥

अथ वै भगवान्ब्रह्मा ब्रह्मर्षिभिरुपस्थितः ।
तदा हिमवतः पृष्ठे सुरम्ये पद्मतारके ॥ ०३१ ॥

शतयोजनविस्तारे मणिमुक्ताचयाचिते ।
तस्मिन्गिरिवरे पुत्र पुष्पितद्रुमकानने ॥ ०३२ ॥

तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥ ०३२ ॥

ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः ।
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ॥ ०३३ ॥

ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः ।
मरुद्भिः परिसंस्तीर्णं दीप्यमानैश्च पावकैः ॥ ०३४ ॥

काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलङ्कृतम् ।
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ॥ ०३५ ॥

तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम् ।
तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ॥ ०३६ ॥

चन्द्रमा विमलं व्योम यथाभ्युदिततारकम् ।
विदार्याग्निं तथा भूतमुत्थितं श्रूयते ततः ॥ ०३७ ॥

नीलोत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरम् ।
प्रांशु दुर्दर्शनं चैवाप्यतितेजस्तथैव च ॥ ०३८ ॥

तस्मिन्नुत्पतमाने च प्रचचाल वसुंधरा ।
तत्रोर्मिकलिलावर्तश्चुक्षुभे च महार्णवः ॥ ०३९ ॥

पेतुरुल्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः ।
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ ॥ ०४० ॥

मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ॥ ०४० ॥

ततः सुतुमुलं दृष्ट्वा तदद्भुतमुपस्थितम् ।
महर्षिसुरगन्धर्वानुवाचेदं पितामहः ॥ ०४१ ॥

मयैतच्चिन्तितं भूतमसिर्नामैष वीर्यवान् ।
रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ॥ ०४२ ॥

ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ॥ ०४३ ॥

ततस्तं शितिकण्ठाय रुद्रायर्षभकेतवे ।
ब्रह्मा ददावसिं दीप्तमधर्मप्रतिवारणम् ॥ ०४४ ॥

ततः स भगवान्रुद्रो ब्रह्मर्षिगणसंस्तुतः ।
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥ ०४५ ॥

चतुर्बाहुः स्पृशन्मूर्ध्ना भूस्थितोऽपि नभस्तलम् ।
ऊर्ध्वदृष्टिर्महालिङ्गो मुखाज्ज्वालाः समुत्सृजन् ॥ ०४६ ॥

विकुर्वन्बहुधा वर्णान्नीलपाण्डुरलोहितान् ॥ ०४६ ॥

बिभ्रत्कृष्णाजिनं वासो हेमप्रवरतारकम् ।
नेत्रं चैकं ललाटेन भास्करप्रतिमं महत् ॥ ०४७ ॥

शुशुभाते च विमले द्वे नेत्रे कृष्णपिङ्गले ॥ ०४७ ॥

ततो देवो महादेवः शूलपाणिर्भगाक्षिहा ।
संप्रगृह्य तु निस्त्रिंशं कालार्कानलसंनिभम् ॥ ०४८ ॥

त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।
चचार विविधान्मार्गान्महाबलपराक्रमः ॥ ०४९ ॥

विधुन्वन्नसिमाकाशे दानवान्तचिकीर्षया ॥ ०४९ ॥

तस्य नादं विनदतो महाहासं च मुञ्चतः ।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥ ०५० ॥

तद्रूपधारिणं रुद्रं रौद्रकर्म चिकीर्षवः ।
निशाम्य दानवाः सर्वे हृष्टाः समभिदुद्रुवुः ॥ ०५१ ॥

अश्मभिश्चाप्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः ।
घोरैः प्रहरणैश्चान्यैः शितधारैरयोमुखैः ॥ ०५२ ॥

ततस्तद्दानवानीकं संप्रणेतारमच्युतम् ।
रुद्रखड्गबलोद्भूतं प्रचचाल मुमोह च ॥ ०५३ ॥

चित्रं शीघ्रतरत्वाच्च चरन्तमसिधारिणम् ।
तमेकमसुराः सर्वे सहस्रमिति मेनिरे ॥ ०५४ ॥

छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्प्रमथन्नपि ।
अचरद्दैत्यसंघेषु रुद्रोऽग्निरिव कक्षगः ॥ ०५५ ॥

असिवेगप्ररुग्णास्ते छिन्नबाहूरुवक्षसः ।
संप्रकृत्तोत्तमाङ्गाश्च पेतुरुर्व्यां महासुराः ॥ ०५६ ॥

अपरे दानवा भग्ना रुद्रघातावपीडिताः ।
अन्योन्यमभिनर्दन्तो दिशः संप्रतिपेदिरे ॥ ०५७ ॥

भूमिं केचित्प्रविविशुः पर्वतानपरे तथा ।
अपरे जग्मुराकाशमपरेऽम्भः समाविशन् ॥ ०५८ ॥

तस्मिन्महति संवृत्ते समरे भृशदारुणे ।
बभौ भूमिः प्रतिभया तदा रुधिरकर्दमा ॥ ०५९ ॥

दानवानां शरीरैश्च महद्भिः शोणितोक्षितैः ।
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥ ०६० ॥

रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा ।
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥ ०६१ ॥

स रुद्रो दानवान्हत्वा कृत्वा धर्मोत्तरं जगत् ।
रौद्रं रूपं विहायाशु चक्रे रूपं शिवं शिवः ॥ ०६२ ॥

ततो महर्षयः सर्वे सर्वे देवगणास्तथा ।
जयेनाद्भुतकल्पेन देवदेवमथार्चयन् ॥ ०६३ ॥

ततः स भगवान्रुद्रो दानवक्षतजोक्षितम् ।
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥ ०६४ ॥

विष्णुर्मरीचये प्रादान्मरीचिर्भगवांश्च तम् ।
महर्षिभ्यो ददौ खड्गमृषयो वासवाय तु ॥ ०६५ ॥

महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक ।
मनवे सूर्यपुत्राय ददुः खड्गं सुविस्तरम् ॥ ०६६ ॥

ऊचुश्चैनं तथैवाद्यं मानुषाणां त्वमीश्वरः ।

असिना धर्मगर्भेण पालयस्व प्रजा इति ॥ ०६७ ॥

धर्मसेतुमतिक्रान्ताः सूक्ष्मस्थूलार्थकारणात् ।
विभज्य दण्डं रक्ष्याः स्युर्धर्मतो न यदृच्छया ॥ ०६८ ॥

दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा ।
व्यङ्गनं च शरीरस्य वधो वानल्पकारणात् ॥ ०६९ ॥

असेरेतानि रूपाणि दुर्वाचादीनि निर्दिशेत् ।
असेरेव प्रमाणानि परिमाणव्यतिक्रमात् ॥ ०७० ॥

अधिसृज्याथ पुत्रं स्वं प्रजानामधिपं ततः ।
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥ ०७१ ॥

क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः ।
आयुश्च तस्माल्लेभे तं नहुषश्च ततो भुवि ॥ ०७२ ॥

ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् ।
आमूर्तरयसस्तस्मात्ततो भूमिशयो नृपः ॥ ०७३ ॥

भरतश्चापि दौःषन्तिर्लेभे भूमिशयादसिम् ।
तस्माच्च लेभे धर्मज्ञो राजन्नैडबिडस्तथा ॥ ०७४ ॥

ततश्चैडबिडाल्लेभे धुन्धुमारो जनेश्वरः ।
धुन्धुमाराच्च काम्बोजो मुचुकुन्दस्ततोऽलभत् ॥ ०७५ ॥

मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः ।
रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ॥ ०७६ ॥

इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान् ।
हरिणाश्वादसिं लेभे शुनकः शुनकादपि ॥ ०७७ ॥

उशीनरो वै धर्मात्मा तस्माद्भोजाः सयादवाः ।
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ॥ ०७८ ॥

प्रतर्दनादष्टकश्च रुशदश्वोऽष्टकादपि ।
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात्कृपस्ततः ॥ ०७९ ॥

ततस्त्वं भ्रातृभिः सार्धं परमासिमवाप्तवान् ॥ ०७९ ॥

कृत्तिकाश्चास्य नक्षत्रमसेरग्निश्च दैवतम् ।
रोहिण्यो गोत्रमस्याथ रुद्रश्च गुरुरुत्तमः ॥ ०८० ॥

असेरष्टौ च नामानि रहस्यानि निबोध मे ।
पाण्डवेय सदा यानि कीर्तय.ण्ल्लभते जयम् ॥ ०८१ ॥

असिर्विशसनः खड्गस्तीक्ष्णवर्त्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ ०८२ ॥

अग्र्यः प्रहरणानां च खड्गो माद्रवतीसुत ।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः ॥ ०८३ ॥

पृथुस्तूत्पादयामास धनुराद्यमरिंदम ।
तेनेयं पृथिवी पूर्वं वैन्येन परिरक्षिता ॥ ०८४ ॥

तदेतदार्षं माद्रेय प्रमाणं कर्तुमर्हसि ।
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ॥ ०८५ ॥

इत्येष प्रथमः कल्पो व्याख्यातस्ते सुविस्तरः ।
असेरुत्पत्तिसंसर्गो यथावद्भरतर्षभ ॥ ०८६ ॥

सर्वथैतदिह श्रुत्वा खड्गसाधनमुत्तमम् ।

लभते पुरुषः कीर्तिं प्रेत्य चानन्त्यमश्नुते ॥ ०८७ ॥

---

# अध्याय १६१

वैशंपायन उवाच ॥

इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः ।
पप्रच्छावसरं गत्वा भ्रातॄन्विदुरपञ्चमान् ॥ ००१ ॥

धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता ।
तेषां गरीयान्कतमो मध्यमः को लघुश्च कः ॥ ००२ ॥

कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै ।
संतुष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥ ००३ ॥

ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान् ।
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥ ००४ ॥

बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा ।
भावशुद्धिर्दया सत्यं संयमश्चात्मसंपदः ॥ ००५ ॥

एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः ।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥ ००६ ॥

धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिविगा धर्मे चार्थः समाहितः ॥ ००७ ॥

धर्मो राजन्गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते ।

कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥ ००८ ॥

तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ॥ ००८ ॥

समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः ।
पार्थो वाक्यार्थतत्त्वज्ञो जगौ वाक्यमतन्द्रितः ॥ ००९ ॥

कर्मभूमिरियं राजन्निह वार्त्ता प्रशस्यते ।
कृषिवाणिज्यगोरक्ष्यं शिल्पानि विविधानि च ॥ ०१० ॥

अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः ।
न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः ॥ ०११ ॥

विजयी ह्यर्थवान्धर्ममाराधयितुमुत्तमम् ।
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥ ०१२ ॥

अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
अर्थसिद्ध्या हि निर्वृत्तावुभावेतौ भविष्यतः ॥ ०१३ ॥

उद्भूतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्माणमिव भूतानि सततं पर्युपासते ॥ ०१४ ॥

जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ ०१५ ॥

काषायवसनाश्चान्ये श्मश्रुला ह्रीसुसंवृताः ।
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥ ०१६ ॥

अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः ।
कुलप्रत्यागमाश्चैके स्वं स्वं मार्गमनुष्ठिताः ॥ ०१७ ॥

आस्तिका नास्तिकाश्चैव नियताः संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशता  ॥ ०१८  ॥

भृत्यान्भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् ।
एतन्मतिमतां श्रेष्ठ मतं मम यथातथम्  ॥ ०१९  ॥

अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः  ॥ ०१९  ॥

ततो धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलः सहदेवश्च वाक्यं जगदतुः परम्  ॥ ०२०  ॥

आसीनश्च शयानश्च विचरन्नपि च स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि  ॥ ०२१  ॥

अस्मिंस्तु वै सुसंवृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः  ॥ ०२२  ॥

योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंयुक्तं तस्मादेतौ मताविह  ॥ ०२३  ॥

अनर्थस्य न कामोऽस्ति तथार्थोऽधर्मिणः कुतः ।
तस्मादुद्विजते लोको धर्मार्थाद्यो बहिष्कृतः  ॥ ०२४  ॥

तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ।
विश्वस्तेषु च भूतेषु कल्पते सर्व एव हि  ॥ ०२५  ॥

धर्मं समाचरेत्पूर्वं तथार्थं धर्मसंयुतम् ।
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम्  ॥ ०२६  ॥

विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ ।
भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे  ॥ ०२७  ॥

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥ ०२८ ॥

कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशफलमूलाशा वायुभक्षाः सुसंयताः ॥ ०२९ ॥

वेदोपवादेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे ॥ ०३० ॥

वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
दैवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ ०३१ ॥

समुद्रं चाविशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥ ०३२ ॥

नास्ति नासीन्नाभविष्यद्भूतं कामात्मकात्परम् ।
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ॥ ०३३ ॥

नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं च पिण्याकाद्धृतं श्रेय उदश्वितः ॥ ०३४ ॥

श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव रसः कामात्सञ्जायते सुखम् ॥ ०३५ ॥

सुचारुवेषाभिरलङ्कृताभि ;र्मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषाभिरुपेत्य कामं ; कामो हि राजंस्तरसाभिपाती ॥ ०३६ ॥

बुद्धिर्ममैषा परिषत्स्थितस्य ; मा भूद्विचारस्तव धर्मपुत्र ।
स्यात्संहितं सद्भिरफल्गुसारं ; समेत्य वाक्यं परमानृशंस्यम् ॥ ०३७ ॥

धर्मार्थकामाः सममेव सेव्या ; यस्त्वेकसेवी स नरो जघन्यः ।
द्वयोस्तु दक्षं प्रवदन्ति मध्यं ; स उत्तमो यो निरतस्त्रिवर्गे ॥ ०३८ ॥

प्राज्ञः सुहृच्चन्दनसारलिप्तो ; विचित्रमाल्याभरणैरुपेतः ।
ततो वचः सङ्ग्रहविग्रहेण ; प्रोक्त्वा यवीयान्विरराम भीमः ॥ ०३९ ॥

ततो मुहूर्तादथ धर्मराजो ; वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचावितथं स्मयन्वै ; बहुश्रुतो धर्मभृतां वरिष्ठः ॥ ०४० ॥

निःसंशयं निश्चितधर्मशास्त्राः ; सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य ;मुक्तं यद्वै नैष्ठिकं तच्छ्रुतं मे ॥ ०४१ ॥

इह त्ववश्यं गदतो ममापि ; वाक्यं निबोधध्वमनन्यभावाः ॥ ०४१ ॥

यो वै न पापे निरतो न पुण्ये ; नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समलोष्टकाञ्चनः ; स मुच्यते दुःखसुखार्थसिद्धेः ॥ ०४२ ॥

भूतानि जातीमरणान्वितानि ; जराविकारैश्च समन्वितानि ।
भूयश्च तैस्तैः प्रतिबोधितानि ; मोक्षं प्रशंसन्ति न तं च विद्मः ॥ ०४३ ॥

स्नेहे नबद्धस्य न सन्ति तानी ;त्येवं स्वयंभूर्भगवानुवाच ।
बुधाश्च निर्वाणपरा वदन्ति ; तस्मान्न कुर्यात्प्रियमप्रियं च ॥ ०४४ ॥

एतत्प्रधानं न तु कामकारो ; यथा नियुक्तोऽस्मि तथा चरामि ।
भूतानि सर्वाणि विधिर्नियुङ्क्ते ; विधिर्बलीयानिति वित्त सर्वे ॥ ०४५ ॥

न कर्मणाप्नोत्यनवाप्यमर्थं ; यद्भावि सर्वं भवतीति वित्त ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं ; तस्मादिदं लोकहिताय गुह्यम् ॥ ०४६ ॥

ततस्तदग्र्यं वचनं मनोनुगं ; समस्तमाज्ञाय ततोऽतिहेतुमत् ।
तदा प्रणेदुश्च जहर्षिरे च ते ; कुरुप्रवीराय च चक्रुरञ्जलीन् ॥ ०४७ ॥

सुचारुवर्णाक्षरशब्दभूषितां ; मनोनुगां निर्धुतवाक्यकण्टकाम् ।
निशम्य तां पार्थिव पार्थभाषितां ; गिरं नरेन्द्राः प्रशशंसुरेव ते ॥ ०४८ ॥

पुनश्च पप्रच्छ सरिद्वरासुतं ; ततः परं धर्ममहीनसत्त्वः ॥ ०४८ ॥

---

# कृतघ्नगौतमोपाख्यानम्

## अध्याय १६२

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ कुरूणां कीर्तिवर्धन ।
प्रश्नं कञ्चित्प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥ ००१ ॥

कीदृशा मानवाः सौम्याः कैः प्रीतिः परमा भवेत् ।
आयत्यां च तदात्वे च के क्षमास्तान्वदस्व मे ॥ ००२ ॥

न हि तत्र धनं स्फीतं न च संबन्धिबान्धवाः ।
तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्मम ॥ ००३ ॥

दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ॥ ००४ ॥

भीष्म उवाच ॥

संधेयान्पुरुषान्राजन्नसंधेयांश्च तत्त्वतः ।

वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ ००५ ॥

लुब्धः क्रूरस्त्यक्तधर्मा निकृतः शठ एव च ।
क्षुद्रः पापसमाचारः सर्वशङ्की तथालसः ॥ ००६ ॥

दीर्घसूत्रोऽनृजुः कष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥ ००७ ॥

सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
संप्रकीर्णेन्द्रियो लोके यः कामनिरतश्चरेत् ॥ ००८ ॥

असत्यो लोकविद्विष्टः समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥ ००९ ॥

दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरर्थकृती नित्यमिच्छत्यर्थपरश्च यः ॥ ०१० ॥

वहतश्च यथाशक्ति यो न तुष्यति मन्दधीः ।
अमित्रमिव यो भुङ्क्ते सदा मित्रं नरर्षभ ॥ ०११ ॥

अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिषी ॥ ०१२ ॥

अल्पेऽप्यपकृते मूढस्तथाज्ञानात्कृतेऽपि च ।
कार्योपसेवी मित्रेषु मित्रद्वेषी नराधिप ॥ ०१३ ॥

शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोभनः ।
न रज्यति च कल्याणे यस्त्यजेत्तादृशं नरम् ॥ ०१४ ॥

पानपो द्वेषणः क्रूरो निर्घृणः परुषस्तथा ।
परोपतापी मित्रध्रुक्तथा प्राणिवधे रतः ॥ ०१५ ॥

कृतघ्नश्चाधमो लोके न संधेयः कथञ्चन ।
छिद्रान्वेषी न संधेयः संधेयानपि मे शृणु ॥ ०१६ ॥

कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः ।
मित्रज्ञाश्च कृतज्ञाश्च सर्वज्ञाः शोकवर्जिताः ॥ ०१७ ॥

माधुर्यगुणसंपन्नाः सत्यसंधा जितेन्द्रियाः ।
व्यायामशीलाः सततं भृतपुत्राः कुलोद्गताः ॥ ०१८ ॥

रूपवन्तो गुणोपेतास्तथालुब्धा जितश्रमाः ।
दोषैर्वियुक्ताः प्रथितैस्ते ग्राह्याः पार्थिवेन ह ॥ ०१९ ॥

यथाशक्तिसमाचाराः सन्तस्तुष्यन्ति हि प्रभो ।
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥ ०२० ॥

विरक्ताश्च न रुष्यन्ति मनसाप्यर्थकोविदाः ।
आत्मानं पीडयित्वापि सुहृत्कार्यपरायणाः ॥ ०२१ ॥

न विरज्यन्ति मित्रेभ्यो वासो रक्तमिवाविकम् ॥ ०२१ ॥

दोषांश्च लोभमोहादीनर्थेषु युवतिष्वथ ।
न दर्शयन्ति सुहृदां विश्वस्ता बन्धुवत्सलाः ॥ ०२२ ॥

लोष्टकाञ्चनतुल्यार्थाः सुहृत्स्वशठबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ॥ ०२३ ॥

सङ्गृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥ ०२३ ॥

ईदृशैः पुरुषश्रेष्ठैः संधिं यः कुरुते नृपः ।
तस्य विस्तीर्यते राष्ट्रं ज्योत्स्ना ग्रहपतेरिव ॥ ०२४ ॥

शास्त्रनित्या जितक्रोधा बलवन्तो रणप्रियाः ।
क्षान्ताः शीलगुणोपेताः संधेयाः पुरुषोत्तमाः ॥ ०२५ ॥

ये च दोषसमायुक्ता नराः प्रोक्ता मयानघ ।
तेषामप्यधमो राजन्कृतघ्नो मित्रघातकः ॥ ०२६ ॥

त्यक्तव्यः स दुराचारः सर्वेषामिति निश्चयः ॥ ०२६ ॥

युधिष्ठिर उवाच ॥

विस्तरेणार्थसंबन्धं श्रोतुमिच्छामि पार्थिव ।
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तं च मे वद ॥ ०२७ ॥

भीष्म उवाच ॥

हन्त ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ ०२८ ॥

ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः ।
ग्रामं प्रेक्ष्य जनाकीर्णं प्राविशद्भैक्षकाङ्क्षया ॥ ०२९ ॥

तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् ।
ब्रह्मण्यः सत्यसंधश्च दाने च निरतोऽभवत् ॥ ०३० ॥

तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ॥ ०३१ ॥

प्रादात्तस्मै स विप्राय वस्त्रं च सदृशं नवम् ।
नारीं चापि वयोपेतां भर्त्रा विरहितां तदा ॥ ०३२ ॥

एतत्संप्राप्य हृष्टात्मा दस्योः सर्वं द्विजस्तदा ।
तस्मिन्गृहवरे राजंस्तया रेमे स गौतमः ॥ ०३३ ॥

कुटुम्बार्थेषु दस्योः स साहाय्यं चाप्यथाकरोत् ।
तत्रावसत्सोऽथ वर्षाः समृद्धे शबरालये ॥ ०३४ ॥

बाणवेध्ये परं यत्नमकरोच्चैव गौतमः ॥ ०३४ ॥

वक्राङ्गांस्तु स नित्यं वै सर्वतो बाणगोचरे ।
जघान गौतमो राजन्यथा दस्युगणस्तथा ॥ ०३५ ॥

हिंसापरो घृणाहीनः सदा प्राणिवधे रतः ।
गौतमः संनिकर्षेण दस्युभिः समतामियात् ॥ ०३६ ॥

तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा ।
अगच्छन्बहवो मासा निघ्नतः पक्षिणो बहून् ॥ ०३७ ॥

ततः कदाचिदपरो द्विजस्तं देशमागमत् ।
जटी चीराजिनधरः स्वाध्यायपरमः शुचिः ॥ ०३८ ॥

विनीतो नियताहारो ब्रह्मण्यो वेदपारगः ।
सब्रह्मचारी तद्देश्यः सखा तस्यैव सुप्रियम् ॥ ०३९ ॥

तं दस्युग्राममगमद्यत्रासौ गौतमोऽभवत् ॥ ०३९ ॥

स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जकः ।
ग्रामे दस्युजनाकीर्णे व्यचरत्सर्वतोदिशम् ॥ ०४० ॥

ततः स गौतमगृहं प्रविवेश द्विजोत्तमः ।
गौतमश्चापि संप्राप्तस्तावन्योन्येन सङ्गतौ ॥ ०४१ ॥

वक्राङ्गभारहस्तं तं धनुष्पाणिं कृतागसम् ।
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम्  ॥ ०४२  ॥

तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षयागतम् ।
अभिज्ञाय द्विजो व्रीडामगमद्वाक्यमाह च  ॥ ०४३  ॥

किमिदं कुरुषे मौढ्याद्विप्रस्त्वं हि कुलोद्गतः ।
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम्  ॥ ०४४  ॥

पूर्वान्स्मर द्विजाग्र्यांस्तान्प्रख्यातान्वेदपारगान् ।
येषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः  ॥ ०४५  ॥

अवबुध्यात्मनात्मानं सत्यं शीलं श्रुतं दमम् ।
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज  ॥ ०४६  ॥

एवमुक्तः स सुहृदा तदा तेन हितैषिणा ।
प्रत्युवाच ततो राजन्विनिश्चित्य तदार्तवत्  ॥ ०४७  ॥

अधनोऽस्मि द्विजश्रेष्ठ न च वेदविदप्यहम् ।
वृत्त्यर्थमिह संप्राप्तं विद्धि मां द्विजसत्तम  ॥ ०४८  ॥

त्वद्दर्शनात्तु विप्रर्षे कृतार्थं वेद्म्यहं द्विज ।
आत्मानं सह यास्यावः श्वो वसाद्येह शर्वरीम्  ॥ ०४९  ॥

---

# अध्याय १६३

भीष्म उवाच  ॥

तस्यां निशायां व्युष्टायां गते तस्मिन्द्विजोत्तमे ।
निष्क्रम्य गौतमोऽगच्छत्समुद्रं प्रति भारत ॥ ००१ ॥

सामुद्रकान्स वणिजस्ततोऽपश्यत्स्थितान्पथि ।
स तेन सार्थेन सह प्रययौ सागरं प्रति ॥ ००२ ॥

स तु सार्थो महाराज कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥ ००३ ॥

स कथञ्चित्ततस्तस्मात्सार्थान्मुक्तो द्विजस्तदा ।
कांदिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥ ००४ ॥

स सर्वतः परिभ्रष्टः सार्थाद्देशात्तथार्थतः ।
एकाकी व्यद्रवत्तत्र वने किंपुरुषो यथा ॥ ००५ ॥

स पन्थानमथासाद्य समुद्राभिसरं तदा ।
आससाद वनं रम्यं महत्पुष्पितपादपम् ॥ ००६ ॥

सर्वर्तुकैराम्रवनैः पुष्पितैरुपशोभितम् ।
नन्दनोद्देशसदृशं यक्षकिंनरसेवितम् ॥ ००७ ॥

शालतालधवाश्वत्थत्वचागुरुवनैस्तथा ।
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ॥ ००८ ॥

गिरिप्रस्थेषु रम्येषु शुभेषु सुसुगन्धिषु ॥ ००८ ॥

समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै ।
मनुष्यवदनास्त्वन्ये भारुण्डा इति विश्रुताः ॥ ००९ ॥

भूलिङ्गशकुनाश्चान्ये समुद्रं सर्वतोऽभवन् ॥ ००९ ॥

स तान्यतिमनोज्ञानि विहङ्गाभिरुतानि वै ।
शृण्वन्सुरमणीयानि विप्रोऽगच्छत गौतमः  ॥ ०१०  ॥

ततोऽपश्यत्सुरम्ये स सुवर्णसिकताचिते ।
देशभागे समे चित्रे स्वर्गोद्देशसमप्रभे  ॥ ०११  ॥

श्रिया जुष्टं महावृक्षं न्यग्रोधं परिमण्डलम् ।
शाखाभिरनुरूपाभिर्भूषितं छत्रसंनिभम्  ॥ ०१२  ॥

तस्य मूलं सुसंसिक्तं वरचन्दनवारिणा ।
दिव्यपुष्पान्वितं श्रीमत्पितामहसदोपमम्  ॥ ०१३  ॥

तं दृष्ट्वा गौतमः प्रीतो मुनिकान्तमनुत्तमम् ।
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम्  ॥ ०१४  ॥

तमागम्य मुदा युक्तस्तस्याधस्तादुपाविशत्  ॥ ०१४  ॥

तत्रासीनस्य कौरव्य गौतमस्य सुखः शिवः ।
पुष्पाणि समुपस्पृश्य प्रववावनिलः शुचिः  ॥ ०१५  ॥

ह्लादयन्सर्वगात्राणि गौतमस्य तदा नृप  ॥ ०१५  ॥

स तु विप्रः परिश्रान्तः स्पृष्टः पुण्येन वायुना ।
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्यगात्  ॥ ०१६  ॥

ततोऽस्तं भास्करे याते संध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः  ॥ ०१७  ॥

नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः कश्यपस्यात्मसंभवः  ॥ ०१८  ॥

राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि ।
देवकन्यासुतः श्रीमान्विद्वान्देवपतिप्रभः ॥ ०१९ ॥

मृष्टहाटकसंछन्नो भूषणैरर्कसंनिभैः ।
भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन् ॥ ०२० ॥

तमागतं द्विजं दृष्ट्वा विस्मितो गौतमोऽभवत् ।
क्षुत्पिपासापरीतात्मा हिंसार्थी चाप्यवैक्षत ॥ ०२१ ॥

राजधर्मोवाच ॥

स्वागतं भवते विप्र दिष्ट्या प्राप्तोऽसि मे गृहम् ।
अस्तं च सविता यातः संध्येयं समुपस्थिता ॥ ०२२ ॥

मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः ।
पूजितो यास्यसि प्रातर्विधिदृष्टेन कर्मणा ॥ ०२३ ॥

---

# अध्याय १६४

भीष्म उवाच ॥

गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा ।
कौतूहलान्वितो राजन्राजधर्माणमैक्षत ॥ ००१ ॥

राजधर्मोवाच ॥

भोः कश्यपस्य पुत्रोऽहं माता दाक्षायणी च मे ।

अतिथिस्त्वं गुणोपेतः स्वागतं ते द्विजर्षभ ॥ ००२ ॥

भीष्म उवाच ॥

तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
शालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ॥ ००३ ॥

भगीरथरथाक्रान्तान्देशान्गङ्गानिषेवितान् ।
ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ॥ ००४ ॥

वह्निं चापि सुसंदीप्तं मीनांश्चैव सुपीवरान् ।
स गौतमायातिथये न्यवेदयत काश्यपः ॥ ००५ ॥

भुक्तवन्तं च तं विप्रं प्रीतात्मानं महामनाः ।
क्लमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ॥ ००६ ॥

ततो विश्रान्तमासीनं गोत्रप्रश्नमपृच्छत ।
सोऽब्रवीद्गौतमोऽस्मीति ब्राह्म नान्यदुदाहरत् ॥ ००७ ॥

तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम् ।
गन्धाढ्यं शयनं प्रादात्स शिश्ये तत्र वै सुखम् ॥ ००८ ॥

अथोपविष्टं शयने गौतमं बकराड्वदा ।
पप्रच्छ काश्यपो वाग्मी किमागमनकारणम् ॥ ००९ ॥

ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते ।
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥ ०१० ॥

तं काश्यपोऽब्रवीत्प्रीतो नोत्कण्ठां कर्तुमर्हसि ।
कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ॥ ०११ ॥

चतुर्विधा ह्यर्थगतिर्बृहस्पतिमतं यथा ।
पारंपर्यं तथा दैवं कर्म मित्रमिति प्रभो ॥ ०१२ ॥

प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वं च मम त्वयि ।
सोऽहं तथा यतिष्यामि भविष्यसि यथार्थवान् ॥ ०१३ ॥

ततः प्रभातसमये सुखं पृष्ट्वाब्रवीदिदम् ।
गच्छ सौम्य पथानेन कृतकृत्यो भविष्यसि ॥ ०१४ ॥

इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् ।
विरूपाक्ष इति ख्यातः सखा मम महाबलः ॥ ०१५ ॥

तं गच्छ द्विजमुख्य त्वं मम वाक्यप्रचोदितः ।
कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ ०१६ ॥

इत्युक्तः प्रययौ राजन्गौतमो विगतक्लमः ।
फलान्यमृतकल्पानि भक्षयन्स्म यथेष्टतः ॥ ०१७ ॥

चन्दनागुरुमुख्यानि त्वक्पत्राणां वनानि च ।
तस्मिन्पथि महाराज सेवमानो द्रुतं ययौ ॥ ०१८ ॥

ततो मेरुव्रजं नाम नगरं शैलतोरणम् ।
शैलप्राकारवप्रं च शैलयन्त्रार्गलं तथा ॥ ०१९ ॥

विदितश्चाभवत्तस्य राक्षसेन्द्रस्य धीमतः ।
प्रहितः सुहृदा राजन्प्रीयता वै प्रियातिथिः ॥ ०२० ॥

ततः स राक्षसेन्द्रः स्वान्प्रेष्यानाह युधिष्ठिर ।
गौतमो नगरद्वाराच्छीघ्रमानीयतामिति ॥ ०२१ ॥

ततः पुरवरात्तस्मात्पुरुषाः श्वेतवेष्टनाः ।

गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् ॥ ०२२ ॥

ते तमूचुर्महाराज प्रेष्या रक्षःपतेर्द्विजम् ।
त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति ॥ ०२३ ॥

राक्षसाधिपतिर्वीरो विरूपाक्ष इति श्रुतः ।
स त्वां त्वरति वै द्रष्टुं तत्क्षिप्रं संविधीयताम् ॥ ०२४ ॥

ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः ।
गौतमो नगरर्द्धिं तां पश्यन्परमविस्मितः ॥ ०२५ ॥

तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् ।
दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ॥ ०२६ ॥

---

# अध्याय १६५

भीष्म उवाच ॥

ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ ००१ ॥

पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम् ।
न तत्र व्याजहारान्यद्गोत्रमात्राद्दते द्विजः ॥ ००२ ॥

ब्रह्मवर्चसहीनस्य स्वाध्यायविरतस्य च ।
गोत्रमात्रविदो राजा निवासं समपृच्छत ॥ ००३ ॥

क्व ते निवासः कल्याण किङ्गोत्रा ब्राह्मणी च ते ।

तत्त्वं ब्रूहि न भीः कार्या विश्रमस्व यथासुखम् ॥ ००४ ॥

गौतम उवाच ॥

मध्यदेशप्रसूतोऽहं वासो मे शबरालये ।
शूद्रा पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ ००५ ॥

भीष्म उवाच ॥

ततो राजा विममृशे कथं कार्यमिदं भवेत् ।
कथं वा सुकृतं मे स्यादिति बुद्ध्यान्वचिन्तयत् ॥ ००६ ॥

अयं वै जननाद्विप्रः सुहृत्तस्य महात्मनः ।
संप्रेषितश्च तेनायं काश्यपेन ममान्तिकम् ॥ ००७ ॥

तस्य प्रियं करिष्यामि स हि मामाश्रितः सदा ।
भ्राता मे बान्धवश्चासौ सखा च हृदयङ्गमः ॥ ००८ ॥

कार्त्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः ।
तत्रायमपि भोक्ता वै देयमस्मै च मे धनम् ॥ ००९ ॥

ततः सहस्रं विप्राणां विदुषां समलङ्कृतम् ।
स्नातानामनुसंप्राप्तमहतक्षौमवाससाम् ॥ ०१० ॥

तानागतान्द्विजश्रेष्ठान्विरूपाक्षो विशां पते ।
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ ०११ ॥

बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात् ।
भूमौ वरकुथास्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ ०१२ ॥

तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः ।

व्यराजन्त महाराज नक्षत्रपतयो यथा ॥ ०१३ ॥

ततो जाम्बूनदाः पात्रीर्वज्राङ्का विमलाः शुभाः ।
वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृताप्लुताः ॥ ०१४ ॥

तस्य नित्यं तथाषाढ्यां माघ्यां च बहवो द्विजाः ।
ईप्सितं भोजनवरं लभन्ते सत्कृतं सदा ॥ ०१५ ॥

विशेषतस्तु कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति ।
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः ॥ ०१६ ॥

सुवर्णं रजतं चैव मणीनथ च मौक्तिकम् ।
वज्रान्महाधनांश्चैव वैडूर्याजिनराङ्कवान् ॥ ०१७ ॥

रत्नराशीन्विनिक्षिप्य दक्षिणार्थे स भारत ।
ततः प्राह द्विजश्रेष्ठान्विरूपाक्षो महायशाः ॥ ०१८ ॥

गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः ।
येषु येषु च भाण्डेषु भुक्तं वो द्विजसत्तमाः ॥ ०१९ ॥

तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत ॥ ०१९ ॥

इत्युक्तवचने तस्मिन्राक्षसेन्द्रे महात्मनि ।
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः ॥ ०२० ॥

ततो महार्हैस्ते सर्वे रत्नैरभ्यर्चिताः शुभैः ।
ब्राह्मणा मृष्टवसनाः सुप्रीताः स्म तदाभवन् ॥ ०२१ ॥

ततस्तान्राक्षसेन्द्रश्च द्विजानाह पुनर्वचः ।
नानादिगागतान्राजन्राक्षसान्प्रतिषिध्य वै ॥ ०२२ ॥

अध्यैकदिवसं विप्रा न वोऽस्तीह भयं क्वचित् ।
राक्षसेभ्यः प्रमोदध्वमिष्टतो यात माचिरम् ॥ ०२३ ॥

ततः प्रदुद्रुवुः सर्वे विप्रसंघाः समन्ततः ।
गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः ॥ ०२४ ॥

कृच्छ्रात्समुद्वहन्वीर न्यग्रोधं समुपागमत् ।
न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च ह ॥ ०२५ ॥

ततस्तमभ्यगाद्राजन्राजधर्मा खगोत्तमः ।
स्वागतेनाभ्यनन्दच्च गौतमं मित्रवत्सलः ॥ ०२६ ॥

तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयत्खगः ।
पूजां चाप्यकरोद्धीमान्भोजनं चाप्यकल्पयत् ॥ ०२७ ॥

स भुक्तवान्सुविश्रान्तो गौतमोऽचिन्तयत्तदा ।
हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया ॥ ०२८ ॥

गृहीतो लोभमोहाद्वै दूरं च गमनं मम ॥ ०२८ ॥

न चास्ति पथि भोक्तव्यं प्राणसंधारणं मम ।
किं कृत्वा धारयेयं वै प्राणानित्यभ्यचिन्तयत् ॥ ०२९ ॥

ततः स पथि भोक्तव्यं प्रेक्षमाणो न किञ्चन ।
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत् ॥ ०३० ॥

अयं बकपतिः पार्श्वे मांसराशिः स्थितो मम ।
इमं हत्वा गृहीत्वा च यास्येऽहं समभिद्रुतम् ॥ ०३१ ॥

# अध्याय १६६

भीष्म उवाच ॥

अथ तत्र महार्चिष्माननलो वातसारथिः ।
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत् ॥ ००१ ॥

स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट्तदा ।
कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागरत् ॥ ००२ ॥

ततोऽलातेन दीप्तेन विश्वस्तं निजघान तम् ।
निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान् ॥ ००३ ॥

स तं विपक्षरोमाणं कृत्वाग्नावपचत्तदा ।
तं गृहीत्वा सुवर्णं च ययौ द्रुततरं द्विजः ॥ ००४ ॥

ततोऽन्यस्मिन्गते चाह्नि विरूपाक्षोऽब्रवीत्सुतम् ।
न प्रेक्षे राजधर्माणमद्य पुत्र खगोत्तमम् ॥ ००५ ॥

स पूर्वसंध्यां ब्रह्माणं वन्दितुं याति सर्वदा ।
मां चादृष्ट्वा कदाचित्स न गच्छति गृहान्खगः ॥ ००६ ॥

उभे द्विरात्रं संध्ये वै नाभ्यगात्स ममालयम् ।
तस्मान्न शुध्यते भावो मम स ज्ञायतां सुहृत् ॥ ००७ ॥

स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः ।
तं गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः ॥ ००८ ॥

दुराचारस्तु दुर्बुद्धिरिङ्गितैर्लक्षितो मया ।
निष्क्रियो दारुणाकारः कृष्णो दस्युरिवाधमः ॥ ००९ ॥

गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम ।
पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम्  ॥ ०१० ॥

ज्ञायतां स विशुद्धात्मा यदि जीवति माचिरम्  ॥ ०१० ॥

स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ ।
न्यग्रोधं तत्र चापश्यत्कङ्कालं राजधर्मणः  ॥ ०११ ॥

स रुदन्नगमत्पुत्रो राक्षसेन्द्रस्य धीमतः ।
त्वरमाणः परं शक्त्या गौतमग्रहणाय वै  ॥ ०१२ ॥

ततोऽविदूरे जगृहुर्गौतमं राक्षसास्तदा ।
राजधर्मशरीरं च पक्षास्थिचरणोज्झितम्  ॥ ०१३ ॥

तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः ।
राज्ञश्च दर्शयामासुः शरीरं राजधर्मणः  ॥ ०१४ ॥

कृतघ्नं पुरुषं तं च गौतमं पापचेतसम्  ॥ ०१४ ॥

रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः ।
आर्तनादश्च सुमहानभूत्तस्य निवेशने  ॥ ०१५ ॥

सस्त्रीकुमारं च पुरं बभूवास्वस्थमानसम् ।
अथाब्रवीन्नृपः पुत्रं पापोऽयं वध्यतामिति  ॥ ०१६ ॥

अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः ।
पापाचारः पापकर्मा पापात्मा पापनिश्चयः  ॥ ०१७ ॥

हन्तव्योऽयं मम मतिर्भवद्भिरिति राक्षसाः  ॥ ०१७ ॥

इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः ।

नैच्छन्त तं भक्षयितुं पापकर्मायमित्युत ॥ ०१८ ॥

दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः ।
इत्यूचुस्तं महाराज राक्षसेन्द्रं निशाचराः ॥ ०१९ ॥

शिरोभिश्च गता भूमिमूचू रक्षोगणाधिपम् ।
न दातुमर्हसि त्वं नो भक्षणायास्य किल्बिषम् ॥ ०२० ॥

एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान् ।
दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः ॥ ०२१ ॥

इत्युक्ते तस्य ते दासाः शूलमुद्गरपाणयः ।
छित्त्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा ॥ ०२२ ॥

दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम् ।
क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते ॥ ०२३ ॥

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः ॥ ०२४ ॥

मित्रद्रोही नृशंसश्च कृतघ्नश्च नराधमः ।
क्रव्यादैः कृमिभिश्चान्यैर्न भुज्यन्ते हि तादृशाः ॥ ०२५ ॥

---

# अध्याय १६७

भीष्म उवाच ॥

ततश्चितां बकपतेः कारयामास राक्षसः ।

रत्नैर्गन्धैश्च बहुभिर्वस्त्रैश्च समलङ्कृताम् ॥ ००१ ॥

तत्र प्रज्वाल्य नृपते बकराजं प्रतापवान् ।
प्रेतकार्याणि विधिवद्राक्षसेन्द्रश्चकार ह ॥ ००२ ॥

तस्मिन्कालेऽथ सुरभिर्देवी दाक्षायणी शुभा ।
उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी ॥ ००३ ॥

तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदानघ ।
सोऽपतद्वै ततस्तस्यां चितायां राजधर्मणः ॥ ००४ ॥

ततः सञ्जीवितस्तेन बकराजस्तदानघ ।
उत्पत्य च समेयाय विरूपाक्षं बकाधिपः ॥ ००५ ॥

ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा ।
प्राह चेदं विरूपाक्षं दिष्ट्यायं जीवतीत्युत ॥ ००६ ॥

श्रावयामास चेन्द्रस्तं विरूपाक्षं पुरातनम् ।
यथा शापः पुरा दत्तो ब्रह्मणा राजधर्मणः ॥ ००७ ॥

यदा बकपती राजन्ब्रह्माणं नोपसर्पति ।
ततो रोषादिदं प्राह बकेन्द्राय पितामहः ॥ ००८ ॥

यस्मान्मूढो मम सदो नागतोऽसौ बकाधमः ।
तस्माद्वधं स दुष्टात्मा नचिरात्समवाप्स्यति ॥ ००९ ॥

तदायं तस्य वचनान्निहतो गौतमेन वै ।
तेनैवामृतसिक्तश्च पुनः सञ्जीवितो बकः ॥ ०१० ॥

राजधर्मा ततः प्राह प्रणिपत्य पुरंदरम् ।
यदि तेऽनुग्रहकृता मयि बुद्धिः पुरंदर ॥ ०११ ॥

सखायं मे सुदयितं गौतमं जीवयेत्युत ॥ ०११ ॥

तस्य वाक्यं समाज्ञाय वासवः पुरुषर्षभ ।
सञ्जीवयित्वा सख्ये वै प्रादात्तं गौतमं तदा ॥ ०१२ ॥

सभाण्डोपस्करं राजंस्तमासाद्य बकाधिपः ।
संपरिष्वज्य सुहृदं प्रीत्या परमया युतः ॥ ०१३ ॥

अथ तं पापकर्माणं राजधर्मा बकाधिपः ।
विसर्जयित्वा सधनं प्रविवेश स्वमालयम् ॥ ०१४ ॥

यथोचितं च स बको ययौ ब्रह्मसदस्तदा ।
ब्रह्मा च तं महात्मानमातिथ्येनाभ्यपूजयत् ॥ ०१५ ॥

गौतमश्चापि संप्राप्य पुनस्तं शबरालयम् ।
शूद्रायां जनयामास पुत्रान्दुष्कृतकारिणः ॥ ०१६ ॥

शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा ।
कुक्षौ पुनर्भ्वां भार्यायां जनयित्वा चिरात्सुतान् ॥ ०१७ ॥

निरयं प्राप्स्यति महत्कृतघ्नोऽयमिति प्रभो ॥ ०१७ ॥

एतत्प्राह पुरा सर्वं नारदो मम भारत ।
संस्मृत्य चापि सुमहदाख्यानं पुरुषर्षभ ॥ ०१८ ॥

मयापि भवते सर्वं यथावदुपवर्णितम् ॥ ०१८ ॥

कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ ०१९ ॥

मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।
मित्रध्रुङ्निरयं घोरमनन्तं प्रतिपद्यते ॥ ०२० ॥

कृतज्ञेन सदा भाव्यं मित्रकामेन चानघ ।
मित्रात्प्रभवते सत्यं मित्रात्प्रभवते बलम् ॥ ०२१ ॥

सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः ॥ ०२१ ॥

परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः ।
मित्रद्रोही कुलाङ्गारः पापकर्मा नराधमः ॥ ०२२ ॥

एष धर्मभृतां श्रेष्ठ प्रोक्तः पापो मया तव ।
मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि ॥ ०२३ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ ०२४ ॥

---

# मोक्शधर्मपर्व

## सेनजित्पि ण्गलागीते

## अध्याय १६८

युधिष्ठिर उवाच ॥

धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥ ००१ ॥

भीष्म उवाच ॥

सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलं तपः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ ००२ ॥

यस्मिन्यस्मिंस्तु विनये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ००३ ॥

यथा यथा च पर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ ००४ ॥

एवं व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥ ००५ ॥

युधिष्ठिर उवाच ॥

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ॥ ००६ ॥

भीष्म उवाच ॥

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ्शोकस्यापचितिं चरेत् ॥ ००७ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदित्यब्रवीद्वचः ॥ ००८ ॥

पुत्रशोकाभिसंतप्तं राजानं शोकविह्वलम् ।

विषण्णवदनं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ ००९ ॥

किं नु खल्वसि मूढस्त्वं शोच्यः किमनुशोचसि ।
यदा त्वामपि शोचन्तः शोच्या यास्यन्ति तां गतिम् ॥ ०१० ॥

त्वं चैवाहं च ये चान्ये त्वां राजन्पर्युपासते ।
सर्वे तत्र गमिष्यामो यत एवागता वयम् ॥ ०११ ॥

सेनजिदुवाच ॥

का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन ।
किं ज्ञानं किं श्रुतं वा ते यत्प्राप्य न विषीदसि ॥ ०१२ ॥

ब्राह्मण उवाच ॥

पश्य भूतानि दुःखेन व्यतिषक्तानि सर्वशः ।
आत्मापि चायं न मम सर्वा वा पृथिवी मम ॥ ०१३ ॥

यथा मम तथान्येषामिति बुद्ध्या न मे व्यथा ।
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे ॥ ०१४ ॥

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ०१५ ॥

एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा ।
तेषु स्नेहो न कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ ०१६ ॥

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्वासौ वेद न त्वं तं कः सन्कमनुशोचसि ॥ ०१७ ॥

तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम् ।

सुखात्सञ्जायते दुःखमेवमेतत्पुनः पुनः ॥ ०१८ ॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ॥ ०१८ ॥

सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥ ०१९ ॥

नालं सुखाय सुहृदो नालं दुःखाय शत्रवः ।
न च प्रज्ञालमर्थानां न सुखानामलं धनम् ॥ ०२० ॥

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ०२१ ॥

बुद्धिमन्तं च मूढं च शूरं भीरुं जडं कविम् ।
दुर्बलं बलवन्तं च भागिनं भजते सुखम् ॥ ०२२ ॥

धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ ०२३ ॥

ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः ॥ ०२४ ॥

अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्त्यप्राप्तिं सुखामाहुर्दुःखमन्तरमन्तयोः ॥ ०२५ ॥

ये तु बुद्धिसुखं प्राप्ता द्वंद्वातीता विमत्सराः ।
तान्नैवार्था न चानर्था व्यथयन्ति कदाचन ॥ ०२६ ॥

अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम् ।
तेऽतिवेलं प्रहृष्यन्ति संतापमुपयान्ति च ॥ ०२७ ॥

नित्यप्रमुदिता मूढा दिवि देवगणा इव ।
अवलेपेन महता परिदृब्धा विचेतसः ॥ ०२८ ॥

सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् ।
भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे ॥ ०२९ ॥

सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ ०३० ॥

शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ०३१ ॥

बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम् ।
दान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ॥ ०३२ ॥

एतां बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः ।
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ ०३३ ॥

यन्निमित्तं भवेच्छोकस्त्रासो वा दुःखमेव वा ।
आयासो वा यतोमूलस्तदेकाङ्गमपि त्यजेत् ॥ ०३४ ॥

यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामानुसारी पुरुषः कामाननु विनश्यति ॥ ०३५ ॥

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ०३६ ॥

पूर्वदेहकृतं कर्म शुभं वा यदि वाशुभम् ।
प्राज्ञं मूढं तथा शूरं भजते यादृशं कृतम् ॥ ०३७ ॥

एवमेव किलैतानि प्रियाण्येवाप्रियाणि च ।

जीवेषु परिवर्तन्ते दुःखानि च सुखानि च  ॥ ०३८  ॥

तदेवं बुद्धिमास्थाय सुखं जीवेद्गुणान्वितः ।
सर्वान्कामाञ्जुगुप्सेत सङ्गान्कुर्वीत पृष्ठतः  ॥ ०३९  ॥

वृत्त एष हृदि प्रौढो मृत्युरेष मनोमयः  ॥ ०३९  ॥

यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरात्मा च आत्मन्येव प्रसीदति  ॥ ०४०  ॥

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापार्थं सर्वं संपद्यते तदा  ॥ ०४१  ॥

न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा  ॥ ०४२  ॥

उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यसि  ॥ ०४३  ॥

यदा न कुरुते धीरः सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा  ॥ ०४४  ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्  ॥ ०४५  ॥

अत्र पिङ्गलया गीता गाथाः श्रूयन्ति पार्थिव ।
यथा सा कृच्छ्रकालेऽपि लेभे धर्मं सनातनम्  ॥ ०४६  ॥

सङ्केते पिङ्गला वेश्या कान्तेनासीद्विनाकृता ।
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा  ॥ ०४७  ॥

पिङ्गलोवाच ॥

उन्मत्ताहमनुन्मत्तं कान्तमन्ववसं चिरम् ।
अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ॥ ०४८ ॥

एकस्थूणं नवद्वारमपिधास्याम्यगारकम् ।
का हि कान्तमिहायान्तमयं कान्तेति मंस्यते ॥ ०४९ ॥

अकामाः कामरूपेण धूर्ता नरकरूपिणः ।
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धास्मि जागृमि ॥ ०५० ॥

अनर्थोऽपि भवत्यर्थो दैवात्पूर्वकृतेन वा ।
संबुद्धाहं निराकारा नाहमद्याजितेन्द्रिया ॥ ०५१ ॥

सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ॥ ०५२ ॥

भीष्म उवाच ॥

एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखम् ॥ ०५३ ॥

---

# पितापुत्रसंवादः

## अध्याय १६९

युधिष्ठिर उवाच ॥

अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर ॥ ००२ ॥

द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै ।
बभूव पुत्रो मेधावी मेधावी नाम नामतः ॥ ००३ ॥

सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मार्थकुशलो लोकतत्त्वविचक्षणः ॥ ००४ ॥

धीरः किं स्वित्तात कुर्यात्प्रजान ;न्क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तदाचक्ष्व यथार्थयोगं ; ममानुपूर्व्या येन धर्मं चरेयम् ॥ ००५ ॥

पितोवाच ॥

वेदानधीत्य ब्रह्मचर्येण पुत्र ; पुत्रानिच्छेत्पावनार्थं पितृणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो ; वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ००६ ॥

पुत्र उवाच ॥

एवमभ्याहते लोके समन्तात्परिवारिते ।
अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ००७ ॥

पितोवाच ॥

कथमभ्याहतो लोकः केन वा परिवारितः ।

अमोघाः काः पतन्तीह किं नु भीषयसीव माम्  ॥ ००८  ॥

पुत्र उवाच  ॥

मृत्युनाभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे  ॥ ००९  ॥

यदाहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।
सोऽहं कथं प्रतीक्षिष्ये जालेनापिहितश्चरन्  ॥ ०१०  ॥

रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा ।
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा  ॥ ०११  ॥

तदेव वन्ध्यं दिवसमिति विद्याद्विचक्षणः  ॥ ०११  ॥

अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ।
शष्पाणीव विचिन्वन्तमन्यत्रगतमानसम्  ॥ ०१२  ॥

वृकीवोरणमासाद्य मृत्युरादाय गच्छति  ॥ ०१२  ॥

अद्यैव कुरु यच्छ्रेयो मा त्वा कालोऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति  ॥ ०१३  ॥

श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम्  ॥ ०१४  ॥

को हि जानाति कस्याद्य मृत्युसेना निवेक्ष्यते  ॥ ०१४  ॥

युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।
कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम्  ॥ ०१५  ॥

मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः ।
कृत्वा कार्यमकार्यं वा पुष्टिमेषां प्रयच्छति ॥ ०१६ ॥

तं पुत्रपशुसंमत्तं व्यासक्तमनसं नरम् ।
सुप्तं व्याघ्रं महौघो वा मृत्युरादाय गच्छति ॥ ०१७ ॥

सञ्चिन्वानकमेवैकं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति ॥ ०१८ ॥

इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥ ०१९ ॥

कृतानां फलमप्राप्तं कर्मणां फलसङ्गिनम् ।
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ॥ ०२० ॥

मृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ।
अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि ॥ ०२१ ॥

जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनम् ।
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ ०२२ ॥

मृत्योर्वा गृहमेवैतद्या ग्रामे वसतो रतिः ।
देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ ०२३ ॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ०२४ ॥

न हिंसयति यः प्राणान्मनोवाक्कायहेतुभिः ।
जीवितार्थापनयनैः कर्मभिर्न स बध्यते ॥ ०२५ ॥

न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ।

ऋते सत्यमसंत्याज्यं सत्ये ह्यमृतमाश्रितम्  ॥ ०२६  ॥

तस्मात्सत्यव्रताचारः सत्ययोगपरायणः ।
सत्यारामः समो दान्तः सत्येनैवान्तकं जयेत्  ॥ ०२७  ॥

अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युमापद्यते मोहात्सत्येनापद्यतेऽमृतम्  ॥ ०२८  ॥

सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः ।
समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत्  ॥ ०२९  ॥

शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ।
वाङ्मनःकर्मयज्ञश्च भविष्याम्युदगायने  ॥ ०३०  ॥

पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ।
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत्  ॥ ०३१  ॥

यस्य वाङ्मनसी स्यातां सम्यक्प्रणिहिते सदा ।
तपस्त्यागश्च योगश्च स वै सर्वमवाप्नुयात्  ॥ ०३२  ॥

नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं बलम् ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम्  ॥ ०३३  ॥

आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा ।
आत्मन्येव भविष्यामि न मां तारयति प्रजा  ॥ ०३४  ॥

नैतादृशं ब्राह्मणस्यास्ति वित्तं; यथैकता समता सत्यता च ।
शीले स्थितिर्दण्डनिधानमार्जवं; ततस्ततश्चोपरमः क्रियाभ्यः  ॥ ०३५  ॥

किं ते धनैर्बान्धवैर्वापि किं ते; किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं; पितामहस्ते क्व गतः पिता च  ॥ ०३६  ॥

भीष्म उवाच ॥

पुत्रस्यैतद्वचः श्रुत्वा तथाकार्षीत्पिता नृप ।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ॥ ०३७ ॥

---

# शम्याकगीता

## अध्याय १७०

युधिष्ठिर उवाच ॥

धनिनो वाधना ये च वर्तयन्ति स्वतन्त्रिणः ।
सुखदुःखागमस्तेषां कः कथं वा पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शम्याकेन विमुक्तेन गीतं शान्तिगतेन ह ॥ ००२ ॥

अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमास्थितः ।
क्लिश्यमानः कुदारेण कुचैलेन बुभुक्षया ॥ ००३ ॥

उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ ००४ ॥

तयोरेकतरे मार्गे यद्येनमभिसंनयेत् ।

न सुखं प्राप्य संहृष्येन्न दुःखं प्राप्य सञ्ज्वरेत्  ॥ ००५  ॥

न वै चरसि यच्छ्रेय आत्मनो वा यदीहसे ।
अकामात्मापि हि सदा धुरमुद्यम्य चैव हि  ॥ ००६  ॥

अकिञ्चनः परिपतन्सुखमास्वादयिष्यसि ।
अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव हि  ॥ ००७  ॥

आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रमथो ह्येतद्दुर्लभं सुलभं सताम्  ॥ ००८  ॥

अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्वशः ।
अवेक्षमाणस्त्री.ण्ल्लोकान्न तुल्यमुपलक्षये  ॥ ००९  ॥

आकिञ्चन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम्  ॥ ०१०  ॥

आकिञ्चन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा  ॥ ०११  ॥

नैवास्याग्निर्न चादित्यो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनज्यानिनिर्मुक्तस्य निराशिषः  ॥ ०१२  ॥

तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः  ॥ ०१३  ॥

धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः ।
तिर्यगीक्षः शुष्कमुखः पापको भ्रुकुटीमुखः  ॥ ०१४  ॥

निर्दशंश्चाधरोष्ठं च क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम्  ॥ ०१५  ॥

श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥ ०१६ ॥

अथैनं रूपमानश्च धनमानश्च विन्दति ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ॥ ०१७ ॥

इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ ०१७ ॥

स प्रसिक्तमना भोगान्विसृज्य पितृसञ्चितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ ०१८ ॥

तमतिक्रान्तमर्यादमाददानं ततस्ततः ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ ०१९ ॥

एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते गात्रसंस्पर्शजानि च ॥ ०२० ॥

तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह ॥ ०२१ ॥

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥ ०२२ ॥

इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ ०२३ ॥

# म ण्किगीता

## अध्याय १७१

युधिष्ठिर उवाच ॥

ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् ॥ ००१ ॥

भीष्म उवाच ॥

सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।
निर्वेदश्चाविवित्सा च यस्य स्यात्स सुखी नरः ॥ ००२ ॥

एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखं चानुत्तमं सताम् ॥ ००३ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ००४ ॥

ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः ।
केनचिद्धनशेषेण क्रीतवान्दम्यगोयुगम् ॥ ००५ ॥

सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥ ००६ ॥

तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ००७ ॥

ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ॥ ००८ ॥

न चैवाविहितं शक्यं दक्षेणापीहितुं धनम् ।
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ॥ ००९ ॥

कृतस्य पूर्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः ।
इमं पश्यत सङ्गत्या मम दैवमुपप्लवम् ॥ ०१० ॥

उद्यम्योद्यम्य मे दम्यौ विषमेणेव गच्छति ।
उत्क्षिप्य काकतालीयमुन्माथेनेव जम्बुकः ॥ ०११ ॥

मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदमतो नैवास्ति पौरुषम् ॥ ०१२ ॥

यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥ ०१३ ॥

तस्मान्निर्वेद एवेह गन्तव्यः सुखमीप्सता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥ ०१४ ॥

अहो सम्यक्शुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥ ०१५ ॥

यः कामान्प्राप्नुयात्सर्वान्यश्चैनान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ०१६ ॥

नान्तं सर्वविवित्सानां गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मन्दस्य वर्धते ॥ ०१७ ॥

निवर्तस्व विवित्साभ्यः शाम्य निर्विद्य मामक ।
असकृच्चासि निकृतो न च निर्विद्यसे तनो ॥ ०१८ ॥

यदि नाहं विनाश्यस्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथा त्वं वित्तकामुक ॥ ०१९ ॥

सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः ।
कदा विमोक्ष्यसे मूढ धनेहां धनकामुक ॥ ०२० ॥

अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव ।
किं नैव जातु पुरुषः परेषां प्रेष्यतामियात् ॥ ०२१ ॥

न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
त्यक्त्वा सर्वसमारम्भान्प्रतिबुद्धोऽस्मि जागृमि ॥ ०२२ ॥

नूनं ते हृदयं काम वज्रसारमयं दृधम् ।
यदनर्थशताविष्टं शतधा न विदीर्यते ॥ ०२३ ॥

त्यजामि काम त्वां चैव यच्च किञ्चित्प्रियं तव ।
तवाहं सुखमन्विच्छन्नात्मन्युपलभे सुखम् ॥ ०२४ ॥

काम जानामि ते मूलं सङ्कल्पात्किल जायसे ।
न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥ ०२५ ॥

ईहा धनस्य न सुखा लब्ध्वा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ ०२६ ॥

परेत्य यो न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव च मार्गति ॥ ०२७ ॥

अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम् ।
मद्विलापनमेतत्तु प्रतिबुद्धोऽस्मि संत्यज ॥ ०२८ ॥

य इमं मामकं देहं भूतग्रामः समाश्रितः ।

स यात्वितो यथाकामं वसतां वा यथासुखम् ॥ ०२९ ॥

न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु ।
तस्मादुत्सृज्य सर्वान्वः सत्यमेवाश्रयाम्यहम् ॥ ०३० ॥

सर्वभूतान्यहं देहे पश्यन्मनसि चात्मनः ।
योगे बुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ॥ ०३१ ॥

विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः ।
यथा मा त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥ ०३२ ॥

त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णाशोकश्रमाणां हि त्वं काम प्रभवः सदा ॥ ०३३ ॥

धननाशोऽधिकं दुःखं मन्ये सर्वमहत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनच्युतम् ॥ ०३४ ॥

अवज्ञानसहस्रैस्तु दोषाः कष्टतराधने ।
धने सुखकला या च सापि दुःखैर्विधीयते ॥ ०३५ ॥

धनमस्येति पुरुषं पुरा निघ्नन्ति दस्यवः ।
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ॥ ०३६ ॥

मन्दलोलुपता दुःखमिति बुद्धं चिरान्मया ।
यद्यदालम्बसे काम तत्तदेवानुरुध्यसे ॥ ०३७ ॥

अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः ।
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ॥ ०३८ ॥

पातालमिव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि ।
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥ ०३९ ॥

निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निर्वृतिं परमां प्राप्य नाद्य कामान्विचिन्तये ॥ ०४० ॥

अतिक्लेशान्सहामीह नाहं बुध्याम्यबुद्धिमान् ।
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ॥ ०४१ ॥

परित्यजामि काम त्वां हित्वा सर्वमनोगतीः ।
न त्वं मया पुनः काम नस्योतेनेव रंस्यसे ॥ ०४२ ॥

क्षमिष्येऽक्षममाणानां न हिंसिष्ये च हिंसितः ।
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ॥ ०४३ ॥

तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन् ।
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ॥ ०४४ ॥

निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्वभूतदयां चैव विद्धि मां शरणागतम् ॥ ०४५ ॥

तस्मात्कामश्च लोभश्च तृष्णा कार्पण्यमेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्त्वस्थो ह्यस्मि सांप्रतम् ॥ ०४६ ॥

प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च ।
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ॥ ०४७ ॥

यद्यत्त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥ ०४८ ॥

कामान्व्युदस्य धुनुते यत्किञ्चित्पुरुषो रजः ।
कामक्रोधोद्भवं दुःखमह्रीररतिरेव च ॥ ०४९ ॥

एष ब्रह्मप्रविष्टोऽहं ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम्  ॥ ०५० ॥

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्  ॥ ०५१ ॥

आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम् ।
प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी  ॥ ०५२ ॥

एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।
सर्वान्कामान्परित्यज्य प्राप्य ब्रह्म महत्सुखम्  ॥ ०५३ ॥

दम्यनाशकृते मङ्किरमरत्वं किलागमत् ।
अच्छिनत्काममूलं स तेन प्राप महत्सुखम्  ॥ ०५४ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन जनकेन प्रशाम्यता  ॥ ०५५ ॥

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन  ॥ ०५६ ॥

अत्रैवोदाहरन्तीमं बोध्यस्य पदसञ्चयम् ।
निर्वेदं प्रति विन्यस्तं प्रतिबोध युधिष्ठिर  ॥ ०५७ ॥

बोध्यं दान्तमृषिं राजा नहुषः पर्यपृच्छत ।
निर्वेदाच्छान्तिमापन्नं शान्तं प्रज्ञानतर्पितम्  ॥ ०५८ ॥

उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे ।
कां बुद्धिं समनुध्याय शान्तश्चरसि निर्वृतः  ॥ ०५९ ॥

बोध्य उवाच  ॥

उपदेशेन वर्तामि नानुशास्मीह कञ्चन ।
लक्षणं तस्य वक्ष्येऽहं तत्स्वयं प्रविमृश्यताम्  ॥ ०६०  ॥

पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम  ॥ ०६१  ॥

---

# प्रह्लादाजगरसंवादः

## अध्याय १७२

युधिष्ठिर उवाच  ॥

केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।
किं च कुर्वन्नरो लोके प्राप्नोति परमां गतिम्  ॥ ००१  ॥

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च  ॥ ००२  ॥

चरन्तं ब्राह्मणं कञ्चित्कल्यचित्तमनामयम् ।
पप्रच्छ राजन्प्रह्लादो बुद्धिमान्प्राज्ञसंमतः  ॥ ००३  ॥

स्वस्थः शक्तो मृदुर्दान्तो निर्विवित्सोऽनसूयकः ।
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत्  ॥ ००४  ॥

नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन्न किञ्चिदवमन्यसे ॥ ००५ ॥

स्रोतसा ह्रियमाणासु प्रजास्वविमना इव ।
धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ॥ ००६ ॥

नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ ००७ ॥

का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने ।
क्षिप्रमाचक्ष्व मे ब्रह्मञ्श्रेयो यदिह मन्यसे ॥ ००८ ॥

अनुयुक्तः स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥ ००९ ॥

पश्यन्प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः ।
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥ ०१० ॥

स्वभावादेव संदृश्य वर्तमानाः प्रवृत्तयः ।
स्वभावनिरताः सर्वाः परितप्ये न केनचित् ॥ ०११ ॥

पश्यन्प्रह्लाद संयोगान्विप्रयोगपरायणान् ।
सञ्चयांश्च विनाशान्तान्न क्वचिद्विदधे मनः ॥ ०१२ ॥

अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ॥ ०१३ ॥

जलजानामपि ह्यन्तं पर्यायेणोपलक्षये ।
महतामपि कायानां सूक्ष्माणां च महोदधौ ॥ ०१४ ॥

जङ्गमस्थावराणां च भूतानामसुराधिप ।

पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥ ०१५ ॥

अन्तरिक्षचराणां च दानवोत्तम पक्षिणाम् ।
उत्तिष्ठति यथाकालं मृत्युर्बलवतामपि ॥ ०१६ ॥

दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च ।
ज्योतींषि च यथाकालं पतमानानि लक्षये ॥ ०१७ ॥

इति भूतानि संपश्यन्ननुषक्तानि मृत्युना ।
सर्वसामान्यतो विद्वान्कृतकृत्यः सुखं स्वपे ॥ ०१८ ॥

सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥ ०१९ ॥

आस्त्रवत्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पगुणं स्तोकं पुनर्नैवोपपद्यते ॥ ०२० ॥

कणान्कदाचित्खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्षांश्चोच्चावचान्पुनः ॥ ०२१ ॥

शये कदाचित्पर्यङ्के भूमावपि पुनः शये ।
प्रासादेऽपि च मे शय्या कदाचिदुपपद्यते ॥ ०२२ ॥

धारयामि च चीराणि शाणीं क्षौमाजिनानि च ।
महार्हाणि च वासांसि धारयाम्यहमेकदा ॥ ०२३ ॥

न संनिपतितं धर्म्यमुपभोगं यदृच्छया ।
प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् ॥ ०२४ ॥

अचलमनिधनं शिवं विशोकं ; शुचिमतुलं विदुषां मते निविष्टम् ।
अनभिमतमसेवितं च मूढै ;र्व्रतमिदमाजगरं शुचिश्चरामि ॥ ०२५ ॥

अचलितमतिरच्युतः स्वधर्मा ;त्परिमितसंसरणः परावरज्ञः ।
विगतभयकषायलोभमोहो ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०२६ ॥

अनियतफलभक्ष्यभोज्यपेयं ; विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यै ;र्व्रतमिदमाजगरं शुचिश्चरामि ॥ ०२७ ॥

इदमिदमिति तृष्णयाभिभूतं ; जनमनवाप्तधनं विषीदमानम् ।
निपुणमनुनिशाम्य तत्त्वबुद्ध्या ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०२८ ॥

बहुविधमनुदृश्य चार्थहेतोः ; कृपणमिहार्यमनार्यमाश्रयन्तम् ।
उपशमरुचिरात्मवान्प्रशान्तो ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०२९ ॥

सुखमसुखमनर्थमर्थलाभं ; रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्त्वतोऽहं ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०३० ॥

अपगतभयरागमोहदर्पो ; धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।
उपगतफलभोगिनो निशाम्य ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०३१ ॥

अनियतशयनासनः प्रकृत्या ; दमनियमव्रतसत्यशौचयुक्तः ।
अपगतफलसञ्चयः प्रहृष्टो ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०३२ ॥

अभिगतमसुखार्थमीहनार्थै ;रुपगतबुद्धिरवेक्ष्य चात्मसंस्थः ।
तृषितमनियतं मनो नियन्तुं ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०३३ ॥

न हृदयमनुरुध्यते मनो वा ; प्रियसुखदुर्लभतामनित्यतां च ।
तदुभयमुपलक्षयन्निवाहं ; व्रतमिदमाजगरं शुचिश्चरामि ॥ ०३४ ॥

बहु कथितमिदं हि बुद्धिमद्भिः ; कविभिरभिप्रथयद्भिरात्मकीर्तिम् ।
इदमिदमिति तत्र तत्र तत्त ;त्स्वपरमतैर्गहनं प्रतर्कयद्भिः ॥ ०३५ ॥

तदहमनुनिशाम्य विप्रयातं ; पृथगभिपन्नमिहाबुधैर्मनुष्यैः ।
अनवसितमनन्तदोषपारं ; नृषु विहरामि विनीतरोषतृष्णः ॥ ०३६ ॥

भीष्म उवाच ॥

अजगरचरितं व्रतं महात्मा ; य इह नरोऽनुचरेद्विनीतरागः ।
अपगतभयमन्युलोभमोहः ; स खलु सुखी विहरेदिमं विहारम् ॥ ०३७ ॥

---

# कश्यपसृगालसंवादः

## अध्याय १७३

युधिष्ठिर उवाच ॥

बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह ।
नरस्य का प्रतिष्ठा स्यादेतत्पृष्टो वदस्व मे ॥ ००१ ॥

भीष्म उवाच ॥

प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः ।
प्रज्ञा नैःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥ ००२ ॥

प्रज्ञया प्रापितार्थो हि बलिरैश्वर्यसङ्क्षये ।
प्रह्रादो नमुचिर्मङ्किस्तस्याः किं विद्यते परम् ॥ ००३ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ॥ ००४ ॥

वैश्यः कश्चिदृषिं तात काश्यपं संशितव्रतम् ।
रथेन पातयामास श्रीमान्दृप्तस्तपस्विनम् ॥ ००५ ॥

आर्तः स पतितः क्रुद्धस्त्यक्त्वात्मानमथाब्रवीत् ।
मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ॥ ००६ ॥

तथा मुमूर्षुमासीनमकूजन्तमचेतसम् ।
इन्द्रः सृगालरूपेण बभाषे क्रुद्धमानसम् ॥ ००७ ॥

मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः ।
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति ॥ ००८ ॥

मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप ।
सुदुर्लभमवाप्यैतददोषान्मर्तुमिच्छसि ॥ ००९ ॥

सर्वे लाभाः साभिमाना इति सत्या बत श्रुतिः ।
संतोषणीयरूपोऽसि लोभाद्यदभिमन्यसे ॥ ०१० ॥

अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः ।
पाणिमद्भ्यः स्पृहास्माकं यथा तव धनस्य वै ॥ ०११ ॥

न पाणिलाभादधिको लाभः कश्चन विद्यते ।
अपाणित्वाद्वयं ब्रह्मन्कण्टकान्नोद्धरामहे ॥ ०१२ ॥

अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली ।
उद्धरन्ति कृमीनङ्गाद्दशमानान्कषन्ति च ॥ ०१३ ॥

हिमवर्षातपानां च परित्राणानि कुर्वते ।
चेलमन्नं सुखं शय्यां निवातं चोपभुञ्जते ॥ ०१४ ॥

अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च ।
उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्वते ॥ ०१५ ॥

ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः ।
सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने ॥ ०१६ ॥

दिष्ट्या त्वं न सृगालो वै न कृमिर्न च मूषकः ।
न सर्पो न च मण्डूको न चान्यः पापयोनिजः ॥ ०१७ ॥

एतावतापि लाभेन तोष्टुमर्हसि काश्यप ।
किं पुनर्योऽसि सत्त्वानां सर्वेषां ब्राह्मणोत्तमः ॥ ०१८ ॥

इमे मां कृमयोऽदन्ति तेषामुद्धरणाय मे ।
नास्ति शक्तिरपाणित्वात्पश्यावस्थामिमां मम ॥ ०१९ ॥

अकार्यमिति चैवेमं नात्मानं संत्यजाम्यहम् ।
नेतः पापीयसीं योनिं पतेयमपरामिति ॥ ०२० ॥

मध्ये वै पापयोनीनां सार्गाली यामहं गतः ।
पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ॥ ०२१ ॥

जात्यैवैके सुखतराः सन्त्यन्ये भृशदुःखिताः ।
नैकान्तसुखमेवेह क्वचित्पश्यामि कस्यचित् ॥ ०२२ ॥

मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम् ।
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥ ०२३ ॥

भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम् ।
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥ ०२४ ॥

न तृप्तिः प्रियलाभेऽस्ति तृष्णा नाद्भिः प्रशाम्यति ।

संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥ ०२५ ॥

अस्त्येव त्वयि शोको वै हर्षश्चास्ति तथा त्वयि ।
सुखदुःखे तथा चोभे तत्र का परिदेवना ॥ ०२६ ॥

परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम् ।
मूलं रुन्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ॥ ०२७ ॥

न खल्वप्यरसज्ञस्य कामः क्वचन जायते ।
संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वापि जायते ॥ ०२८ ॥

न त्वं स्मरसि वारुण्या लट्वाकानां च पक्षिणाम् ।
ताभ्यां चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् ॥ ०२९ ॥

यानि चान्यानि दूरेषु भक्ष्यभोज्यानि काश्यप ।
येषामभुक्तपूर्वं ते तेषामस्मृतिरेव च ॥ ०३० ॥

अप्राशनमसंस्पर्शमसंदर्शनमेव च ।
पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ॥ ०३१ ॥

पाणिमन्तो धनैर्युक्ता बलवन्तो न संशयः ।
मनुष्या मानुषैरेव दासत्वमुपपादिताः ॥ ०३२ ॥

वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः ।
ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥ ०३३ ॥

अपरे बाहुबलिनः कृतविद्या मनस्विनः ।
जुगुप्सितां सुकृपणां पापां वृत्तिमुपासते ॥ ०३४ ॥

उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुम् ।
स्वकर्मणा तु नियतं भवितव्यं तु तत्तथा ॥ ०३५ ॥

न पुल्कसो न चण्डाल आत्मानं त्यक्तुमिच्छति ।
असंतुष्टः स्वया योन्या मायां पश्यस्व यादृशीम् ॥ ०३६ ॥

दृष्ट्वा कुणीन्पक्षहतान्मनुष्यानामयाविनः ।
सुसंपूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ॥ ०३७ ॥

यदि ब्राह्मण देहस्ते निरातङ्को निरामयः ।
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥ ०३८ ॥

न केनचित्प्रवादेन सत्येनैवापहारिणा ।
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ ०३९ ॥

यदि ब्रह्मञ्शृणोष्येतच्छ्रद्दधासि च मे वचः ।
वेदोक्तस्य च धर्मस्य फलं मुख्यमवाप्स्यसि ॥ ०४० ॥

स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय ।
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ॥ ०४१ ॥

ये केचन स्वध्ययनाः प्राप्ता यजनयाजनम् ।
कथं ते जातु शोचेयुर्ध्यायेयुर्वाप्यशोभनम् ॥ ०४२ ॥

इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः ।
उत जाताः सुनक्षत्रे सुतीर्थाः सुमुहूर्तजाः ॥ ०४३ ॥

नक्षत्रेष्वासुरेष्वन्ये दुस्तीर्था दुर्मुहूर्तजाः ।
संपतन्त्यासुरीं योनिं यज्ञप्रसववर्जिताम् ॥ ०४४ ॥

अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ ०४५ ॥

हेतुवादान्प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चाभिवक्ता च ब्रह्मयज्ञेषु वै द्विजान्  ॥ ०४६  ॥

नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिः सृगालत्वं मम द्विज  ॥ ०४७  ॥

अपि जातु तथा तत्स्यादहोरात्रशतैरपि ।
यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः  ॥ ०४८  ॥

संतुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतिः ।
ज्ञेयज्ञाता भवेयं वै वर्ज्यवर्जयिता तथा  ॥ ०४९  ॥

ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह ।
अहो बतासि कुशलो बुद्धिमानिति विस्मितः  ॥ ०५०  ॥

समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा ।
ददर्श चैनं देवानामिन्द्रं देवं शचीपतिम्  ॥ ०५१  ॥

ततः संपूजयामास काश्यपो हरिवाहनम् ।
अनुज्ञातश्च तेनाथ प्रविवेश स्वमाश्रमम्  ॥ ०५२  ॥

---

# अध्याय १७४

युधिष्ठिर उवाच  ॥

यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां चापि शुश्रूषा तन्मे ब्रूहि पितामह  ॥ ००१  ॥

भीष्म उवाच ॥

आत्मनानर्थयुक्तेन पापे निविशते मनः ।
स कर्म कलुषं कृत्वा क्लेशे महति धीयते ॥ ००२ ॥

दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ॥ ००३ ॥

उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ॥ ००४ ॥

व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ००५ ॥

प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ॥ ००६ ॥

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ००७ ॥

सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येन येन यथा कृतम् ॥ ००८ ॥

उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म छायेवानुविधीयते ॥ ००९ ॥

येन येन यथा यद्यत्पुरा कर्म समाचितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ ०१० ॥

स्वकर्मफलविक्षिप्तं विधानपरिरक्षितम् ।

भूतग्राममिमं कालः समन्तात्परिकर्षति ॥ ०११ ॥

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ ०१२ ॥

संमानश्चावमानश्च लाभालाभौ क्षयोदयौ ।
प्रवृत्ता विनिवर्तन्ते विधानान्ते पुनः पुनः ॥ ०१३ ॥

आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् ॥ ०१४ ॥

बालो युवा च वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ ०१५ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ ०१६ ॥

समुन्नमग्रतो वस्त्रं पश्चाच्छुध्यति कर्मणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ ०१७ ॥

दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥ ०१८ ॥

शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा ज्ञानविदां गतिः ॥ ०१९ ॥

अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ ०२० ॥

# भृगुभरद्वाजसंवादः

## अध्याय १७५

युधिष्ठिर उवाच ॥

कुतः सृष्टमिदं विश्वं जगत्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तन्मे ब्रूहि पितामह ॥ ००१ ॥

ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ ००२ ॥

कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ००३ ॥

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
अस्माल्लोकादमुं लोकं सर्वं शंसतु नो भवान् ॥ ००४ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भृगुणाभिहितं श्रेष्ठं भरद्वाजाय पृच्छते ॥ ००५ ॥

कैलासशिखरे दृष्ट्वा दीप्यमानमिवौजसा ।
भृगुं महर्षिमासीनं भरद्वाजोऽन्वपृच्छत ॥ ००६ ॥

ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ ००७ ॥

कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ ००८ ॥

कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
परलोकमिमं चापि सर्वं शंसतु नो भवान् ॥ ००९ ॥

एवं स भगवान्पृष्टो भरद्वाजेन संशयम् ।
महर्षिर्ब्रह्मसङ्काशः सर्वं तस्मै ततोऽब्रवीत् ॥ ०१० ॥

मानसो नाम विख्यातः श्रुतपूर्वो महर्षिभिः ।
अनादिनिधनो देवस्तथाभेद्योऽजरामरः ॥ ०११ ॥

अव्यक्त इति विख्यातः शाश्वतोऽथाक्षरोऽव्ययः ।
यतः सृष्टानि भूतानि जायन्ते च म्रियन्ति च ॥ ०१२ ॥

सोऽसृजत्प्रथमं देवो महान्तं नाम नामतः ।
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः ॥ ०१३ ॥

आकाशादभवद्वारि सलिलादग्निमारुतौ ।
अग्निमारुतसंयोगात्ततः समभवन्मही ॥ ०१४ ॥

ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयंभुवा ।
तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः ॥ ०१५ ॥

अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् ।
ब्रह्मा वै सुमहातेजा य एते पञ्च धातवः ॥ ०१६ ॥

शैलास्तस्यास्थिसञ्ज्ञास्तु मेदो मांसं च मेदिनी ।
समुद्रास्तस्य रुधिरमाकाशमुदरं तथा ॥ ०१७ ॥

पवनश्चैव निःश्वासस्तेजोऽग्निर्निम्नगाः सिराः ।
अग्नीषोमौ तु चन्द्रार्कौ नयने तस्य विश्रुते ॥ ०१८ ॥

नभश्चोर्ध्वं शिरस्तस्य क्षितिः पादौ दिशो भुजौ ।
दुर्विज्ञेयो ह्यनन्तत्वात्सिद्धैरपि न संशयः ॥ ०१९ ॥

स एव भगवान्विष्णुरनन्त इति विश्रुतः ।
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः ॥ ०२० ॥

अहङ्कारस्य यः स्रष्टा सर्वभूतभवाय वै ।
यतः समभवद्विश्वं पृष्टोऽहं यदिह त्वया ॥ ०२१ ॥

भरद्वाज उवाच ॥

गगनस्य दिशां चैव भूतलस्यानिलस्य च ।
कान्यत्र परिमाणानि संशयं छिन्धि मेऽर्थतः ॥ ०२२ ॥

भृगुरुवाच ॥

अनन्तमेतदाकाशं सिद्धचारणसेवितम् ।
रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते ॥ ०२३ ॥

ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः ।
तत्र देवाः स्वयं दीप्ता भास्वराश्चाग्निवर्चसः ॥ ०२४ ॥

ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः ।
दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद ॥ ०२५ ॥

उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयंप्रभैः ।
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि ॥ ०२६ ॥

पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतम् ।
तमसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च ॥ ०२७ ॥

रसातलान्ते सलिलं जलान्ते पन्नगाधिपः ।
तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम् ॥ ०२८ ॥

एवमन्तं भगवतः प्रमाणं सलिलस्य च ।
अग्निमारुततोयेभ्यो दुर्ज्ञेयं दैवतैरपि ॥ ०२९ ॥

अग्निमारुततोयानां वर्णाः क्षितितलस्य च ।
आकाशसदृशा ह्येते भिद्यन्ते तत्त्वदर्शनात् ॥ ०३० ॥

पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च ।
त्रैलोक्ये सागरे चैव प्रमाणं विहितं यथा ॥ ०३१ ॥

अदृश्याय त्वगम्याय कः प्रमाणमुदाहरेत् ॥ ०३१ ॥

सिद्धानां देवतानां च यदा परिमिता गतिः ।
तदा गौणमनन्तस्य नामानन्तेति विश्रुतम् ॥ ०३२ ॥

नामधेयानुरूपस्य मानसस्य महात्मनः ॥ ०३२ ॥

यदा तु दिव्यं तद्रूपं ह्रसते वर्धते पुनः ।
कोऽन्यस्तद्वेदितुं शक्तो योऽपि स्यात्तद्विधोऽपरः ॥ ०३३ ॥

ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान्प्रभुः ।
ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः ॥ ०३४ ॥

भरद्वाज उवाच ॥

पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करम् ।
ब्रह्माणं पूर्वजं चाह भवान्संदेह एव मे ॥ ०३५ ॥

भृगुरुवाच ॥

मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ ०३६ ॥

कर्णिका तस्य पद्मस्य मेरुर्गगनमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान्सृजते जगतः प्रभुः ॥ ०३७ ॥

---

# अध्याय १७६

भरद्वाज उवाच ॥

प्रजाविसर्गं विविधं कथं स सृजते प्रभुः ।
मेरुमध्ये स्थितो ब्रह्मा तद्ब्रूहि द्विजसत्तम ॥ ००१ ॥

भृगुरुवाच ॥

प्रजाविसर्गं विविधं मानसो मनसासृजत् ।
संधुक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् ॥ ००२ ॥

यत्प्राणाः सर्वभूतानां वर्धन्ते येन च प्रजाः ।
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ॥ ००३ ॥

पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे ।
सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे पुनः ॥ ००४ ॥

भरद्वाज उवाच ॥

कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ ।
कथं च मेदिनी सृष्टेत्यत्र मे संशयो महान्  ॥ ००५  ॥

भृगुरुवाच  ॥

ब्रह्मकल्पे पुरा ब्रह्मन्ब्रह्मर्षीणां समागमे ।
लोकसंभवसंदेहः समुत्पन्नो महात्मनाम्  ॥ ००६  ॥

तेऽतिष्ठन्ध्यानमालम्ब्य मौनमास्थाय निश्चलाः ।
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः  ॥ ००७  ॥

तेषां धर्ममयी वाणी सर्वेषां श्रोत्रमागमत् ।
दिव्या सरस्वती तत्र संबभूव नभस्तलात्  ॥ ००८  ॥

पुरा स्तिमितनिःशब्दमाकाशमचलोपमम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव संबभौ  ॥ ००९  ॥

ततः सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः  ॥ ०१०  ॥

यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते ।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः  ॥ ०११  ॥

तथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे ।
भित्त्वार्णवतलं वायुः समुत्पतति घोषवान्  ॥ ०१२  ॥

स एष चरते वायुरर्णवोत्पीडसंभवः ।
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति  ॥ ०१३  ॥

तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः ।
प्रादुर्भवत्यूर्ध्वशिखः कृत्वा वितिमिरं नभः  ॥ ०१४  ॥

अग्निः पवनसंयुक्तः खात्समुत्पतते जलम् ।
सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते ॥ ०१५ ॥

तस्याकाशे निपतितः स्नेहस्तिष्ठति योऽपरः ।
स संघातत्वमापन्नो भूमित्वमुपगच्छति ॥ ०१६ ॥

रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ ०१७ ॥

---

# अध्याय १७७

भरद्वाज उवाच ॥

एते ते धातवः पञ्च ब्रह्मा यानसृजत्पुरा ।
आवृता यैरिमे लोका महाभूताभिसञ्ज्ञितैः ॥ ००१ ॥

यदासृजत्सहस्राणि भूतानां स महामतिः ।
पञ्चानामेव भूतत्वं कथं समुपपद्यते ॥ ००२ ॥

भृगुरुवाच ॥

अमितानां महाशब्दो यान्ति भूतानि संभवम् ।
ततस्तेषां महाभूतशब्दोऽयमुपपद्यते ॥ ००३ ॥

चेष्टा वयूः खमाकाशमूष्माग्निः सलिलं द्रवः ।
पृथिवी चात्र संघातः शरीरं पाञ्चभौतिकम् ॥ ००४ ॥

इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम् ।
श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसञ्ज्ञिताः ॥ ००५ ॥

भरद्वाज उवाच ॥

पञ्चभिर्यदि भूतैस्तु युक्ताः स्थावरजङ्गमाः ।
स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ॥ ००६ ॥

अनूष्मणामचेष्टानां घनानां चैव तत्त्वतः ।
वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः ॥ ००७ ॥

न शृण्वन्ति न पश्यन्ति न गन्धरसवेदिनः ।
न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः ॥ ००८ ॥

अद्रवत्वादनग्नित्वादभौमत्वादवायुतः ।
आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम् ॥ ००९ ॥

भृगुरुवाच ॥

घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।
तेषां पुष्पफले व्यक्तिर्नित्यं समुपलभ्यते ॥ ०१० ॥

ऊष्मतो ग्लानपर्णानां त्वक्फलं पुष्पमेव च ।
म्लायते चैव शीते न स्पर्शस्तेनात्र विद्यते ॥ ०११ ॥

वाय्वग्न्यशनिनिष्पेषैः फलपुष्पं विशीर्यते ।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ॥ ०१२ ॥

वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति ।
न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः ॥ ०१३ ॥

पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि ।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः ॥ ०१४ ॥

पादैः सलिलपानं च व्याधीनामपि दर्शनम् ।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ॥ ०१५ ॥

वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत् ।
तथा पवनसंयुक्तः पादैः पिबति पादपः ॥ ०१६ ॥

ग्रहणात्सुखदुःखस्य छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥ ०१७ ॥

तेन तज्जलमादत्तं जरयत्यग्निमारुतौ ।
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ॥ ०१८ ॥

जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः ।
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ॥ ०१९ ॥

त्वक्च मांसं तथास्थीनि मज्जा स्नायु च पञ्चमम् ।
इत्येतदिह संख्यातं शरीरे पृथिवीमयम् ॥ ०२० ॥

तेजोऽग्निश्च तथा क्रोधश्चक्षुरूष्मा तथैव च ।
अग्निर्जरयते चापि पञ्चाग्नेयाः शरीरिणः ॥ ०२१ ॥

श्रोत्रं घ्राणमथास्यं च हृदयं कोष्ठमेव च ।
आकाशात्प्राणिनामेते शरीरे पञ्च धातवः ॥ ०२२ ॥

श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च ।
इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा ॥ ०२३ ॥

प्राणात्प्रणीयते प्राणी व्यानाद्व्यायच्छते तथा ।

गच्छत्यपानोऽवाक्चैव समानो हृद्यवस्थितः ॥ ०२४ ॥

उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते ।
इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम् ॥ ०२५ ॥

भूमेर्गन्धगुणान्वेत्ति रसं चाद्भ्यः शरीरवान् ।
ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना ॥ ०२६ ॥

तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान्गुणान् ।
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च ॥ ०२७ ॥

निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥ ०२८ ॥

शब्दः स्पर्शश्च रूपं च रसश्चापां गुणाः स्मृताः ।
रसज्ञानं तु वक्ष्यामि तन्मे निगदतः शृणु ॥ ०२९ ॥

रसो बहुविधः प्रोक्तः सूरिभिः प्रथितात्मभिः ।
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ॥ ०३० ॥

एष षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ ०३० ॥

शब्दः स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते ।
ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ॥ ०३१ ॥

ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्त्रोऽणु वृत्तवान् ।
शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा ॥ ०३२ ॥

एवं द्वादशविस्तारो ज्योतीरूपगुणः स्मृतः ॥ ०३२ ॥

शब्दस्पर्शौ तु विज्ञेयौ द्विगुणो वायुरुच्यते ।

वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥ ०३३ ॥

कठिनश्चिक्कणः श्लक्ष्णः पिच्छलो मृदुदारुणः ।
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ॥ ०३४ ॥

एवं द्वादशविस्तारो वायव्यो गुण उच्यते ॥ ०३४ ॥

तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम् ।
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ॥ ०३५ ॥

षड्ज ऋषभगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्चापि विज्ञेयस्तथा चापि निषादकः ॥ ०३६ ॥

एष सप्तविधः प्रोक्तो गुण आकाशलक्षणः ।
त्रैस्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥ ०३७ ॥

आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ।
अव्याहतैश्चेतयते न वेत्ति विषमागतैः ॥ ०३८ ॥

आप्यायन्ते च ते नित्यं धातवस्तैस्तु धातुभिः ।
आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ॥ ०३९ ॥

---

# अध्याय १७८

भरद्वाज उवाच ॥

पार्थिवं धातुमाश्रित्य शारीरोऽग्निः कथं भवेत् ।

अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ ००१ ॥

भृगुरुवाच ॥

वायोर्गतिमहं ब्रह्मन्कीर्तयिष्यामि तेऽनघ ।
प्राणिनामनिलो देहान्यथा चेष्टयते बली ॥ ००२ ॥

श्रितो मूर्धानमग्निस्तु शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ ००३ ॥

स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहङ्कारो भूतानि विषयाश्च सः ॥ ००४ ॥

एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
पृष्ठतश्च समानेन स्वां स्वां गतिमुपाश्रितः ॥ ००५ ॥

वस्तिमूलं गुदं चैव पावकं च समाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ॥ ००६ ॥

प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ॥ ००७ ॥

संधिष्वपि च सर्वेषु संनिविष्टस्तथानिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ ००८ ॥

धातुष्वग्निस्तु विततः समानेन समीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्नवतिष्ठति ॥ ००९ ॥

अपानप्राणयोर्मध्ये प्राणापानसमाहितः ।
समन्वितः स्वधिष्ठानः सम्यक्पचति पावकः ॥ ०१० ॥

आस्यं हि पायुसंयुक्तमन्ते स्याद्गुदसञ्ज्ञितम् ।
स्रोतस्तस्मात्प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ ०११ ॥

प्राणानां संनिपाताच्च संनिपातः प्रजायते ।
ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ ०१२ ॥

अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ ०१३ ॥

पक्वाशयस्त्वधो नाभेरूर्ध्वमामाशयः स्थितः ।
नाभिमध्ये शरीरस्य सर्वे प्राणाः समाहिताः ॥ ०१४ ॥

प्रसृता हृदयात्सर्वे तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ॥ ०१५ ॥

एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदम् ।
जितक्लमासना धीरा मूर्धन्यात्मानमादधुः ॥ ०१६ ॥

एवं सर्वेषु विहितः प्राणापानेषु देहिनाम् ।
तस्मिन्स्थितो नित्यमग्निः स्थाल्यामिव समाहितः ॥ ०१७ ॥

---

# अध्याय १७९

भरद्वाज उवाच ॥

यदि प्राणायते वायुर्वायुरेव विचेष्टते ।
श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः ॥ ००१ ॥

यद्यूष्मभाव आग्नेयो वह्निना पच्यते यदि ।
अग्निर्जरयते चैव तस्माज्जीवो निरर्थकः ॥ ००२ ॥

जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते ।
वायुरेव जहात्येनमूष्मभावश्च नश्यति ॥ ००३ ॥

यदि वातोपमो जीवः संश्लेषो यदि वायुना ।
वायुमण्डलवद्दृश्यो गच्छेत्सह मरुद्गणैः ॥ ००४ ॥

श्लेषो यदि च वातेन यदि तस्मात्प्रणश्यति ।
महार्णवविमुक्तत्वादन्यत्सलिलभाजनम् ॥ ००५ ॥

कूपे वा सलिलं दद्यात्प्रदीपं वा हुताशने ।
प्रक्षिप्तं नश्यति क्षिप्रं यथा नश्यत्यसौ तथा ॥ ००६ ॥

पञ्चसाधारणे ह्यस्मिञ्शरीरे जीवितं कुतः ।
येषामन्यतरत्यागाच्चतुर्णां नास्ति सङ्ग्रहः ॥ ००७ ॥

नश्यन्त्यापो ह्यनाहाराद्वायुरुच्छ्वासनिग्रहात् ।
नश्यते कोष्ठभेदात्खमग्निर्नश्यत्यभोजनात् ॥ ००८ ॥

व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्यते ।
पीडितेऽन्यतरे ह्येषां संघातो याति पञ्चधा ॥ ००९ ॥

तस्मिन्पञ्चत्वमापन्ने जीवः किमनुधावति ।
किं वेदयति वा जीवः किं शृणोति ब्रवीति वा ॥ ०१० ॥

एषा गौः परलोकस्थं तारयिष्यति मामिति ।
यो दत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ॥ ०११ ॥

गौश्च प्रतिग्रहीता च दाता चैव समं यदा ।

इहैव विलयं यान्ति कुतस्तेषां समागमः ॥ ०१२ ॥

विहगैरुपयुक्तस्य शैलाग्रात्पतितस्य वा ।
अग्निना चोपयुक्तस्य कुतः सञ्जीवनं पुनः ॥ ०१३ ॥

छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति ।
बीजान्यस्य प्रवर्तन्ते मृतः क्व पुनरेष्यति ॥ ०१४ ॥

बीजमात्रं पुरा सृष्टं यदेतत्परिवर्तते ।
मृता मृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्तते ॥ ०१५ ॥

---

# अध्याय १८०

भृगुरुवाच ॥

न प्रणाशोऽस्ति जीवानां दत्तस्य च कृतस्य च ।
याति देहान्तरं प्राणी शरीरं तु विशीर्यते ॥ ००१ ॥

न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥ ००२ ॥

भरद्वाज उवाच ॥

अग्नेर्यथा तथा तस्य यदि नाशो न विद्यते ।
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ॥ ००३ ॥

नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम् ।
गतिर्यस्य प्रमाणं वा संस्थानं वा न दृश्यते ॥ ००४ ॥

भृगुरुवाच ॥

समिधामुपयोगान्ते सन्नेवाग्निर्न दृश्यते ।
आकाशानुगतत्वाद्धि दुर्ग्रहः स निराश्रयः ॥ ००५ ॥

तथा शरीरसंत्यागे जीवो ह्याकाशवत्स्थितः ।
न गृह्यते सुसूक्ष्मत्वाद्यथा ज्योतिर्न संशयः ॥ ००६ ॥

प्राणान्धारयते ह्यग्निः स जीव उपधार्यताम् ।
वायुसंधारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ ००७ ॥

तस्मिन्नष्टे शरीराग्नौ शरीरं तदचेतनम् ।
पतितं याति भूमित्वमयनं तस्य हि क्षितिः ॥ ००८ ॥

जङ्गमानां हि सर्वेषां स्थावराणां तथैव च ।
आकाशं पवनोऽभ्येति ज्योतिस्तमनुगच्छति ॥ ००९ ॥

तत्र त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ॥ ००९ ॥

यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः ।
अमूर्तयस्ते विज्ञेया आपो मूर्तास्तथा क्षितिः ॥ ०१० ॥

भरद्वाज उवाच ॥

यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु ।
जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ॥ ०११ ॥

पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते ।
शरीरे प्राणिनां जीवं ज्ञातुमिच्छामि यादृशम् ॥ ०१२ ॥

मांसशोणितसंघाते मेदःस्नाय्वस्थिसञ्चये ।
भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ ०१३ ॥

यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम् ।
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ ०१४ ॥

शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत् ।
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ ०१५ ॥

सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा ।
मनसि व्याकुले तद्धि पश्यन्नपि न पश्यति ॥ ०१६ ॥

न पश्यति न च ब्रूते न शृणोति न जिघ्रति ।
न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ ०१७ ॥

हृष्यति क्रुध्यति च कः शोचत्युद्विजते च कः ।
इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः ॥ ०१८ ॥

भृगुरुवाच ॥

न पञ्चसाधारणमत्र किं चि;च्छरीरमेको वहतेऽन्तरात्मा ।
स वेत्ति गन्धांश्च रसाञ्श्रुतिं च; स्पर्शं च रूपं च गुणाश्च येऽन्ये ॥ ०१९ ॥

पञ्चात्मके पञ्चगुणप्रदर्शी; स सर्वगात्रानुगतोऽन्तरात्मा ।
स वेत्ति दुःखानि सुखानि चात्र; तद्विप्रयोगात्तु न वेत्ति देहः ॥ ०२० ॥

यदा न रूपं न स्पर्शो नोष्मभावश्च पावके ।
तदा शान्ते शरीराग्नौ देहं त्यक्त्वा स नश्यति ॥ ०२१ ॥

अम्मयं सर्वमेवेदमापो मूर्तिः शरीरिणाम् ।
तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ ०२२ ॥

आत्मानं तं विजानीहि सर्वलोकहितात्मकम् ।
तस्मिन्यः संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे ॥ ०२३ ॥

क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ।
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ ०२४ ॥

सचेतनं जीवगुणं वदन्ति ; स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदं वदन्ति ; प्रावर्तयद्यो भुवनानि सप्त ॥ ०२५ ॥

न जीवनाशोऽस्ति हि देहभेदे ; मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।
जीवस्तु देहान्तरितः प्रयाति ; दशार्धतैवास्य शरीरभेदः ॥ ०२६ ॥

एवं सर्वेषु भूतेषु गूढश्चरति संवृतः ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ॥ ०२७ ॥

तं पूर्वापररात्रेषु युञ्जानः सततं बुधः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ०२८ ॥

चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमक्षयमश्नुते ॥ ०२९ ॥

मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये ॥ ०३० ॥

---

# अध्याय १८१

भृगुरुवाच ॥

असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतिः ।
आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान्  ॥ ००१  ॥

ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च स्वर्गाय विदधे प्रभुः  ॥ ००२  ॥

देवदानवगन्धर्वदैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा  ॥ ००३  ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
ये चान्ये भूतसंघानां संघास्तांश्चापि निर्ममे  ॥ ००४  ॥

ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः ।
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा  ॥ ००५  ॥

भरद्वाज उवाच  ॥

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः  ॥ ००६  ॥

कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते  ॥ ००७  ॥

स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते  ॥ ००८  ॥

जङ्गमानामसंख्येयाः स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः  ॥ ००९  ॥

भृगुरुवाच  ॥

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्  ॥ ०१० ॥

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः  ॥ ०११ ॥

गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
स्वधर्मं नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः  ॥ ०१२ ॥

हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः  ॥ ०१३ ॥

इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते  ॥ ०१४ ॥

वर्णाश्चत्वार एते हि येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः  ॥ ०१५ ॥

ब्राह्मणा धर्मतन्त्रस्थास्तपस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा  ॥ ०१६ ॥

ब्रह्म चैतत्पुरा सृष्टं ये न जानन्त्यतद्विदः ।
तेषां बहुविधास्त्वन्यास्तत्र तत्र हि जातयः  ॥ ०१७ ॥

पिशाचा राक्षसाः प्रेता बहुधा म्लेच्छजातयः ।
प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः  ॥ ०१८ ॥

प्रजा ब्राह्मणसंस्काराः स्वधर्मकृतनिश्चयाः ।
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः  ॥ ०१९ ॥

आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥ ०२० ॥

---

# अध्याय १८२

भरद्वाज उवाच ॥

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥ ००१ ॥

भृगुरुवाच ॥

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः ॥ ००२ ॥

शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ ००३ ॥

सत्यं दानं दमोऽद्रोह आनृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ ००४ ॥

क्षत्रजं सेवते कर्म वेदाध्ययनसंमतः ।
दानादानरतिर्यश्च स वै क्षत्रिय उच्यते ॥ ००५ ॥

कृषिगोरक्ष्यवाणिज्यं यो विशत्यनिशं शुचिः ।
वेदाध्ययनसंपन्नः स वैश्य इति सञ्ज्ञितः ॥ ००६ ॥

सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।

त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ ००७ ॥

शूद्रे चैतद्भवेल्लक्ष्यं द्विजे चैतन्न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ००८ ॥

सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ॥ ००९ ॥

नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः ॥ ०१० ॥

यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ०११ ॥

अहिंस्रः सर्वभूतानां मैत्रायणगतश्चरेत् ।
अविस्रम्भे न गन्तव्यं विस्रम्भे धारयेन्मनः ॥ ०१२ ॥

परिग्रहान्परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः ।
अशोकं स्थानमातिष्ठेदिह चामुत्र चाभयम् ॥ ०१३ ॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ ०१४ ॥

इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ०१५ ॥

मनः प्राणे निगृह्णीयात्प्राणं ब्रह्मणि धारयेत् ।
निर्वाणादेव निर्वाणो न च किञ्चिद्विचिन्तयेत् ॥ ०१६ ॥

सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति ॥ ०१६ ॥

शौचेन सततं युक्तस्तथाचारसमन्वितः ।
सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम्  ॥ ०१७  ॥

---

# अध्याय १८३

भृगुरुवाच  ॥

सत्यं ब्रह्म तपः सत्यं सत्यं सृजति च प्रजाः ।
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति  ॥ ००१  ॥

अनृतं तमसो रूपं तमसा नीयते ह्यधः ।
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसावृतम्  ॥ ००२  ॥

स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ।
सत्यानृतात्तदुभयं प्राप्यते जगतीचरैः  ॥ ००३  ॥

तत्र त्वेवंविधा वृत्तिर्लोके सत्यानृता भवेत् ।
धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा  ॥ ००४  ॥

तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति ।
तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति  ॥ ००५  ॥

अत्रोच्यते
शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ।
लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः  ॥ ००६  ॥

तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः ।
सुखं ह्यनित्यं भूतानामिह लोके परत्र च  ॥ ००७  ॥

राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ।
तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम्  ॥ ००८  ॥

तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च
इह खल्वमुष्मिंश्च लोके सर्वारम्भप्रवृत्तयः सुखार्था अभिधीयन्ते ।
न ह्यतस्त्रिवर्गफलं विशिष्टतरमस्ति
स एष काम्यो गुणविशेषो धर्मार्थयोरारम्भस्तद्धेतुरस्योत्पत्तिः
सुखप्रयोजना भरद्वाज उवाच  ॥ ००९  ॥

यदेतद्भवताभिहितं सुखानां परमाः स्त्रिय इति तन्न गृह्णीमः
न ह्येषामृषीणां महति स्थितानामप्राप्य एष गुणविशेषो
न चैनमभिलषन्ति श्रूयते च भगवांस्त्रिलोककृद्ब्रह्मा
प्रभुरेकाकी तिष्ठति ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति
अपि च भगवान्विश्वेश्वर उमापतिः काममभिवर्तमानमनङ्गत्वेन
शममनयत् तस्माद्ब्रूमो न महात्मभिरयं प्रतिगृहीतो न त्वेष
तावद्विशिष्टो गुण इति नैतद्भगवतः प्रत्येमि भगवता तूक्तं
सुखानां परमाः स्त्रिय इति लोकप्रवादोऽपि च भवति द्विविधः
फलोदयः सुकृतात्सुखमवाप्यते दुष्कृताद्दुःखमिति अत्रोच्यताम्
भृगुरुवाच  ॥ ०१०  ॥

अनृतात्खलु तमः प्रादुर्भूतं तमोग्रस्ता अधर्ममेवानुवर्तन्ते
न धर्मम् क्रोधलोभमोहमानानृतादिभिरवच्छन्ना
न खल्वस्मि.ण्ल्लोके न चामुत्र सुखमाप्नुवन्ति
विविधव्याधिगणोपतापैरवकीर्यन्ते वधबन्धरोगपरिक्लेशादिभिश्च
क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते ।
चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः
शारीरैर्दुःखैरुपतप्यन्ते बन्धुधनविनाशविप्रयोगकृतैश्च
मानसैः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति  ॥ ०११  ॥

यस्त्वेतैः शारीरैर्मानसैर्दुःखैर्न स्पृश्यते स सुखं वेद ।

न चैते दोषाः स्वर्गे प्रादुर्भवन्ति तत्र भवति खलु ॥ ०१२ ॥

सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा ।
क्षुत्पिपासाश्रमो नास्ति न जरा न च पापकम् ॥ ०१३ ॥

नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम् ।
नरके दुःखमेवाहुः समं तु परमं पदम् ॥ ०१४ ॥

पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः ।
पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥ ०१५ ॥

इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा ।
प्रजा विपरिवर्तन्ते स्वैः स्वैः कर्मभिरावृताः ॥ ०१६ ॥

---

# अध्याय १८४

भरद्वाज उवाच ॥

दानस्य किं फलं प्राहुर्धर्मस्य चरितस्य च ।
तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य च ॥ ००१ ॥

भृगुरुवाच ॥

हुतेन शाम्यते पापं स्वाध्याये शान्तिरुत्तमा ।
दानेन भोग इत्याहुस्तपसा सर्वमाप्नुयात् ॥ ००२ ॥

दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ।
सद्भ्यो यद्दीयते किञ्चित्तत्परत्रोपतिष्ठति ॥ ००३ ॥

असत्सु दीयते यत्तु तद्दानमिह भुज्यते ।
यादृशं दीयते दानं तादृशं फलमाप्यते  ॥ ००४  ॥

भरद्वाज उवाच  ॥

किं कस्य धर्मचरणं किं वा धर्मस्य लक्षणम् ।
धर्मः कतिविधो वापि तद्भवान्वक्तुमर्हति  ॥ ००५  ॥

भृगुरुवाच  ॥

स्वधर्मचरणे युक्ता ये भवन्ति मनीषिणः ।
तेषां धर्मफलावाप्तिर्योऽन्यथा स विमुह्यति  ॥ ००६  ॥

भरद्वाज उवाच  ॥

यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा ।
तेषां स्वे स्वे य आचारास्तान्मे वक्तुमिहार्हसि  ॥ ००७  ॥

भृगुरुवाच  ॥

पूर्वमेव भगवता लोकहितमनुतिष्ठता
धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः
तत्र गुरुकुलवासमेव तावत्प्रथममाश्रममुदाहरन्ति
सम्यगत्र शौचसंस्कारविनयनियमप्रणीतो विनीतात्मा उभे
संध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रालस्ये
गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा
त्रिषवणमुपस्पृश्य ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यो
भैक्षादिसर्वनिवेदितान्तरात्मा गुरुवचननिर्देशानुष्ठानाप्रतिकूलो
गुरुप्रसादलब्धस्वाध्यायतत्परः स्यात्  ॥  ००८  ॥

भवति चात्र श्लोकः गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् ।
तस्य स्वर्गफलावाप्तिः सिध्यते चास्य मानसम् ॥ ००९ ॥

गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति तस्य
समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः समावृत्तानां
सदाराणां सहधर्मचर्याफलार्थिनां गृहाश्रमो विधीयते
धर्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमवेक्ष्यागर्हितेन कर्मणा
धनान्यादाय स्वाध्यायप्रकर्षोपलब्धेन ब्रह्मर्षिनिर्मितेन वा
अद्रिसारगतेन वा हव्यनियमाभ्यासदैवतप्रसादोपलब्धेन
वा धनेन गृहस्थो गार्हस्थ्यं प्रवर्तयेत् तद्धि
सर्वाश्रमाणां मूलमुदाहरन्ति गुरुकुलवासिनः परिव्राजका ये
चान्ये सङ्कल्पितव्रतनियमधर्मानुष्ठायिनस्तेषामप्यत एव
भिक्षाबलिसंविभागाः प्रवर्तन्ते ॥ ॥ ०१० ॥

वानप्रस्थानां द्रव्योपस्कार इति प्रायशः खल्वेते साधवः
साधुपथ्यदर्शनाः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं
पृथिवीं पर्यटन्ति तेषां
प्रत्युत्थानाभिवादनानसूयावाक्प्रदानसौमुख्यशक्त्यासनशयनाभ्यवहारसत्क्रियाश्चेति
॥ ०११ ॥

भवति चात्र श्लोकः अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ ०१२ ॥

अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो
वेदाभ्यासश्रवणधारणेन ऋषयः अपत्योत्पादनेन प्रजापतिरिति ॥ ०१३ ॥

श्लोकौ चात्र भवतः
वत्सलाः सर्वभूतानां वाच्याः श्रोत्रसुखा गिरः ।
परिवादोपघातौ च पारुष्यं चात्र गर्हितम् ॥ ०१४ ॥

अवज्ञानमहङ्कारो दम्भश्चैव विगर्हितः ।

अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः ॥ ०१५ ॥

अपि चात्र
माल्याभरणवस्त्राभ्यङ्गगन्धोपभोगनृत्तगीतवादित्रश्रुतिसुख
नयनाभिरामसंदर्शनानां
प्राप्तिर्भक्ष्यभोज्यपेयलेह्यचोष्याणामभ्यवहार्याणां विविधानामुपभोगः
स्वदारविहारसंतोषः कामसुखावाप्तिरिति ॥ ०१६ ॥

त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे ।
स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् ॥ ०१७ ॥

उञ्छवृत्तिर्गृहस्थो यः स्वधर्मचरणे रतः ।
त्यक्तकामसुखारम्भस्तस्य स्वर्गो न दुर्लभः ॥ ०१८ ॥

---

# अध्याय १८५

भृगुरुवाच ॥

वानप्रस्थाः खलु ऋषिधर्ममनुसरन्तः पुण्यानि
तीर्थानि नदीप्रस्रवणानि सुविविक्तेष्वरण्येषु
मृगमहिषवराहसृमरगजाकीर्णेषु तपस्यन्तोऽनुसञ्चरन्ति ।
त्यक्तग्राम्यवस्त्राहारोपभोगा
वन्यौषधिमूलफलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो
भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः
काशकुशचर्मवल्कलसंवृताङ्गाः केशश्मश्रुनखरोमधारिणो
नियतकालोपस्पर्शना अस्कन्नहोमबलिकालानुष्ठायिनः
समित्कुशकुसुमोपहारहोमार्जनलब्धविश्रामाः

शीतोष्णपवननिष्टप्तविभिन्नसर्वत्वचो
विविधनियमयोगचर्याविहितधर्मानुष्ठानहृतमांसशोणितास्त्वगस्थिभूता
धृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ति ॥ ००१ ॥

यस्त्वेतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत् ।
स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान् ॥ ००२ ॥

परिव्राजकानां पुनराचारस्तद्यथा ।
विमुच्याग्निधनकलत्रपरिबर्हसङ्गानात्मनः स्नेहपाशानवधूय परिव्रजन्ति
समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वारम्भेष्वसक्तबुद्धयोऽरिमित्रोदासीनेषु
तुल्यवृत्तयः स्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां
वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः
पर्वतपुलिनवृक्षमूलदेवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं
ग्रामं वा नगरे पञ्चरात्रिका ग्रामैकरात्रिकाः ।
प्रविश्य च प्राणधारणमात्रार्थं द्विजातीनां
भवनान्यसङ्कीर्णकर्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्षाः
कामक्रोधदर्पमोहलोभकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ॥ ००३
॥

भवति चात्र श्लोकः
अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ ००४ ॥

कृत्वाग्निहोत्रं स्वशरीरसंस्थं ; शारीरमग्निं स्वमुखे जुहोति ।
यो भैक्षचर्योपगतैर्हविर्भि ;श्चिताग्निनां स व्यतियाति लोकान् ॥ ००५ ॥

मोक्षाश्रमं यः कुरुते यथोक्तं ; शुचिः सुसङ्कल्पितबुद्धियुक्तः ।
अनिन्धनं ज्योतिरिव प्रशान्तं ; स ब्रह्मलोकं श्रयते द्विजातिः ॥ ००६ ॥

भरद्वाज उवाच ॥

अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान्वक्तुमर्हति ॥ ००७ ॥

भृगुरुवाच ॥

उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स वरो लोक उच्यते ॥ ००८ ॥

तत्र ह्यपापकर्माणः शुचयोऽत्यन्तनिर्मलाः ।
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ॥ ००९ ॥

स स्वर्गसदृशो देशस्तत्र ह्युक्ताः शुभा गुणाः ।
काले मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ॥ ०१० ॥

न लोभः परदारेषु स्वदारनिरतो जनः ।
न चान्योन्यवधस्तत्र द्रव्येषु न च विस्मयः ॥ ०११ ॥

परोक्षधर्मो नैवास्ति संदेहो नापि जायते ॥ ०११ ॥

कृतस्य तु फलं तत्र प्रत्यक्षमुपलभ्यते ।
शय्यायानासनोपेताः प्रासादभवनाश्रयाः ॥ ०१२ ॥

सर्वकामैर्वृताः केचिद्धेमाभरणभूषिताः ॥ ०१२ ॥

प्राणधारणमात्रं तु केषाञ्चिदुपपद्यते ।
श्रमेण महता केचित्कुर्वन्ति प्राणधारणम् ॥ ०१३ ॥

इह धर्मपराः केचित्केचिन्नैकृतिका नराः ।
सुखिता दुःखिताः केचिन्निर्धना धनिनोऽपरे ॥ ०१४ ॥

इह श्रमो भयं मोहः क्षुधा तीव्रा च जायते ।

लोभश्चार्थकृतो नृणां येन मुह्यन्ति पण्डिताः ॥ ०१५ ॥

इह चिन्ता बहुविधा धर्माधर्मस्य कर्मणः ।
यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते ॥ ०१६ ॥

सोपधं निकृतिः स्तेयं परिवादोऽभ्यसूयता ।
परोपघातो हिंसा च पैशुन्यमनृतं तथा ॥ ०१७ ॥

एतानासेवते यस्तु तपस्तस्य प्रहीयते ।
यस्त्वेतान्नाचरेद्विद्वांस्तपस्तस्याभिवर्धते ॥ ०१८ ॥

कर्मभूमिरियं लोक इह कृत्वा शुभाशुभम् ।
शुभैः शुभमवाप्नोति कृत्वाशुभमतोऽन्यथा ॥ ०१९ ॥

इह प्रजापतिः पूर्वं देवाः सर्षिगणास्तथा ।
इष्ट्वेष्टतपसः पूता ब्रह्मलोकमुपाश्रिताः ॥ ०२० ॥

उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः ।
इहत्यास्तत्र जायन्ते ये वै पुण्यकृतो जनाः ॥ ०२१ ॥

असत्कर्माणि कुर्वन्तस्तिर्यग्योनिषु चापरे ।
क्षीणायुषस्तथैवान्ये नश्यन्ति पृथिवीतले ॥ ०२२ ॥

अन्योन्यभक्षणे सक्ता लोभमोहसमन्विताः ।
इहैव परिवर्तन्ते न ते यान्त्युत्तरां दिशम् ॥ ०२३ ॥

ये गुरूनुपसेवन्ते नियता ब्रह्मचारिणः ।
पन्थानं सर्वलोकानां ते जानन्ति मनीषिणः ॥ ०२४ ॥

इत्युक्तोऽयं मया धर्मः सङ्क्षेपाद्ब्रह्मनिर्मितः ।
धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ॥ ०२५ ॥

भीष्म उवाच ॥

इत्युक्तो भृगुणा राजन्भरद्वाजः प्रतापवान् ।
भृगुं परमधर्मात्मा विस्मितः प्रत्यपूजयत् ॥ ०२६ ॥

एष ते प्रभवो राजञ्जगतः संप्रकीर्तितः ।
निखिलेन महाप्राज्ञ किं भूयः श्रोतुमिच्छसि ॥ ०२७ ॥

---

# अध्याय १८६

युधिष्ठिर उवाच ॥

आचारस्य विधिं तात प्रोच्यमानं त्वयानघ ।
श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञो ह्यसि मे मतः ॥ ००१ ॥

भीष्म उवाच ॥

दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः ।
असन्तो ह्यभिविख्याताः सन्तश्चाचारलक्षणाः ॥ ००२ ॥

पुरीषं यदि वा मूत्रं ये न कुर्वन्ति मानवाः ।
राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ॥ ००३ ॥

शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ।
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ॥ ००४ ॥

सूर्यं सदोपतिष्ठेत न स्वप्याद्भास्करोदये ।

सायं प्रातर्जपन्संध्यां तिष्ठेत्पूर्वां तथापराम्  ॥ ००५  ॥

पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः ।
न निन्देदन्नभक्ष्यांश्च स्वाद्वस्वादु च भक्षयेत्  ॥ ००६  ॥

नार्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि ।
देवर्षिनारदप्रोक्तमेतदाचारलक्षणम्  ॥ ००७  ॥

शुचिकाममनड्वाहं देवगोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात्प्रदक्षिणम्  ॥ ००८  ॥

अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते  ॥ ००९  ॥

सायं प्रातर्मनुष्याणामशनं देवनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत्  ॥ ०१०  ॥

होमकाले तथा जुह्वन्नृतुकाले तथा व्रजन् ।
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत्  ॥ ०११  ॥

अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम् ।
उपासीत जनः सत्यं सत्यं सन्त उपासते  ॥ ०१२  ॥

यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् ।
न भक्षयेद्वृथामांसं पृष्ठमांसं च वर्जयेत्  ॥ ०१३  ॥

स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ।
काम्यं कर्मफलं लब्ध्वा गुरूणामुपपादयेत्  ॥ ०१४  ॥

गुरुभ्य आसनं देयं कर्तव्यं चाभिवादनम् ।
गुरूनभ्यर्च्य युज्यन्ते आयुषा यशसा श्रिया  ॥ ०१५  ॥

नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ।
मैथुनं समये धर्म्यं गुह्यं चैव समाचरेत्  ॥ ०१६  ॥

तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।
सर्वमार्यकृतं शौचं वालसंस्पर्शनानि च  ॥ ०१७  ॥

दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत् ।
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम्  ॥ ०१८  ॥

देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्  ॥ ०१९  ॥

पण्यानां शोभनं पण्यं कृषीणां बाद्यते कृषिः ।
बहुकारं च सस्यानां वाह्ये वाह्यं तथा गवाम्  ॥ ०२०  ॥

संपन्नं भोजने नित्यं पानीये तर्पणं तथा ।
सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा  ॥ ०२१  ॥

श्मश्रुकर्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने ।
व्याधितानां च सर्वेषामायुष्यमभिनन्दनम्  ॥ ०२२  ॥

प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
सुतस्त्रिया च शयनं सहभोज्यं च वर्जयेत्  ॥ ०२३  ॥

त्वङ्कारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ।
अवराणां समानानामुभयेषां न दुष्यति  ॥ ०२४  ॥

हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने  ॥ ०२५  ॥

ज्ञानपूर्वं कृतं पापं छादयन्त्यबहुश्रुताः ।
नैनं मनुष्याः पश्यन्ति पश्यन्ति त्रिदिवौकसः ॥ ०२६ ॥

पापेन हि कृतं पापं पापमेवानुवर्तते ।
धार्मिकेण कृतो धर्मः कर्तारमनुवर्तते ॥ ०२७ ॥

पापं कृतं न स्मरतीह मूढो ; विवर्तमानस्य तदेति कर्तुः ।
राहुर्यथा चन्द्रमुपैति चापि ; तथाबुधं पापमुपैति कर्म ॥ ०२८ ॥

आशया सञ्चितं द्रव्यं यत्काले नेह भुज्यते ।
तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते ॥ ०२९ ॥

मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥ ०३० ॥

एक एव चरेद्धर्मं नास्ति धर्मे सहायता ।
केवलं विधिमासाद्य सहायः किं करिष्यति ॥ ०३१ ॥

देवा योनिर्मनुष्याणां देवानाममृतं दिवि ।
प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ॥ ०३२ ॥

---

# अध्यात्मकथनम्

## अध्याय १८७

युधिष्ठिर उवाच ॥

अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते ।
यदध्यात्मं यतश्चैतत्तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात श्रेयस्करतरं सुखम् ॥ ००२ ॥

यज्ज्ञात्वा पुरुषो लोके प्रीतिं सौख्यं च विन्दति ।
फललाभश्च सद्यः स्यात्सर्वभूतहितं च तत् ॥ ००३ ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ ००४ ॥

ततः सृष्टानि तत्रैव तानि यान्ति पुनः पुनः ।
महाभूतानि भूतेषु सागरस्योर्मयो यथा ॥ ००५ ॥

प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः ।
तद्वद्भूतानि भूतात्मा सृष्ट्वा संहरते पुनः ॥ ००६ ॥

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तेषु वैषम्यं तत्तु जीवोऽनु पश्यति ॥ ००७ ॥

शब्दः श्रोत्रं तथा खानि त्रयमाकाशयोनिजम् ।
वायोस्त्वक्स्पर्शचेष्टाश्च वागित्येतच्चतुष्टयम् ॥ ००८ ॥

रूपं चक्षुस्तथा पक्तिस्त्रिविधं तेज उच्यते ।
रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ॥ ००९ ॥

घ्रेयं घ्राणं शरीरं च ते तु भूमिगुणास्त्रयः ।
महाभूतानि पञ्चैव षष्ठं तु मन उच्यते ॥ ०१० ॥

इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत ।
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ ०११ ॥

चक्षुरालोकनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसायाय क्षेत्रज्ञः साक्षिवत्स्थितः ॥ ०१२ ॥

ऊर्ध्वं पादतलाभ्यां यदर्वागूर्ध्वं च पश्यति ।
एतेन सर्वमेवेदं विद्ध्यभिव्याप्तमन्तरम् ॥ ०१३ ॥

पुरुषे चेन्द्रियाणीह वेदितव्यानि कृत्स्नशः ।
तमो रजश्च सत्त्वं च विद्धि भावांस्तदाश्रयान् ॥ ०१४ ॥

एतां बुद्ध्वा नरो बुद्ध्या भूतानामागतिं गतिम् ।
समवेक्ष्य शनैश्चैव लभते शममुत्तमम् ॥ ०१५ ॥

गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ ०१६ ॥

इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम् ।
प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ॥ ०१७ ॥

येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥ ०१८ ॥

त्वचा स्पृशति च स्पर्शान्बुद्धिर्विक्रियतेऽसकृत् ।
येन सङ्कल्पयत्यर्थं किञ्चिद्भवति तन्मनः ॥ ०१९ ॥

अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा ।
पञ्चेन्द्रियाणि यान्याहुस्तान्यदृश्योऽधितिष्ठति ॥ ०२० ॥

पुरुषाधिष्ठिता बुद्धिस्त्रिषु भावेषु वर्तते ।
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥ ०२१ ॥

न सुखेन न दुःखेन कदाचिदपि वर्तते ।
एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥ ०२२ ॥

सेयं भावात्मिका भावांस्त्रीनेतान्नातिवर्तते ।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ०२३ ॥

अतिभावगता बुद्धिर्भावे मनसि वर्तते ।
प्रवर्तमानं हि रजस्तद्भावमनुवर्तते ॥ ०२४ ॥

इन्द्रियाणि हि सर्वाणि प्रदर्शयति सा सदा ।
प्रीतिः सत्त्वं रजः शोकस्तमो मोहश्च ते त्रयः ॥ ०२५ ॥

ये ये च भावा लोकेऽस्मिन्सर्वेष्वेतेषु ते त्रिषु ।
इति बुद्धिगतिः सर्वा व्याख्याता तव भारत ॥ ०२६ ॥

इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता ।
सत्त्वं रजस्तमश्चैव प्राणिनां संश्रिताः सदा ॥ ०२७ ॥

त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते ।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥ ०२८ ॥

सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः ।
तमोगुणेन संयुक्तौ भवतोऽव्यावहारिकौ ॥ ०२९ ॥

तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्यवेक्षेत तत्तदा ॥ ०३० ॥

अथ यद्दुःखसंयुक्तमतुष्टिकरमात्मनः ।

प्रवृत्तं रज इत्येव तन्नसंरभ्य चिन्तयेत्  ॥ ०३१  ॥

अथ यन्मोहसंयुक्तमव्यक्तमिव यद्भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्  ॥ ०३२  ॥

प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ।
कथञ्चिदभिवर्तन्त इत्येते सात्त्विका गुणाः  ॥ ०३३  ॥

अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः  ॥ ०३४  ॥

अभिमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता ।
कथञ्चिदभिवर्तन्ते विविधास्तामसा गुणाः  ॥ ०३५  ॥

दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ।
मनः सुनियतं यस्य स सुखी प्रेत्य चेह च  ॥ ०३६  ॥

सत्त्वेक्षत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः ।
सृजते तु गुणानेक एको न सृजते गुणान्  ॥ ०३७  ॥

मशकोदुम्बरौ चापि संप्रयुक्तौ यथा सदा ।
अन्योन्यमन्यौ च यथा संप्रयोगस्तथा तयोः  ॥ ०३८  ॥

पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ।
यथा मत्स्यो जलं चैव संप्रयुक्तौ तथैव तौ  ॥ ०३९  ॥

न गुणा विदुरात्मानं स गुणान्वेत्ति सर्वशः ।
परिद्रष्टा गुणानां च संस्रष्टा मन्यते सदा  ॥ ०४०  ॥

इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः ।
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत्  ॥ ०४१  ॥

सृजते हि गुणान्सत्त्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ०४२ ॥

आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन ।
सत्त्वं मनः संसृजति न गुणान्वै कदाचन ॥ ०४३ ॥

रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ ०४४ ॥

त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूतः स्यात्स गच्छेत्परमां गतिम् ॥ ०४५ ॥

यथा वारिचरः पक्षी लिप्यमानो न लिप्यते ।
एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ॥ ०४६ ॥

एवंस्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च चरेद्विगतमत्सरः ॥ ०४७ ॥

स्वभावसिद्ध्या संसिद्धान्स नित्यं सृजते गुणान् ।
ऊर्णनाभिर्यथा स्रष्टा विज्ञेयास्तन्तुवद्गुणाः ॥ ०४८ ॥

प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ॥ ०४९ ॥

एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ।
उभयं संप्रधार्यैतदध्यवस्येद्यथामति ॥ ०५० ॥

इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम् ।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ०५१ ॥

मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः ।
अवगाह्य सुविद्वंसो विद्धि ज्ञानमिदं तथा ॥ ०५२ ॥

महानदीं हि पारज्ञस्तप्यते न तरन्यथा ।
एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमम् ॥ ०५३ ॥

एतां बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम् ।
अवेक्ष्य च शनैर्बुद्ध्या लभते शं परं ततः ॥ ०५४ ॥

त्रिवर्गो यस्य विदितः प्राग्ज्योतिः स विमुच्यते ।
अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ०५५ ॥

न चात्मा शक्यते द्रष्टुमिन्द्रियेषु विभागशः ।
तत्र तत्र विसृष्टेषु दुर्जयेष्वकृतात्मभिः ॥ ०५६ ॥

एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ ०५७ ॥

न भवति विदुषां ततो भयं ; यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकास्ति कस्य चि ;त्सति हि गुणे प्रवदन्त्यतुल्यताम् ॥ ०५८ ॥

यत्करोत्यनभिसंधिपूर्वकं ; तच्च निर्णुदति यत्पुरा कृतम् ।
नाप्रियं तदुभयं कुतः प्रियं ; तस्य तज्जनयतीह कुर्वतः ॥ ०५९ ॥

लोक आतुरजनान्विराविण ;स्तत्तदेव बहु पश्य शोचतः ।
तत्र पश्य कुशलानशोचतो ; ये विदुस्तदुभयं पदं सदा ॥ ०६० ॥

# ध्यानयोगः

## अध्याय १८८

भीष्म उवाच ॥

हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम् ।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्ति परमर्षयः ॥ ००१ ॥

यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥ ००२ ॥

नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः ।
जन्मदोषपरिक्षीणाः स्वभावे पर्यवस्थिताः ॥ ००३ ॥

निर्द्वंद्वा नित्यसत्त्वस्था विमुक्ता नित्यमाश्रिताः ।
असङ्गीन्यविवादीनि मनःशान्तिकराणि च ॥ ००४ ॥

तत्र स्वाध्यायसंश्लिष्टमेकाग्रं धारयेन्मनः ।
पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ॥ ००५ ॥

शब्दं न विन्देच्छ्रोत्रेण स्पर्शं त्वचा न वेदयेत् ।
रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा ॥ ००६ ॥

घ्रेयाण्यपि च सर्वाणि जह्याद्ध्यानेन योगवित् ।
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ॥ ००७ ॥

ततो मनसि संसज्य पञ्चवर्गं विचक्षणः ।
समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चभिः ॥ ००८ ॥

विसञ्चारि निरालम्बं पञ्चद्वारं चलाचलम् ।

पूर्वं ध्यानपथे धीरः समादध्यान्मनोऽन्तरम् ॥ ००९ ॥

इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ।
एष ध्यानपथः पूर्वो मया समनुवर्णितः ॥ ०१० ॥

तस्य तत्पूर्वसंरुद्धं मनःषष्ठमनन्तरम् ।
स्फुरिष्यति समुद्भ्रान्तं विद्युदम्बुधरे यथा ॥ ०११ ॥

जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः ।
एवमेवास्य तच्चित्तं भवति ध्यानवर्त्मनि ॥ ०१२ ॥

समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथं भ्रान्तं मनो भवति वायुवत् ॥ ०१३ ॥

अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः ।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥ ०१४ ॥

विचारश्च वितर्कश्च विवेकश्चोपजायते ।
मुनेः समादधानस्य प्रथमं ध्यानमादितः ॥ ०१५ ॥

मनसा क्लिश्यमानस्तु समाधानं च कारयेत् ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् ॥ ०१६ ॥

पांसुभस्मकरीषाणां यथा वै राशयश्चिताः ।
सहसा वारिणा सिक्ता न यान्ति परिभावनाम् ॥ ०१७ ॥

किंचित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम् ।
क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम् ॥ ०१८ ॥

एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत् ।
संहरेत्क्रमशश्चैव स सम्यक्प्रशमिष्यति ॥ ०१९ ॥

स्वयमेव मनश्चैव पञ्चवर्गश्च भारत ।
पूर्वं ध्यानपथं प्राप्य नित्ययोगेन शाम्यति ॥ ०२० ॥

न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ॥ ०२१ ॥

सुखेन तेन संयुक्तो रंस्यते ध्यानकर्मणि ।
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् ॥ ०२२ ॥

---

# जापकोपाख्यानम्

## अध्याय १८९

युधिष्ठिर उवाच ॥

चातुराश्रम्यमुक्तं ते राजधर्मास्तथैव च ।
नानाश्रयाश्च बहव इतिहासाः पृथग्विधाः ॥ ००१ ॥

श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते ।
संदेहोऽस्ति तु कश्चिन्मे तद्भवान्वक्तुमर्हति ॥ ००२ ॥

जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत ।
किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ॥ ००३ ॥

जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ ।
जापका इति किं चैतत्सांख्ययोगक्रियाविधिः ॥ ००४ ॥

किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते ।
एतन्मे सर्वमाचक्ष्व सर्वज्ञो ह्यसि मे मतः ॥ ००५ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यमस्य यत्पुरा वृत्तं कालस्य ब्राह्मणस्य च ॥ ००६ ॥

संन्यास एव वेदान्ते वर्तते जपनं प्रति ।
वेदवादाभिनिर्वृत्ता शान्तिर्ब्रह्मण्यवस्थितौ ॥ ००७ ॥

मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ ॥ ००७ ॥

यथा संश्रूयते राजन्कारणं चात्र वक्ष्यते ।
मनःसमाधिरत्रापि तथेन्द्रियजयः स्मृतः ॥ ००८ ॥

सत्यमग्निपरीचारो विविक्तानां च सेवनम् ।
ध्यानं तपो दमः क्षान्तिरनसूया मिताशनम् ॥ ००९ ॥

विषयप्रतिसंहारो मितजल्पस्तथा शमः ।
एष प्रवृत्तको धर्मो निवृत्तकमथो श्णु ॥ ०१० ॥

यथा निवर्तते कर्म जपतो ब्रह्मचारिणः ।
एतत्सर्वमशेषेण यथोक्तं परिवर्जयेत् ॥ ०११ ॥

त्रिविधं मार्गमासाद्य व्यक्ताव्यक्तमनाश्रयम् ॥ ०११ ॥

कुशोच्चयनिषण्णः सन्कुशहस्तः कुशैः शिखी ।
चीरैः परिवृतस्तस्मिन्मध्ये छन्नः कुशैस्तथा ॥ ०१२ ॥

विषयेभ्यो नमस्कुर्याद्विषयान्न च भावयेत् ।
साम्यमुत्पाद्य मनसो मनस्येव मनो दधत् ॥ ०१३ ॥

तद्धिया ध्यायति ब्रह्म जपन्वै संहितां हिताम् ।
संन्यस्यत्यथ वा तां वै समाधौ पर्यवस्थितः ॥ ०१४ ॥

ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात् ।
शुद्धात्मा तपसा दान्तो निवृत्तद्वेषकामवान् ॥ ०१५ ॥

अरागमोहो निर्द्वंद्वो न शोचति न सज्जते ।
न कर्ताकरणीयानां न कार्याणामिति स्थितिः ॥ ०१६ ॥

न चाहङ्कारयोगेन मनः प्रस्थापयेत्क्वचित् ।
न चात्मग्रहणे युक्तो नावमानी न चाक्रियः ॥ ०१७ ॥

ध्यानक्रियापरो युक्तो ध्यानवान्ध्याननिश्चयः ।
ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात् ॥ ०१८ ॥

स वै तस्यामवस्थायां सर्वत्यागकृतः सुखी ।
निरीहस्त्यजति प्राणान्ब्राह्मीं संश्रयते तनुम् ॥ ०१९ ॥

अथ वा नेच्छते तत्र ब्रह्मकायनिषेवणम् ।
उत्क्रामति च मार्गस्थो नैव क्वचन जायते ॥ ०२० ॥

आत्मबुद्धिं समास्थाय शान्तीभूतो निरामयः ।
अमृतं विरजःशुद्धमात्मानं प्रतिपद्यते ॥ ०२१ ॥

# अध्याय १९०

युधिष्ठिर उवाच ॥

गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह ।
एकैवैषा गतिस्तेषामुत यान्त्यपरामपि ॥ ००१ ॥

भीष्म उवाच ॥

शृणुष्वावहितो राजञ्जापकानां गतिं विभो ।
यथा गच्छन्ति निरयमनेकं पुरुषर्षभ ॥ ००२ ॥

यथोक्तमेतत्पूर्वं यो नानुतिष्ठति जापकः ।
एकदेशक्रियश्चात्र निरयं स निगच्छति ॥ ००३ ॥

अवज्ञानेन कुरुते न तुष्यति न शोचति ।
ईदृशो जापको याति निरयं नात्र संशयः ॥ ००४ ॥

अहङ्कारकृतश्चैव सर्वे निरयगामिनः ।
परावमानी पुरुषो भविता निरयोपगः ॥ ००५ ॥

अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।
यत्राभिध्यां स कुरुते तं वै निरयमृच्छति ॥ ००६ ॥

अथैश्वर्यप्रवृत्तः सञ्जापकस्तत्र रज्यते ।
स एव निरयस्तस्य नासौ तस्मात्प्रमुच्यते ॥ ००७ ॥

रागेण जापको जप्यं कुरुते तत्र मोहितः ।
यत्रास्य रागः पतति तत्र तत्रोपजायते ॥ ००८ ॥

दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति ।

चलामेव गतिं याति निरयं वाधिगच्छति ॥ ००९ ॥

अकृतप्रज्ञको बालो मोहं गच्छति जापकः ।
स मोहान्निरयं याति तत्र गत्वानुशोचति ॥ ०१० ॥

दृढग्राही करोमीति जप्यं जपति जापकः ।
न संपूर्णो न वा युक्तो निरयं सोऽधिगच्छति ॥ ०११ ॥

युधिष्ठिर उवाच ॥

अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम् ।
सद्भूतो जापकः कस्मात्स शरीरमथाविशेत् ॥ ०१२ ॥

भीष्म उवाच ॥

दुष्प्रज्ञानेन निरया बहवः समुदाहृताः ।
प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः ॥ ०१३ ॥

---

# अध्याय १९१

युधिष्ठिर उवाच ॥

कीदृशो जापको याति निरयं वर्णयस्व मे ।
कौतूहलं हि मे जातं तद्भवान्वक्तुमर्हति ॥ ००१ ॥

भीष्म उवाच ॥

धर्मस्यांशः प्रसूतोऽसि धर्मिष्ठोऽसि स्वभावतः ।

धर्ममूलाश्रयं वाक्यं श्रृणुष्वावहितोऽनघ ॥ ००२ ॥

अमूनि यानि स्थानानि देवानां परमात्मनाम् ।
नानासंस्थानवर्णानि नानारूपफलानि च ॥ ००३ ॥

दिव्यानि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन्पद्मिन्यश्चामलोदकाः ॥ ००४ ॥

चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥ ००५ ॥

रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम् ।
एते वै निरयास्तात स्थानस्य परमात्मनः ॥ ००६ ॥

अभयं चानिमित्तं च न च क्लेशभयावृतम् ।
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ॥ ००७ ॥

चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम् ।
अप्रहर्षमनानन्दमशोकं विगतक्लमम् ॥ ००८ ॥

कालः संपच्यते तत्र न कालस्तत्र वै प्रभुः ।
स कालस्य प्रभू राजन्स्वर्गस्यापि तथेश्वरः ॥ ००९ ॥

आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ ०१० ॥

एते ते निरयाः प्रोक्ताः सर्व एव यथातथम् ।
तस्य स्थानवरस्येह सर्वे निरयसञ्ज्ञिताः ॥ ०११ ॥

# अध्याय १९२

युधिष्ठिर उवाच ॥

कालमृत्युयमानां च ब्राह्मणस्य च सत्तम ।
विवादो व्याहृतः पूर्वं तद्भवान्वक्तुमर्हति ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इक्ष्वाकोः सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ॥ ००२ ॥

कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे ।
यथा स तेषां संवादो यस्मिन्स्थानेऽपि चाभवत् ॥ ००३ ॥

ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः ।
षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ॥ ००४ ॥

तस्यापरोक्षं विज्ञानं षडङ्गेषु तथैव च ।
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ॥ ००५ ॥

सोऽन्त्यं ब्राह्मं तपस्तेपे संहितां संयतो जपन् ।
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ॥ ००६ ॥

स देव्या दर्शितः साक्षात्प्रीतास्मीति तदा किल ।
जप्यमावर्तयंस्तूष्णीं न च तां किञ्चिदब्रवीत् ॥ ००७ ॥

तस्यानुकम्पया देवी प्रीता समभवत्तदा ।
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ ००८ ॥

समाप्तजप्यस्तूत्थाय शिरसा पादयोस्तथा ।

पपात देव्या धर्मात्मा वचनं चेदमब्रवीत्  ॥ ००९  ॥

दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागता मम ।
यदि वापि प्रसन्नासि जप्ये मे रमतां मनः  ॥ ०१०  ॥

सावित्र्युवाच  ॥

किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते ।
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति  ॥ ०११  ॥

भीष्म उवाच  ॥

इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित् ।
जप्यं प्रति ममेच्छेयं वर्धत्विति पुनः पुनः  ॥ ०१२  ॥

मनसश्च समाधिर्मे वर्धेताहरहः शुभे ।
तत्तथेति ततो देवी मधुरं प्रत्यभाषत  ॥ ०१३  ॥

इदं चैवापरं प्राह देवी तत्प्रियकाम्यया ।
निरयं नैव यातासि यत्र याता द्विजर्षभाः  ॥ ०१४  ॥

यास्यसि ब्रह्मणः स्थानमनिमित्तमनिन्दितम् ।
साधये भविता चैतद्यत्त्वयाहमिहार्थिता  ॥ ०१५  ॥

नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति ।
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम्  ॥ ०१६  ॥

भविता च विवादोऽत्र तव तेषां च धर्मतः  ॥ ०१६  ॥

एवमुक्त्वा भगवती जगाम भवनं स्वकम् ।
ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तदा  ॥ ०१७  ॥

समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः ।
साक्षात्प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥ ०१८ ॥

धर्म उवाच ॥

द्विजाते पश्य मां धर्ममहं त्वां द्रष्टुमागतः ।
जप्यस्य च फलं यत्ते संप्राप्तं तच्च मे शृणु ॥ ०१९ ॥

जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः ।
देवानां निरयान्साधो सर्वानुत्क्रम्य यास्यसि ॥ ०२० ॥

प्राणत्यागं कुरु मुने गच्छ लोकान्यथेप्सितान् ।
त्यक्त्वात्मनः शरीरं च ततो लोकानवाप्स्यसि ॥ ०२१ ॥

ब्राह्मण उवाच ॥

कृतं लोकैर्हि मे धर्म गच्छ च त्वं यथासुखम् ।
बहुदुःखसुखं देहं नोत्सृजेयमहं विभो ॥ ०२२ ॥

धर्म उवाच ॥

अवश्यं भोः शरीरं ते त्यक्तव्यं मुनिपुङ्गव ।
स्वर्ग आरोह्यतां विप्र किं वा ते रोचतेऽनघ ॥ ०२३ ॥

ब्राह्मण उवाच ॥

न रोचये स्वर्गवासं विना देहादहं विभो ।
गच्छ धर्म न मे श्रद्धा स्वर्गं गन्तुं विनात्मना ॥ ०२४ ॥

धर्म उवाच ॥

अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥ ०२५ ॥

ब्राह्मण उवाच ॥

रमे जपन्महाभाग कृतं लोकैः सनातनैः ।
सशरीरेण गन्तव्यो मया स्वर्गो न वा विभो ॥ ०२६ ॥

धर्म उवाच ॥

यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ॥ ०२७ ॥

भीष्म उवाच ॥

अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागमुपागम्येदमब्रुवन् ॥ ०२८ ॥

तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ॥ ०२९ ॥

यथावदस्य जप्यस्य फलं प्राप्तस्त्वमुत्तमम् ।
कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ॥ ०३० ॥

मृत्युं मा विद्धि धर्मज्ञ रूपिणं स्वयमागतम् ।
कालेन चोदितं विप्र त्वामितो नेतुमद्य वै ॥ ०३१ ॥

ब्राह्मण उवाच ॥

स्वागतं सूर्यपुत्राय कालाय च महात्मने ।

मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ॥ ०३२ ॥

भीष्म उवाच ॥

अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागमे ।
अब्रवीत्परमप्रीतः स्वशक्त्या किं करोमि वः ॥ ०३३ ॥

तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ॥ ०३४ ॥

सर्वानेव तु राजर्षिः संपूज्याभिप्रणम्य च ।
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ॥ ०३५ ॥

तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च ।
अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ॥ ०३६ ॥

स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीह तद्भवान्प्रब्रवीतु मे ॥ ०३७ ॥

राजोवाच ॥

राजाहं ब्राह्मणश्च त्वं यदि षट्कर्मसंस्थितः ।
ददामि वसु किञ्चित्ते प्रार्थितं तद्वदस्व मे ॥ ०३८ ॥

ब्राह्मण उवाच ॥

द्विविधा ब्राह्मणा राजन्धर्मश्च द्विविधः स्मृतः ।
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽस्मि प्रतिग्रहात् ॥ ०३९ ॥

तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप ।
अहं न प्रतिगृह्णामि किमिष्टं किं ददानि ते ॥ ०४० ॥

ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम्  ॥ ०४०  ॥

राजोवाच  ॥

क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ युद्धमित्येवं वादिनः स्मो द्विजोत्तम  ॥ ०४१  ॥

ब्राह्मण उवाच  ॥

तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत्समाचर  ॥ ०४२  ॥

राजोवाच  ॥

स्वशक्त्याहं ददानीति त्वया पूर्वं प्रभाषितम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज  ॥ ०४३  ॥

ब्राह्मण उवाच  ॥

युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया सार्धं किमर्थं याचसे पुनः  ॥ ०४४  ॥

राजोवाच  ॥

वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह  ॥ ०४५  ॥

ब्राह्मण उवाच  ॥

सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम् ।

ब्रूहि दास्यामि राजेन्द्र विभवे सति माचिरम्  ॥ ०४६  ॥

राजोवाच  ॥

यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया ।
फलं प्राप्तं तत्प्रयच्छ मम दित्सुर्भवान्यदि  ॥ ०४७  ॥

ब्राह्मण उवाच  ॥

परमं गृह्यतां तस्य फलं यज्जपितं मया ।
अर्धं त्वमविचारेण फलं तस्य समाप्नुहि  ॥ ०४८  ॥

अथ वा सर्वमेवेह जप्यकं मामकं फलम् ।
राजन्प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि  ॥ ०४९  ॥

राजोवाच  ॥

कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किं च तस्य फलं वद  ॥ ०५०  ॥

ब्राह्मण उवाच  ॥

फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः  ॥ ०५१  ॥

राजोवाच  ॥

अज्ञातमस्य धर्मस्य फलं मे किं करिष्यति ।
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयम्  ॥ ०५२  ॥

ब्राह्मण उवाच  ॥

नाददेऽपरवक्तव्यं दत्तं वाचा फलं मया ।
वाक्यं प्रमाणं राजर्षे ममापि तव चैव हि ॥ ०५३ ॥

नाभिसंधिर्मया जप्ये कृतपूर्वः कथञ्चन ।
जप्यस्य राजशार्दूल कथं ज्ञास्याम्यहं फलम् ॥ ०५४ ॥

ददस्वेति त्वया चोक्तं ददामीति तथा मया ।
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ ०५५ ॥

अथैवं वदतो मेऽद्य वचनं न करिष्यसि ।
महानधर्मो भविता तव राजन्मृषाकृतः ॥ ०५६ ॥

न युक्तं तु मृषा वाणी त्वया वक्तुमरिंदम ।
तथा मयाप्यभ्यधिकं मृषा वक्तुं न शक्यते ॥ ०५७ ॥

संश्रुतं च मया पूर्वं ददानीत्यविचारितम् ।
तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥ ०५८ ॥

इहागम्य हि मां राजञ्जाप्यं फलमयाचिथाः ।
तन्मन्निसृष्टं गृह्णीष्व भव सत्ये स्थिरोऽपि च ॥ ०५९ ॥

नायं लोकोऽस्ति न परो न च पूर्वान्स तारयेत् ।
कुत एवावरान्राजन्मृषावादपरायणः ॥ ०६० ॥

न यज्ञाध्ययने दानं नियमास्तारयन्ति हि ।
तथा सत्यं परे लोके यथा वै पुरुषर्षभ ॥ ०६१ ॥

तपांसि यानि चीर्णानि चरिष्यसि च यत्तपः ।
समाः शतैः सहस्रैश्च तत्सत्यान्न विशिष्यते ॥ ०६२ ॥

सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः ।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥ ०६३ ॥

सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम् ।
सत्याद्धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ०६४ ॥

सत्यं वेदास्तथाङ्गानि सत्यं यज्ञस्तथा विधिः ।
व्रतचर्यास्तथा सत्यमोङ्कारः सत्यमेव च ॥ ०६५ ॥

प्राणिनां जननं सत्यं सत्यं संततिरेव च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ०६६ ॥

सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः ।
सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती ॥ ०६७ ॥

तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम् ।
समां कक्षां धारयतो यतः सत्यं ततोऽधिकम् ॥ ०६८ ॥

यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते ।
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ॥ ०६९ ॥

सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ ०७० ॥

यदि जप्यफलं दत्तं मया नेषिष्यसे नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ ०७१ ॥

संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतौ न मृषा कर्तुमर्हसि ॥ ०७२ ॥

राजोवाच ॥

योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम्  ॥ ०७३  ॥

ब्राह्मण उवाच  ॥

न छन्दयामि ते राजन्नापि ते गृहमाव्रजम् ।
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम्  ॥ ०७४  ॥

धर्म उवाच  ॥

अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च  ॥ ०७५  ॥

स्वर्ग उवाच  ॥

स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम्  ॥ ०७६  ॥

राजोवाच  ॥

कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथासुखम् ।
विप्रो यदीच्छते दातुं प्रतीच्छतु च मे धनम्  ॥ ०७७  ॥

ब्राह्मण उवाच  ॥

बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तिलक्षणं धर्ममुपासे संहितां जपन्  ॥ ०७८  ॥

निवृत्तं मां चिरं राजन्विप्रं लोभयसे कथम् ।
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप  ॥ ०७९  ॥

तपःस्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात्  ॥ ०७९  ॥

राजोवाच  ॥

यदि विप्र निसृष्टं ते जप्यस्य फलमुत्तमम् ।
आवयोर्यत्फलं किञ्चित्सहितं नौ तदस्त्विह  ॥ ०८०  ॥

द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः ।
यदि धर्मः श्रुतो विप्र सहैव फलमस्तु नौ  ॥ ०८१  ॥

मा वा भूत्सहभोज्यं नौ मदीयं फलमाप्नुहि ।
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः  ॥ ०८२  ॥

भीष्म उवाच  ॥

ततो विकृतचेष्टौ द्वौ पुरुषौ समुपस्थितौ ।
गृहीत्वान्योन्यमावेष्ठ्य कुचेलावूचतुर्वचः  ॥ ०८३  ॥

न मे धारयसीत्येको धारयामीति चापरः ।
इहास्ति नौ विवादोऽयमयं राजानुशासकः  ॥ ०८४  ॥

सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् ।
अनृतं वदसीह त्वमृणं ते धारयाम्यहम्  ॥ ०८५  ॥

तावुभौ भृशसंतप्तौ राजानमिदमूचतुः ।
परीक्ष्यतां यथा स्याव नावामिह विगर्हितौ  ॥ ०८६  ॥

विरूप उवाच  ॥

धारयामि नरव्याघ्र विकृतस्येह गोः फलम् ।

ददतश्च न गृह्णाति विकृतो मे महीपते ॥ ०८७ ॥

विकृत उवाच ॥

न मे धारयते किञ्चिद्विरूपोऽयं नराधिप ।
मिथ्या ब्रवीत्ययं हि त्वा मिथ्याभासं नराधिप ॥ ०८८ ॥

राजोवाच ॥

विरूप किं धारयते भवानस्य वदस्व मे ।
श्रुत्वा तथा करिष्यामीत्येवं मे धीयते मतिः ॥ ०८९ ॥

विरूप उवाच ॥

शृणुष्वावहितो राजन्यथैतद्धारयाम्यहम् ।
विकृतस्यास्य राजर्षे निखिलेन नरर्षभ ॥ ०९० ॥

अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुरानघ ।
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ॥ ०९१ ॥

तस्याश्चायं मया राजन्फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशूद्धेनान्तरात्मना ॥ ०९२ ॥

ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।
गावौ हि कपिले क्रीत्वा वत्सले बहुदोहने ॥ ०९३ ॥

ते चोञ्छवृत्तये राजन्मया समपवर्जिते ।
यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ॥ ०९४ ॥

इहाद्य वै गृहीत्वा तत्प्रयच्छे द्विगुणं फलम् ।
एकस्याः पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान् ॥ ०९५ ॥

एवं विवदमानौ स्वस्त्वामिहाभ्यागतौ नृप ।
कुरु धर्ममधर्मं वा विनये नौ समाधय ॥ ०९६ ॥

यदि नेच्छति मे दानं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयतु प्रभुः ॥ ०९७ ॥

राजोवाच ॥

दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै ।
यथैव तेऽभ्यनुज्ञातं तथा गृह्णीष्व माचिरम् ॥ ०९८ ॥

विकृत उवाच ॥

दीयतामित्यनेनोक्तं ददानीति तथा मया ।
नायं मे धारयत्यत्र गम्यतां यत्र वाञ्छति ॥ ०९९ ॥

राजोवाच ॥

ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे ।
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः ॥ १०० ॥

विकृत उवाच ॥

मयास्य दत्तं राजर्षे गृह्णीयां तत्कथं पुनः ।
काममत्रापराधो मे दण्ड्यमाज्ञापय प्रभो ॥ १०१ ॥

विरूप उवाच ॥

दीयमानं यदि मया नेषिष्यसि कथञ्चन ।
नियंस्यति त्वा नृपतिरयं धर्मानुशासकः ॥ १०२ ॥

विकृत उवाच ॥

स्वं मया याचितेनेह दत्तं कथमिहाद्य तत् ।
गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ १०३ ॥

ब्राह्मण उवाच ॥

श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः ।
प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितम् ॥ १०४ ॥

राजोवाच ॥

प्रस्तुतं सुमहत्कार्यमावयोर्गह्वरं यथा ।
जापकस्य दृढीकारः कथमेतद्भविष्यति ॥ १०५ ॥

यदि तावन्न गृह्णामि ब्राह्मणेनापवर्जितम् ।
कथं न लिप्येयमहं दोषेण महताद्य वै ॥ १०६ ॥

भीष्म उवाच ॥

तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः ।
नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ १०७ ॥

स्वधर्मः परिपाल्यश्च राज्ञामेष विनिश्चयः ।
विप्रधर्मश्च सुगुरुर्मामनात्मानमाविशत् ॥ १०८ ॥

ब्राह्मण उवाच ॥

गृहाण धारयेऽहं ते याचितं ते श्रुतं मया ।
न चेद्ग्रहीष्यसे राजञ्शापिष्ये त्वां न संशयः ॥ १०९ ॥

राजोवाच ॥

धिग्राजधर्मं यस्यायं कार्यस्येह विनिश्चयः ।
इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ॥ ११० ॥

एष पाणिरपूर्वं भो निक्षेपार्थं प्रसारितः ।
यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥ १११ ॥

ब्राह्मण उवाच ॥

संहितां जपता यावान्मया कश्चिद्गुणः कृतः ।
तत्सर्वं प्रतिगृह्णीष्व यदि किञ्चिदिहास्ति मे ॥ ११२ ॥

राजोवाच ॥

जलमेतन्निपतितं मम पाणौ द्विजोत्तम ।
सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ॥ ११३ ॥

विरूप उवाच ॥

कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् ।
समेति च यदुक्तं ते समा लोकास्तवास्य च ॥ ११४ ॥

नायं धारयते किञ्चिज्जिज्ञासा त्वत्कृते कृता ।
कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ॥ ११५ ॥

सर्वमन्योन्यनिकषे निघृष्टं पश्यतस्तव ।
गच्छ लोकाञ्जितान्स्वेन कर्मणा यत्र वाञ्छसि ॥ ११६ ॥

भीष्म उवाच ॥

जापकानां फलावाप्तिर्मया ते संप्रकीर्तिता ।
गतिः स्थानं च लोकाश्च जापकेन यथा जिताः ॥ ११७ ॥

प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् ।
अथ वाग्निं समायाति सूर्यमाविशतेऽपि वा ॥ ११८ ॥

स तैजसेन भावेन यदि तत्राश्नुते रतिम् ।
गुणांस्तेषां समादत्ते रागेण प्रतिमोहितः ॥ ११९ ॥

एवं सोमे तथा वायौ भूम्याकाशशरीरगः ।
सरागस्तत्र वसति गुणांस्तेषां समाचरन् ॥ १२० ॥

अथ तत्र विरागी स गच्छति त्वथ संशयम् ।
परमव्ययमिच्छन्स तमेवाविशते पुनः ॥ १२१ ॥

अमृताच्चामृतं प्राप्तः शीतीभूतो निरात्मवान् ।
ब्रह्मभूतः स निर्द्वंद्वः सुखी शान्तो निरामयः ॥ १२२ ॥

ब्रह्मस्थानमनावर्तमेकमक्षरसञ्ज्ञकम् ।
अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते ॥ १२३ ॥

चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः ।
पुरुषं समतिक्रम्य आकाशं प्रतिपद्यते ॥ १२४ ॥

अथ वेच्छति रागात्मा सर्वं तदधितिष्ठति ।
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ॥ १२५ ॥

अथ वा वीक्षते लोकान्सर्वान्निरयसंस्थितान् ।
निःस्पृहः सर्वतो मुक्तस्तत्रैव रमते सुखी ॥ १२६ ॥

एवमेषा महाराज जापकस्य गतिर्यथा ।

एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १२७ ॥

---

# अध्याय १९३

युधिष्ठिर उवाच ॥

किमुत्तरं तदा तौ स्म चक्रतुस्तेन भाषिते ।
ब्राह्मणो वाथ वा राजा तन्मे ब्रूहि पितामह ॥ ००१ ॥

अथ वा तौ गतौ तत्र यदेतत्कीर्तितं त्वया ।
संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः ॥ ००२ ॥

भीष्म उवाच ॥

तथेत्येवं प्रतिश्रुत्य धर्मं संपूज्य चाभिभो ।
यमं कालं च मृत्युं च स्वर्गं संपूज्य चार्हतः ॥ ००३ ॥

पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः ।
सर्वान्संपूज्य शिरसा राजानं सोऽब्रवीद्वचः ॥ ००४ ॥

फलेनानेन संयुक्तो राजर्षे गच्छ पुण्यताम् ।
भवता चाभ्यनुज्ञातो जपेयं भूय एव हि ॥ ००५ ॥

वरश्च मम पूर्वं हि देव्या दत्तो महाबल ।
श्रद्धा ते जपतो नित्यं भवितेति विशां पते ॥ ००६ ॥

राजोवाच ॥

यद्येवमफला सिद्धिः श्रद्धा च जपितुं तव ।
गच्छ विप्र मया सार्धं जापकं फलमाप्नुहि ॥ ००७ ॥

ब्राह्मण उवाच ॥

कृतः प्रयत्नः सुमहान्सर्वेषां संनिधाविह ।
सह तुल्यफलौ चावां गच्छावो यत्र नौ गतिः ॥ ००८ ॥

भीष्म उवाच ॥

व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः ।
सह देवैरुपययौ लोकपालैस्तथैव च ॥ ००९ ॥

साध्या विश्वेऽथ मरुतो ज्योतींषि सुमहान्ति च ।
नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ ०१० ॥

तपांसि संयोगविधिर्वेदाः स्तोभाः सरस्वती ।
नारदः पर्वतश्चैव विश्वावसुर्हहा हुहूः ॥ ०११ ॥

गन्धर्वश्चित्रसेनश्च परिवारगणैर्युतः ।
नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः ॥ ०१२ ॥

विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् ॥ ०१२ ॥

अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि चाभिभो ।
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् ॥ ०१३ ॥

ननृतुश्चाप्सरःसंघास्तत्र तत्र समन्ततः ॥ ०१३ ॥

अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् ।
संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप ॥ ०१४ ॥

अथ तौ सहितौ राजन्नन्योन्येन विधानतः ।
विषयप्रतिसंहारमुभावेव प्रचक्रतुः ॥ ०१५ ॥

प्राणापानौ तथोदानं समानं व्यानमेव च ।
एवं तान्मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ ०१६ ॥

उपस्थितकृतौ तत्र नासिकाग्रमधो भ्रुवौ ।
कुङ्कुण्यां चैव मनसा शनैर्धारयतः स्म तौ ॥ ०१७ ॥

निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ ।
जितासनौ तथाधाय मूर्धन्यात्मानमेव च ॥ ०१८ ॥

तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।
ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ ०१९ ॥

हाहाकारस्ततो दिक्षु सर्वासु सुमहानभूत् ।
तज्ज्योतिः स्तूयमानं स्म ब्रह्माणं प्राविशत्तदा ॥ ०२० ॥

ततः स्वागतमित्याह तत्तेजः स पितामहः ।
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशां पते ॥ ०२१ ॥

भूयश्चैवापरं प्राह वचनं मधुरं स्म सः ।
जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ ०२२ ॥

योगस्य तावदेतेभ्यः फलं प्रत्यक्षदर्शनम् ।
जापकानां विशिष्टं तु प्रत्युत्थानं समाधिकम् ॥ ०२३ ॥

उष्यतां मयि चेत्युक्त्वाचेतयत्स ततः पुनः ।
अथास्य प्रविवेशास्यं ब्राह्मणो विगतज्वरः ॥ ०२४ ॥

राजाप्येतेन विधिना भगवन्तं पितामहम् ।
यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा ॥ ०२५ ॥

स्वयंभुवमथो देवा अभिवाद्य ततोऽब्रुवन् ।
जापकार्थमयं यत्नस्तदर्थं वयमागताः ॥ ०२६ ॥

कृतपूजाविमौ तुल्यं त्वया तुल्यफलाविमौ ।
योगजापकयोर्दृष्टं फलं सुमहदद्य वै ॥ ०२७ ॥

सर्वा.ण्ल्लोकानतीत्यैतौ गच्छेतां यत्र वाञ्छितम् ॥ ०२७ ॥

ब्रह्मोवाच ॥

महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम् ।
तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ ०२८ ॥

यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः ।
विधिनानेन देहान्ते मम लोकानवाप्नुयात् ॥ ०२९ ॥

गम्यतां साधयिष्यामि यथास्थानानि सिद्धये ॥ ०२९ ॥

भीष्म उवाच ॥

इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत ।
आमन्त्र्य तं ततो देवा ययुः स्वं स्वं निवेशनम् ॥ ०३० ॥

ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै ।
पृष्ठतोऽनुययू राजन्सर्वे सुप्रीतमानसाः ॥ ०३१ ॥

एतत्फलं जापकानां गतिश्चैव प्रकीर्तिता ।
यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ॥ ०३२ ॥

# मनुबृहस्पतिसंवादः

## अध्याय १९४

युधिष्ठिर उवाच ॥

किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा वा कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः ॥ ००२ ॥

प्रजापतिं श्रेष्ठतमं पृथिव्यां ; देवर्षिसंघप्रवरो महर्षिः ।
बृहस्पतिः प्रश्नमिमं पुराणं ; पप्रच्छ शिष्योऽथ गुरुं प्रणम्य ॥ ००३ ॥

यत्कारणं मन्त्रविधिः प्रवृत्तो ; ज्ञाने फलं यत्प्रवदन्ति विप्राः ।
यन्मन्त्रशब्दैरकृतप्रकाशं ; तदुच्यतां मे भगवन्यथावत् ॥ ००४ ॥

यदर्थशास्त्रागममन्त्रविद्भि ;र्यज्ञैरनेकैर्वरगोप्रदानैः ।
फलं महद्भिर्यदुपास्यते च ; तत्किं कथं वा भविता क्व वा तत् ॥ ००५ ॥

मही महीजाः पवनोऽन्तरिक्षं ; जलौकसश्चैव जलं दिवं च ।
दिवौकसश्चैव यतः प्रसूता ;स्तदुच्यतां मे भगवन्पुराणम् ॥ ००६ ॥

ज्ञानं यतः प्रार्थयते नरो वै ; ततस्तदर्थो भवति प्रवृत्तिः ।
न चाप्यहं वेद परं पुराणं ; मिथ्याप्रवृत्तिं च कथं नु कुर्याम्  ॥ ००७  ॥

ऋक्सामसंघांश्च यजूंषि चाहं ; छन्दांसि नक्षत्रगतिं निरुक्तम् ।
अधीत्य च व्याकरणं सकल्पं ; शिक्षां च भूतप्रकृतिं न वेद्मि  ॥ ००८  ॥

स मे भवाञ्शंसतु सर्वमेत ;ज्ज्ञाने फलं कर्मणि वा यदस्ति ।
यथा च देहाच्च्यवते शरीरी ; पुनः शरीरं च यथाभ्युपैति  ॥ ००९  ॥

मनुरुवाच  ॥

यद्यत्प्रियं यस्य सुखं तदाहु ;स्तदेव दुःखं प्रवदन्त्यनिष्टम् ।
इष्टं च मे स्यादितरच्च न स्या ;देतत्कृते कर्मविधिः प्रवृत्तः  ॥ ०१०  ॥

इष्टं त्वनिष्टं च न मां भजेते ;त्येतत्कृते ज्ञानविधिः प्रवृत्तः  ॥ ०१०  ॥

कामात्मकाश्छन्दसि कर्मयोगा ; एभिर्विमुक्तः परमश्नुवीत ।
नानाविधे कर्मपथे सुखार्थी ; नरः प्रवृत्तो न परं प्रयाति  ॥ ०११  ॥

परं हि तत्कर्मपथादपेतं ; निराशिषं ब्रह्मपरं ह्यवश्यम्  ॥ ०११  ॥

प्रजाः सृष्टा मनसा कर्मणा च ; द्वावप्येतौ सत्पथौ लोकजुष्टौ ।
दृष्ट्वा कर्म शाश्वतं चान्तवच्च ; मनस्त्यागः कारणं नान्यदस्ति  ॥ ०१२  ॥

स्वेनात्मना चक्षुरिव प्रणेता ; निशात्यये तमसा संवृतात्मा ।
ज्ञानं तु विज्ञानगुणेन युक्तं ; कर्माशुभं पश्यति वर्जनीयम्  ॥ ०१३  ॥

सर्पान्कुशाग्राणि तथोदपानं ; ज्ञात्वा मनुष्याः परिवर्जयन्ति ।
अज्ञानतस्तत्र पतन्ति मूढा ; ज्ञाने फलं पश्य यथा विशिष्टम्  ॥ ०१४  ॥

कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो ; यज्ञा यथोक्तास्त्वथ दक्षिणाश्च ।

अन्नप्रदानं मनसः समाधिः ; पञ्चात्मकं कर्मफलं वदन्ति ॥ ०१५ ॥

गुणात्मकं कर्म वदन्ति वेदा ;स्तस्मान्मन्त्रा मन्त्रमूलं हि कर्म ।
विधिर्विधेयं मनसोपपत्तिः ; फलस्य भोक्ता तु यथा शरीरी ॥ ०१६ ॥

शब्दाश्च रूपाणि रसाश्च पुण्याः ; स्पर्शाश्च गन्धाश्च शुभास्तथैव ।
नरो नसंस्थानगतः प्रभुः स्या ;देतत्फलं सिध्यति कर्मलोके ॥ ०१७ ॥

यद्यच्छरीरेण करोति कर्म ; शरीरयुक्तः समुपाश्नुते तत् ।
शरीरमेवायतनं सुखस्य ; दुःखस्य चाप्यायतनं शरीरम् ॥ ०१८ ॥

वाचा तु यत्कर्म करोति किं चि ;द्वाचैव सर्वं समुपाश्नुते तत् ।
मनस्तु यत्कर्म करोति किं चि ;न्मनःस्थ एवायमुपाश्नुते तत् ॥ ०१९ ॥

यथागुणं कर्मगणं फलार्थी ; करोत्ययं कर्मफले निविष्टः ।
तथा तथायं गुणसंप्रयुक्तः ; शुभाशुभं कर्मफलं भुनक्ति ॥ ०२० ॥

मत्स्यो यथा स्रोत इवाभिपाती ; तथा कृतं पूर्वमुपैति कर्म ।
शुभे त्वसौ तुष्यति दुष्कृते तु ; न तुष्यते वै परमः शरीरी ॥ ०२१ ॥

यतो जगत्सर्वमिदं प्रसूतं ; ज्ञात्वात्मवन्तो व्यतियान्ति यत्तत् ।
यन्मन्त्रशब्दैरकृतप्रकाशं ; तदुच्यमानं शृणु मे परं यत् ॥ ०२२ ॥

रसैर्वियुक्तं विविधैश्च गन्धै ;रशब्दमस्पर्शमरूपवच्च ।
अग्राह्यमव्यक्तमवर्णमेकं ; पञ्चप्रकारं ससृजे प्रजानाम् ॥ ०२३ ॥

न स्त्री पुमान्वापि नपुंसकं च ; न सन्न चासत्सदसच्च तन्न ।
पश्यन्ति यद्ब्रह्मविदो मनुष्या ;स्तदक्षरं न क्षरतीति विद्धि ॥ ०२४ ॥

# अध्याय १९५

मनुरुवाच ॥

अक्षरात्खं ततो वायुर्वायोर्ज्योतिस्ततो जलम् ।
जलात्प्रसूता जगती जगत्यां जायते जगत् ॥ ००१ ॥

इमे शरीरैर्जलमेव गत्वा ; जलाच्च तेजः पवनोऽन्तरिक्षम् ।
खाद्वै निवर्तन्ति नभाविनस्ते ; ये भाविनस्ते परमाप्नुवन्ति ॥ ००२ ॥

नोष्णं न शीतं मृदु नापि तीक्ष्णं ; नाम्लं कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि च गन्धवत्त ;न्न रूपवत्तत्परमस्वभावम् ॥ ००३ ॥

स्पर्शं तनुर्वेद रसं तु जिह्वा ; घ्राणं च गन्धाञ्श्रवणे च शब्दान् ।
रूपाणि चक्षुर्न च तत्परं य ;द्गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ ००४ ॥

निवर्तयित्वा रसनं रसेभ्यो ; घ्राणं च गन्धाच्छ्रवणे च शब्दात् ।
स्पर्शात्तनुं रूपगुणात्तु चक्षु ;स्ततः परं पश्यति स्वं स्वभावम् ॥ ००५ ॥

यतो गृहीत्वा हि करोति यच्च ; यस्मिंश्च तामारभते प्रवृत्तिम् ।
यस्मिंश्च यद्येन च यश्च कर्ता ; तत्कारणं तं समुपायमाहुः ॥ ००६ ॥

यच्चाभिभूः साधकं व्यापकं च ; यन्मन्त्रवच्छंस्यते चैव लोके ।
यः सर्वहेतुः परमार्थकारी ; तत्कारणं कार्यमतो यदन्यत् ॥ ००७ ॥

यथा च कश्चित्सुकृतैर्मनुष्यः ; शुभाशुभं प्राप्नुतेऽथाविरोधात् ।
एवं शरीरेषु शुभाशुभेषु ; स्वकर्मजैर्ज्ञानमिदं निबद्धम् ॥ ००८ ॥

यथा प्रदीपः पुरतः प्रदीप्तः ; प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा ; ज्ञानप्रदीप्ताः परवन्त एव ॥ ००९ ॥

यथा हि राज्ञो बहवो ह्यमात्याः ; पृथक्प्रमानं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च ; ज्ञानैकदेशः परमः स तेभ्यः ॥ ०१० ॥

यथार्चिषोऽग्नेः पवनस्य वेगा ; मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च तन्यमाना ;स्तद्वच्छरीराणि शरीरिणां तु ॥ ०११ ॥

यथा च कश्चित्परशुं गृहीत्वा ; धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं ; छित्त्वा न पश्यन्ति ततो यदन्यत् ॥ ०१२ ॥

तान्येव काष्ठानि यथा विमथ्य ; धूमं च पश्येज्ज्वलनं च योगात् ।
तद्वत्सुबुद्धिः सममिन्द्रियत्वा ;द्बुधः परं पश्यति स्वं स्वभावम् ॥ ०१३ ॥

यथात्मनोऽङ्गं पतितं पृथिव्यां ; स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमनाः सुबुद्धि ;र्लिङ्गात्तथा गच्छति लिङ्गमन्यत् ॥ ०१४ ॥

उत्पत्तिवृद्धिक्षयसंनिपातै ;र्न युज्यतेऽसौ परमः शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्य ;द्गच्छत्यदृष्टः प्रतिसंधियोगात् ॥ ०१५ ॥

न चक्षुषा पश्यति रूपमात्मनो ; न चापि संस्पर्शमुपैति किञ्चित् ।
न चापि तैः साधयतेऽथ कार्यं ; ते तं न पश्यन्ति स पश्यते तान् ॥ ०१६ ॥

यथा प्रदीपे ज्वलतोऽनलस्य ; संतापजं रूपमुपैति किञ्चित् ।
न चान्तरं रूपगुणं बिभर्ति ; तथैव तद्दृश्यते रूपमस्य ॥ ०१७ ॥

यथा मनुष्यः परिमुच्य काय ;मदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं ; तदाश्रयं चैव बिभर्ति रूपम् ॥ ०१८ ॥

खं वायुमग्निं सलिलं तथोर्वीं ; समन्ततोऽभ्याविशते शरीरी ।
नानाश्रयाः कर्मसु वर्तमानाः ; श्रोत्रादयः पञ्च गुणाञ्श्रयन्ते ॥ ०१९ ॥

श्रोत्रं खतो घ्राणमथो पृथिव्या ;स्तेजोमयं रूपमथो विपाकः ।

जलाश्रयः स्वेद् उक्तो रसश्च ; वाय्वात्मकः स्पर्शकृतो गुणश्च ॥ ०२० ॥

महत्सु भूतेषु वसन्ति पञ्च ; पञ्चेन्द्रियार्थाश्च तथेन्द्रियेषु ।
सर्वाणि चैतानि मनोनुगानि ; बुद्धिं मनोऽन्वेति मनः स्वभावम् ॥ ०२१ ॥

शुभाशुभं कर्म कृतं यदस्य ; तदेव प्रत्याददते स्वदेहे ।
मनोऽनुवर्तन्ति परावराणि ; जलौकसः स्रोत इवानुकूलम् ॥ ०२२ ॥

चलं यथा दृष्टिपथं परैति ; सूक्ष्मं महद्रूपमिवाभिपाति ।
स्वरूपमालोचयते च रूपं ; परं तथा बुद्धिपथं परैति ॥ ०२३ ॥

---

# अध्याय १९६

मनुरुवाच ॥

यदिन्द्रियैस्तूपकृतान्पुरस्ता ;त्प्राप्तान्गुणान्संस्मरते चिराय ।
तेष्विन्द्रियेषूपहतेषु पश्चा ;त्स बुद्धिरूपः परमः स्वभावः ॥ ००१ ॥

यथेन्द्रियार्थान्युगपत्समस्ता ;न्नावेक्षते कृत्स्नमतुल्यकालम् ।
यथाबलं सञ्चरते स विद्वां ;स्तस्मात्स एकः परमः शरीरी ॥ ००२ ॥

रजस्तमः सत्त्वमथो तृतीयं ; गच्छत्यसौ ज्ञानगुणान्विरूपान् ।
तथेन्द्रियाण्याविशते शरीरी ; हुताशनं वायुरिवेन्धनस्थम् ॥ ००३ ॥

न चक्षुषा पश्यति रूपमात्मनो ; न पश्यति स्पर्शमिन्द्रियेन्द्रियम् ।
न श्रोत्रलिङ्गं श्रवणे निदर्शनं ; तथागतं पश्यति तद्विनश्यति ॥ ००४ ॥

श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ००५ ॥

यथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ ००६ ॥

तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ००७ ॥

पश्यन्नपि यथा लक्ष्म जगत्सोमे न विन्दति ।
एवमस्ति न वेत्येतन्न च तन्न परायणम् ॥ ००८ ॥

रूपवन्तमरूपत्वादुदयास्तमये बुधाः ।
धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम् ॥ ००९ ॥

तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।
प्रत्यासन्नं निनीषन्ति ज्ञेयं ज्ञानाभिसंहितम् ॥ ०१० ॥

न हि खल्वनुपायेन कश्चिदर्थोऽभिसिध्यति ।
सूत्रजालैर्यथा मत्स्यान्बध्नन्ति जलजीविनः ॥ ०११ ॥

मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते ॥ ०१२ ॥

अहिरेव ह्यहेः पादान्पश्यतीति निदर्शनम् ।
तद्वन्मूर्तिषु मूर्तिष्ठं ज्ञेयं ज्ञानेन पश्यति ॥ ०१३ ॥

नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति ॥ ०१४ ॥

यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।

न च नाशोऽस्य भवति तथा विद्धि शरीरिणम्  ॥ ०१५  ॥

क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिवियुक्तः सञ्शरीरी नोपलभ्यते  ॥ ०१६  ॥

यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः  ॥ ०१७  ॥

जन्मवृद्धिक्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
सा तु चन्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः  ॥ ०१८  ॥

उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते ।
चन्द्र एव त्वमावास्यां तथा भवति मूर्तिमान्  ॥ ०१९  ॥

नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम्  ॥ ०२०  ॥

यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते  ॥ ०२१  ॥

यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते  ॥ ०२२  ॥

यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः  ॥ ०२३  ॥

# अध्याय १९७

मनुरुवाच ॥

यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥ ००१ ॥

यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत्प्रसन्नेन्द्रियवाञ्ज्ञेयं ज्ञानेन पश्यति ॥ ००२ ॥

स एव लुलिते तस्मिन्यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ॥ ००३ ॥

अबुद्धिरज्ञानकृता अबुद्ध्या दुष्यते मनः ।
दुष्टस्य मनसः पञ्च संप्रदुष्यन्ति मानसाः ॥ ००४ ॥

अज्ञानतृप्तो विषयेष्ववगाढो न दृश्यते ।
अदृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ॥ ००५ ॥

तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्तते तथा तर्षः पापमन्तं गतं यथा ॥ ००६ ॥

विषयेषु च संसर्गाच्छाश्वतस्य नसंश्रयात् ।
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ॥ ००७ ॥

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
अथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ ००८ ॥

प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी ।
तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मना ॥ ००९ ॥

इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।
बुद्धेः परतरं ज्ञानं ज्ञानात्परतरं परम् ॥ ०१० ॥

अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनः श्रोत्रादिभिर्युक्तं शब्दादीन्साधु पश्यति ॥ ०११ ॥

यस्तांस्त्यजति शब्दादीन्सर्वांश्च व्यक्तयस्तथा ।
विमुञ्चत्याकृतिग्रामांस्तान्मुक्त्वामृतमश्नुते ॥ ०१२ ॥

उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम् ।
स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ॥ ०१३ ॥

अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ।
प्राप्येन्द्रियगुणान्पञ्च सोऽस्तमावृत्य गच्छति ॥ ०१४ ॥

प्रणीतं कर्मणा मार्गं नीयमानः पुनः पुनः ।
प्राप्नोत्ययं कर्मफलं प्रवृद्धं धर्ममात्मवान् ॥ ०१५ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ०१६ ॥

बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते ।
तदा संपद्यते ब्रह्म तत्रैव प्रलयं गतम् ॥ ०१७ ॥

अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ।
अघ्राणमवितर्कं च सत्त्वं प्रविशते परम् ॥ ०१८ ॥

मनस्याकृतयो मग्ना मनस्त्वतिगतं मतिम् ।
मतिस्त्वतिगता ज्ञानं ज्ञानं त्वभिगतं परम् ॥ ०१९ ॥

इन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः ।

न बुद्धिर्बुध्यतेऽव्यक्तं सूक्ष्मस्त्वेतानि पश्यति ॥ ०२० ॥

---

# अध्याय १९८

मनुरुवाच ॥

ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः ।
प्रज्ञाकरणसंयुक्तं ततो बुद्धिः प्रवर्तते ॥ ००१ ॥

यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते ।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ ००२ ॥

सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते ।
अवताराभिनिःस्रोतं गिरेः शृङ्गादिवोदकम् ॥ ००३ ॥

यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।
तदा प्रज्ञायते ब्रह्म निकष्यं निकषे यथा ॥ ००४ ॥

मनस्त्वपहृतं बुद्धिमिन्द्रियार्थनिदर्शनम् ।
न समक्षं गुणावेक्षि निर्गुणस्य निदर्शनम् ॥ ००५ ॥

सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः ।
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥ ००६ ॥

यथा महान्ति भूतानि निवर्तन्ते गुणक्षये ।
तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥ ००७ ॥

यदा मनसि सा बुद्धिर्वर्ततेऽन्तरचारिणी ।

व्यवसायगुणोपेता तदा संपद्यते मनः ॥ ००८ ॥

गुणवद्भिर्गुणोपेतं यदा ध्यानगुणं मनः ।
तदा सर्वगुणान्हित्वा निर्गुणं प्रतिपद्यते ॥ ००९ ॥

अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ ०१० ॥

तपसा चानुमानेन गुणैर्जात्या श्रुतेन च ।
निनीषेत्तत्परं ब्रह्म विशुद्धेनान्तरात्मना ॥ ०११ ॥

गुणहीनो हि तं मार्गं बहिः समनुवर्तते ।
गुणाभावात्प्रकृत्या च निस्तर्क्यं ज्ञेयसंमितम् ॥ ०१२ ॥

नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते ।
गुणप्रसारिणी बुद्धिर्हुताशन इवेन्धने ॥ ०१३ ॥

यथा पञ्च विमुक्तानि इन्द्रियाणि स्वकर्मभिः ।
तथा तत्परमं ब्रह्म विमुक्तं प्रकृतेः परम् ॥ ०१४ ॥

एवं प्रकृतितः सर्वे प्रभवन्ति शरीरिणः ।
निवर्तन्ते निवृत्तौ च सर्गं नैवोपयान्ति च ॥ ०१५ ॥

पुरुषः प्रकृतिर्बुद्धिर्विशेषाश्चेन्द्रियाणि च ।
अहङ्कारोऽभिमानश्च संभूतो भूतसञ्ज्ञकः ॥ ०१६ ॥

एकस्याद्या प्रवृत्तिस्तु प्रधानात्संप्रवर्तते ।
द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ॥ ०१७ ॥

धर्मादुत्कृष्यते श्रेयस्तथाश्रेयोऽप्यधर्मतः ।
रागवान्प्रकृतिं ह्येति विरक्तो ज्ञानवान्भवेत् ॥ ०१८ ॥

# अध्याय १९९

मनुरुवाच ॥

यदा ते पञ्चभिः पञ्च विमुक्ता मनसा सह ।
अथ तद्द्रक्ष्यसे ब्रह्म मणौ सूत्रमिवार्पितम् ॥ ००१ ॥

तदेव च यथा सूत्रं सुवर्णे वर्तते पुनः ।
मुक्तास्वथ प्रवालेषु मृन्मये राजते तथा ॥ ००२ ॥

तद्वद्गोषु मनुष्येषु तद्वद्धस्तिमृगादिषु ।
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥ ००३ ॥

येन येन शरीरेण यद्यत्कर्म करोत्ययम् ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥ ००४ ॥

यथा ह्येकरसा भूमिरोषध्यात्मानुसारिणी ।
तथा कर्मानुगा बुद्धिरन्तरात्मानुदर्शिनी ॥ ००५ ॥

ज्ञानपूर्वोद्भवा लिप्सा लिप्सापूर्वाभिसंधिता ।
अभिसंधिपूर्वकं कर्म कर्ममूलं ततः फलम् ॥ ००६ ॥

फलं कर्मात्मकं विद्यात्कर्म ज्ञेयात्मकं तथा ।
ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकम् ॥ ००७ ॥

ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा ।

क्षयान्ते तत्फलं दिव्यं ज्ञानं ज्ञेयप्रतिष्ठितम् ॥ ००८ ॥

महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः ।
अबुधास्तं न पश्यन्ति ह्यात्मस्था गुणबुद्धयः ॥ ००९ ॥

पृथिवीरूपतो रूपमपामिह महत्तरम् ।
अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् ॥ ०१० ॥

पवनाच्च महद्व्योम तस्मात्परतरं मनः ।
मनसो महती बुद्धिर्बुद्धेः कालो महान्स्मृतः ॥ ०११ ॥

कालात्स भगवान्विष्णुर्यस्य सर्वमिदं जगत् ।
नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते ॥ ०१२ ॥

अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः ।
अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते ॥ ०१३ ॥

तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं स्मृतम् ।
तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ॥ ०१४ ॥

गुणैस्त्वेतैः प्रकाशन्ते निर्गुणत्वात्ततः परम् ।
निवृत्तिलक्षणो धर्मस्तथानन्त्याय कल्पते ॥ ०१५ ॥

ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः ।
जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्या विनाशिनः ॥ ०१६ ॥

न चैवमिष्यते ब्रह्म शरीराश्रयसंभवम् ।
न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ॥ ०१७ ॥

ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते ।
अन्तश्चादिमतां दृष्टो न चादिर्ब्रह्मणः स्मृतः ॥ ०१८ ॥

अनादित्वादनन्तत्वात्तदनन्तमथाव्ययम् ।
अव्ययत्वाच्च निर्द्वंद्वं द्वंद्वाभावात्ततः परम् ॥ ०१९ ॥

अदृष्टतोऽनुपायाच्च अप्यभिसंधेश्च कर्मणः ।
न तेन मर्त्याः पश्यन्ति येन गच्छन्ति तत्परम् ॥ ०२० ॥

विषयेषु च संसर्गाच्छाश्वतस्य च दर्शनात् ।
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ॥ ०२१ ॥

गुणान्यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः ।
परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः ॥ ०२२ ॥

गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान् ।
अनुमानाद्धि गन्तव्यं गुणैरवयवैः सह ॥ ०२३ ॥

सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः ।
मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥ ०२४ ॥

ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या तथा मनः ।
मनसा चेन्द्रियग्राममनन्तं प्रतिपद्यते ॥ ०२५ ॥

बुद्धिप्रहीणो मनसासमृद्ध ;स्तथा निराशीर्गुणतामुपैति ।
परं त्यजन्तीह विलोभ्यमाना ; हुताशनं वायुरिवेन्धनस्थम् ॥ ०२६ ॥

गुणादाने विप्रयोगे च तेषां ; मनः सदा बुद्धिपरावराभ्याम् ।
अनेनैव विधिना संप्रवृत्तो ; गुणादाने ब्रह्मशरीरमेति ॥ ०२७ ॥

अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा ; सोऽव्यक्तत्वं गच्छति ह्यन्तकाले ।
तैरेवायं चेन्द्रियैर्वर्धमानै ;र्ग्लायद्भिर्वा वर्तते कर्मरूपः ॥ ०२८ ॥

सर्वैरयं चेन्द्रियैः संप्रयुक्तो ; देहः प्राप्तः पञ्चभूताश्रयः स्यात् ।
नासामर्थ्याद्गच्छति कर्मणेह ; हीनस्तेन परमेणाव्ययेन ॥ ०२९ ॥

पृथ्व्या नरः पश्यति नान्तमस्या ; ह्यन्तश्चास्या भविता चेति विद्धि ।
परं नयन्तीह विलोभ्यमानं ; यथा प्लवं वायुरिवार्णवस्थम् ॥ ०३० ॥

दिवाकरो गुणमुपलभ्य निर्गुणो ; यथा भवेद्व्यपगतरश्मिमण्डलः ।
तथा ह्यसौ मुनिरिह निर्विशेषवा ;न्स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ॥ ०३१ ॥

अनागतिं सुकृतिमतां परां गतिं ; स्वयंभुवं प्रभवनिधानमव्ययम् ।
सनातनं यदमृतमव्ययं पदं ; विचार्य तं शमममृतत्वमश्नुते ॥ ०३२ ॥

---

# केशवमाहात्म्यम्

## अध्याय २००

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम् ।
कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् ॥ ००१ ॥

नारायणं हृषीकेशं गोविन्दमपराजितम् ।
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् ॥ ००२ ॥

भीष्म उवाच ॥

श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ ००३ ॥

असितो देवलस्तात वाल्मीकिश्च महातपाः ।
मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ॥ ००४ ॥

केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥ ००५ ॥

किं तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनः ।
माहात्म्यानि महाबाहो शृणु तानि युधिष्ठिर ॥ ००६ ॥

यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः ।
अशेषेण हि गोविन्दे कीर्तयिष्यामि तान्यहम् ॥ ००७ ॥

महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
वायुर्ज्योतिस्तथा चापः खं गां चैवान्वकल्पयत् ॥ ००८ ॥

स दृष्ट्वा पृथिवीं चैव सर्वभूतेश्वरः प्रभुः ।
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ॥ ००९ ॥

सर्वतेजोमयस्तस्मिञ्शयानः शयने शुभे ।
सोऽग्रजं सर्वभूतानां सङ्कर्षणमचिन्तयत् ॥ ०१० ॥

आश्रयं सर्वभूतानां मनसेति विशुश्रुम ।
स धारयति भूतात्मा उभे भूतभविष्यती ॥ ०११ ॥

ततस्तस्मिन्महाबाहो प्रादुर्भूते महात्मनि ।
भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत ॥ ०१२ ॥

स तत्र भगवान्देवः पुष्करे भासयन्दिशः ।

ब्रह्मा समभवत्तात सर्वभूतपितामहः ॥ ०१३ ॥

तस्मिन्नपि महाबाहो प्रादुर्भूते महात्मनि ।
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः ॥ ०१४ ॥

तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम् ।
ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥ ०१५ ॥

तस्य तात वधात्सर्वे देवदानवमानवाः ।
मधुसूदनमित्याहुर्वृषभं सर्वसात्वताम् ॥ ०१६ ॥

ब्रह्मा तु ससृजे पुत्रान्मानसान्दक्षसप्तमान् ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ ०१७ ॥

मरीचिः कश्यपं तात पुत्रं चासृजदग्रजम् ।
मानसं जनयामास तैजसं ब्रह्मसत्तमम् ॥ ०१८ ॥

अङ्गुष्ठादसृजद्ब्रह्मा मरीचेरपि पूर्वजम् ।
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ॥ ०१९ ॥

तस्य पूर्वमजायन्त दश तिस्रश्च भारत ।
प्रजापतेर्दुहितरस्तासां ज्येष्ठाभवद्दितिः ॥ ०२० ॥

सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः ।
मारीचः कश्यपस्तात सर्वासामभवत्पतिः ॥ ०२१ ॥

उत्पाद्य तु महाभागस्तासामवरजा दश ।
ददौ धर्माय धर्मज्ञो दक्ष एव प्रजापतिः ॥ ०२२ ॥

धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः ।
विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत ॥ ०२३ ॥

अपरास्तु यवीयस्यस्ताभ्योऽन्याः सप्तविंशतिः ।
सोमस्तासां महाभागः सर्वासामभवत्पतिः ॥ ०२४ ॥

इतरास्तु व्यजायन्त गन्धर्वांस्तुरगान्द्विजान् ।
गाश्च किंपुरुषान्मत्स्यानौद्भिदांश्च वनस्पतीन् ॥ ०२५ ॥

आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान् ।
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत्प्रभुः ॥ ०२६ ॥

तस्य विक्रमणादेव देवानां श्रीर्व्यवर्धत ।
दानवाश्च पराभूता दैतेयी चासुरी प्रजा ॥ ०२७ ॥

विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः ।
दितिस्तु सर्वानसुरान्महासत्त्वान्व्यजायत ॥ ०२८ ॥

अहोरात्रं च कालं च यथर्तु मधुसूदनः ।
पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् ॥ ०२९ ॥

बुद्ध्यापः सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान् ।
पृथिवीं सोऽसृजद्विश्वां सहितां भूरितेजसा ॥ ०३० ॥

ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर ।
ब्राह्मणानां शतं श्रेष्ठं मुखादसृजत प्रभुः ॥ ०३१ ॥

बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ।
पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ॥ ०३२ ॥

स एवं चतुरो वर्णान्समुत्पाद्य महायशाः ।
अध्यक्षं सर्वभूतानां धातारमकरोत्प्रभुः ॥ ०३३ ॥

यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम् ।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम्  ॥ ०३४  ॥

न चैषां मैथुनो धर्मो बभूव भरतर्षभ ।
सङ्कल्पादेव चैतेषामपत्यमुदपद्यत  ॥ ०३५  ॥

तत्र त्रेतायुगे काले सङ्कल्पाज्जायते प्रजा ।
न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप  ॥ ०३६  ॥

द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप ।
तथा कलियुगे राजन्द्वंद्वमापेदिरे जनाः  ॥ ०३७  ॥

एष भूतपतिस्तात स्वध्यक्षश्च प्रकीर्तितः ।
निरध्यक्षांस्तु कौन्तेय कीर्तयिष्यामि तानपि  ॥ ०३८  ॥

दक्षिणापथजन्मानः सर्वे तलवरान्ध्रकाः ।
उत्साः पुलिन्दाः शबराश्चूचुपा मण्डपैः सह  ॥ ०३९  ॥

उत्तरापथजन्मानः कीर्तयिष्यामि तानपि ।
यौनकाम्बोजगान्धाराः किराता बर्बरैः सह  ॥ ०४०  ॥

एते पापकृतस्तात चरन्ति पृथिवीमिमाम् ।
श्वकाकबलगृध्राणां सधर्माणो नराधिप  ॥ ०४१  ॥

नैते कृतयुगे तात चरन्ति पृथिवीमिमाम् ।
त्रेताप्रभृति वर्तन्ते ते जना भरतर्षभ  ॥ ०४२  ॥

ततस्तस्मिन्महाघोरे संध्याकाले युगान्तिके ।
राजानः समसज्जन्त समासाद्येतरेतरम्  ॥ ०४३  ॥

एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः ।

देवदेवर्षिराचष्ट नारदः सर्वलोकदृक् ॥ ०४४ ॥

नारदोऽप्यथ कृष्णस्य परं मेने नराधिप ।
शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ॥ ०४५ ॥

एवमेष महाबाहुः केशवः सत्यविक्रमः ।
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ॥ ०४६ ॥

---

# दिक्पालकीर्तनम्

## अध्याय २०१

युधिष्ठिर उवाच ॥

के पूर्वमासन्पतयः प्रजानां भरतर्षभ ।
के चर्षयो महाभागा दिक्षु प्रत्येकशः स्मृताः ॥ ००१ ॥

भीष्म उवाच ॥

श्रूयतां भरतश्रेष्ठ यन्मा त्वं परिपृच्छसि ।
प्रजानां पतयो ये स्म दिक्षु प्रत्येकशः स्मृताः ॥ ००२ ॥

एकः स्वयंभूर्भगवानाद्यो ब्रह्मा सनातनः ।
ब्रह्मणः सप्त पुत्रा वै महात्मानः स्वयंभुवः ॥ ००३ ॥

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महाभागः सदृशा वै स्वयंभुवा ॥ ००४ ॥

सप्त ब्रह्माण इत्येष पुराणे निश्चयो गतः ।
अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन्  ॥ ००५  ॥

अत्रिवंशसमुत्पन्नो ब्रह्मयोनिः सनातनः ।
प्राचीनबर्हिर्भगवांस्तस्मात्प्राचेतसो दश  ॥ ००६  ॥

दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः ।
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते  ॥ ००७  ॥

मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी श्रुते ।
अरिष्टनेमिरित्येकं कश्यपेत्यपरं विदुः  ॥ ००८  ॥

अङ्गश्चैवौरसः श्रीमान्राजा भौमश्च वीर्यवान् ।
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता  ॥ ००९  ॥

अर्यमा चैव भगवान्ये चान्ये तनया विभो ।
एते प्रदेशाः कथिता भुवनानां प्रभावनाः  ॥ ०१०  ॥

शशबिन्दोश्च भार्याणां सहस्राणि दशाच्युत ।
एकैकस्यां सहस्रं तु तनयानामभूत्तदा  ॥ ०११  ॥

एवं शतसहस्राणां शतं तस्य महात्मनः ।
पुत्राणां न च ते कश्चिदिच्छन्त्यन्यं प्रजापतिम्  ॥ ०१२  ॥

प्रजामाचक्षते विप्राः पौराणीं शाशबिन्दवीम् ।
स वृष्णिवंशप्रभवो महान्वंशः प्रजापतेः  ॥ ०१३  ॥

एते प्रजानां पतयः समुद्दिष्टा यशस्विनः ।
अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान्  ॥ ०१४  ॥

भगोंऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा ।
सविता चैव धाता च विवस्वांश्च महाबलः ॥ ०१५ ॥

पूषा त्वष्टा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
त एते द्वादशादित्याः कश्यपस्यात्मसंभवाः ॥ ०१६ ॥

नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्ताण्डस्यात्मजावेतावष्टमस्य प्रजापतेः ॥ ०१७ ॥

त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः ।
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ॥ ०१८ ॥

हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ॥ ०१९ ॥

पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः ॥ ०१९ ॥

एत एवंविधा देवा मनोरेव प्रजापतेः ।
ते च पूर्वे सुराश्चेति द्विविधाः पितरः स्मृताः ॥ ०२० ॥

शीलरूपरतास्त्वन्ये तथान्ये सिद्धसाध्ययोः ।
ऋभवो मरुतश्चैव देवानां चोदिता गणाः ॥ ०२१ ॥

एवमेते समाम्नाता विश्वेदेवास्तथाश्विनौ ।
आदित्याः क्षत्रियास्तेषां विशस्तु मरुतस्तथा ॥ ०२२ ॥

अश्विनौ तु मतौ शूद्रौ तपस्युग्रे समाहितौ ।
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः ॥ ०२३ ॥

इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् ॥ ०२३ ॥

एतान्वै प्रातरुत्थाय देवान्यस्तु प्रकीर्तयेत् ।
स्वजादन्यकृताच्चैव सर्वपापात्प्रमुच्यते ॥ ०२४ ॥

यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्नलश्चाङ्गिरसः सुताः ॥ ०२५ ॥

ऋषेर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा ॥ ०२६ ॥

उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः ॥ ०२७ ॥

मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् ।
एते ब्रह्मर्षयो नित्यमाश्रिता दक्षिणां दिशम् ॥ ०२८ ॥

रुषद्गुः कवषो धौम्यः परिव्याधश्च वीर्यवान् ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ०२९ ॥

अत्रेः पुत्रश्च भगवांस्तथा सारस्वतः प्रभुः ।
एते नव महात्मानः पश्चिमामाश्रिता दिशम् ॥ ०३० ॥

आत्रेयश्च वसिष्ठश्च कश्यपश्च महानृषिः ।
गौतमः सभरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ०३१ ॥

तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते उदीचीं दिशमाश्रिताः ॥ ०३२ ॥

एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः ।
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ॥ ०३३ ॥

एवमेते महात्मानः स्थिताः प्रत्येकशो दिशः ।

एतेषां कीर्तनं कृत्वा सर्वपापैः प्रमुच्यते ॥ ०३४ ॥

यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ॥ ०३५ ॥

---

# विष्णोः वराहरूपम्

## अध्याय २०२

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ युधि सत्यपराक्रम ।
श्रोतुमिच्छामि कात्स्न्र्येन कृष्णमव्ययमीश्वरम् ॥ ००१ ॥

यच्चास्य तेजः सुमहद्यच्च कर्म पुरातनम् ।
तन्मे सर्वं यथातत्त्वं प्रब्रूहि भरतर्षभ ॥ ००२ ॥

तिर्यग्योनिगतं रूपं कथं धारितवान्हरिः ।
केन कार्यविसर्गेण तन्मे ब्रूहि पितामह ॥ ००३ ॥

भीष्म उवाच ॥

पुराहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः ।
तत्रापश्यं मुनिगणान्समासीनान्सहस्रशः ॥ ००४ ॥

ततस्ते मधुपर्केण पूजां चक्रुरथो मयि ।
प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषीनहम् ॥ ००५ ॥

कथैषा कथिता तत्र कश्यपेन महर्षिणा ।
मनःप्रह्लादिनीं दिव्यां तामिहैकमनाः शृणु ॥ ००६ ॥

पुरा दानवमुख्या हि क्रोधलोभसमन्विताः ।
बलेन मत्ताः शतशो नरकाद्या महासुराः ॥ ००७ ॥

तथैव चान्ये बहवो दानवा युद्धदुर्मदाः ।
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ॥ ००८ ॥

दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा ।
न शर्म लेभिरे राजन्विशमानास्ततस्ततः ॥ ००९ ॥

पृथिवीं चार्तरूपां ते समपश्यन्दिवौकसः ।
दानवैरभिसङ्कीर्णां घोररूपैर्महाबलैः ॥ ०१० ॥

भारार्तामपकृष्टां च दुःखितां संनिमज्जतीम् ॥ ०१० ॥

अथादितेयाः संत्रस्ता ब्रह्माणमिदमब्रुवन् ।
कथं शक्यामहे ब्रह्मन्दानवैरुपमर्दनम् ॥ ०११ ॥

स्वयंभूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया ।
ते वरेणाभिसंमत्ता बलेन च मदेन च ॥ ०१२ ॥

नावभोत्स्यन्ति संमूढा विष्णुमव्यक्तदर्शनम् ।
वराहरूपिणं देवमधृष्यममरैरपि ॥ ०१३ ॥

एष वेगेन गत्वा हि यत्र ते दानवाधमाः ।
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः ॥ ०१४ ॥

शमयिष्यति श्रुत्वा ते जहृषुः सुरसत्तमाः ॥ ०१४ ॥

ततो विष्णुर्महातेजा वाराहं रूपमाश्रितः ।
अन्तर्भूमिं संप्रविश्य जगाम दितिजान्प्रति ॥ ०१५ ॥

दृष्ट्वा च सहिताः सर्वे दैत्याः सत्त्वममानुषम् ।
प्रसह्य सहसा सर्वे संतस्थुः कालमोहिताः ॥ ०१६ ॥

सर्वे च समभिद्रुत्य वराहं जगृहुः समम् ।
सङ्क्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः ॥ ०१७ ॥

दानवेन्द्रा महाकाया महावीर्या बलोच्छ्रिताः ।
नाशक्नुवंश्च किञ्चित्ते तस्य कर्तुं तदा विभो ॥ ०१८ ॥

ततोऽगमन्विस्मयं ते दानवेन्द्रा भयात्तदा ।
संशयं गतमात्मानं मेनिरे च सहस्रशः ॥ ०१९ ॥

ततो देवादिदेवः स योगात्मा योगसारथिः ।
योगमास्थाय भगवांस्तदा भरतसत्तम ॥ ०२० ॥

विननाद महानादं क्षोभयन्दैत्यदानवान् ।
संनादिता येन लोकाः सर्वाश्चैव दिशो दश ॥ ०२१ ॥

तेन संनादशब्देन लोकाः सङ्क्षोभमागमन् ।
संभ्रान्ताश्च दिशः सर्वा देवाः शक्रपुरोगमाः ॥ ०२२ ॥

निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा ।
स्थावरं जङ्गमं चैव तेन नादेन मोहितम् ॥ ०२३ ॥

ततस्ते दानवाः सर्वे तेन शब्देन भीषिताः ।
पेतुर्गतासवश्चैव विष्णुतेजोविमोहिताः ॥ ०२४ ॥

रसातलगतांश्चैव वराहस्त्रिदशद्विषः ।
खुरैः संदारयामास मांसमेदोस्थिसञ्चयम्  ॥ ०२५  ॥

नादेन तेन महता सनातन इति स्मृतः ।
पद्मनाभो महायोगी भूताचार्यः स भूतराट्  ॥ ०२६  ॥

ततो देवगणाः सर्वे पितामहमुपाब्रुवन् ।
नादोऽयं कीदृशो देव नैनं विद्म वयं विभो  ॥ ०२७  ॥

कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत्  ॥ ०२७  ॥

एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः ।
उदतिष्ठन्महादेवः स्तूयमानो महर्षिभिः  ॥ ०२८  ॥

पितामह उवाच  ॥

निहत्य दानवपतीन्महावर्ष्मा महाबलः ।
एष देवो महायोगी भूतात्मा भूतभावनः  ॥ ०२९  ॥

सर्वभूतेश्वरो योगी योनिरात्मा तथात्मनः ।
स्थिरीभवत कृष्णोऽयं सर्वपापप्रणाशनः  ॥ ०३०  ॥

कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः ।
समायातः स्वमात्मानं महाभागो महाद्युतिः  ॥ ०३१  ॥

पद्मनाभो महायोगी भूतात्मा भूतभावनः  ॥ ०३१  ॥

न संतापो न भीः कार्या शोको वा सुरसत्तमाः ।
विधिरेष प्रभावश्च कालः सङ्क्षयकारकः  ॥ ०३२  ॥

लोकान्धारयतानेन नादो मुक्तो महात्मना  ॥ ०३२  ॥

स एव हि महाभागः सर्वलोकनमस्कृतः ।
अच्युतः पुण्डरीकाक्षः सर्वभूतसमुद्भवः ॥ ०३३ ॥

---

# गुरुशिष्यसंवादः (वार्ष्णेयाध्यात्मं)

## अध्याय २०३

युधिष्ठिर उवाच ॥

योगं मे परमं तात मोक्षस्य वद भारत ।
तमहं तत्त्वतो ज्ञातुमिच्छामि वदतां वर ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ ००२ ॥

कश्चिद्ब्राह्मणमासीनमाचार्यमृषिसत्तमम् ।
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः ॥ ००३ ॥

चरणावुपसङ्गृह्य स्थितः प्राञ्जलिरब्रवीत् ॥ ००३ ॥

उपासनात्प्रसन्नोऽसि यदि वै भगवन्मम ।
संशयो मे महान्कश्चित्तन्मे व्याख्यातुमर्हसि ॥ ००४ ॥

कुतश्चाहं कुतश्च त्वं तत्सम्यग्ब्रूहि यत्परम् ।

कथं च सर्वभूतेषु समेषु द्विजसत्तम ॥ ००५ ॥

सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ॥ ००५ ॥

वेदेषु चापि यद्वाक्यं लौकिकं व्यापकं च यत् ।
एतद्विद्वन्यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ ००६ ॥

गुरुरुवाच ॥

शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम् ।
अध्यात्मं सर्वभूतानामागमानां च यद्वसु ॥ ००७ ॥

वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो मुखम् ।
सत्यं दानमथो यज्ञस्तितिक्षा दम आर्जवम् ॥ ००८ ॥

पुरुषं सनातनं विष्णुं यत्तद्वेदविदो विदुः ।
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम् ॥ ००९ ॥

तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे ॥ ००९ ॥

ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तथा ।
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ ०१० ॥

अर्हस्त्वमसि कल्याण वार्ष्णेयं शृणु यत्परम् ॥ ०१० ॥

कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम् ।
त्रैलोक्यं सर्वभूतेषु चक्रवत्परिवर्तते ॥ ०११ ॥

यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम् ।
वदन्ति पुरुषव्याघ्रं केशवं पुरुषर्षभम् ॥ ०१२ ॥

पितृन्देवानृषींश्चैव तथा वै यक्षदानवान् ।
नागासुरमनुष्यांश्च सृजते परमोऽव्ययः ॥ ०१३ ॥

तथैव वेदशास्त्राणि लोकधर्मांश्च शाश्वतान् ।
प्रलये प्रकृतिं प्राप्य युगादौ सृजते प्रभुः ॥ ०१४ ॥

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा ब्रह्माहरात्रिषु ॥ ०१५ ॥

अथ यद्यद्यदा भावि कालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ॥ ०१६ ॥

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ ०१७ ॥

वेदविद्वेद भगवान्वेदाङ्गानि बृहस्पतिः ।
भार्गवो नीतिशास्त्रं च जगाद जगतो हितम् ॥ ०१८ ॥

गान्धर्वं नारदो वेदं भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गार्ग्यः कृष्णात्रेयश्चिकित्सितम् ॥ ०१९ ॥

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते ॥ ०२० ॥

अनाद्यं यत्परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः ॥ ०२१ ॥

नारायणादृषिगणास्तथा मुख्याः सुरासुराः ।
राजर्षयः पुराणाश्च परमं दुःखभेषजम् ॥ ०२२ ॥

पुरुषाधिष्ठितं भावं प्रकृतिः सूयते सदा ।

हेतुयुक्तमतः सर्वं जगत्संपरिवर्तते ॥ ०२३ ॥

दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः ।
प्रकृतिः सृजते तद्वदानन्त्यान्नापचीयते ॥ ०२४ ॥

अव्यक्तकर्मजा बुद्धिरहङ्कारं प्रसूयते ।
आकाशं चाप्यहङ्काराद्वायुराकाशसंभवः ॥ ०२५ ॥

वायोस्तेजस्ततश्चापस्त्वद्भ्यो हि वसुधोद्गता ।
मूलप्रकृतयोऽष्टौ ता जगदेतास्ववस्थितम् ॥ ०२६ ॥

ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि ।
विषयाः पञ्च चैकं च विकारे षोडशं मनः ॥ ०२७ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियाण्यपि ।
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्मणामपि ॥ ०२८ ॥

शब्दः स्पर्शोऽथ रूपं च रसो गन्धस्तथैव च ।
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः ॥ ०२९ ॥

रसज्ञाने तु जिह्वेयं व्याहृते वाक्तथैव च ।
इन्द्रियैर्विविधैर्युक्तं सर्वं व्यस्तं मनस्तथा ॥ ०३० ॥

विद्यात्तु षोडशैतानि दैवतानि विभागशः ।
देहेषु ज्ञानकर्तारमुपासीनमुपासते ॥ ०३१ ॥

तद्वत्सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः ।
श्रोत्रं शब्दगुणं चैव चक्षुरग्नेर्गुणस्तथा ॥ ०३२ ॥

स्पर्शं वायुगुणं विद्यात्सर्वभूतेषु सर्वदा ॥ ०३२ ॥

मनः सत्त्वगुणं प्राहुः सत्त्वमव्यक्तजं तथा ।
सर्वभूतात्मभूतस्थं तस्माद्बुध्येत बुद्धिमान् ॥ ०३३ ॥

एते भावा जगत्सर्वं वहन्ति सचराचरम् ।
श्रिता विरजसं देवं यमाहुः परमं पदम् ॥ ०३४ ॥

नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् ।
व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते ॥ ०३५ ॥

अजरः सोऽमरश्चैव व्यक्ताव्यक्तोपदेशवान् ।
व्यापकः सगुणः सूक्ष्मः सर्वभूतगुणाश्रयः ॥ ०३६ ॥

यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु ॥ ०३७ ॥

सोऽत्र वेदयते वेद्यं स शृणोति स पश्यति ।
कारणं तस्य देहोऽयं स कर्ता सर्वकर्मणाम् ॥ ०३८ ॥

अग्निर्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते ।
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ ०३९ ॥

नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः ।
संतन्वाना यथा यान्ति तथा देहाः शरीरिणाम् ॥ ०४० ॥

स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमागतः ।
देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते ॥ ०४१ ॥

कर्मणा व्याप्यते पूर्वं कर्मणा चोपपद्यते ।
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ॥ ०४२ ॥

स तु देहाद्यथा देहं त्यक्त्वान्यं प्रतिपद्यते ।

तथा तं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम्  ॥ ०४३  ॥

---

# अध्याय २०४

गुरुरुवाच  ॥

चतुर्विधानि भूतानि स्थावराणि चराणि च ।
अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च  ॥ ००१  ॥

अव्यक्तनिधनं विद्यादव्यक्तात्मात्मकं मनः  ॥ ००१  ॥

यथाश्वत्थकणीकायामन्तर्भूतो महाद्रुमः ।
निष्पन्नो दृश्यते व्यक्तमव्यक्तात्संभवस्तथा  ॥ ००२  ॥

अभिद्रवत्ययस्कान्तमयो निश्चेतनावुभौ ।
स्वभावहेतुजा भावा यद्वदन्यदपीदृशम्  ॥ ००३  ॥

तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः ।
अचेतनाश्चेतयितुः कारणादभिसंहिताः  ॥ ००४  ॥

न भूः खं द्यौर्न भूतानि नर्षयो न सुरासुराः ।
नान्यदासीदृते जीवमासेदुर्न तु संहितम्  ॥ ००५  ॥

सर्वनीत्या सर्वगतं मनोहेतु सलक्षणम् ।
अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम्  ॥ ००६  ॥

तत्कारणैर्हि संयुक्तं कार्यसङ्ग्रहकारकम् ।

येनैतद्वर्तते चक्रमनादिनिधनं महत्  ॥ ००७  ॥

अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम् ।
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम्  ॥ ००८  ॥

स्निग्धत्वात्तिलवत्सर्वं चक्रेऽस्मिन्पीड्यते जगत् ।
तिलपीडैरिवाक्रम्य भोगैरज्ञानसंभवैः  ॥ ००९  ॥

कर्म तत्कुरुते तर्षादहङ्कारपरिग्रहम् ।
कार्यकारणसंयोगे स हेतुरुपपादितः  ॥ ०१०  ॥

नात्येति कारणं कार्यं न कार्यं कारणं तथा ।
कार्याणां तूपकरणे कालो भवति हेतुमान्  ॥ ०११  ॥

हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम् ।
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठिताः सदा  ॥ ०१२  ॥

सरजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः ।
क्षेत्रज्ञमेवानुयाति पांसुर्वातेरितो यथा  ॥ ०१३  ॥

न च तैः स्पृश्यते भावो न ते तेन महात्मना  ॥ ०१३  ॥

सरजस्कोऽरजस्कश्च स वै वायुर्यथा भवेत् ।
तथैतदन्तरं विद्यात्क्षेत्रक्षेत्रज्ञयोर्बुधः  ॥ ०१४  ॥

अभ्यासात्स तथा युक्तो न गच्छेत्प्रकृतिं पुनः  ॥ ०१४  ॥

संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः ।
तथा वार्तां समीक्षेत कृतलक्षणसंमिताम्  ॥ ०१५  ॥

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।

ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः ॥ ०१६ ॥

---

# अध्याय २०५

गुरुरुवाच ॥

प्रवृत्तिलक्षणो धर्मो यथायमुपपद्यते ।
तेषां विज्ञाननिष्ठानामन्यत्तत्त्वं न रोचते ॥ ००१ ॥

दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः ।
प्रयोजनमतस्त्वत्र मार्गमिच्छन्ति संस्तुतम् ॥ ००२ ॥

सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम् ।
इयं सा बुद्धिरन्येयं यया याति परां गतिम् ॥ ००३ ॥

शरीरवानुपादत्ते मोहात्सर्वपरिग्रहान् ।
कामक्रोधादिभिर्भावैर्युक्तो राजसतामसैः ॥ ००४ ॥

नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम् ।
कर्मणो विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ॥ ००५ ॥

लोहयुक्तं यथा हेम विपक्वं न विराजते ।
तथापक्वकषायाख्यं विज्ञानं न प्रकाशते ॥ ००६ ॥

यश्चाधर्मं चरेन्मोहात्कामलोभावनु प्लवन् ।
धर्म्यं पन्थानमाक्रम्य सानुबन्धो विनश्यति ॥ ००७ ॥

शब्दादीन्विषयांस्तस्मादसंरागादनुप्लवेत् ।
क्रोधहर्षौ विषादश्च जायन्ते हि परस्परम्  ॥ ००८  ॥

पञ्चभूतात्मके देहे सत्त्वराजसतामसे ।
कमभिष्टुवते चायं कं वा क्रोशति किं वदेत्  ॥ ००९  ॥

स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः ।
नावगच्छन्त्यविज्ञानादात्मजं पार्थिवं गुणम्  ॥ ०१०  ॥

मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते ।
पार्थिवोऽयं तथा देहो मृद्विकारैर्विलिप्यते  ॥ ०११  ॥

मधु तैलं पयः सर्पिर्मांसानि लवणं गुडः ।
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा  ॥ ०१२  ॥

यद्वत्कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् ।
श्रमादाहारमादद्यादस्वाद्वपि हि यापनम्  ॥ ०१३  ॥

तद्वत्संसारकान्तारमातिष्ठञ्श्रमतत्परः ।
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा  ॥ ०१४  ॥

सत्यशौचार्जवत्यागैर्यशसा विक्रमेण च ।
क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च  ॥ ०१५  ॥

भावान्सर्वान्यथावृत्तान्संवसेत यथाक्रमम् ।
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च  ॥ ०१६  ॥

सत्त्वेन रजसा चैव तमसा चैव मोहिताः ।
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम्  ॥ ०१७  ॥

तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान् ।

अज्ञानप्रभवं नित्यमहङ्कारं परित्यजेत् ॥ ०१८ ॥

महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः ।
त्रैलोक्यं सेश्वरं सर्वमहङ्कारे प्रतिष्ठितम् ॥ ०१९ ॥

यथेह नियतं कालो दर्शयत्यार्तवान्गुणान् ।
तद्वद्भूतेष्वहङ्कारं विद्याद्भूतप्रवर्तकम् ॥ ०२० ॥

संमोहकं तमो विद्यात्कृष्णमज्ञानसंभवम् ।
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ॥ ०२१ ॥

सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् ॥ ०२१ ॥

प्रमोहो हर्षजः प्रीतिरसंदेहो धृतिः स्मृतिः ।
एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान् ॥ ०२२ ॥

कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः ।
विषादशोकावरतिर्मानदर्पावनार्यता ॥ ०२३ ॥

दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम् ।
विमृशेदात्मसंस्थानामेकैकमनुसंततम् ॥ ०२४ ॥

शिष्य उवाच ॥

के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः ।
के पुनः पुनरायान्ति के मोहादफला इव ॥ ०२५ ॥

केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः ।
एतत्सर्वं समाचक्ष्व यथा विद्यामहं प्रभो ॥ ०२६ ॥

गुरुरुवाच ॥

दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते ।
विनाशयति संभूतमयस्मयमयो यथा ॥ ०२७ ॥

तथाकृतात्मा सहजैर्दोषैर्नश्यति राजसैः ॥ ०२७ ॥

राजसं तामसं चैव शुद्धात्माकर्मसंभवम् ।
तत्सर्वं देहिनां बीजं सर्वमात्मवतः समम् ॥ ०२८ ॥

तस्मादात्मवता वर्ज्यं रजश्च तम एव च ।
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ॥ ०२९ ॥

अथ वा मन्त्रवद्ब्रूयुर्मांसादानां यजुष्कृतम् ।
हेतुः स एवानादाने शुद्धधर्मानुपालने ॥ ०३० ॥

रजसा धर्मयुक्तानि कार्याण्यपि समाप्नुयात् ।
अर्थयुक्तानि चात्यर्थं कामान्सर्वांश्च सेवते ॥ ०३१ ॥

तमसा लोभयुक्तानि क्रोधजानि च सेवते ।
हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ॥ ०३२ ॥

सत्त्वस्थः सात्त्विकान्भावाञ्शुद्धान्पश्यति संश्रितः ।
स देही विमलः श्रीमाञ्शुद्धो विद्यासमन्वितः ॥ ०३३ ॥

---

# अध्याय २०६

गुरुरुवाच ॥

रजसा साध्यते मोहस्तमसा च नरर्षभ ।
क्रोधलोभौ भयं दर्प एतेषां साधनाच्छुचिः ॥ ००१ ॥

परमं परमात्मानं देवमक्षयमव्ययम् ।
विष्णुमव्यक्तसंस्थानं विशन्ते देवसत्तमम् ॥ ००२ ॥

तस्य मायाविदग्धाङ्गा ज्ञानभ्रष्टा निराशिषः ।
मानवा ज्ञानसंमोहात्ततः कामं प्रयान्ति वै ॥ ००३ ॥

कामात्क्रोधमवाप्याथ लोभमोहौ च मानवाः ।
मानदर्पादहङ्कारमहङ्कारात्ततः क्रियाः ॥ ००४ ॥

क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम् ।
सुखदुःखसमारम्भाज्जन्माजन्मकृतक्षणाः ॥ ००५ ॥

जन्मतो गर्भवासं तु शुक्रशोणितसंभवम् ।
पुरीषमूत्रविक्लेदशोणितप्रभवाविलम् ॥ ००६ ॥

तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन् ।
संसारतन्त्रवाहिन्यस्तत्र बुध्येत योषितः ॥ ००७ ॥

प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः ।
तस्मादेता विशेषेण नरोऽतीयुर्विपश्चितः ॥ ००८ ॥

कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान् ।
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ॥ ००९ ॥

तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः ।
स्वदेहजानस्वसञ्ज्ञान्यद्वदङ्गात्कृमींस्त्यजेत् ॥ ०१० ॥

स्वसञ्ज्ञानस्वजांस्तद्वत्सुतसञ्ज्ञान्कृमींस्त्यजेत् ॥ ०१० ॥

शुक्रतो रसतश्चैव स्नेहाज्जायन्ति जन्तवः ।
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ ०११ ॥

रजस्तमसि पर्यस्तं सत्त्वं तमसि संस्थितम् ।
ज्ञानाधिष्ठानमज्ञानं बुद्ध्यहङ्कारलक्षणम् ॥ ०१२ ॥

तद्बीजं देहिनामाहुस्तद्बीजं जीवसञ्ज्ञितम् ।
कर्मणा कालयुक्तेन संसारपरिवर्तकम् ॥ ०१३ ॥

रमत्ययं यथा स्वप्ने मनसा देहवानिव ।
कर्मगर्भैर्गुणैर्देही गर्भे तदुपपद्यते ॥ ०१४ ॥

कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम् ।
जायते तदहङ्काराद्रागयुक्तेन चेतसा ॥ ०१५ ॥

शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात्तथा चक्षुर्घ्राणं गन्धचिकीर्षया ॥ ०१६ ॥

स्पर्शनेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः ।
व्यानोदानौ समानश्च पञ्चधा देहयापना ॥ ०१७ ॥

सञ्जातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः ।
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः ॥ ०१८ ॥

दुःखं विद्यादुपादानादभिमानाच्च वर्धते ।
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते ॥ ०१९ ॥

इन्द्रियाणां रजस्येव प्रभवप्रलयावुभौ ।
परीक्ष्य सञ्चरेद्विद्वान्यथावच्छास्त्रचक्षुषा ॥ ०२० ॥

ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम् ।
ज्ञातैश्च कारणैर्देही न देहं पुनरर्हति ॥ ०२१ ॥

---

# अध्याय २०७

गुरुरुवाच ॥

अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा ।
तद्विज्ञानाच्चरन्प्राज्ञः प्राप्नुयात्परमां गतिम् ॥ ००१ ॥

सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते ।
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रवादिनः ॥ ००२ ॥

सर्वभूतविशिष्टास्ते सर्वज्ञाः सर्वदर्शिनः ।
ब्राह्मणा वेदतत्त्वज्ञास्तत्त्वार्थगतिनिश्चयाः ॥ ००३ ॥

नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि ।
ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ॥ ००४ ॥

तांस्तानुपासते धर्मान्धर्मकामा यथागमम् ।
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ ००५ ॥

वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः ।
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणानिमान् ॥ ००६ ॥

यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् ।

परं तत्सर्वभूतेभ्यस्तेन यान्ति परां गतिम्  ॥ ००७  ॥

लिङ्गसंयोगहीनं यच्छरीरस्पर्शवर्जितम् ।
श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम्  ॥ ००८  ॥

जिह्वया रसनं यच्च तदेव परिवर्जितम् ।
बुद्ध्या च व्यवसायेन ब्रह्मचर्यमकल्मषम्  ॥ ००९  ॥

सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् ।
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः  ॥ ०१०  ॥

सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु ।
संप्रवृत्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः  ॥ ०११  ॥

योषितां न कथाः श्राव्या न निरीक्ष्या निरम्बराः ।
कदाचिद्दर्शनादासां दुर्बलानाविशेद्रजः  ॥ ०१२  ॥

रागोत्पत्तौ चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ।
मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणम्  ॥ ०१३  ॥

पाप्मानं निर्दहेदेवमन्तर्भूतं रजोमयम् ।
ज्ञानयुक्तेन मनसा संततेन विचक्षणः  ॥ ०१४  ॥

कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम् ।
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम्  ॥ ०१५  ॥

वातपित्तकफान्रक्तं त्वङ्मांसं स्नायुमस्थि च ।
मज्जां चैव सिराजालैस्तर्पयन्ति रसा नृणाम्  ॥ ०१६  ॥

दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिः सूक्ष्माः प्रतायन्ते धमन्योऽन्याः सहस्रशः  ॥ ०१७  ॥

एवमेताः सिरानद्यो रसोदा देहसागरम् ।
तर्पयन्ति यथाकालमापगा इव सागरम्  ॥ ०१८  ॥

मध्ये च हृदयस्यैका सिरा त्वत्र मनोवहा ।
शुक्रं सङ्कल्पजं नृणां सर्वगात्रैर्विमुञ्चति  ॥ ०१९  ॥

सर्वगात्रप्रतायिन्यस्तस्या ह्यनुगताः सिराः ।
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम्  ॥ ०२०  ॥

पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः ।
शुक्रं निर्मथ्यते तद्वद्देहसङ्कल्पजैः खजैः  ॥ ०२१  ॥

स्वप्नेऽप्येवं यथाभ्येति मनःसङ्कल्पजं रजः ।
शुक्रमस्पर्शजं देहात्सृजन्त्यस्य मनोवहा  ॥ ०२२  ॥

महर्षिर्भगवानत्रिर्वेद तच्छुक्रसंभवम् ।
त्रिबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते  ॥ ०२३  ॥

ये वै शुक्रगतिं विद्युर्भूतसङ्करकारिकाम् ।
विरागा दग्धदोषास्ते नाप्नुयुर्देहसंभवम्  ॥ ०२४  ॥

गुणानां साम्यमागम्य मनसैव मनोवहम् ।
देहकर्म नुदन्प्राणानन्तकाले विमुच्यते  ॥ ०२५  ॥

भविता मनसो ज्ञानं मन एव प्रतायते ।
ज्योतिष्मद्विरजो दिव्यमत्र सिद्धं महात्मनाम्  ॥ ०२६  ॥

तस्मात्तदविघाताय कर्म कुर्यादकल्मषम् ।
रजस्तमश्च हित्वेह न तिर्यग्गतिमाप्नुयात्  ॥ ०२७  ॥

तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम् ।
परिपक्वबुद्धिः कालेन आदत्ते मानसं बलम्  ॥ ०२८  ॥

सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम् ।
यदा पश्येत्तदा दोषानतीत्यामृतमश्नुते  ॥ ०२९  ॥

---

# अध्याय २०८

गुरुरुवाच  ॥

दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम्  ॥ ००१  ॥

जन्ममृत्युजरादुःखैर्व्याधिभिर्मनसः क्लमैः ।
दृष्ट्वेमं संततं लोकं घटेन्मोक्षाय बुद्धिमान्  ॥ ००२  ॥

वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहङ्कृतः ।
प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम्  ॥ ००३  ॥

अथ वा मनसः सङ्गं पश्येद्भूतानुकम्पया ।
अत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत्  ॥ ००४  ॥

यत्कृतं प्राक्शुभं कर्म पापं वा तदुपाश्नुते ।
तस्माच्छुभानि कर्माणि कुर्याद्वाग्बुद्धिकर्मभिः  ॥ ००५  ॥

अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत्  ॥ ००६  ॥

यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ।
दुःखान्निःसरणं वेद स तत्त्वज्ञः सुखी भवेत् ॥ ००७ ॥

तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ॥ ००८ ॥

अवाग्योगप्रयोगेण मनोज्ञं संप्रवर्तते ।
विवक्षता वा सद्वाक्यं धर्मं सूक्ष्ममवेक्षता ॥ ००९ ॥

सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ॥ ००९ ॥

कल्कापेतामपरुषामनृशंसामपैशुनाम् ।
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा ॥ ०१० ॥

वाक्प्रबुद्धो हि संरागाद्विरागाद्व्याहरेद्यदि ।
बुद्ध्या ह्यनिगृहीतेन मनसा कर्म तामसम् ॥ ०११ ॥

रजोभूतैर्हि करणैः कर्मणा प्रतिपद्यते ॥ ०११ ॥

स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते ।
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः ॥ ०१२ ॥

प्रकीर्णमेषभारो हि यद्वद्धार्येत दस्युभिः ।
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा ॥ ०१३ ॥

तानेव च यथा दस्यून्क्षिप्त्वा गच्छेच्छिवां दिशम् ।
तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयात्सुखम् ॥ ०१४ ॥

निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः ।
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ॥ ०१५ ॥

ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ।
निष्प्रचारेण मनसा परं तदधिगच्छति ॥ ०१६ ॥

धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम् ।
मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसात्मनः ॥ ०१७ ॥

निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे ।
देवतास्ताः प्रकाशन्ते हृष्टा यान्ति तमीश्वरम् ॥ ०१८ ॥

ताभिः संसक्तमनसो ब्रह्मवत्संप्रकाशते ।
एतैश्चापगतैः सर्वैर्ब्रह्मभूयाय कल्पते ॥ ०१९ ॥

अथ वा न प्रवर्तेत योगतन्त्रैरुपक्रमेत् ।
येन तन्त्रमयं तन्त्रं वृत्तिः स्यात्तत्तदाचरेत् ॥ ०२० ॥

कणपिण्याककुल्माषशाकयावकसक्तवः ।
तथा मूलफलं भैक्षं पर्यायेणोपयोजयेत् ॥ ०२१ ॥

आहारं नियतं चैव देशे काले च सात्त्विकम् ।
तत्परीक्ष्यानुवर्तेत यत्प्रवृत्त्यनुवर्तकम् ॥ ०२२ ॥

प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत् ।
ज्ञानेन्धितं ततो ज्ञानमर्कवत्संप्रकाशते ॥ ०२३ ॥

ज्ञानाधिष्ठानमज्ञानं त्री.ण्ल्लोकानधितिष्ठति ।
विज्ञानानुगतं ज्ञानमज्ञानादपकृष्यते ॥ ०२४ ॥

पृथक्त्वात्संप्रयोगाच्च नासूयुर्वेद शाश्वतम् ।
स तयोरपवर्गज्ञो वीतरागो विमुच्यते ॥ ०२५ ॥

वयोतीतो जरामृत्यू जित्वा ब्रह्म सनातनम् ।
अमृतं तदवाप्नोति यत्तदक्षरमव्ययम्  ॥ ०२६  ॥

---

# अध्याय २०९

गुरुरुवाच  ॥

निष्कल्मषं ब्रह्मचर्यमिच्छता चरितुं सदा ।
निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता  ॥ ००१  ॥

स्वप्ने हि रजसा देही तमसा चाभिभूयते ।
देहान्तरमिवापन्नश्चरत्यपगतस्मृतिः  ॥ ००२  ॥

ज्ञानाभ्यासाज्जागरतो जिज्ञासार्थमनन्तरम् ।
विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा  ॥ ००३  ॥

अत्राह को न्वयं भावः स्वप्ने विषयवानिव ।
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव  ॥ ००४  ॥

अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः ।
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः  ॥ ००५  ॥

इन्द्रियाणां श्रमात्स्वप्नमाहुः सर्वगतं बुधाः ।
मनसस्तु प्रलीनत्वात्तत्तदाहुर्निदर्शनम्  ॥ ००६  ॥

कार्यव्यासक्तमनसः सङ्कल्पो जाग्रतो ह्यपि ।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम्  ॥ ००७  ॥

संसाराणामसंख्यानां कामात्मा तदवाप्नुयात् ।
मनस्यन्तर्हितं सर्वं वेद सोत्तमपूरुषः ॥ ००८ ॥

गुणानामपि यद्यत्तत्कर्म जानात्युपस्थितम् ।
तत्तच्छंसन्ति भूतानि मनो यद्भावितं यथा ॥ ००९ ॥

ततस्तमुपवर्तन्ते गुणा राजसतामसाः ।
सात्त्विको वा यथायोगमानन्तर्यफलोदयः ॥ ०१० ॥

ततः पश्यत्यसंबद्धान्वातपित्तकफोत्तरान् ।
रजस्तमोभवैर्भावैस्तदप्याहुर्दुरन्वयम् ॥ ०११ ॥

प्रसन्नैरिन्द्रियैर्यद्यत्सङ्कल्पयति मानसम् ।
तत्तत्स्वप्नेऽप्युपरते मनोदृष्टिर्निरीक्षते ॥ ०१२ ॥

व्यापकं सर्वभूतेषु वर्ततेऽप्रतिघं मनः ।
मनस्यन्तर्हितं द्वारं देहमास्थाय मानसम् ॥ ०१३ ॥

यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम् ।
सर्वभूतात्मभूतस्थं तदध्यात्मगुणं विदुः ॥ ०१४ ॥

लिप्सेत मनसा यश्च सङ्कल्पादैश्वरं गुणम् ।
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः ॥ ०१५ ॥

एवं हि तपसा युक्तमर्कवत्तमसः परम् ।
त्रैलोक्यप्रकृतिर्देही तपसा तं महेश्वरम् ॥ ०१६ ॥

तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः ।
एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् ॥ ०१७ ॥

सत्त्वं रजस्तमश्चेति देवासुरगुणान्विदुः ।

सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ ॥ ०१८ ॥

ब्रह्म तत्परमं वेद्यममृतं ज्योतिरक्षरम् ।
ये विदुर्भावितात्मानस्ते यान्ति परमां गतिम् ॥ ०१९ ॥

हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा ।
प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् ॥ ०२० ॥

---

# अध्याय २१०

गुरुरुवाच ॥

न स वेद परं धर्मं यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्ते च यत्तत्त्वं संप्राप्तं परमर्षिणा ॥ ००१ ॥

व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम् ।
प्रवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥ ००२ ॥

अत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ।
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ॥ ००३ ॥

प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ॥ ००४ ॥

तां गतिं परमामेति निवृत्तिपरमो मुनिः ।
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ॥ ००५ ॥

तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ ।
अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ॥ ००६ ॥

तं विशेषमवेक्षेत विशेषेण विचक्षणः ।
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ॥ ००७ ॥

उभौ नित्यौ सूक्ष्मतरौ महद्भ्यश्च महत्तरौ ।
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ॥ ००८ ॥

प्रकृत्या सर्गधर्मिण्या तथा त्रिविधसत्त्वया ।
विपरीतमतो विद्यात्क्षेत्रज्ञस्य च लक्षणम् ॥ ००९ ॥

प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
अग्राह्यौ पुरुषावेतावलिङ्गत्वादसंहितौ ॥ ०१० ॥

संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यया ।
करणैः कर्मनिर्वृत्तैः कर्ता यद्यद्विचेष्टते ॥ ०११ ॥

कीर्त्यते शब्दसञ्ज्ञाभिः कोऽहमेषोऽप्यसाविति ॥ ०११ ॥

उष्णीषवान्यथा वस्त्रैस्त्रिभिर्भवति संवृतः ।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः ॥ ०१२ ॥

तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिराचितम् ।
यथासञ्ज्ञो ह्ययं सम्यगन्तकाले न मुह्यति ॥ ०१३ ॥

श्रियं दिव्यामभिप्रेप्सुर्ब्रह्म वाङ्मनसा शुचिः ।
शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषं तपः ॥ ०१४ ॥

त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता ।
सूर्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि ॥ ०१५ ॥

प्रतापस्तपसो ज्ञानं लोके संशब्दितं तपः ।
रजस्तमोघ्नं यत्कर्म तपसस्तत्स्वलक्षणम् ॥ ०१६ ॥

ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
वाङ्मनोनियमः साम्यं मानसं तप उच्यते ॥ ०१७ ॥

विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते ।
आहारनियमेनास्य पाप्मा नश्यति राजसः ॥ ०१८ ॥

वैमनस्यं च विषये यान्त्यस्य करणानि च ।
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनम् ॥ ०१९ ॥

अन्तकाले वयोत्कर्षाच्छनैः कुर्यादनातुरः ।
एवं युक्तेन मनसा ज्ञानं तदुपपद्यते ॥ ०२० ॥

रजसा चाप्ययं देही देहवाञ्शब्दवच्चरेत् ।
कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौ स्थितः ॥ ०२१ ॥

आ देहादप्रमादाच्च देहान्ताद्विप्रमुच्यते ॥ ०२१ ॥

हेतुयुक्तः सदोत्सर्गो भूतानां प्रलयस्तथा ।
परप्रत्ययसर्गे तु नियतं नातिवर्तते ॥ ०२२ ॥

भवान्तप्रभवप्रज्ञा आसते ये विपर्ययम् ।
धृत्या देहान्धारयन्तो बुद्धिसङ्क्षिप्तमानसाः ॥ ०२३ ॥

स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तानुपासते ॥ ०२३ ॥

यथागमं च तत्सर्वं बुद्ध्या तन्नैव बुध्यते ।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ॥ ०२४ ॥

युक्तो धारणया कश्चित्सत्तां केचिदुपासते ॥ ०२४ ॥

अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरम् ।
अन्तकाले ह्युपासन्नास्तपसा दग्धकिल्बिषाः ॥ ०२५ ॥

सर्व एते महात्मानो गच्छन्ति परमां गतिम् ।
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ॥ ०२६ ॥

देहं तु परमं विद्याद्विमुक्तमपरिग्रहम् ।
अन्तरिक्षादन्यतरं धारणासक्तमानसम् ॥ ०२७ ॥

मर्त्यलोकाद्विमुच्यन्ते विद्यासंयुक्तमानसाः ।
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् ॥ ०२८ ॥

कषायवर्जितं ज्ञानं येषामुत्पद्यतेऽचलम् ।
ते यान्ति परमा.ण्ल्लोकान्विशुध्यन्तो यथाबलम् ॥ ०२९ ॥

भगवन्तमजं दिव्यं विष्णुमव्यक्तसञ्ज्ञितम् ।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ॥ ०३० ॥

ज्ञात्वात्मस्थं हरिं चैव निवर्तन्ते न तेऽव्ययाः ।
प्राप्य तत्परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ ०३१ ॥

एतावदेतद्विज्ञानमेतदस्ति च नास्ति च ।
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ ०३२ ॥

बिसतन्तुर्यथैवायमन्तःस्थः सर्वतो बिसे ।
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ॥ ०३३ ॥

सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः ।
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबध्यते ॥ ०३४ ॥

विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥ ०३५ ॥

प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम् ।
भूतानामनुकम्पार्थं जगाद जगतो हितम् ॥ ०३६ ॥

---

# जनकपञ्चशिखसंवादः

## अध्याय २११

युधिष्ठिर उवाच ॥

केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य मानुषान् ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
येन वृत्तेन वृत्तज्ञः स जगाम महत्सुखम् ॥ ००२ ॥

जनको जनदेवस्तु मिथिलायां जनाधिपः ।
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ॥ ००३ ॥

तस्य स्म शतमाचार्या वसन्ति सततं गृहे ।
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ॥ ००४ ॥

स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये ।
आगमस्थः स भूयिष्ठमात्मतत्त्वे न तुष्यति ॥ ००५ ॥

तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन्महीं कृत्स्नां जगाम मिथिलामपि ॥ ००६ ॥

सर्वसंन्यासधर्माणां तत्त्वज्ञानविनिश्चये ।
सुपर्यवसितार्थश्च निर्द्वंद्वो नष्टसंशयः ॥ ००७ ॥

ऋषीणामाहुरेकं यं कामादवसितं नृषु ।
शाश्वतं सुखमत्यन्तमन्विच्छन्स सुदुर्लभम् ॥ ००८ ॥

यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम् ।
स मन्ये तेन रूपेण विस्मापयति हि स्वयम् ॥ ००९ ॥

आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् ॥ ०१० ॥

तं समासीनमागम्य मण्डलं कापिलं महत् ।
पुरुषावस्थमव्यक्तं परमार्थं निबोधयत् ॥ ०११ ॥

इष्टिसत्रेण संसिद्धो भूयश्च तपसा मुनिः ।
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनः ॥ ०१२ ॥

यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।
आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् ॥ ०१३ ॥

तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः ।
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी ॥ ०१४ ॥

तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ ।

ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम्  ॥ ०१५  ॥

एतन्मे भगवानाह कापिलेयाय संभवम् ।
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम्  ॥ ०१६  ॥

सामान्यं कपिलो ज्ञात्वा धर्मज्ञानामनुत्तमम् ।
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः  ॥ ०१७  ॥

जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम्  ॥ ०१८  ॥

तस्मै परमकल्पाय प्रणताय च धर्मतः ।
अब्रवीत्परमं मोक्षं यत्तत्सांख्यं विधीयते  ॥ ०१९  ॥

जातिनिर्वेदमुक्त्वा हि कर्मनिर्वेदमब्रवीत् ।
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत्  ॥ ०२०  ॥

यदर्थं कर्मसंसर्गः कर्मणां च फलोदयः ।
तदनाश्वासिकं मोघं विनाशि चलमध्रुवम्  ॥ ०२१  ॥

दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।
आगमात्परमस्तीति ब्रुवन्नपि पराजितः  ॥ ०२२  ॥

अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः ।
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम्  ॥ ०२३  ॥

अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।
अजरोऽयममृत्युश्च राजासौ मन्यते तथा  ॥ ०२४  ॥

अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ।
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम्  ॥ ०२५  ॥

प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।
प्रत्यक्षो ह्यागमोऽभिन्नः कृतान्तो वा न किञ्चन ॥ ०२६ ॥

यत्र तत्रानुमानेऽस्ति कृतं भावयतेऽपि वा ।
अन्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः ॥ ०२७ ॥

रेतो वटकणीकायां घृतपाकाधिवासनम् ।
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥ ०२८ ॥

प्रेत्य भूतात्ययश्चैव देवताभ्युपयाचनम् ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥ ०२९ ॥

न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य हि मर्त्येन सामान्यं नोपपद्यते ॥ ०३० ॥

अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवम् ।
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ॥ ०३१ ॥

अविद्यां क्षेत्रमाहुर्हि कर्म बीजं तथा कृतम् ।
तृष्णासञ्जननं स्नेह एष तेषां पुनर्भवः ॥ ०३२ ॥

तस्मिन्व्यूढे च दग्धे च चित्ते मरणधर्मिणि ।
अन्योऽन्याज्जायते देहस्तमाहुः सत्त्वसङ्क्षयम् ॥ ०३३ ॥

यदा स रूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येव संबन्धः स्यादसंहितः ॥ ०३४ ॥

एवं सति च का प्रीतिर्दानविद्यातपोबलैः ।
यदन्याचरितं कर्म सर्वमन्यः प्रपद्यते ॥ ०३५ ॥

यदा ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत् ।
सुखितैर्दुःखितैर्वापि दृश्योऽप्यस्य विनिर्णयः ॥ ०३६ ॥

तथा हि मुसलैर्हन्युः शरीरं तत्पुनर्भवेत् ।
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपलभ्यते ॥ ०३७ ॥

ऋतुः संवत्सरस्तिथ्यः शीतोष्णे च प्रियाप्रिये ।
यथातीतानि पश्यन्ति तादृशः सत्त्वसङ्क्षयः ॥ ०३८ ॥

जरया हि परीतस्य मृत्युना वा विनाशिना ।
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ॥ ०३९ ॥

इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ॥ ०४० ॥

लोकयात्राविधानं च दानधर्मफलागमः ।
यदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ०४१ ॥

इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदस्तीदमस्तीति न किञ्चित्प्रतिपद्यते ॥ ०४२ ॥

तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ ०४३ ॥

एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ॥ ०४४ ॥

अर्थांस्तथात्यन्तसुखावहांश्च ; लिप्सन्त एते बहवो विशुल्काः ।
महत्तरं दुःखमभिप्रपन्ना ; हित्वामिषं मृत्युवशं प्रयान्ति ॥ ०४५ ॥

विनाशिनो ह्यध्रुवजीवितस्य ; किं बन्धुभिर्मित्रपरिग्रहैश्च ।

विहाय यो गच्छति सर्वमेव ; क्षणेन गत्वा न निवर्तते च ॥ ०४६ ॥

भूव्योमतोयानलवायवो हि ; सदा शरीरं परिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवे ;द्विनाशिनो ह्यस्य न शर्म विद्यते ॥ ०४७ ॥

इदमनुपधि वाक्यमच्छलं ; परमनिरामयमात्मसाक्षिकम् ।
नरपतिरभिवीक्ष्य विस्मितः ; पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ०४८ ॥

---

# अध्याय २१२

भीष्म उवाच ॥

जनको जनदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥ ००१ ॥

भगवन्यदिदं प्रेत्य सञ्ज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ ००२ ॥

सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम ।
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ००३ ॥

असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।
कस्मै क्रियेत कल्पेन निश्चयः कोऽत्र तत्त्वतः ॥ ००४ ॥

तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् ।
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥ ००५ ॥

उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते ।

अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम्  ॥ ००६  ॥

वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु  ॥ ००६  ॥

धातवः पञ्चशाखोऽयं खं वायुर्ज्योतिरम्बु भूः ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः  ॥ ००७  ॥

आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
एष पञ्चसमाहारः शरीरमिति नैकधा  ॥ ००८  ॥

ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसङ्ग्रहः  ॥ ००८  ॥

इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः  ॥ ००९  ॥

श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च ।
इन्द्रियाणीति पञ्चैते चित्तपूर्वङ्गमा गुणाः  ॥ ०१०  ॥

तत्र विज्ञानसंयुक्ता त्रिविधा वेदना ध्रुवा ।
सुखदुःखेति यामाहुरदुःखेत्यसुखेति च  ॥ ०११  ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्त्यथ ।
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये  ॥ ०१२  ॥

तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थनिश्चयः ।
तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत्  ॥ ०१३  ॥

इमं गुणसमाहारमात्मभावेन पश्यतः ।
असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति  ॥ ०१४  ॥

अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि ।

वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः ॥ ०१५ ॥

तत्र सम्यङ्मनो नाम त्यागशास्त्रमनुत्तमम् ।
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ ०१६ ॥

त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम् ।
नित्यं मिथ्याविनीतानां क्लेशो दुःखावहो मतः ॥ ०१७ ॥

द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि ।
सुखत्यागे तपोयोगः सर्वत्यागे समापना ॥ ०१८ ॥

तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः ।
विप्रहाणाय दुःखस्य दुर्गतिर्ह्यन्यथा भवेत् ॥ ०१९ ॥

पञ्च ज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि ।
मनःषष्ठानि वक्ष्यामि पञ्च कर्मेन्द्रियाणि तु ॥ ०२० ॥

हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम् ।
प्रजनानन्दयोः शेफो विसर्गे पायुरिन्द्रियम् ॥ ०२१ ॥

वाक्तु शब्दविशेषार्थं गतिं पञ्चान्वितां विदुः ।
एवमेकादशैतानि बुद्ध्या त्ववसृजेन्मनः ॥ ०२२ ॥

कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसङ्ग्रहे ।
तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः ॥ ०२३ ॥

एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये ।
येन यस्त्रिविधो भावः पर्यायात्समुपस्थितः ॥ ०२४ ॥

सात्त्विको राजसश्चैव तामसश्चैव ते त्रयः ।
त्रिविधा वेदना येषु प्रसूता सर्वसाधना ॥ ०२५ ॥

प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ।
अकुतश्चित्कुतश्चिद्वा चित्ततः सात्त्विको गुणः ॥ ०२६ ॥

अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ॥ ०२७ ॥

अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता ।
कथञ्चिदपि वर्तन्ते विविधास्तामसा गुणाः ॥ ०२८ ॥

तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा ॥ ०२९ ॥

यत्तु संतापसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव ततस्तदभिचिन्तयेत् ॥ ०३० ॥

अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ०३१ ॥

तद्धि श्रोत्राश्रयं भूतं शब्दः श्रोत्रं समाश्रितः ।
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ॥ ०३२ ॥

एवं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ॥ ०३३ ॥

स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति ।
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ॥ ०३४ ॥

तेषामयुगपद्भावे उच्छेदो नास्ति तामसः ।
आस्थितो युगपद्भावे व्यवहारः स लौकिकः ॥ ०३५ ॥

इन्द्रियाण्यवसृज्यापि दृष्ट्वा पूर्वं श्रुतागमम् ।
चिन्तयन्नानुपर्यैति त्रिभिरेवान्वितो गुणैः ॥ ०३६ ॥

यत्तमोपहतं चित्तमाशु सञ्चारमध्रुवम् ।
करोत्युपरमं काले तदाहुस्तामसं सुखम् ॥ ०३७ ॥

यद्यदागमसंयुक्तं न कृत्स्नमुपशाम्यति ।
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ॥ ०३८ ॥

एवमेष प्रसंख्यातः स्वकर्मप्रत्ययी गुणः ।
कथञ्चिद्वर्तते सम्यक्केषाञ्चिद्वा न वर्तते ॥ ०३९ ॥

एवमाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः ।
स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ॥ ०४० ॥

एवं सति क उच्छेदः शाश्वतो वा कथं भवेत् ।
स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुतः ॥ ०४१ ॥

यथार्णवगता नद्यो व्यक्तीर्जहति नाम च ।
न च स्वतां नियच्छन्ति तादृशः सत्त्वसङ्क्षयः ॥ ०४२ ॥

एवं सति कुतः सञ्ज्ञा प्रेत्यभावे पुनर्भवेत् ।
प्रतिसंमिश्रिते जीवे गृह्यमाणे च मध्यतः ॥ ०४३ ॥

इमां तु यो वेद विमोक्षबुद्धि ;मात्मानमन्विच्छति चाप्रमत्तः ।
न लिप्यते कर्मफलैरनिष्टैः ; पत्रं बिसस्येव जलेन सिक्तम् ॥ ०४४ ॥

दृढैश्च पाशैर्बहुभिर्विमुक्तः ; प्रजानिमित्तैरपि दैवतैश्च ।
यदा ह्यसौ सुखदुःखे जहाति ; मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः ॥ ०४५ ॥

श्रुतिप्रमाणागममङ्गलैश्च ; शेते जरामृत्युभयादतीतः ॥ ०४५ ॥

क्षीणे च पुण्ये विगते च पापे ; ततोनिमित्ते च फले विनष्टे ।
अलेपमाकाशमलिङ्गमेव ;मास्थाय पश्यन्ति महद्ध्यसक्ताः ॥ ०४६ ॥

यथोर्णनाभिः परिवर्तमान ;स्तन्तुक्षये तिष्ठति पात्यमानः ।
तथा विमुक्तः प्रजहाति दुःखं ; विध्वंसते लोष्ट इवाद्रिमर्च्छन् ॥ ०४७ ॥

यथा रुरुः शृङ्गमथो पुराणं ; हित्वा त्वचं वाप्युरगो यथावत् ।
विहाय गच्छत्यनवेक्षमाण ;स्तथा विमुक्तो विजहाति दुःखम् ॥ ०४८ ॥

द्रुमं यथा वाप्युदके पतन्त ;मुत्सृज्य पक्षी प्रपतत्यसक्तः ।
तथा ह्यसौ सुखदुःखे विहाय ; मुक्तः परार्ध्यां गतिमेत्यलिङ्गः ॥ ०४९ ॥

अपि च भवति मैथिलेन गीतं ; नगरमुपाहितमग्निनाभिवीक्ष्य ।
न खलु मम तुषोऽपि दह्यतेऽत्र ; स्वयमिदमाह किल स्म भूमिपालः ॥ ०५०
॥

इदममृतपदं विदेहराजः ; स्वयमिह पञ्चशिखेन भाष्यमाणः ।
निखिलमभिसमीक्ष्य निश्चितार्थं ; परमसुखी विजहार वीतशोकः ॥ ०५१ ॥

इमं हि यः पठति विमोक्षनिश्चयं ; न हीयते सततमवेक्षते तथा ।
उपद्रवान्नानुभवत्यदुःखितः ; प्रमुच्यते कपिलमिवैत्य मैथिलः ॥ ०५२ ॥

---

# अध्याय २१३

युधिष्ठिर उवाच ॥

किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुते ।

किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत ॥ ००१ ॥

भीष्म उवाच ॥

दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ ००२ ॥

नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
क्रिया तपश्च वेदाश्च दमे सर्वं प्रतिष्ठितम् ॥ ००३ ॥

दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥ ००४ ॥

सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥ ००५ ॥

तेजो दमेन ध्रियते न तत्तीक्ष्णोऽधिगच्छति ।
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ॥ ००६ ॥

क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ॥ ००७ ॥

आश्रमेषु च सर्वेषु दम एव विशिष्यते ।
यच्च तेषु फलं धर्मे भूयो दान्ते तदुच्यते ॥ ००८ ॥

तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ॥ ००९ ॥

अक्रोध आर्जवं नित्यं नातिवादो न मानिता ।
गुरुपूजानसूया च दया भूतेष्वपैशुनम् ॥ ०१० ॥

जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ।
साधुकामश्चास्पृहयन्नायाति प्रत्ययं नृषु ॥ ०११ ॥

अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मवान्बुधः ॥ ०१२ ॥

प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ॥ ०१२ ॥

सर्वभूतहिते युक्तो न स्मयाद्वेष्टि वै जनम् ।
महाह्रद इवाक्षोभ्य प्रज्ञातृप्तः प्रसीदति ॥ ०१३ ॥

अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
नमस्यः सर्वभूतानां दान्तो भवति ज्ञानवान् ॥ ०१४ ॥

न हृष्यति महत्यर्थे व्यसने च न शोचति ।
स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते ॥ ०१५ ॥

कर्मभिः श्रुतसंपन्नः सद्भिराचरितैः शुभैः ।
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महत्फलम् ॥ ०१६ ॥

अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ।
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् ॥ ०१७ ॥

कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तपसि ब्राह्मणः संशितव्रतः ॥ ०१८ ॥

कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ॥ ०१८ ॥

# अध्याय २१४

युधिष्ठिर उवाच ॥

द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः ।
वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ ००२ ॥

युधिष्ठिर उवाच ॥

यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
एतत्तपो महाराज उताहो किं तपो भवेत् ॥ ००३ ॥

भीष्म उवाच ॥

मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपघातः स न तपस्तत्सतां मतम् ॥ ००४ ॥

त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ॥ ००४ ॥

सदोपवासी च भवेद्ब्रह्मचारी सदैव च ।
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भजेत् ॥ ००५ ॥

कुटुम्बिको धर्मकामः सदास्वप्नश्च भारत ।
अमांसाशी सदा च स्यात्पवित्रं च सदा जपेत् ॥ ००६ ॥

अमृताशी सदा च स्यान्न च स्याद्विषभोजनः ।
विघसाशी सदा च स्यात्सदा चैवातिथिप्रियः ॥ ००७ ॥

युधिष्ठिर उवाच ॥

कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ॥ ००८ ॥

भीष्म उवाच ॥

अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी च भवेद्यो न भुङ्क्ते कथञ्चन ॥ ००९ ॥

भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
ऋतवादी सदा च स्याज्ज्ञाननित्यश्च यो नरः ॥ ०१० ॥

अभक्षयन्वृथामांसममांसाशी भवत्युत ।
दाननित्यः पवित्रश्च अस्वप्नश्च दिवास्वपन् ॥ ०११ ॥

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा स ह ।
अमृतं सकलं भुङ्क्त इति विद्धि युधिष्ठिर ॥ ०१२ ॥

अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ ०१३ ॥

देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ ०१४ ॥

तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह ।
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ॥ ०१५ ॥

देवताभिश्च ये सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ ०१६ ॥

# इन्द्रप्रह्लादसंवादः

## अध्याय २१५

युधिष्ठिर उवाच ॥

यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥ ००१ ॥

कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥ ००२ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ॥ ००३ ॥

असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम् ।
अस्तम्भमनहङ्कारं सत्त्वस्थं समये रतम् ॥ ००४ ॥

तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम् ।
चराचराणां भूतानां विदितप्रभवाप्ययम् ॥ ००५ ॥

अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च ।
काञ्चने वाथ लोष्टे वा उभयोः समदर्शनम् ॥ ००६ ॥

आत्मनिःश्रेयसज्ञाने धीरं निश्चितनिश्चयम् ।
परावरज्ञं भूतानां सर्वज्ञं समदर्शनम्  ॥ ००७  ॥

शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम् ।
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत्  ॥ ००८  ॥

यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणा.ण्ल्लक्षयामहे  ॥ ००९  ॥

अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह ।
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे  ॥ ०१०  ॥

बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि  ॥ ०११  ॥

प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया ।
प्रह्लाद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः  ॥ ०१२  ॥

इति सञ्चोदितस्तेन धीरो निश्चितनिश्चयः ।
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन्  ॥ ०१३  ॥

प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः  ॥ ०१४  ॥

स्वभावात्संप्रवर्तन्ते निवर्तन्ते तथैव च ।
सर्वे भावास्तथाभावाः पुरुषार्थो न विद्यते  ॥ ०१५  ॥

पुरुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः ।
स्वयं तु कुर्वतस्तस्य जातु मानो भवेदिह  ॥ ०१६  ॥

यस्तु कर्तारमात्मानं मन्यते साध्वसाधुनोः ।

तस्य दोषवती प्रज्ञा स्वमूर्त्यज्ञेति मे मतिः ॥ ०१७ ॥

यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।
आरम्भास्तस्य सिध्येरन्न च जातु पराभवेत् ॥ ०१८ ॥

अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च ।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥ ०१९ ॥

अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च ।
अप्रयत्नेन पश्यामः केषाञ्चित्तत्स्वभावतः ॥ ०२० ॥

प्रतिरूपधराः केचिद्दृश्यन्ते बुद्धिसत्तमाः ।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् ॥ ०२१ ॥

स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा ।
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् ॥ ०२२ ॥

स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः ।
आत्मप्रतिष्ठिता प्रज्ञा मम नास्ति ततोऽन्यथा ॥ ०२३ ॥

कर्मजं त्विह मन्येऽहं फलयोगं शुभाशुभम् ।
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ॥ ०२४ ॥

यथा वेदयते कश्चिदोदनं वायसो वदन् ।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥ ०२५ ॥

विकारानेव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ ०२६ ॥

स्वभावभाविनो भावान्सर्वानेवेह निश्चये ।
बुध्यमानस्य दर्पो वा मानो वा किं करिष्यति ॥ ०२७ ॥

वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम् ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत्  ॥ ०२८  ॥

निर्ममो निरहङ्कारो निरीहो मुक्तबन्धनः ।
स्वस्थोऽव्यपेतः पश्यामि भूतानां प्रभवाप्ययौ  ॥ ०२९  ॥

कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निराशिषः ।
नायासो विद्यते शक्र पश्यतो लोकविद्यया  ॥ ०३०  ॥

प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे ।
द्वेष्टारं न च पश्यामि यो ममाद्य ममायते  ॥ ०३१  ॥

नोर्ध्वं नावाङ्न तिर्यक्क न क्वचिच्छक्र कामये ।
न विज्ञाने न विज्ञेये नाज्ञाने शर्म विद्यते  ॥ ०३२  ॥

शक्र उवाच  ॥

येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक्प्रह्लाद पृच्छते  ॥ ०३३  ॥

प्रह्लाद उवाच  ॥

आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
वृद्धशुश्रूषया शक्र पुरुषो लभते महत्  ॥ ०३४  ॥

स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत्सर्वं यत्किञ्चिदनुपश्यसि  ॥ ०३५  ॥

भीष्म उवाच  ॥

इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् ।
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत्  ॥ ०३६  ॥

स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः ।
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम्  ॥ ०३७  ॥

---

# बलिवासवसंवादः

## अध्याय २१६

युधिष्ठिर उवाच  ॥

यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह  ॥ ००१  ॥

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च  ॥ ००२  ॥

पितामहमुपागत्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुराञ्जित्वा बलिं पप्रच्छ वासवः  ॥ ००३  ॥

यस्य स्म ददतो वित्तं न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम्  ॥ ००४  ॥

स एव ह्यस्तमयते स स्म विद्योतते दिशः ।

स वर्षति स्म वर्षाणि यथाकालमतन्द्रितः ॥ ००५ ॥

तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ००५ ॥

स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः ।
सोऽग्निस्तपति भूतानि पृथिवी च भवत्युत ॥ ००६ ॥

तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ००६ ॥

ब्रह्मोवाच ॥

नैतत्ते साधु मघवन्यदेतदनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिम् ॥ ००७ ॥

उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः ।
वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ॥ ००८ ॥

शक्र उवाच ॥

यदि स्म बलिना ब्रह्मञ्शून्यागारे समेयिवान् ।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् ॥ ००९ ॥

ब्रह्मोवाच ॥

मा स्म शक्र बलिं हिंसीर्न बलिर्वधमर्हति ।
न्यायांस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ॥ ०१० ॥

भीष्म उवाच ॥

एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा ।
चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ॥ ०११ ॥

ततो ददर्श स बलिं खरवेषेण संवृतम् ।
यथाख्यातं भगवता शून्यागारकृतालयम्  ॥ ०१२  ॥

शक्र उवाच  ॥

खरयोनिमनुप्राप्तस्तुषभक्षोऽसि दानव ।
इयं ते योनिरधमा शोचस्याहो न शोचसि  ॥ ०१३  ॥

अदृष्टं बत पश्यामि द्विषतां वशमागतम् ।
श्रिया विहीनं मित्रैश्च भ्रष्टवीर्यपराक्रमम्  ॥ ०१४  ॥

यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन्  ॥ ०१५  ॥

त्वन्मुखाश्चैव दैतेया व्यतिष्ठंस्तव शासने ।
अकृष्टपच्या पृथिवी तवैश्वर्ये बभूव ह  ॥ ०१६  ॥

इदं च तेऽद्य व्यसनं शोचस्याहो न शोचसि  ॥ ०१६  ॥

यदातिष्ठः समुद्रस्य पूर्वकूले विलेलिहन् ।
ज्ञातिभ्यो विभजन्वित्तं तदासीत्ते मनः कथम्  ॥ ०१७  ॥

यत्ते सहस्रसमिता ननृतुर्देवयोषितः ।
बहूनि वर्षपूगानि विहारे दीप्यतः श्रिया  ॥ ०१८  ॥

सर्वाः पुष्करमालिन्यः सर्वाः काञ्चनसप्रभाः ।
कथमद्य तदा चैव मनस्ते दानवेश्वर  ॥ ०१९  ॥

छत्रं तवासीत्सुमहत्सौवर्णं मणिभूषितम् ।
ननृतुर्यत्र गन्धर्वाः षड्सहस्राणि सप्तधा  ॥ ०२०  ॥

यूपस्तवासीत्सुमहान्यजतः सर्वकाञ्चनः ।
यत्रादद: सहस्राणामयुतानि गवां दश ॥ ०२१ ॥

यदा तु पृथिवीं सर्वां यजमानोऽनुपर्ययाः ।
शम्याक्षेपेण विधिना तदासीत्किं नु ते हृदि ॥ ०२२ ॥

न ते पश्यामि भृङ्गारं न छत्रं व्यजनं न च ।
ब्रह्मदत्तां च ते मालां न पश्याम्यसुराधिप ॥ ०२३ ॥

बलिरुवाच ॥

न त्वं पश्यसि भृङ्गारं न छत्रं व्यजनं न च ।
ब्रह्मदत्तां च मे मालां न त्वं द्रक्ष्यसि वासव ॥ ०२४ ॥

गुहायां निहितानि त्वं मम रत्नानि पृच्छसि ।
यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि ॥ ०२५ ॥

न त्वेतदनुरूपं ते यशसो वा कुलस्य वा ।
समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि ॥ ०२६ ॥

न हि दुःखेषु शोचन्ति न प्रहृष्यन्ति चर्द्धिषु ।
कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः ॥ ०२७ ॥

त्वं तु प्राकृतया बुद्ध्या पुरंदर विकत्थसे ।
यदाहमिव भावी त्वं तदा नैवं वदिष्यसि ॥ ०२८ ॥

# अध्याय २१७

भीष्म उवाच ॥

पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत् ।
निःश्वसन्तं यथा नागं प्रव्याहाराय भारत ॥ ००१ ॥

यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन् ॥ ००२ ॥

दृष्ट्वा सुकृपणां चेमामवस्थामात्मनो बले ।
ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि ॥ ००३ ॥

प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान् ।
विनिपातमिमं चाद्य शोचस्याहो न शोचसि ॥ ००४ ॥

बलिरुवाच ॥

अनित्यमुपलक्ष्येदं कालपर्यायमात्मनः ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ ००५ ॥

अन्तवन्त इमे देहा भूतानाममराधिप ।
तेन शक्र न शोचामि नापराधादिदं मम ॥ ००६ ॥

जीवितं च शरीरं च प्रेत्य वै सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥ ००७ ॥

तदीदृशमिदं भावमवशः प्राप्य केवलम् ।
यद्येवमभिजानामि का व्यथा मे विजानतः ॥ ००८ ॥

भूतानां निधनं निष्ठा स्रोतसामिव सागरः ।

नैतत्सम्यग्विजानन्तो नरा मुह्यन्ति वज्रभृत्  ॥ ००९  ॥

ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः ।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति  ॥ ०१०  ॥

बुद्धिलाभे हि पुरुषः सर्वं नुदति किल्बिषम् ।
विपाप्मा लभते सत्त्वं सत्त्वस्थः संप्रसीदति  ॥ ०११  ॥

ततस्तु ये निवर्तन्ते जायन्ते वा पुनः पुनः ।
कृपणाः परितप्यन्ते तेऽनर्थैः परिचोदिताः  ॥ ०१२  ॥

अर्थसिद्धिमनर्थं च जीवितं मरणं तथा ।
सुखदुःखफलं चैव न द्वेष्मि न च कामये  ॥ ०१३  ॥

हतं हन्ति हतो ह्येव यो नरो हन्ति कञ्चन ।
उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः  ॥ ०१४  ॥

हत्वा जित्वा च मघवन्यः कश्चित्पुरुषायते ।
अकर्ता ह्येव भवति कर्ता त्वेव करोति तत्  ॥ ०१५  ॥

को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।
कृतं हि तत्कृतेनैव कर्ता तस्यापि चापरः  ॥ ०१६  ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
एतद्योनीनि भूतानि तत्र का परिदेवना  ॥ ०१७  ॥

महाविद्योऽल्पविद्यश्च बलवान्दुर्बलश्च यः ।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः  ॥ ०१८  ॥

सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा ।
तस्मिन्कालवशं प्राप्ते का व्यथा मे विजानतः  ॥ ०१९  ॥

दग्धमेवानुदहति हतमेवानुहन्ति च ।
नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥ ०२० ॥

नास्य द्वीपः कुतः पारं नावारः संप्रदृश्यते ।
नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन् ॥ ०२१ ॥

यदि मे पश्यतः कालो भूतानि न विनाशयेत् ।
स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥ ०२२ ॥

तुषभक्षं तु मां ज्ञात्वा प्रविविक्तजने गृहे ।
बिभ्रतं गार्दभं रूपमादिश्य परिगर्हसे ॥ ०२३ ॥

इच्छन्नहं विकुर्यां हि रूपाणि बहुधात्मनः ।
विभीषणानि यानीक्ष्य पलायेथास्त्वमेव मे ॥ ०२४ ॥

कालः सर्वं समादत्ते कालः सर्वं प्रयच्छति ।
कालेन विधृतं सर्वं मा कृथाः शक्र पौरुषम् ॥ ०२५ ॥

पुरा सर्वं प्रव्यथते मयि क्रुद्धे पुरंदर ।
अवैमि त्वस्य लोकस्य धर्मं शक्र सनातनम् ॥ ०२६ ॥

त्वमप्येवमपेक्षस्व मात्मना विस्मयं गमः ।
प्रभवश्च प्रभावश्च नात्मसंस्थः कदाचन ॥ ०२७ ॥

कौमारमेव ते चित्तं तथैवाद्य यथा पुरा ।
समवेक्षस्व मघवन्बुद्धिं विन्दस्व नैष्ठिकीम् ॥ ०२८ ॥

देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
आसन्सर्वे मम वशे तत्सर्वं वेत्थ वासव ॥ ०२९ ॥

नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः ।
इति मामभ्यपद्यन्त बुद्धिमात्सर्यमोहिताः ॥ ०३० ॥

नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।
एवं मे निश्चिता बुद्धिः शास्तुस्तिष्ठाम्यहं वशे ॥ ०३१ ॥

दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ ०३२ ॥

दौष्कुलेयस्तथा मूढो दुर्जातः शक्र दृश्यते ।
सुखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ ०३३ ॥

कल्याणी रूपसंपन्ना दुर्भगा शक्र दृश्यते ।
अलक्षणा विरूपा च सुभगा शक्र दृश्यते ॥ ०३४ ॥

नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्त्वमेवङ्गतो वज्रिन्यद्वाप्येवङ्गता वयम् ॥ ०३५ ॥

न कर्म तव नान्येषां कुतो मम शतक्रतो ।
ऋद्धिर्वाप्यथ वा नर्द्धिः पर्यायकृतमेव तत् ॥ ०३६ ॥

पश्यामि त्वा विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जन्तं च ममोपरि ॥ ०३७ ॥

एतच्चैवं न चेत्कालो मामाक्रम्य स्थितो भवेत् ।
पातयेयमहं त्वाद्य सवज्रमपि मुष्टिना ॥ ०३८ ॥

न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
कालः स्थापयते सर्वं कालः पचति वै तथा ॥ ०३९ ॥

मां चेदभ्यागतः कालो दानवेश्वरमूर्जितम् ।

गर्जन्तं प्रतपन्तं च कमन्यं नागमिष्यति ॥ ०४० ॥

द्वादशानां हि भवतामादित्यानां महात्मनाम् ।
तेजांस्येकेन सर्वेषां देवराज हृतानि मे ॥ ०४१ ॥

अहमेवोद्वहाम्यापो विसृजामि च वासव ।
तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ॥ ०४२ ॥

संरक्षामि विलुम्पामि ददाम्यहमथाददे ।
संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः ॥ ०४३ ॥

तदद्य विनिवृत्तं मे प्रभुत्वममराधिप ।
कालसैन्यावगाढस्य सर्वं न प्रतिभाति मे ॥ ०४४ ॥

नाहं कर्ता न चैव त्वं नान्यः कर्ता शचीपते ।
पर्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया ॥ ०४५ ॥

मासार्धमासवेश्मानमहोरात्राभिसंवृतम् ।
ऋतुद्वारं वर्षमुखमाहुर्वेदविदो जनाः ॥ ०४६ ॥

आहुः सर्वमिदं चिन्त्यं जनाः केचिन्मनीषया ।
अस्याः पञ्चैव चिन्तायाः पर्येष्यामि च पञ्चधा ॥ ०४७ ॥

गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा ।
अनादिनिधनं चाहुरक्षरं परमेव च ॥ ०४८ ॥

सत्त्वेषु लिङ्गमावेश्य नलिङ्गमपि तत्स्वयम् ।
मन्यन्ते ध्रुवमेवैनं ये नरास्तत्त्वदर्शिनः ॥ ०४९ ॥

भूतानां तु विपर्यासं मन्यते गतवानिति ।
न ह्येतावद्भवेद्गम्यं न यस्मात्प्रकृतेः परः ॥ ०५० ॥

गतिं हि सर्वभूतानामगत्वा क्व गमिष्यसि ।
यो धावता न हातव्यस्तिष्ठन्नपि न हीयते ॥ ०५१ ॥

तमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ॥ ०५१ ॥

आहुश्चैनं केचिदग्निं केचिदाहुः प्रजापतिम् ।
ऋतुमासार्धमासांश्च दिवसांस्तु क्षणांस्तथा ॥ ०५२ ॥

पूर्वाह्णमपराह्णं च मध्याह्नमपि चापरे ।
मुहूर्तमपि चैवाहुरेकं सन्तमनेकधा ॥ ०५३ ॥

तं कालमवजानीहि यस्य सर्वमिदं वशे ॥ ०५३ ॥

बहूनीन्द्रसहस्राणि समतीतानि वासव ।
बलवीर्योपपन्नानि यथैव त्वं शचीपते ॥ ०५४ ॥

त्वामप्यतिबलं शक्रं देवराजं बलोत्कटम् ।
प्राप्ते काले महावीर्यः कालः संशमयिष्यति ॥ ०५५ ॥

य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव ।
मया त्वया च पूर्वैश्च न स शक्योऽतिवर्तितुम् ॥ ०५६ ॥

यामेतां प्राप्य जानीषे राजश्रियमनुत्तमाम् ।
स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति ॥ ०५७ ॥

स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ ०५८ ॥

मैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि ।
त्वामप्येवङ्गतं त्यक्त्वा क्षिप्रमन्यं गमिष्यति ॥ ०५९ ॥

# अध्याय २१८

भीष्म उवाच ॥

शतक्रतुरथापश्यद्बलेर्दीप्तां महात्मनः ।
स्वरूपिणीं शरीराद्धि तदा निष्क्रामतीं श्रियम् ॥ ००१ ॥

तां दीप्तां प्रभया दृष्ट्वा भगवान्पाकशासनः ।
विस्मयोत्फुल्लनयनो बलिं पप्रच्छ वासवः ॥ ००२ ॥

बले केयमपक्रान्ता रोचमाना शिखण्डिनी ।
त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥ ००३ ॥

बलिरुवाच ॥

न हीमामासुरीं वेद्मि न दैवीं न च मानुषीम् ।
त्वमेवैनां पृच्छ मा वा यथेष्टं कुरु वासव ॥ ००४ ॥

शक्र उवाच ॥

का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी ।
अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ॥ ००५ ॥

का त्वं तिष्ठसि मायेव दीप्यमाना स्वतेजसा ।
हित्वा दैत्येश्वरं सुभ्रु तन्ममाचक्ष्व तत्त्वतः ॥ ००६ ॥

श्रीरुवाच ॥

न मा विरोचनो वेद न मा वैरोचनो बलिः ।
आहुर्मां दुःसहेत्येवं विधित्सेति च मां विदुः ॥ ००७ ॥

भूतिर्लक्ष्मीति मामाहुः श्रीरित्येवं च वासव ।
त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः ॥ ००८ ॥

शक्र उवाच ॥

किमिदं त्वं मम कृते उताहो बलिनः कृते ।
दुःसहे विजहास्येनं चिरसंवासिनी सती ॥ ००९ ॥

श्रीरुवाच ॥

न धाता न विधाता मां विदधाति कथञ्चन ।
कालस्तु शक्र पर्यायान्मैनं शक्रावमन्यथाः ॥ ०१० ॥

शक्र उवाच ॥

कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥ ०११ ॥

श्रीरुवाच ॥

सत्ये स्थितास्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥ ०१२ ॥

ब्रह्मण्योऽयं सदा भूत्वा सत्यवादी जितेन्द्रियः ।
अभ्यसूयद्ब्राह्मणान्वै उच्छिष्टश्चास्पृशद्घृतम् ॥ ०१३ ॥

यज्ञशीलः पुरा भूत्वा मामेव यजतेत्ययम् ।

प्रोवाच लोकान्मूढात्मा कालेनोपनिपीडितः ॥ ०१४ ॥

अपाकृता ततः शक्र त्वयि वत्स्यामि वासव ।
अप्रमत्तेन धार्यास्मि तपसा विक्रमेण च ॥ ०१५ ॥

शक्र उवाच ॥

अस्ति देवमनुष्येषु सर्वभूतेषु वा पुमान् ।
यस्त्वामेको विषहितुं शक्नुयात्कमलालये ॥ ०१६ ॥

श्रीरुवाच ॥

नैव देवो न गन्धर्वो नासुरो न च राक्षसः ।
यो मामेको विषहितुं शक्तः कश्चित्पुरंदर ॥ ०१७ ॥

शक्र उवाच ॥

तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे ।
तत्करिष्यामि ते वाक्यमृतं त्वं वक्तुमर्हसि ॥ ०१८ ॥

श्रीरुवाच ॥

स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् ।
विधिना वेददृष्टेन चतुर्धा विभजस्व माम् ॥ ०१९ ॥

शक्र उवाच ॥

अहं वै त्वा निधास्यामि यथाशक्ति यथाबलम् ।
न तु मेऽतिक्रमः स्याद्वै सदा लक्ष्मि तवान्तिके ॥ ०२० ॥

भूमिरेव मनुष्येषु धारणी भूतभाविनी ।

सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥ ०२१ ॥

श्रीरुवाच ॥

एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः ।
द्वितीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ ०२२ ॥

शक्र उवाच ॥

आप एव मनुष्येषु द्रवन्त्यः परिचारिकाः ।
तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुम् ॥ ०२३ ॥

श्रीरुवाच ॥

एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः ।
तृतीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ ०२४ ॥

शक्र उवाच ॥

यस्मिन्देवाश्च यज्ञाश्च यस्मिन्वेदाः प्रतिष्ठिताः ।
तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ ०२५ ॥

श्रीरुवाच ॥

एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः ।
चतुर्थं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ ०२६ ॥

शक्र उवाच ॥

ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः ।
ते ते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुम् ॥ ०२७ ॥

श्रीरुवाच ॥

एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः ।
एवं विनिहितां शक्र भूतेषु परिधत्स्व माम् ॥ ०२८ ॥

शक्र उवाच ॥

भूतानामिह वै यस्त्वा मया विनिहितां सतीम् ।
उपहन्यात्स मे द्विष्यात्तथा शृण्वन्तु मे वचः ॥ ०२९ ॥

भीष्म उवाच ॥

ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ।
यावत्पुरस्तात्प्रतपेत्तावद्वै दक्षिणां दिशम् ॥ ०३० ॥

पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ।
तथा मध्यंदिने सूर्यो अस्तमेति यदा तदा ॥ ०३१ ॥

पुनर्दैवासुरं युद्धं भावि जेतास्मि वस्तदा ॥ ०३१ ॥

सर्वा.ण्ल्लोकान्यदादित्य एकस्थस्तापयिष्यति ।
तदा देवासुरे युद्धे जेताहं त्वां शतक्रतो ॥ ०३२ ॥

शक्र उवाच ॥

ब्रह्मणास्मि समादिष्टो न हन्तव्यो भवानिति ।
तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्धनि ॥ ०३३ ॥

यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ।
आदित्यो नावतपिता कदाचिन्मध्यतः स्थितः ॥ ०३४ ॥

स्थापितो ह्यस्य समयः पूर्वमेव स्वयंभुवा ।
अजस्रं परियात्येष सत्येनावतपन्प्रजाः ॥ ०३५ ॥

अयनं तस्य षण्मासा उत्तरं दक्षिणं तथा ।
येन संयाति लोकेषु शीतोष्णे विसृजन्रविः ॥ ०३६ ॥

भीष्म उवाच ॥

एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।
जगाम दक्षिणामाशामुदीचीं तु पुरंदरः ॥ ०३७ ॥

इत्येतद्बलिना गीतमनहङ्कारसञ्ज्ञितम् ।
वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा ॥ ०३८ ॥

---

# शक्रनमुचिसंवादः

## अध्याय २१९

भीष्म उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ॥ ००१ ॥

श्रिया विहीनमासीनमक्षोभ्यमिव सागरम् ।
भवाभवज्ञं भूतानामित्युवाच पुरंदरः ॥ ००२ ॥

बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ॥ ००३ ॥

नमुचिरुवाच ॥

अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति नास्ति शोके सहायता ॥ ००४ ॥

तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ।
संतापाद्भ्रश्यते रूपं धर्मश्चैव सुरेश्वर ॥ ००५ ॥

विनीय खलु तद्दुःखमागतं वैमनस्यजम् ।
ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता ॥ ००६ ॥

यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तदैवास्य प्रसीदन्ति सर्वार्था नात्र संशयः ॥ ००७ ॥

एकः शास्ता न द्वितीयोऽस्ति शास्ता ; गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवोदकं ; यथा नियुक्तोऽस्मि तथा वहामि ॥ ००८ ॥

भावाभावावभिजानन्गरीयो ; जानामि श्रेयो न तु तत्करोमि ।
आशाः सुशर्म्याः सुहृदां सुकुर्व ;न्यथा नियुक्तोऽस्मि तथा वहामि ॥ ००९ ॥

यथा यथास्य प्राप्तव्यं प्राप्नोत्येव तथा तथा ।
भवितव्यं यथा यच्च भवत्येव तथा तथा ॥ ०१० ॥

यत्र यत्रैव संयुङ्क्ते धाता गर्भं पुनः पुनः ।
तत्र तत्रैव वसति न यत्र स्वयमिच्छति ॥ ०११ ॥

भावो योऽयमनुप्राप्तो भवितव्यमिदं मम ।
इति यस्य सदा भावो न स मुह्येत्कदाचन ॥ ०१२ ॥

पर्यायैर्हन्यमानानामभियोक्ता न विद्यते ।

दुःखमेतत्तु यद्द्वेष्टा कर्ताहमिति मन्यते ॥ ०१३ ॥

ऋषींश्च देवांश्च महासुरांश्च; त्रैविद्यवृद्धांश्च वने मुनींश्च ।
कान्नापदो नोपनमन्ति लोके; परावरज्ञास्तु न संभ्रमन्ति ॥ ०१४ ॥

न पण्डितः क्रुध्यति नापि सज्जते; न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचति; स्थितः प्रकृत्या हिमवानिवाचलः ॥ ०१५ ॥

यमर्थसिद्धिः परमा न हर्षये ;त्तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं; निषेवते यः स धुरंधरो नरः ॥ ०१६ ॥

यां यामवस्थां पुरुषोऽधिगच्छे ;त्तस्यां रमेतापरितप्यमानः ।
एवं प्रवृद्धं प्रणुदेन्मनोजं; संतापमायासकरं शरीरात् ॥ ०१७ ॥

तत्सदः स परिषत्सभासदः ; प्राप्य यो न कुरुते सभाभयम् ।
धर्मतत्त्वमवगाह्य बुद्धिमा ;न्योऽभ्युपैति स पुमान्धुरंधरः ॥ ०१८ ॥

प्राज्ञस्य कर्माणि दुरन्वयानि; न वै प्राज्ञो मुह्यति मोहकाले ।
स्थानाच्च्युतश्चेन्न मुमोह गौतम ;स्तावत्कृच्छ्रामापदं प्राप्य वृद्धः ॥ ०१९ ॥

न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण वा ।
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ ०२० ॥

यदेवमनुजातस्य धातारो विदधुः पुरा ।
तदेवानुभविष्यामि किं मे मृत्युः करिष्यति ॥ ०२१ ॥

लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ०२२ ॥

एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः ।
कुशलः सुखदुःखेषु स वै सर्वधनेश्वरः ॥ ०२३ ॥

# बलिवासवसंवादः

## अध्याय २२०

युधिष्ठिर उवाच ॥

मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि ।
बन्धुनाशे महीपाल राज्यनाशेऽपि वा पुनः ॥ ००१ ॥

त्वं हि नः परमो वक्ता लोकेऽस्मिन्भरतर्षभ ।
एतद्भवन्तं पृच्छामि तन्मे वक्तुमिहार्हसि ॥ ००२ ॥

भीष्म उवाच ॥

पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन च ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ॥ ००३ ॥

धैर्येण युक्तस्य सतः शरीरं न विशीर्यते ।
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ००४ ॥

यस्य राज्ञो नरास्तात सात्त्विकीं वृत्तिमास्थिताः ।
तस्य स्थैर्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ ००५ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
बलिवासवसंवादं पुनरेव युधिष्ठिर ॥ ००६ ॥

वृत्ते देवासुरे युद्धे दैत्यदानवसङ्क्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ ००७ ॥

इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते ।
समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयंभुवि ॥ ००८ ॥

रुद्रैर्वसुभिरादित्यैरश्विभ्यामपि चर्षिभिः ।
गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः ॥ ००९ ॥

चतुर्दन्तं सुदान्तं च वारणेन्द्रं श्रिया वृतम् ।
आरुह्यैरावतं शक्रस्त्रैलोक्यमनुसंययौ ॥ ०१० ॥

स कदाचित्समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ ०११ ॥

तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥ ०१२ ॥

दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः ॥ ०१३ ॥

दैत्य न व्यथसे शौर्यादथ वा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत्सुदुष्करम् ॥ ०१४ ॥

शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ ०१५ ॥

श्रैष्ठ्यं प्राप्य स्वजातीनां भुक्त्वा भोगाननुत्तमान् ।
हृतस्वबलराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ ०१६ ॥

ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।

तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ ०१७ ॥

बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ ०१८ ॥

भ्रष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् ॥ ०१९ ॥

एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा सुखमसंभ्रान्तो बलिर्वैरोचनोऽब्रवीत् ॥ ०२० ॥

निगृहीते मयि भृशं शक्र किं कत्थितेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरंदर ॥ ०२१ ॥

अशक्तः पूर्वमासीस्त्वं कथञ्चिच्छक्ततां गतः ।
कस्त्वदन्य इमा वाचः सुक्रूरा वक्तुमर्हति ॥ ०२२ ॥

यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् ।
हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥ ०२३ ॥

अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयमेकश्चैव पराभवम् ॥ ०२४ ॥

मा च ते भूत्स्वभावोऽयं मया दैवतपुङ्गव ।
ईश्वरः सर्वभूतानां विक्रमेण जितो बलात् ॥ ०२५ ॥

नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्त्वमेवङ्गतो वज्रिन्यद्वाप्येवङ्गता वयम् ॥ ०२६ ॥

अहमासं यथाद्य त्वं भविता त्वं यथा वयम् ।
मावमंस्था मया कर्म दुष्कृतं कृतमित्युत ॥ ०२७ ॥

सुखदुःखे हि पुरुषः पर्यायेणाधिगच्छति ।
पर्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्मणा ॥ ०२८ ॥

कालः काले नयति मां त्वां च कालो नयत्ययम् ।
तेनाहं त्वं यथा नाद्य त्वं चापि न यथा वयम् ॥ ०२९ ॥

न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ ०३० ॥

न विद्या न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ०३१ ॥

नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ॥ ०३२ ॥

पर्यायैर्हन्यमानानां परित्राता न विद्यते ।
इदं तु दुःखं यच्छक्र कर्ताहमिति मन्यते ॥ ०३३ ॥

यदि कर्ता भवेत्कर्ता न क्रियेत कदाचन ।
यस्मात्तु क्रियते कर्ता तस्मात्कर्ताप्यनीश्वरः ॥ ०३४ ॥

कालेन त्वाहमजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ ०३५ ॥

इन्द्र प्राकृतया बुद्ध्या प्रलपन्नावबुध्यसे ।
केचित्त्वां बहु मन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्मणा ॥ ०३६ ॥

कथमस्मद्विधो नाम जान.ण्लोकप्रवृत्तयः ।
कालेनाभ्याहतः शोचेन्मुह्येद्वाप्यर्थसंभ्रमे ॥ ०३७ ॥

नित्यं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥ ०३८ ॥

अहं च त्वं च ये चान्ये भविष्यन्ति सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ ०३९ ॥

त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।
काले परिणते कालः कालयिष्यति मामिव ॥ ०४० ॥

बहूनीन्द्रसहस्राणि दैतेयानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ ०४१ ॥

इदं तु लब्ध्वा त्वं स्थानमात्मानं बहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ०४२ ॥

न चेदमचलं स्थानमनन्तं वापि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ०४३ ॥

अविश्वास्ये विश्वसिषि मन्यसे चाध्रुवं ध्रुवम् ।
ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि ॥ ०४४ ॥

नेयं तव न चास्माकं न चान्येषां स्थिरा मता ।
अतिक्रम्य बहूनन्यांस्त्वयि तावदियं स्थिता ॥ ०४५ ॥

कञ्चित्कालमियं स्थित्वा त्वयि वासव चञ्चला ।
गौर्निपानमिवोत्सृज्य पुनरन्यं गमिष्यति ॥ ०४६ ॥

राजलोका ह्यतिक्रान्ता यान्न संख्यातुमुत्सहे ।
त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरंदर ॥ ०४७ ॥

सवृक्षौषधिरत्नेयं ससरित्पर्वताकरा ।

तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥ ०४८ ॥

पृथुरैलो मयो भौमो नरकः शम्बरस्तथा ।
अश्वग्रीवः पुलोमा च स्वर्भानुरमितध्वजः ॥ ०४९ ॥

प्रह्रादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः ।
ह्रीनिषेधः सुहोत्रश्च भूरिहा पुष्पवान्वृषः ॥ ०५० ॥

सत्येषुर्ऋषभो राहुः कपिलाश्वो विरूपकः ।
बाणः कार्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैरृतः ॥ ०५१ ॥

रित्थाहुत्थौ वीरताम्रौ वराहाश्वो रुचिः प्रभुः ।
विश्वजित्प्रतिशौरिश्च वृषाण्डो विष्करो मधुः ॥ ०५२ ॥

हिरण्यकशिपुश्चैव कैटभश्चैव दानवः ।
दैत्याश्च कालखञ्जाश्च सर्वे ते नैरृतैः सह ॥ ०५३ ॥

एते चान्ये च बहवः पूर्वे पूर्वतराश्च ये ।
दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुम ॥ ०५४ ॥

बहवः पूर्वदैत्येन्द्राः संत्यज्य पृथिवीं गताः ।
कालेनाभ्याहताः सर्वे कालो हि बलवत्तरः ॥ ०५५ ॥

सर्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः ।
सर्वे धर्मपराश्चासन्सर्वे सततसत्रिणः ॥ ०५६ ॥

अन्तरिक्षचराः सर्वे सर्वेऽभिमुखयोधिनः ।
सर्वे संहननोपेताः सर्वे परिघबाहवः ॥ ०५७ ॥

सर्वे मायाशतधराः सर्वे ते कामचारिणः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ ०५८ ॥

सर्वे सत्यव्रतपराः सर्वे कामविहारिणः ।
सर्वे वेदव्रतपराः सर्वे चासन्बहुश्रुताः ॥ ०५९ ॥

सर्वे संहतमैश्वर्यमीश्वराः प्रतिपेदिरे ।
न चैश्वर्यमदस्तेषां भूतपूर्वो महात्मनाम् ॥ ०६० ॥

सर्वे यथार्थदातारः सर्वे विगतमत्सराः ।
सर्वे सर्वेषु भूतेषु यथावत्प्रतिपेदिरे ॥ ०६१ ॥

सर्वे दाक्षायणीपुत्राः प्राजापत्या महाबलाः ।
ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहृताः ॥ ०६२ ॥

त्वं चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः ।
न शक्ष्यसि तदा शक्र नियन्तुं शोकमात्मनः ॥ ०६३ ॥

मुञ्चेच्छां कामभोगेषु मुञ्चेमं श्रीभवं मदम् ।
एवं स्वराज्यनाशे त्वं शोकं संप्रसहिष्यसि ॥ ०६४ ॥

शोककाले शुचो मा त्वं हर्षकाले च मा हृषः ।
अतीतानागते हित्वा प्रत्युत्पन्नेन वर्तय ॥ ०६५ ॥

मां चेदभ्यागतः कालः सदायुक्तमतन्द्रितम् ।
क्षमस्व नचिरादिन्द्र त्वामप्युपगमिष्यति ॥ ०६६ ॥

त्रासयन्निव देवेन्द्र वाग्भिस्तक्षसि मामिह ।
संयते मयि नूनं त्वमात्मानं बहु मन्यसे ॥ ०६७ ॥

कालः प्रथममायान्मां पश्चात्त्वामनुधावति ।
तेन गर्जसि देवेन्द्र पूर्वं कालहते मयि ॥ ०६८ ॥

को हि स्थातुमलं लोके क्रुद्धस्य मम संयुगे ।
कालस्तु बलवान्प्राप्तस्तेन तिष्ठसि वासव ॥ ०६९ ॥

यत्तद्वर्षसहस्रान्तं पूर्णं भवितुमर्हति ।
यथा मे सर्वगात्राणि नस्वस्थानि हतौजसः ॥ ०७० ॥

अहमैन्द्राच्च्युतः स्थानात्त्वमिन्द्रः प्रकृतो दिवि ।
सुचित्रे जीवलोकेऽस्मिन्नुपास्यः कालपर्ययात् ॥ ०७१ ॥

किं हि कृत्वा त्वमिन्द्रोऽद्य किं हि कृत्वा च्युता वयम् ।
कालः कर्ता विकर्ता च सर्वमन्यदकारणम् ॥ ०७२ ॥

नाशं विनाशमैश्वर्यं सुखदुःखे भवाभवौ ।
विद्वान्प्राप्यैवमत्यर्थं न प्रहृष्येन्न च व्यथेत् ॥ ०७३ ॥

त्वमेव हीन्द्र वेत्थास्मान्वेदाहं त्वां च वासव ।
विकत्थसे मां किं बद्धं कालेन निरपत्रप ॥ ०७४ ॥

त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम ।
समरेषु च विक्रान्तं पर्याप्तं तन्निदर्शनम् ॥ ०७५ ॥

आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिः सह ।
मया विनिर्जिताः सर्वे मरुतश्च शचीपते ॥ ०७६ ॥

त्वमेव शक्र जानासि देवासुरसमागमे ।
समेता विबुधा भग्नास्तरसा समरे मया ॥ ०७७ ॥

पर्वताश्चासकृत्क्षिप्ताः सवनाः सवनौकसः ।
सटङ्कशिखरा घोराः समरे मूर्ध्नि ते मया ॥ ०७८ ॥

किं नु शक्यं मया कर्तुं यत्कालो दुरतिक्रमः ।

न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना ॥ ०७९ ॥

न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
तेन त्वा मर्षये शक्र दुर्मर्षणतरस्त्वया ॥ ०८० ॥

त्वं मा परिणते काले परीतं कालवह्निना ।
नियतं कालपाशेन बद्धं शक्र विकत्थसे ॥ ०८१ ॥

अयं स पुरुषः श्यामो लोकस्य दुरतिक्रमः ।
बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा ॥ ०८२ ॥

लाभालाभौ सुखं दुःखं कामक्रोधौ भवाभवौ ।
वधो बन्धः प्रमोक्षश्च सर्वं कालेन लभ्यते ॥ ०८३ ॥

नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः ।
सोऽयं पचति कालो मां वृक्षे फलमिवागतम् ॥ ०८४ ॥

यान्येव पुरुषः कुर्वन्सुखैः कालेन युज्यते ।
पुनस्तान्येव कुर्वाणो दुःखैः कालेन युज्यते ॥ ०८५ ॥

न च कालेन कालज्ञः स्पृष्टः शोचितुमर्हति ।
तेन शक्र न शोचामि नास्ति शोके सहायता ॥ ०८६ ॥

यदा हि शोचतां शोको व्यसनं नापकर्षति ।
सामर्थ्यं शोचतो नास्ति नाद्य शोचाम्यहं ततः ॥ ०८७ ॥

एवमुक्तः सहस्राक्षो भगवान्पाकशासनः ।
प्रतिसंहृत्य संरम्भमित्युवाच शतक्रतुः ॥ ०८८ ॥

सवज्रमुद्यतं बाहुं दृष्ट्वा पाशांश्च वारुणान् ।
कस्येह न व्यथेद्बुद्धिर्मृत्योरपि जिघांसतः ॥ ०८९ ॥

सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ।
ब्रुवन्न व्यथसे स त्वं वाक्यं सत्यपराक्रम ॥ ०९० ॥

हो हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ।
कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत् ॥ ०९१ ॥

अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ।
कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे ॥ ०९२ ॥

न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्यचित् ।
सूक्ष्माणां महतां चैव भूतानां परिपच्यताम् ॥ ०९३ ॥

अनीशस्याप्रमत्तस्य भूतानि पचतः सदा ।
अनिवृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ ०९४ ॥

अप्रमत्तः प्रमत्तेषु कालो जागर्ति देहिषु ।
प्रयत्नेनाप्यतिक्रान्तो दृष्टपूर्वो न केनचित् ॥ ०९५ ॥

पुराणः शाश्वतो धर्मः सर्वप्राणभृतां समः ।
कालो न परिहार्यश्च न चास्यास्ति व्यतिक्रमः ॥ ०९६ ॥

अहोरात्रांश्च मासांश्च क्षणान्काष्ठाः कला लवान् ।
संपिण्डयति नः कालो वृद्धिं वार्धुषिको यथा ॥ ०९७ ॥

इदमद्य करिष्यामि श्वः कर्तास्मीति वादिनम् ।
कालो हरति संप्राप्तो नदीवेग इवोडुपम् ॥ ०९८ ॥

इदानीं तावदेवासौ मया दृष्टः कथं मृतः ।
इति कालेन ह्रियतां प्रलापः श्रूयते नृणाम् ॥ ०९९ ॥

नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्यमेव च ।
अनित्यमध्रुवं सर्वं व्यवसायो हि दुष्करः ॥ १०० ॥

उच्छ्राया विनिपातान्ता भावोऽभावस्थ एव च ॥ १०० ॥

सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ।
अहमासं पुरा चेति मनसापि न बुध्यसे ॥ १०१ ॥

कालेनाक्रम्य लोकेऽस्मिन्पच्यमाने बलीयसा ।
अज्येष्ठमकनिष्ठं च क्षिप्यमाणो न बुध्यसे ॥ १०२ ॥

ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च ।
स्पृहामोहाभिमानेषु लोकः सक्तो विमुह्यति ॥ १०३ ॥

भवांस्तु भावतत्त्वज्ञो विद्वाञ्ज्ञानतपोन्वितः ।
कालं पश्यति सुव्यक्तं पाणावामलकं यथा ॥ १०४ ॥

कालचारित्रतत्त्वज्ञः सर्वशास्त्रविशारदः ।
वैरोचने कृतात्मासि स्पृहणीयो विजानताम् ॥ १०५ ॥

सर्वलोको ह्ययं मन्ये बुद्ध्या परिगतस्त्वया ।
विहरन्सर्वतोमुक्तो न क्वचित्परिषज्जसे ॥ १०६ ॥

रजश्च हि तमश्च त्वा स्पृशतो न जितेन्द्रियम् ।
निष्प्रीतिं नष्टसंतापं त्वमात्मानमुपाससे ॥ १०७ ॥

सुहृदं सर्वभूतानां निर्वैरं शान्तमानसम् ।
दृष्ट्वा त्वां मम सञ्जाता त्वय्यनुक्रोशिनी मतिः ॥ १०८ ॥

नाहमेतादृशं बुद्धं हन्तुमिच्छामि बन्धने ।
आनृशंस्यं परो धर्मो अनुक्रोशस्तथा त्वयि ॥ १०९ ॥

मोक्ष्यन्ते वारुणाः पाशास्तवेमे कालपर्ययात् ।
प्रजानामपचारेण स्वस्ति तेऽस्तु महासुर ॥ ११० ॥

यदा श्वश्रूं स्नुषा वृद्धां परिचारेण योक्ष्यते ।
पुत्रश्च पितरं मोहात्प्रेषयिष्यति कर्मसु ॥ १११ ॥

ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् ।
शूद्राश्च ब्राह्मणीं भार्यामुपयास्यन्ति निर्भयाः ॥ ११२ ॥

वियोनिषु च बीजानि मोक्ष्यन्ते पुरुषा यदा ।
सङ्करं कांस्यभाण्डैश्च बलिं चापि कुपात्रकैः ॥ ११३ ॥

चातुर्वर्ण्यं यदा कृत्स्नमुन्मर्यादं भविष्यति ।
एकैकस्ते तदा पाशः क्रमशः प्रतिमोक्ष्यते ॥ ११४ ॥

अस्मत्तस्ते भयं नास्ति समयं प्रतिपालय ।
सुखी भव निराबाधः स्वस्थचेता निरामयः ॥ ११५ ॥

तमेवमुक्त्वा भगवाञ्शतक्रतुः ; प्रतिप्रयातो गजराजवाहनः ।
विजित्य सर्वानसुरान्सुराधिपो ; ननन्द हर्षेण बभूव चैकराट् ॥ ११६ ॥

महर्षयस्तुष्टुवुरञ्जसा च तं ; वृषाकपिं सर्वचराचरेश्वरम् ।
हिमापहो हव्यमुदावहंस्त्वरं ;स्तथामृतं चार्पितमीश्वराय ह ॥ ११७ ॥

द्विजोत्तमैः सर्वगतैरभिष्टुतो ; विदीप्ततेजा गतमन्युरीश्वरः ।
प्रशान्तचेता मुदितः स्वमालयं ; त्रिविष्टपं प्राप्य मुमोद वासवः ॥ ११८ ॥

# श्रीवासवसंवादः

## अध्याय २२१

युधिष्ठिर उवाच ॥

पूर्वरूपाणि मे राजन्पुरुषस्य भविष्यतः ।
पराभविष्यतश्चैव त्वं मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव नभविष्यतः ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर ॥ ००३ ॥

महतस्तपसो व्युष्ट्या पश्य.ण्ल्लोकौ परावरौ ।
सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ॥ ००४ ॥

ब्रह्मैवामितदीप्तौजाः शान्तपाप्मा महातपाः ।
विचचार यथाकामं त्रिषु लोकेषु नारदः ॥ ००५ ॥

कदाचित्प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि ।
ध्रुवद्वारभवां गङ्गां जगामावततार च ॥ ००६ ॥

सहस्रनयनश्चापि वज्री शम्बरपाकहा ।
तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह ॥ ००७ ॥

तावाप्लुत्य यतात्मानौ कृतजप्यौ समासतुः ।
नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकम् ॥ ००८ ॥

पुण्यकर्मभिराख्याता देवर्षिकथिताः कथाः ।
चक्रतुस्तौ कथाशीलौ शुचिसंहृष्टमानसौ ॥ ००९ ॥

पूर्ववृत्तव्यपेतानि कथयन्तौ समाहितौ ॥ ००९ ॥

अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतम् ।
पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः ॥ ०१० ॥

अभितस्तूदयन्तं तमर्कमर्कमिवापरम् ।
आकाशे ददृशे ज्योतिरुद्यतार्चिःसमप्रभम् ॥ ०११ ॥

तयोः समीपं संप्राप्तं प्रत्यदृश्यत भारत ।
तत्सुपर्णार्कचरितमास्थितं वैष्णवं पदम् ॥ ०१२ ॥

भाभिरप्रतिमं भाति त्रैलोक्यमवभासयत् ॥ ०१२ ॥

दिव्याभिरूपशोभाभिरप्सरोभिः पुरस्कृताम् ।
बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषम् ॥ ०१३ ॥

नक्षत्रकल्पाभरणां ताराभक्तिसमस्त्रजम् ।
श्रियं ददृशतुः पद्मां साक्षात्पद्मतलस्थिताम् ॥ ०१४ ॥

सावरुह्य विमानाग्रादङ्गनानामनुत्तमा ।
अभ्यगच्छत्त्रिलोकेशं शक्रं चर्षिं च नारदम् ॥ ०१५ ॥

नारदानुगतः साक्षान्मघवांस्तामुपागमत् ।
कृताञ्जलिपुटो देवीं निवेद्यात्मानमात्मना ॥ ०१६ ॥

चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित् ।
देवराजः श्रियं राजन्वाक्यं चेदमुवाच ह ॥ ०१७ ॥

का त्वं केन च कार्येण संप्राप्ता चारुहासिनि ।
कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ॥ ०१८ ॥

श्रीरुवाच ॥

पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः ।
ममात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ ०१९ ॥

साहं वै पङ्कजे जाता सूर्यरश्मिविबोधिते ।
भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ ०२० ॥

अहं लक्ष्मीरहं भूतिः श्रीश्चाहं बलसूदन ।
अहं श्रद्धा च मेधा च सन्नतिर्विजितिः स्थितिः ॥ ०२१ ॥

अहं धृतिरहं सिद्धिरहं त्विड्भूतिरेव च ।
अहं स्वाहा स्वधा चैव संस्तुतिर्नियतिः कृतिः ॥ ०२२ ॥

राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु च ।
निवासे धर्मशीलानां विषयेषु पुरेषु च ॥ ०२३ ॥

जितकाशिनि शूरे च सङ्ग्रामेष्वनिवर्तिनि ।
निवसामि मनुष्येन्द्रे सदैव बलसूदन ॥ ०२४ ॥

धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ ०२५ ॥

असुरेष्ववसं पूर्वं सत्यधर्मनिबन्धना ।
विपरीतांस्तु तान्बुद्ध्वा त्वयि वासमरोचयम् ॥ ०२६ ॥

शक्र उवाच ॥

कथंवृत्तेषु दैत्येषु त्वमवात्सीर्वरानने ।
दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान्  ॥ ०२७  ॥

श्रीरुवाच  ॥

स्वधर्ममनुतिष्ठत्सु धैर्यादचलितेषु च ।
स्वर्गमार्गाभिरामेषु सत्त्वेषु निरता ह्यहम्  ॥ ०२८  ॥

दानाध्ययनयज्ञेज्या गुरुदैवतपूजनम् ।
विप्राणामतिथीनां च तेषां नित्यमवर्तत  ॥ ०२९  ॥

सुसंमृष्टगृहाश्चासञ्जितस्त्रीका हुताग्नयः ।
गुरुशुश्रूषवो दान्ता ब्रह्मण्याः सत्यवादिनः  ॥ ०३०  ॥

श्रद्दधाना जितक्रोधा दानशीलानसूयकाः ।
भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः  ॥ ०३१  ॥

अमर्षणा न चान्योन्यं स्पृहयन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः  ॥ ०३२  ॥

दातारः सङ्गृहीतार आर्याः करुणवेदिनः ।
महाप्रसादा ऋजवो दृढभक्ता जितेन्द्रियाः  ॥ ०३३  ॥

संतुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः ।
यथार्थमानार्थकरा ह्रीनिषेधा यतव्रताः  ॥ ०३४  ॥

नित्यं पर्वसु सुस्नाताः स्वनुलिप्ताः स्वलङ्कृताः ।
उपवासतपःशीलाः प्रतीता ब्रह्मवादिनः  ॥ ०३५  ॥

नैनानभ्युदियात्सूर्यो न चाप्यासन्प्रगेनिशाः ।

रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्जयन् ॥ ०३६ ॥

काल्यं घृतं चान्ववेक्षन्प्रयता ब्रह्मचारिणः ।
मङ्गलानपि चापश्यन्ब्राह्मणांश्चाप्यपूजयन् ॥ ०३७ ॥

सदा हि ददतां धर्मः सदा चाप्रतिगृह्णताम् ।
अर्धं च रात्र्याः स्वपतां दिवा चास्वपतां तथा ॥ ०३८ ॥

कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
दायं च संविभागं च नित्यमेवानुमोदताम् ॥ ०३९ ॥

विषण्णं त्रस्तमुद्विग्नं भयार्तं व्याधिपीडितम् ।
हृतस्वं व्यसनार्तं च नित्यमाश्वासयन्ति ते ॥ ०४० ॥

धर्ममेवान्ववर्तन्त न हिंसन्ति परस्परम् ।
अनुकूलाश्च कार्येषु गुरुवृद्धोपसेविनः ॥ ०४१ ॥

पितृदेवातिथींश्चैव यथावत्तेऽभ्यपूजयन् ।
अवशेषाणि चाश्नन्ति नित्यं सत्यतपोरताः ॥ ०४२ ॥

नैकेऽश्नन्ति सुसंपन्नं न गच्छन्ति परस्त्रियम् ।
सर्वभूतेष्ववर्तन्त यथात्मनि दयां प्रति ॥ ०४३ ॥

नैवाकाशे न पशुषु नायोनौ न च पर्वसु ।
इन्द्रियस्य विसर्गं तेऽरोचयन्त कदाचन ॥ ०४४ ॥

नित्यं दानं तथा दाक्ष्यमार्जवं चैव नित्यदा ।
उत्साहश्चानहङ्कारः परमं सौहृदं क्षमा ॥ ०४५ ॥

सत्यं दानं तपः शौचं कारुण्यं वागनिष्ठुरा ।
मित्रेषु चानभिद्रोहः सर्वं तेष्वभवत्प्रभो ॥ ०४६ ॥

निद्रा तन्द्रीरसंप्रीतिरसूया चानवेक्षिता ।
अरतिश्च विषादश्च न स्पृहा चाविशन्त तान्  ॥ ०४७  ॥

साहमेवङ्गुणेष्वेव दानवेष्ववसं पुरा ।
प्रजासर्गमुपादाय नैकं युगविपर्ययम्  ॥ ०४८  ॥

ततः कालविपर्यासे तेषां गुणविपर्ययात् ।
अपश्यं विगतं धर्मं कामक्रोधवशात्मनाम्  ॥ ०४९  ॥

सभासदां ते वृद्धानां सत्याः कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्ववृद्धान्गुणावराः  ॥ ०५०  ॥

यूनः सहसमासीनान्वृद्धानभिगतान्सतः ।
नाभ्युत्थानाभिवादाभ्यां यथापूर्वमपूजयन्  ॥ ०५१  ॥

वर्तयन्त्येव पितरि पुत्राः प्रभवताऽऽत्मनः ।
अमित्रभृत्यतां प्राप्य ख्यापयन्तोऽनपत्रपाः  ॥ ०५२  ॥

तथा धर्मादपेतेन कर्मणा गर्हितेन ये ।
महतः प्राप्नुवन्त्यर्थांस्तेष्वेषामभवत्स्पृहा  ॥ ०५३  ॥

उच्चैश्चाप्यवदन्रात्रौ नीचैस्तत्राग्निरज्वलत् ।
पुत्राः पितॄनभ्यवदन्भार्याश्चाभ्यवदन्पतीन्  ॥ ०५४  ॥

मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
गुरुवन्नाभ्यनन्दन्त कुमारान्नान्वपालयन्  ॥ ०५५  ॥

भिक्षां बलिमदत्त्वा च स्वयमन्नानि भुञ्जते ।
अनिष्ट्वा संविभज्याथ पितृदेवातिथीन्गुरून्  ॥ ०५६  ॥

न शौचमनुरुध्यन्त तेषां सूद्जनास्तथा ।
मनसा कर्मणा वाचा भक्तमासीद्नावृतम्  ॥ ०५७  ॥

विप्रकीर्णानि धान्यानि काकमूषकभोजनम् ।
अपावृतं पयोऽतिष्ठदुच्छिष्टाश्चास्पृशन्घृतम्  ॥ ०५८  ॥

कुद्दालपाटीपिटकं प्रकीर्णं कांस्यभाजनम् ।
द्रव्योपकरणं सर्वं नान्ववैक्षत्कुटुम्बिनी  ॥ ०५९  ॥

प्राकारागारविध्वंसान्न स्म ते प्रतिकुर्वते ।
नाद्रियन्ते पशून्बद्धा यवसेनोदकेन च  ॥ ०६०  ॥

बालानां प्रेक्षमाणानां स्वयं भक्षानभक्षयन् ।
तथा भृत्यजनं सर्वं पर्यश्नन्ति च दानवाः  ॥ ०६१  ॥

पायसं कृसरं मांसमपूपानथ शष्कुलीः ।
अपाचयन्नात्मनोऽर्थे वृथामांसान्यभक्षयन्  ॥ ०६२  ॥

उत्सूर्यशायिनश्चासन्सर्वे चासन्प्रगेनिशाः ।
अवर्तन्कलहाश्चात्र दिवारात्रं गृहे गृहे  ॥ ०६३  ॥

अनार्याश्चार्यमासीनं पर्युपासन्न तत्र ह ।
आश्रमस्थान्विकर्मस्थाः प्रद्विषन्ति परस्परम्  ॥ ०६४  ॥

सङ्कराश्चाप्यवर्तन्त न च शौचमवर्तत  ॥ ०६४  ॥

ये च वेदविदो विप्रा विस्पष्टमनृचश्च ये ।
निरन्तरविशेषास्ते बहुमानावमानयोः  ॥ ०६५  ॥

हावमाभरणं वेषं गतिं स्थितिमवेक्षितुम् ।
असेवन्त भुजिष्या वै दुर्जनाचरितं विधिम्  ॥ ०६६  ॥

स्त्रियः पुरुषवेषेण पुंसः स्त्रीवेषधारिणः ।
क्रीडारतिविहारेषु परां मुदमवाप्नुवन् ॥ ०६७ ॥

प्रभवद्भिः पुरा दायानर्हेभ्यः प्रतिपादितान् ।
नाभ्यवर्तन्त नास्तिक्याद्वर्तन्तः संभवेष्वपि ॥ ०६८ ॥

मित्रेणाभ्यर्थितं मित्रमर्थे संशयिते क्वचित् ।
वालकोट्यग्रमात्रेण स्वार्थेनाघ्नत तद्वसु ॥ ०६९ ॥

परस्वादानरुचयो विपण्यव्यवहारिणः ।
अदृश्यन्तार्यवर्णेषु शूद्राश्चापि तपोधनाः ॥ ०७० ॥

अधीयन्तेऽव्रताः केचिद्वृथाव्रतमथापरे ।
अशुश्रूषुर्गुरोः शिष्यः कश्चिच्छिष्यसखो गुरुः ॥ ०७१ ॥

पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव ।
अप्रभुत्वे स्थितौ वृद्धावन्नं प्रार्थयतः सुतान् ॥ ०७२ ॥

तत्र वेदविदः प्राज्ञा गाम्भीर्ये सागरोपमाः ।
कृष्यादिष्वभवन्सक्ता मूर्खाः श्राद्धान्यभुञ्जत ॥ ०७३ ॥

प्रातः प्रातश्च सुप्रश्नं कल्पनं प्रेषणक्रियाः ।
शिष्यानुप्रहितास्तस्मिन्नकुर्वन्गुरवश्च ह ॥ ०७४ ॥

श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत ।
अन्वशासच्च भर्तारं समाहूयाभिजल्पती ॥ ०७५ ॥

प्रयत्नेनापि चारक्षच्चित्तं पुत्रस्य वै पिता ।
व्यभजंश्चापि संरम्भाद्दुःखवासं तथावसन् ॥ ०७६ ॥

अग्निदाहेन चोरैर्वा राजभिर्वा हृतं धनम् ।
दृष्ट्वा द्वेषात्प्राहसन्त सुहृत्संभाविता ह्यपि ॥ ०७७ ॥

कृतघ्ना नास्तिकाः पापा गुरुदाराभिमर्शिनः ।
अभक्ष्यभक्षणरता निर्मर्यादा हतत्विषः ॥ ०७८ ॥

तेष्वेवमादीनाचारानाचरत्सु विपर्यये ।
नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥ ०७९ ॥

तां मां स्वयमनुप्राप्तामभिनन्द शचीपते ।
त्वयार्चितां मां देवेश पुरोधास्यन्ति देवताः ॥ ०८० ॥

यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः ।
सप्त देव्यो मयाष्टम्यो वासं चेष्यन्ति मेऽष्टधा ॥ ०८१ ॥

आशा श्रद्धा धृतिः कान्तिर्विजितिः सन्नतिः क्षमा ।
अष्टमी वृत्तिरेतासां पुरोगा पाकशासन ॥ ०८२ ॥

ताश्चाहं चासुरांस्त्यक्त्वा युष्मद्विषयमागता ।
त्रिदशेषु निवत्स्यामो धर्मनिष्ठान्तरात्मसु ॥ ०८३ ॥

भीष्म उवाच ॥

इत्युक्तवचनां देवीमत्यर्थं तौ ननन्दतुः ।
नारदश्च त्रिलोकर्षिर्वृत्रहन्ता च वासवः ॥ ०८४ ॥

ततोऽनलसखो वायुः प्रववौ देववेश्मसु ।
इष्टगन्धः सुखस्पर्शः सर्वेन्द्रियसुखावहः ॥ ०८५ ॥

शुचौ चाभ्यर्चिते देशे त्रिदशाः प्रायशः स्थिताः ।
लक्ष्म्या सहितमासीनं मघवन्तं दिदृक्षवः ॥ ०८६ ॥

ततो दिवं प्राप्य सहस्रलोचनः ; श्रियोपपन्नः सुहृदा सुरर्षिणा ।
रथेन हर्यश्वयुजा सुरर्षभः ; सदः सुराणामभिसत्कृतो ययौ ॥ ०८७ ॥

अथेङ्गितं वज्रधरस्य नारदः ; श्रियाश्च देव्या मनसा विचारयन् ।
श्रियै शशंसामरदृष्टपौरुषः ; शिवेन तत्रागमनं महर्द्धिमत् ॥ ०८८ ॥

ततोऽमृतं द्यौः प्रववर्ष भास्वती ; पितामहस्यायतने स्वयंभुवः ।
अनाहता दुन्दुभयश्च नेदिरे ; तथा प्रसन्नाश्च दिशश्चकाशिरे ॥ ०८९ ॥

यथर्तु सस्येषु ववर्ष वासवो ; न धर्ममार्गाद्विचचाल कश्चन ।
अनेकरत्नाकरभूषणा च भूः ; सुघोषघोषा भुवनौकसां जये ॥ ०९० ॥

क्रियाभिरामा मनुजा यशस्विनो ; बभुः शुभे पुण्यकृतां पथि स्थिताः ।
नरामराः किंनरयक्षराक्षसाः ; समृद्धिमन्तः सुखिनो यशस्विनः ॥ ०९१ ॥

न जात्वकाले कुसुमं कुतः फलं ; पपात वृक्षात्पवनेरितादपि ।
रसप्रदाः कामदुघाश्च धेनवो ; न दारुणा वाग्विचचार कस्यचित् ॥ ०९२ ॥

इमां सपर्यां सह सर्वकामदैः ; श्रियाश्च शक्रप्रमुखैश्च दैवतैः ।
पठन्ति ये विप्रसदः समागमे ; समृद्धकामाः श्रियमाप्नुवन्ति ते ॥ ०९३ ॥

त्वया कुरूणां वर यत्प्रचोदितं ; भवाभवस्येह परं निदर्शनम् ।
तदद्य सर्वं परिकीर्तितं मया ; परीक्ष्य तत्त्वं परिगन्तुमर्हसि ॥ ०९४ ॥

---

# जैगीषव्यासितसंवादः

## अध्याय २२२

युधिष्ठिर उवाच ॥

किंशीलः किंसमाचारः किंविद्यः किंपरायणः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ ००१ ॥

भीष्म उवाच ॥

मोक्षधर्मेषु नियतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जैगीषव्यस्य संवादमसितस्य च भारत ॥ ००३ ॥

जैगीषव्यं महाप्राज्ञं धर्माणामागतागमम् ।
अक्रुध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत् ॥ ००४ ॥

न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसि ।
का ते प्रज्ञा कुतश्चैषा किं चैतस्याः परायणम् ॥ ००५ ॥

इति तेनानुयुक्तः स तमुवाच महातपाः ।
महद्वाक्यमसंदिग्धं पुष्कलार्थपदं शुचि ॥ ००६ ॥

या गतिर्या परा निष्ठा या शान्तिः पुण्यकर्मणाम् ।
तां तेऽहं संप्रवक्ष्यामि यन्मां पृच्छसि वै द्विज ॥ ००७ ॥

निन्दत्सु च समो नित्यं प्रशंसत्सु च देवल ।
निह्नुवन्ति च ये तेषां समयं सुकृतं च ये ॥ ००८ ॥

उक्ताश्च न विवक्षन्ति वक्तारमहिते रतम् ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः ॥ ००९ ॥

नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्वते ।
न चातीतानि शोचन्ति न चैनान्प्रतिजानते ॥ ०१० ॥

संप्राप्तानां च पूज्यानां कामादर्थेषु देवल ।
यथोपपत्तिं कुर्वन्ति शक्तिमन्तः कृतव्रताः ॥ ०११ ॥

पक्वविद्या महाप्राज्ञा जितक्रोधा जितेन्द्रियाः ।
मनसा कर्मणा वाचा नापराध्यन्ति कस्यचित् ॥ ०१२ ॥

अनीर्षवो न चान्योन्यं विहिंसन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ ०१३ ॥

निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य ये ।
न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ॥ ०१४ ॥

सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः ।
न क्रुध्यन्ति न हृष्यन्ति नापराध्यन्ति कस्यचित् ॥ ०१५ ॥

विमुच्य हृदयग्रन्थींश्चङ्क्रम्यन्ते यथासुखम् ॥ ०१५ ॥

न येषां बान्धवाः सन्ति ये चान्येषां न बान्धवाः ।
अमित्राश्च न सन्त्येषां ये चामित्रा न कस्यचित् ॥ ०१६ ॥

य एवं कुर्वते मर्त्याः सुखं जीवन्ति सर्वदा ।
धर्ममेवानुवर्तन्ते धर्मज्ञा द्विजसत्तम ॥ ०१७ ॥

ये ह्यतो विच्युता मार्गात्ते हृष्यन्त्युद्विजन्ति च ॥ ०१७ ॥

आस्थितस्तमहं मार्गमसूयिष्यामि कं कथम् ।
निन्द्यमानः प्रशस्तो वा हृष्येयं केन हेतुना ॥ ०१८ ॥

यद्यदिच्छन्ति तन्मार्गमभिगच्छन्ति मानवाः ।
न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ॥ ०१९ ॥

अमृतस्येव संतृप्येदवमानस्य तत्त्ववित् ।
विषस्येवोद्विजेन्नित्यं संमानस्य विचक्षणः ॥ ०२० ॥

अवज्ञातः सुखं शेते इह चामुत्र चोभयोः ।
विमुक्तः सर्वपापेभ्यो योऽवमन्ता स बध्यते ॥ ०२१ ॥

परां गतिं च ये केचित्प्रार्थयन्ति मनीषिणः ।
एतद्व्रतं समाश्रित्य सुखमेधन्ति ते जनाः ॥ ०२२ ॥

सर्वतश्च समाहृत्य क्रतून्सर्वाञ्जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ ०२३ ॥

नास्य देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥ ०२४ ॥

---

# वासुदेवोग्रसेनसंवादः

## अध्याय २२३

युधिष्ठिर उवाच ॥

प्रियः सर्वस्य लोकस्य सर्वसत्त्वाभिनन्दिता ।
गुणैः सर्वैरुपेतश्च को न्वस्ति भुवि मानवः ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि पृच्छतो भरतर्षभ ।
उग्रसेनस्य संवादं नारदे केशवस्य च ॥ ००२ ॥

उग्रसेन उवाच ॥

पश्य सङ्कल्पते लोको नारदस्य प्रकीर्तने ।
मन्ये स गुणसंपन्नो ब्रूहि तन्मम पृच्छतः ॥ ००३ ॥

वासुदेव उवाच ॥

कुकुराधिप यान्मन्ये श‍ृणु तान्मे विवक्षतः ।
नारदस्य गुणान्साधून्सङ्क्षेपेण नराधिप ॥ ००४ ॥

न चारित्रनिमित्तोऽस्याहङ्कारो देहपातनः ।
अभिन्नश्रुतचारित्रस्तस्मात्सर्वत्र पूजितः ॥ ००५ ॥

तपस्वी नारदो बाढं वाचि नास्य व्यतिक्रमः ।
कामाद्वा यदि वा लोभात्तस्मात्सर्वत्र पूजितः ॥ ००६ ॥

अध्यात्मविधितत्त्वज्ञः क्षान्तः शक्तो जितेन्द्रियः ।
ऋजुश्च सत्यवादी च तस्मात्सर्वत्र पूजितः ॥ ००७ ॥

तेजसा यशसा बुद्ध्या नयेन विनयेन च ।
जन्मना तपसा वृद्धस्तस्मात्सर्वत्र पूजितः ॥ ००८ ॥

सुखशीलः सुसंभोगः सुभोज्यः स्वादरः शुचिः ।
सुवाक्यश्चाप्यनीर्ष्यश्च तस्मात्सर्वत्र पूजितः ॥ ००९ ॥

कल्यानं कुरुते बाढं पापमस्मिन्न विद्यते ।
न प्रीयते परानर्थैस्तस्मात्सर्वत्र पूजितः ॥ ०१० ॥

वेदश्रुतिभिराख्यानैरर्थानभिजिगीषते ।
तितिक्षुरनवज्ञश्च तस्मात्सर्वत्र पूजितः ॥ ०११ ॥

समत्वाद्धि प्रियो नास्ति नाप्रियश्च कथञ्चन ।
मनोनुकूलवादी च तस्मात्सर्वत्र पूजितः ॥ ०१२ ॥

बहुश्रुतश्चैत्रकथः पण्डितोऽनलसोऽशठः ।
अदीनोऽक्रोधनोऽलुब्धस्तस्मात्सर्वत्र पूजितः ॥ ०१३ ॥

नार्थे न धर्मे कामे वा भूतपूर्वोऽस्य विग्रहः ।
दोषाश्चास्य समुच्छिन्नास्तस्मात्सर्वत्र पूजितः ॥ ०१४ ॥

दृढभक्तिरनिन्द्यात्मा श्रुतवाननृशंसवान् ।
वीतसंमोहदोषश्च तस्मात्सर्वत्र पूजितः ॥ ०१५ ॥

असक्तः सर्वसङ्गेषु सक्तात्मेव च लक्ष्यते ।
अदीर्घसंशयो वाग्मी तस्मात्सर्वत्र पूजितः ॥ ०१६ ॥

समाधिर्नास्य मानार्थे नात्मानं स्तौति कर्हिचित् ।
अनीर्ष्युर्दृढसंभाषस्तस्मात्सर्वत्र पूजितः ॥ ०१७ ॥

लोकस्य विविधं वृत्तं प्रकृतेश्चाप्यकुत्सयन् ।
संसर्गविद्याकुशलस्तस्मात्सर्वत्र पूजितः ॥ ०१८ ॥

नासूयत्यागमं कञ्चित्स्वं तपो नोपजीवति ।

अवन्ध्यकालो वश्यात्मा तस्मात्सर्वत्र पूजितः ॥ ०१९ ॥

कृतश्रमः कृतप्रज्ञो न च तृप्तः समाधितः ।
नियमस्थोऽप्रमत्तश्च तस्मात्सर्वत्र पूजितः ॥ ०२० ॥

सापत्रपश्च युक्तश्च सुनेयः श्रेयसे परैः ।
अभेत्ता परगुह्यानां तस्मात्सर्वत्र पूजितः ॥ ०२१ ॥

न हृष्यत्यर्थलाभेषु नालाभेषु व्यथत्यपि ।
स्थिरबुद्धिरसक्तात्मा तस्मात्सर्वत्र पूजितः ॥ ०२२ ॥

तं सर्वगुणसंपन्नं दक्षं शुचिमकातरम् ।
कालज्ञं च नयज्ञं च कः प्रियं न करिष्यति ॥ ०२३ ॥

---

# शुकानुप्रश्नः

## अध्याय २२४

युधिष्ठिर उवाच ॥

आद्यन्तं सर्वभूतानां श्रोतुमिच्छामि कौरव ।
ध्यानं कर्म च कालं च तथैवायुर्युगे युगे ॥ ००१ ॥

लोकतत्त्वं च कार्त्स्न्येन भूतानामागतिं गतिम् ।
सर्गश्च निधनं चैव कुत एतत्प्रवर्तते ॥ ००२ ॥

यदि तेऽनुग्रहे बुद्धिरस्मास्विह सतां वर ।

एतद्भवन्तं पृच्छामि तद्भवान्प्रब्रवीतु मे ॥ ००३ ॥

पूर्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमम् ।
भरद्वाजस्य विप्रर्षेस्ततो मे बुद्धिरुत्तमा ॥ ००४ ॥

जाता परमधर्मिष्ठा दिव्यसंस्थानसंस्थिता ।
ततो भूयस्तु पृच्छामि तद्भवान्वक्तुमर्हति ॥ ००५ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
जगौ यद्भगवान्व्यासः पुत्राय परिपृच्छते ॥ ००६ ॥

अधीत्य वेदानखिलान्साङ्गोपनिषदस्तथा ।
अन्विच्छन्नैष्ठिकं कर्म धर्मनैपुणदर्शनात् ॥ ००७ ॥

कृष्णद्वैपायनं व्यासं पुत्रो वैयासकिः शुकः ।
पप्रच्छ संदेहमिमं छिन्नधर्मार्थसंशयम् ॥ ००८ ॥

भूतग्रामस्य कर्तारं कालज्ञाने च निश्चयम् ।
ब्राह्मणस्य च यत्कृत्यं तद्भवान्वक्तुमर्हति ॥ ००९ ॥

तस्मै प्रोवाच तत्सर्वं पिता पुत्राय पृच्छते ।
अतीतानागते विद्वान्सर्वज्ञः सर्वधर्मवित् ॥ ०१० ॥

अनाद्यन्तमजं दिव्यमजरं ध्रुवमव्ययम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे समवर्तत ॥ ०११ ॥

काष्ठा निमेषा दश पञ्च चैव ; त्रिंशत्तु काष्ठा गणयेत्कलां ताम् ।
त्रिंशत्कलाश्चापि भवेन्मुहूर्तो ; भागः कलाया दशमश्च यः स्यात् ॥ ०१२ ॥

त्रिंशन्मुहूर्तश्च भवेदहश्च ; रात्रिश्च संख्या मुनिभिः प्रणीता ।
मासः स्मृतो रात्र्यहनी च त्रिंश ;त्संवत्सरो द्वादशमास उक्तः ॥ ०१३ ॥

संवत्सरं द्वे अयने वदन्ति ; संख्याविदो दक्षिणमुत्तरं च ॥ ०१३ ॥

अहोरात्रे विभजते सूर्यो मानुषलौकिके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ ०१४ ॥

पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ।
कृष्णोऽहः कर्मचेष्टायां शुक्लः स्वप्नाय शर्वरी ॥ ०१५ ॥

दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ०१६ ॥

ये ते रात्र्यहनी पूर्वे कीर्तिते दैवलौकिके ।
तयोः संख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहःक्षपे ॥ ०१७ ॥

तेषां संवत्सराग्राणि प्रवक्ष्याम्यनुपूर्वशः ।
कृते त्रेतायुगे चैव द्वापरे च कलौ तथा ॥ ०१८ ॥

चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ ०१९ ॥

इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।
एकापायेन संयान्ति सहस्राणि शतानि च ॥ ०२० ॥

एतानि शाश्वता.ण्ल्लोकान्धारयन्ति सनातनान् ।
एतद्ब्रह्मविदां तात विदितं ब्रह्म शाश्वतम् ॥ ०२१ ॥

चतुष्पात्सकलो धर्मः सत्यं चैव कृते युगे ।
नाधर्मेणागमः कश्चित्परस्तस्य प्रवर्तते ॥ ०२२ ॥

इतरेष्वागमाद्धर्मः पादशस्त्ववरोप्यते ।
चौरिकानृतमायाभिरधर्मश्चोपचीयते  ॥ ०२३  ॥

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृते त्रेतादिष्वेतेषां पादशो ह्रसते वयः  ॥ ०२४  ॥

वेदवादाश्चानुयुगं ह्रसन्तीति च नः श्रुतम् ।
आयूंषि चाशिषश्चैव वेदस्यैव च यत्फलम्  ॥ ०२५  ॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्तिकृता इव  ॥ ०२६  ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे  ॥ ०२७  ॥

एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः ।
सहस्रं परिवृत्तं तद्ब्राह्मं दिवसमुच्यते  ॥ ०२८  ॥

रात्रिस्तावत्तिथी ब्राह्मी तदादौ विश्वमीश्वरः ।
प्रलयेऽध्यात्ममाविश्य सुप्त्वा सोऽन्ते विबुध्यते  ॥ ०२९  ॥

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः  ॥ ०३०  ॥

प्रतिबुद्धो विकुरुते ब्रह्माक्षय्यं क्षपाक्षये ।
सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः  ॥ ०३१  ॥

ब्रह्म तेजोमयं शुक्रं यस्य सर्वमिदं जगत् ।
एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमम्  ॥ ०३२  ॥

अहर्मुखे विबुद्धः सन्सृजते विद्यया जगत् ।
अग्र एव महाभूतमाशु व्यक्तात्मकं मनः ॥ ०३३ ॥

अभिभूयेह चार्चिष्मद्व्यसृजत्सप्त मानसान् ।
दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ०३४ ॥

मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात्तस्य शब्दो गुणो मतः ॥ ०३५ ॥

आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शो गुणो मतः ॥ ०३६ ॥

वायोरपि विकुर्वाणाज्ज्योतिर्भूतं तमोनुदम् ।
रोचिष्णु जायते तत्र तद्रूपगुणमुच्यते ॥ ०३७ ॥

ज्योतिषोऽपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धगुणा भूमिः पूर्वैषा सृष्टिरुच्यते ॥ ०३८ ॥

गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम् ।
तेषां यावत्तिथं यद्यत्तत्तत्तावद्गुणं स्मृतम् ॥ ०३९ ॥

उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणात् ।
पृथिव्यामेव तं विद्यादापो वायुं च संश्रितम् ॥ ०४० ॥

एते तु सप्त पुरुषा नानावीर्याः पृथक्पृथक् ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य सर्वतः ॥ ०४१ ॥

ते समेत्य महात्मानमन्योन्यमभिसंश्रिताः ।
शरीराश्रयणं प्राप्तास्ततः पुरुष उच्यते ॥ ०४२ ॥

श्रयणाच्छरीरं भवति मूर्तिमत्षोडशात्मकम् ।

तदाविशन्ति भूतानि महान्ति सह कर्मणा ॥ ०४३ ॥

सर्वभूतानि चादाय तपसश्चरणाय च ।
आदिकर्ता महाभूतं तमेवाहुः प्रजापतिम् ॥ ०४४ ॥

स वै सृजति भूतानि स एव पुरुषः परः ।
अजो जनयते ब्रह्मा देवर्षिपितृमानवान् ॥ ०४५ ॥

लोकान्नदीः समुद्रांश्च दिशः शैलान्वनस्पतीन् ।
नरकिंनररक्षांसि वयःपशुमृगोरगान् ॥ ०४६ ॥

अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ ०४६ ॥

तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ०४७ ॥

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मे ऋतानृते ।
अतो यन्मन्यते धाता तस्मात्तत्तस्य रोचते ॥ ०४८ ॥

महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्तिषु ।
विनियोगं च भूतानां धातैव विदधात्युत ॥ ०४९ ॥

केचित्पुरुषकारं तु प्राहुः कर्मविदो जनाः ।
दैवमित्यपरे विप्राः स्वभावं भूतचिन्तकाः ॥ ०५० ॥

पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रय एतेऽपृथग्भूता नविवेकं तु केचन ॥ ०५१ ॥

एवमेतच्च नैवं च यद्भूतं सृजते जगत् ।
कर्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥ ०५२ ॥

तपो निःश्रेयसं जन्तोस्तस्य मूलं दमः शमः ।
तेन सर्वानवाप्नोति यान्कामान्मनसेच्छति ॥ ०५३ ॥

तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
स तद्भूतश्च सर्वेषां भूतानां भवति प्रभुः ॥ ०५४ ॥

ऋषयस्तपसा वेदानध्यैषन्त दिवानिशम् ।
अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ॥ ०५५ ॥

ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः ।
शर्वर्यन्तेषु जातानां तान्येवैभ्यो ददाति सः ॥ ०५६ ॥

नामभेदस्तपःकर्मयज्ञाख्या लोकसिद्धयः ।
आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः ॥ ०५७ ॥

यदुक्तं वेदवादेषु गहनं वेददृष्टिभिः ।
तदन्तेषु यथायुक्तं क्रमयोगेन लक्ष्यते ॥ ०५८ ॥

कर्मजोऽयं पृथग्भावो द्वंद्वयुक्तो वियोगिनः ।
आत्मसिद्धिस्तु विज्ञाता जहाति प्रायशो बलम् ॥ ०५९ ॥

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ०६० ॥

आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशस्तथा ।
परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः ॥ ०६१ ॥

त्रेतायुगे विधिस्त्वेषां यज्ञानां न कृते युगे ।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा ॥ ०६२ ॥

अपृथग्धर्मिणो मर्त्या ऋक्सामानि यजूंषि च ।

काम्यां पुष्टिं पृथग्दृष्ट्वा तपोभिस्तप एव च ॥ ०६३ ॥

त्रेतायां तु समस्तास्ते प्रादुरासन्महाबलाः ।
संयन्तारः स्थावराणां जङ्गमानां च सर्वशः ॥ ०६४ ॥

त्रेतायां संहता ह्येते यज्ञा वर्णास्तथैव च ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ ०६५ ॥

दृश्यन्ते नापि दृश्यन्ते वेदाः कलियुगेऽखिलाः ।
उत्सीदन्ते सयज्ञाश्च केवला धर्मसेतवः ॥ ०६६ ॥

कृते युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते ।
आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः ॥ ०६७ ॥

अधर्मव्रतसंयोगं यथाधर्मं युगे युगे ।
विक्रियन्ते स्वधर्मस्था वेदवादा यथायुगम् ॥ ०६८ ॥

यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि ।
सृज्यन्ते जङ्गमस्थानि तथा धर्मा युगे युगे ॥ ०६९ ॥

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा ब्रह्माहरात्रिषु ॥ ०७० ॥

विहितं कालनानात्वमनादिनिधनं तथा ।
कीर्तितं यत्पुरस्तात्ते तत्सूते चात्ति च प्रजाः ॥ ०७१ ॥

दधाति प्रभवे स्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वंद्वयुक्तानि भूरिशः ॥ ०७२ ॥

सर्गः कालः क्रिया वेदाः कर्ता कार्यं क्रिया फलम् ।
प्रोक्तं ते पुत्र सर्वं वै यन्मां त्वं परिपृच्छसि ॥ ०७३ ॥

प्रत्याहारं तु वक्ष्यामि शर्वर्यादौ गतेऽहनि ।
यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ॥ ०७४ ॥

दिवि सूर्यास्तथा सप्त दहन्ति शिखिनोऽर्चिषा ।
सर्वमेतत्तदार्चिर्भिः पूर्णं जाज्वल्यते जगत् ॥ ०७५ ॥

---

# अध्याय २२५

व्यास उवाच ॥

पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च ।
तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥ ००१ ॥

ततः प्रलीने सर्वस्मिन्स्थावरे जङ्गमे तथा ।
अकाष्ठा निस्तृणा भूमिर्दृश्यते कूर्मपृष्ठवत् ॥ ००२ ॥

भूमेरपि गुणं गन्धमाप आददते यदा ।
आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ॥ ००३ ॥

आपस्ततः प्रतिष्ठन्ति ऊर्मिमत्यो महास्वनाः ।
सर्वमेवेदमापूर्य तिष्ठन्ति च चरन्ति च ॥ ००४ ॥

अपामपि गुणांस्तात ज्योतिराददते यदा ।
आपस्तदा आत्तगुणा ज्योतिष्युपरमन्ति च ॥ ००५ ॥

यदादित्यं स्थितं मध्ये गूहन्ति शिखिनोऽर्चिषः ।
सर्वमेवेदमर्चिर्भिः पूर्णं जाज्वल्यते नभः ॥ ००६ ॥

ज्योतिषोऽपि गुणं रूपं वायुराददते यदा ।
प्रशाम्यति तदा ज्योतिर्वायुर्दोधूयते महान्  ॥ ००७  ॥

ततस्तु मूलमासाद्य वायुः संभवमात्मनः ।
अधश्चोर्ध्वं च तिर्यक्क दोधवीति दिशो दश  ॥ ००८  ॥

वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदत्  ॥ ००९  ॥

आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः ।
मनसो व्यक्तमव्यक्तं ब्राह्मः स प्रतिसञ्चरः  ॥ ०१०  ॥

तदात्मगुणमाविश्य मनो ग्रसति चन्द्रमाः ।
मनस्युपरतेऽध्यात्मा चन्द्रमस्यवतिष्ठते  ॥ ०११  ॥

तं तु कालेन महता सङ्कल्पः कुरुते वशे ।
चित्तं ग्रसति सङ्कल्पस्तच्च ज्ञानमनुत्तमम्  ॥ ०१२  ॥

कालो गिरति विज्ञानं कालो बलमिति श्रुतिः ।
बलं कालो ग्रसति तु तं विद्वान्कुरुते वशे  ॥ ०१३  ॥

आकाशस्य तदा घोषं तं विद्वान्कुरुतेऽऽत्मनि ।
तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमम्  ॥ ०१४  ॥

एवं सर्वाणि भूतानि ब्रह्मैव प्रतिसञ्चरः  ॥ ०१४  ॥

यथावत्कीर्तितं सम्यगेवमेतदसंशयम् ।
बोध्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मभिः  ॥ ०१५  ॥

एवं विस्तारसङ्क्षेपौ ब्रह्माव्यक्ते पुनः पुनः ।

युगसाहस्रयोरादावह्नो रात्र्यास्तथैव च ॥ ०१६ ॥

---

# अध्याय २२६

व्यास उवाच ॥

भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया ।
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि पृच्छते ॥ ००१ ॥

जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादा समावृत्तेराचार्ये वेदपारगे ॥ ००२ ॥

अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥ ००३ ॥

आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥ ००४ ॥

प्रजासर्गेण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥ ००५ ॥

गृहस्थस्त्वेव सर्वेषां चतुर्णां मूलमुच्यते ।
तत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ॥ ००६ ॥

प्रजावाञ्श्रोत्रियो यज्वा मुक्तो दिव्यैस्त्रिभिर्ऋणैः ।
अथान्यानाश्रमान्पश्चात्पूतो गच्छति कर्मभिः ॥ ००७ ॥

यत्पृथिव्यां पुण्यतमं विद्यास्थानं तदावसेत् ।

यतेत तस्मिन्प्रामाण्यं गन्तुं यशसि चोत्तमे ॥ ००८ ॥

तपसा वा सुमहता विद्यानां पारणेन वा ।
इज्यया वा प्रदानैर्वा विप्राणां वर्धते यशः ॥ ००९ ॥

यावदस्य भवत्यस्मि.णल्लोके कीर्तिर्यशस्करी ।
तावत्पुण्यकृता.णल्लोकाननन्तान्पुरुषोऽश्नुते ॥ ०१० ॥

अध्यापयेदधीयीत याजयेत यजेत च ।
न वृथा प्रतिगृह्णीयान्न च दद्यात्कथञ्चन ॥ ०११ ॥

याज्यतः शिष्यतो वापि कन्यया वा धनं महत् ।
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथञ्चन ॥ ०१२ ॥

गृहमावसतो ह्यस्य नान्यत्तीर्थं प्रतिग्रहात् ।
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम् ॥ ०१३ ॥

अन्तर्हिताभितप्तानां यथाशक्ति बुभूषताम् ।
द्रव्याणामतिशक्त्यापि देयमेषां कृतादपि ॥ ०१४ ॥

अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन ।
उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ॥ ०१५ ॥

अनुनीय तथा काव्यः सत्यसंधो महाव्रतः ।
स्वैः प्राणैर्ब्राह्मणप्राणान्परित्राय दिवं गतः ॥ ०१६ ॥

रन्तिदेवश्च साङ्कृत्यो वसिष्ठाय महात्मने ।
अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ॥ ०१७ ॥

आत्रेयश्चन्द्रदमयोरर्हतोर्विविधं धनम् ।
दत्त्वा लोकान्ययौ धीमाननन्तान्स महीपतिः ॥ ०१८ ॥

शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ ०१९ ॥

प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥ ०२० ॥

दिव्यं मृष्टशलाकं तु सौवर्णं परमर्द्धिमत् ।
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥ ०२१ ॥

साङ्कृतिश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥ ०२२ ॥

अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यपतद्दिवम् ॥ ०२३ ॥

सावित्री कुण्डले दिव्ये शरीरं जनमेजयः ।
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥ ०२४ ॥

सर्वरत्नं वृषादर्भो युवनाश्वः प्रियाः स्त्रियः ।
रम्यमावसथं चैव दत्त्वामुं लोकमास्थितः ॥ ०२५ ॥

निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम् ।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ॥ ०२६ ॥

अवर्षति च पर्जन्ये सर्वभूतानि चासकृत् ।
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥ ०२७ ॥

करंधमस्य पुत्रस्तु मरुत्तो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥ ०२८ ॥

ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतां वरः ।
निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् ॥ ०२९ ॥

राजा मित्रसहश्चापि वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥ ०३० ॥

सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ ०३१ ॥

सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ॥ ०३२ ॥

नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान् ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ ०३३ ॥

मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरभिष्टुतान् ॥ ०३४ ॥

लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ॥ ०३५ ॥

दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥ ०३६ ॥

एते चान्ये च बहवो दानेन तपसा च ह ।
महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥ ०३७ ॥

तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
दानयज्ञप्रजासर्गैरेते हि दिवमाप्नुवन् ॥ ०३८ ॥

---

# अध्याय २२७

व्यास उवाच ॥

त्रयीविद्यामवेक्षेत वेदेषूक्तामथाङ्गतः ।
ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा ॥ ००१ ॥

वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये ।
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ ॥ ००२ ॥

एवं धर्मेण वर्तेत क्रियाः शिष्टवदाचरेत् ।
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः ॥ ००३ ॥

सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः ।
स्वधर्मेण क्रिया लोके कुर्वाणः सत्यसङ्गरः ॥ ००४ ॥

तिष्ठत्येतेषु गृहवान्षट्सु कर्मसु स द्विजः ।
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च ॥ ००५ ॥

धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षभयक्रोधो ब्राह्मणो नावसीदति ॥ ००६ ॥

दानमध्ययनं यज्ञस्तपो ह्रीरार्जवं दमः ।
एतैर्वर्धयते तेजः पाप्मानं चापकर्षति ॥ ००७ ॥

धूतपाप्मा तु मेधावी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ००८ ॥

अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च ।
वर्जयेद्रुषतीं वाचं हिंसां चाधर्मसंहिताम् ॥ ००९ ॥

एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानागमेन कर्माणि कुर्वन्कर्मसु सिध्यति ॥ ०१० ॥

पञ्चेन्द्रियजलां घोरां लोभकूलां सुदुस्तराम् ।
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ॥ ०११ ॥

काममन्यूद्धतं यत्स्यान्नित्यमत्यन्तमोहितम् ।
महता विधिदृष्टेन बलेनाप्रतिघातिना ॥ ०१२ ॥

स्वभावस्रोतसा वृत्तमुह्यते सततं जगत् ॥ ०१२ ॥

कालोदकेन महता वर्षावर्तेन संततम् ।
मासोर्मिणर्तुवेगेन पक्षोलपतृणेन च ॥ ०१३ ॥

निमेषोन्मेषफेनेन अहोरात्रजवेन च ।
कामग्राहेण घोरेण वेदयज्ञप्लवेन च ॥ ०१४ ॥

धर्मद्वीपेन भूतानां चार्थकामरवेण च ।
ऋतसोपानतीरेण विहिंसातरुवाहिना ॥ ०१५ ॥

युगह्रदौघमध्येन ब्रह्मप्रायभवेन च ।
धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनम् ॥ ०१६ ॥

एतत्प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः ।
प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः ॥ ०१७ ॥

उपपन्नं हि यत्प्राज्ञो निस्तरेन्नेतरो जनः ।
दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति ॥ ०१८ ॥

संशयात्मा स कामात्मा चलचित्तोऽल्पचेतनः ।
अप्राज्ञो न तरत्येव यो ह्यास्ते न स गच्छति ॥ ०१९ ॥

अप्लवो हि महादोषमुह्यमानोऽधिगच्छति ।
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः ॥ ०२० ॥

तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः ।
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् ॥ ०२१ ॥

त्र्यवदाते कुले जातस्त्रिसंदेहस्त्रिकर्मकृत् ।
तस्मादुन्मज्जनस्तिष्ठेन्निस्तरेत्प्रज्ञया यथा ॥ ०२२ ॥

संस्कृतस्य हि दान्तस्य नियतस्य कृतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च ॥ ०२३ ॥

वर्तते तेषु गृहवानक्रुध्यन्ननसूयकः ।
पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च ॥ ०२४ ॥

सतां वृत्तेन वर्तेत क्रियाः शिष्टवदाचरेत् ।
असंरोधेन धर्मस्य वृत्तिं लिप्सेदगर्हिताम् ॥ ०२५ ॥

श्रुतिविज्ञानतत्त्वज्ञः शिष्टाचारो विचक्षणः ।
स्वधर्मेण क्रियावांश्च कर्मणा सोऽप्यसङ्करः ॥ ०२६ ॥

क्रियावाञ्श्रद्दधानश्च दाता प्राज्ञोऽनसूयकः ।
धर्माधर्मविशेषज्ञः सर्वं तरति दुस्तरम् ॥ ०२७ ॥

धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षभयक्रोधो ब्राह्मणो नावसीदति ॥ ०२८ ॥

एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवित्त्वेन कर्माणि कुर्वन्सर्वत्र सिध्यति ॥ ०२९ ॥

अधर्मं धर्मकामो हि करोतीहाविचक्षणः ।
धर्मं चाधर्मसङ्काशं शोचन्निव करोति सः ॥ ०३० ॥

धर्मं करोमीति करोत्यधर्म ;मधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजान ;न्स जायते म्रियते चापि देही ॥ ०३१ ॥

---

# अध्याय २२८

व्यास उवाच ॥

अथ चेद्रोचयेदेतद्द्रुह्येत मनसा तथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान्प्लववान्भवेत् ॥ ००१ ॥

प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान्प्लवैः ।
नाबुधास्तारयन्त्यन्यानात्मानं वा कथञ्चन ॥ ००२ ॥

छिन्नदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश ।
दशकर्मसुखानर्थानुपायापायनिर्भयः ॥ ००३ ॥

चक्षुराचारवित्प्राज्ञो मनसा दर्शनेन च ।
यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ॥ ००४ ॥

ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ॥ ००४ ॥

एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः ।

यदि वा सर्ववेदज्ञो यदि वाप्यनृचोऽजपः ॥ ००५ ॥

यदि वा धार्मिको यज्वा यदि वा पापकृत्तमः ।
यदि वा पुरुषव्याघ्रो यदि वा क्लैब्यधारिता ॥ ००६ ॥

तरत्येव महादुर्गं जरामरणसागरम् ।
एवं ह्येतेन योगेन युञ्जानोऽप्येकमन्ततः ॥ ००७ ॥

अपि जिज्ञासमानो हि शब्दब्रह्मातिवर्तते ॥ ००७ ॥

धर्मोपस्थो ह्रीवरूथ उपायापायकूबरः ।
अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ॥ ००८ ॥

चेतनाबन्धुरश्चारुराचारग्रहनेमिवान् ।
दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ॥ ००९ ॥

प्रज्ञानाभिः सर्वतन्त्रप्रतोदो ज्ञानसारथिः ।
क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः ॥ ०१० ॥

त्यागवर्त्मानुगः क्षेम्यः शौचगो ध्यानगोचरः ।
जीवयुक्तो रथो दिव्यो ब्रह्मलोके विराजते ॥ ०११ ॥

अथ संत्वरमाणस्य रथमेतं युयुक्षतः ।
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ॥ ०१२ ॥

सप्त यो धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते ।
पृष्ठतः पार्श्वतश्चान्या यावत्यस्ताः प्रधारणाः ॥ ०१३ ॥

क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।
ज्योतिषो यत्तदैश्वर्यमहङ्कारस्य बुद्धितः ॥ ०१४ ॥

अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते ।
विक्रमाश्चापि यस्यैते तथा युङ्क्ते स योगतः ॥ ०१५ ॥

अथास्य योगयुक्तस्य सिद्धिमात्मनि पश्यतः ।
निर्मथ्यमानः सूक्ष्मत्वाद्रूपाणीमानि दर्शयेत् ॥ ०१६ ॥

शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः ।
तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत ॥ ०१७ ॥

अथ धूमस्य विरमे द्वितीयं रूपदर्शनम् ।
जलरूपमिवाकाशे तत्रैवात्मनि पश्यति ॥ ०१८ ॥

अपां व्यतिक्रमे चापि वह्निरूपं प्रकाशते ।
तस्मिन्नुपरते चास्य पीतवस्त्रवदिष्यते ॥ ०१९ ॥

ऊर्णारूपसवर्णं च तस्य रूपं प्रकाशते ॥ ०१९ ॥

अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्यजः ।
अशुक्लं चेतसः सौक्ष्म्यमव्यक्तं ब्रह्मणोऽस्य वै ॥ ०२० ॥

एतेष्वपि हि जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्ये सृष्टिरिष्टा विधीयते ॥ ०२१ ॥

प्रजापतिरिवाक्षोभ्यः शरीरात्सृजति प्रजाः ।
अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ॥ ०२२ ॥

पृथिवीं कम्पयत्येको गुणो वायोरिति स्मृतः ।
आकाशभूतश्चाकाशे सवर्णत्वात्प्रणश्यति ॥ ०२३ ॥

वर्णतो गृह्यते चापि कामात्पिबति चाशयान् ।
न चास्य तेजसा रूपं दृश्यते शाम्यते तथा ॥ ०२४ ॥

अहङ्कारस्य विजितेः पञ्चैते स्युर्वशानुगाः ।
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ ॥ ०२५ ॥

निर्दोषा प्रतिभा ह्येनं कृत्स्ना समभिवर्तते ।
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ॥ ०२६ ॥

यतो निःसरते लोको भवति व्यक्तसञ्ज्ञकः ।
तत्राव्यक्तमयीं व्याख्यां श‍ृणु त्वं विस्तरेण मे ॥ ०२७ ॥

तथा व्यक्तमयीं चैव संख्यां पूर्वं निबोध मे ॥ ०२७ ॥

पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम् ।
योगे सांख्येऽपि च तथा विशेषांस्तत्र मे श‍ृणु ॥ ०२८ ॥

प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत् ।
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥ ०२९ ॥

विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।
द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥ ०३० ॥

चतुर्लक्षणजं त्वन्यं चतुर्वर्गं प्रचक्षते ।
व्यक्तमव्यक्तजं चैव तथा बुद्धमथेतरत् ॥ ०३१ ॥

सत्त्वं क्षेत्रज्ञ इत्येतद्द्वयमप्यनुदर्शितम् ॥ ०३१ ॥

द्वावात्मानौ च वेदेषु विषयेषु च रज्यतः ।
विषयात्प्रतिसंहारः सांख्यानां सिद्धिलक्षणम् ॥ ०३२ ॥

निर्ममश्चानहङ्कारो निर्द्वंद्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ॥ ०३३ ॥

आक्रुष्टस्ताडितश्चैव मैत्रेण ध्याति नाशुभम् ।
वाग्दण्डकर्ममनसां त्रयाणां च निवर्तकः ॥ ०३४ ॥

समः सर्वेषु भूतेषु ब्रह्माणमभिवर्तते ।
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः ॥ ०३५ ॥

अलोलुपोऽव्यथो दान्तो न कृती न निराकृतिः ।
नास्येन्द्रियमनेकाग्रं नातिक्षिप्तमनोरथः ॥ ०३६ ॥

अहिंस्रः सर्वभूतानामीदृक्सांख्यो विमुच्यते ॥ ०३६ ॥

अथ योगाद्विमुच्यन्ते कारणैर्यैर्निबोध मे ।
योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ॥ ०३७ ॥

इत्येषा भावजा बुद्धिः कथिता ते न संशयः ।
एवं भवति निर्द्वंद्वो ब्रह्माणं चाधिगच्छति ॥ ०३८ ॥

---

# अध्याय २२९

व्यास उवाच ॥

अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमास्थितः ।
उन्मज्जंश्च निमज्जंश्च ज्ञानमेवाभिसंश्रयेत् ॥ ००१ ॥

शुक उवाच ॥

किं तज्ज्ञानमथो विद्या यया निस्तरति द्वयम् ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिरिति चैव हि  ॥ ००२  ॥

व्यास उवाच  ॥

यस्तु पश्येत्स्वभावेन विना भावमचेतनः ।
पुष्यते च पुनः सर्वान्प्रज्ञया मुक्तहेतुकः  ॥ ००३  ॥

येषां चैकान्तभावेन स्वभावः कारणं मतम् ।
पूत्वा तृणबुसीकां वै ते लभन्ते न किञ्चन  ॥ ००४  ॥

ये चैनं पक्षमाश्रित्य वर्तयन्त्यल्पचेतसः ।
स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते  ॥ ००५  ॥

स्वभावो हि विनाशाय मोहकर्ममनोभवः ।
निरुक्तमेतयोरेतत्स्वभावपरभावयोः  ॥ ००६  ॥

कृष्यादीनि हि कर्माणि सस्यसंहरणानि च ।
प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च  ॥ ००७  ॥

आक्रीडानां गृहाणां च गदानामगदस्य च ।
प्रज्ञावन्तः प्रवक्तारो ज्ञानवद्भिरनुष्ठिताः  ॥ ००८  ॥

प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति ।
राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः  ॥ ००९  ॥

पारावर्यं तु भूतानां ज्ञानेनैवोपलभ्यते ।
विद्यया तात सृष्टानां विद्यैव परमा गतिः  ॥ ०१०  ॥

भूतानां जन्म सर्वेषां विविधानां चतुर्विधम् ।
जराय्वण्डमथोद्भेदं स्वेदं चाप्युपलक्षयेत्  ॥ ०११  ॥

स्थावरेभ्यो विशिष्टानि जङ्गमान्युपलक्षयेत् ।
उपपन्नं हि यच्चेष्टा विशिष्येत विशेष्ययोः ॥ ०१२ ॥

आहुर्द्विबहुपादानि जङ्गमानि द्वयानि च ।
बहुपाद्भ्यो विशिष्टानि द्विपादानि बहून्यपि ॥ ०१३ ॥

द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च ।
पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ ०१४ ॥

पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि च ।
मध्यमानि विशिष्टानि जातिधर्मोपधारणात् ॥ ०१५ ॥

मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणि च ।
धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ ०१६ ॥

धर्मज्ञानि द्वयान्याहुर्वेदज्ञानीतराणि च ।
वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ ०१७ ॥

वेदज्ञानि द्वयान्याहुः प्रवक्तृणीतराणि च ।
प्रवक्तृणि विशिष्टानि सर्वधर्मोपधारणात् ॥ ०१८ ॥

विज्ञायन्ते हि यैर्वेदाः सर्वधर्मक्रियाफलाः ।
सयज्ञाः सखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ॥ ०१९ ॥

प्रवक्तृणि द्वयान्याहुरात्मज्ञानीतराणि च ।
आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् ॥ ०२० ॥

धर्मद्वयं हि यो वेद स सर्वः सर्वधर्मविद् ।
स त्यागी सत्यसङ्कल्पः स तु क्षान्तः स ईश्वरः ॥ ०२१ ॥

धर्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः ।
शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् ॥ ०२२ ॥

अन्तःस्थं च बहिष्ठं च येऽऽधियज्ञाधिदैवतम् ।
जानन्ति तान्नमस्यामस्ते देवास्तात ते द्विजाः ॥ ०२३ ॥

तेषु विश्वमिदं भूतं साग्रं च जगदाहितम् ।
तेषां माहात्म्यभावस्य सदृशं नास्ति किञ्चन ॥ ०२४ ॥

आदिं ते निधनं चैव कर्म चातीत्य सर्वशः ।
चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयंभुवः ॥ ०२५ ॥

---

# अध्याय २३०

व्यास उवाच ॥

एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवानेव कर्माणि कुर्वन्सर्वत्र सिध्यति ॥ ००१ ॥

तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।
किं नु कर्म स्वभावोऽयं ज्ञानं कर्मेति वा पुनः ॥ ००२ ॥

तत्र चेह विवित्सा स्याज्ज्ञानं चेत्पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥ ००३ ॥

पौरुषं कारणं केचिदाहुः कर्मसु मानवाः ।
दैवमेके प्रशंसन्ति स्वभावं चापरे जनाः ॥ ००४ ॥

पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रयमेतत्पृथग्भूतमविवेकं तु केचन ॥ ००५ ॥

एवमेतन्न चाप्येवमुभे चापि न चाप्युभे ।
कर्मस्था विषमं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥ ००६ ॥

त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः ।
तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे ॥ ००७ ॥

अपृथग्दर्शिनः सर्वे ऋक्सामसु यजुःषु च ।
कामद्वेषौ पृथग्दृष्ट्वा तपः कृत उपासते ॥ ००८ ॥

तपोधर्मेण संयुक्तस्तपोनित्यः सुसंशितः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ००९ ॥

तपसा तदवाप्नोति यद्भूत्वा सृजते जगत् ।
तद्भूतश्च ततः सर्वो भूतानां भवति प्रभुः ॥ ०१० ॥

तदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
वेदान्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ॥ ०११ ॥

आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥ ०१२ ॥

परिनिष्ठितकार्यो हि स्वाध्यायेन द्विजो भवेत् ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ०१३ ॥

त्रेतादौ सकला वेदा यज्ञा वर्णाश्रमास्तथा ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ ०१४ ॥

द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा ।

दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः पुनः ॥ ०१५ ॥

उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः ।
गवां भूमेश्च ये चापामोषधीनां च ये रसाः ॥ ०१६ ॥

अधर्मान्तर्हिता वेदा वेदधर्मास्तथाश्रमाः ।
विक्रियन्ते स्वधर्मस्थाः स्थावराणि चराणि च ॥ ०१७ ॥

यथा सर्वाणि भूतानि वृष्टिर्भौमानि वर्षति ।
सृजते सर्वतोऽङ्गानि तथा वेदा युगे युगे ॥ ०१८ ॥

विसृतं कालनानात्वमनादिनिधनं च यत् ।
कीर्तितं तत्पुरस्तान्मे यतः संयान्ति यान्ति च ॥ ०१९ ॥

धातेदं प्रभवस्थानं भूतानां संयमो यमः ।
स्वभावेन प्रवर्तन्ते द्वंद्वसृष्टानि भूरिशः ॥ ०२० ॥

सर्गः कालो धृतिर्वेदाः कर्ता कार्यं क्रिया फलम् ।
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ॥ ०२१ ॥

---

# अध्याय २३१

भीष्म उवाच ॥

इत्युक्तोऽभिप्रशस्यैतत्परमर्षेस्तु शासनम् ।
मोक्षधर्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे ॥ ००१ ॥

शुक उवाच ॥

प्रजावाञ्श्रोत्रियो यज्वा वृद्धः प्रज्ञोऽनसूयकः ।
अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति ॥ ००२ ॥

तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया ।
सांख्ये वा यदि वा योगे एतत्पृष्टोऽभिधत्स्व मे ॥ ००३ ॥

मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं समवाप्यते ।
येनोपायेन पुरुषैस्तच्च व्याख्यातुमर्हसि ॥ ००४ ॥

व्यास उवाच ॥

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र सर्वसंत्यागात्सिद्धिं विन्दति कश्चन ॥ ००५ ॥

महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः ।
भूयिष्ठं प्राणभृद्ग्रामे निविष्टानि शरीरिषु ॥ ००६ ॥

भूमेर्देहो जलात्सारो ज्योतिषश्चक्षुषी स्मृते ।
प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणाम् ॥ ००७ ॥

क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भुक्तमर्छति ।
कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक्सरस्वती ॥ ००८ ॥

कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
दर्शनानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये ॥ ००९ ॥

शब्दं स्पर्शं तथा रूपं रसं गन्धं च पञ्चमम् ।
इन्द्रियाणि पृथक्त्वर्थान्मनसो दर्शयन्त्युत ॥ ०१० ॥

इन्द्रियाणि मनो युङ्क्ते वश्यान्यन्तेव वाजिनः ।
मनश्चापि सदा युङ्क्ते भूतात्मा हृदयाश्रितः ॥ ०११ ॥

इन्द्रियाणां तथैवेषां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मनसस्तथा ॥ ०१२ ॥

इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ ०१३ ॥

आश्रयो नास्ति सत्त्वस्य गुणशब्दो न चेतना ।
सत्त्वं हि तेजः सृजति न गुणान्वै कदाचन ॥ ०१४ ॥

एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।
मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥ ०१५ ॥

न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः ।
मनसा संप्रदीप्तेन महानात्मा प्रकाशते ॥ ०१६ ॥

अशब्दस्पर्शरूपं तदरसागन्धमव्ययम् ।
अशरीरं शरीरे स्वे निरीक्षेत निरिन्द्रियम् ॥ ०१७ ॥

अव्यक्तं व्यक्तदेहेषु मर्त्येष्वमरमाश्रितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ ०१८ ॥

विद्याभिजनसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ ०१९ ॥

स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ।
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ ०२० ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।

यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥ ०२१ ॥

यावानात्मनि वेदात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ ०२२ ॥

सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ०२३ ॥

शकुनीनामिवाकाशे जले वारिचरस्य वा ।
यथा गतिर्न दृश्येत तथैव सुमहात्मनः ॥ ०२४ ॥

कालः पचति भूतानि सर्वाण्येवात्मनात्मनि ।
यस्मिंस्तु पच्यते कालस्तं न वेदेह कश्चन ॥ ०२५ ॥

न तदूर्ध्वं न तिर्यक्क नाधो न च तिरः पुनः ।
न मध्ये प्रतिगृह्णीते नैव कश्चित्कुतश्चन ॥ ०२६ ॥

सर्वेऽन्तःस्था इमे लोका बाह्यमेषां न किञ्चन ।
यः सहस्रं समागच्छेद्यथा बाणो गुणच्च्युतः ॥ ०२७ ॥

नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ।
तस्मात्सूक्ष्मात्सूक्ष्मतरं नास्ति स्थूलतरं ततः ॥ ०२८ ॥

सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ०२९ ॥

तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ ०३० ॥

अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
क्षरः सर्वेषु भूतेषु दिव्यं ह्यमृतमक्षरम् ॥ ०३१ ॥

नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ ०३२ ॥

हानिभङ्गविकल्पानां नवानां संश्रयेण च ।
शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ॥ ०३३ ॥

हंसोक्तं चाक्षरं चैव कूटस्थं यत्तदक्षरम् ।
तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ॥ ०३४ ॥

---

# अध्याय २३२

व्यास उवाच ॥

पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः ।
सांख्यन्यायेन संयुक्तं यदेतत्कीर्तितं मया ॥ ००१ ॥

योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु ।
एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ॥ ००२ ॥

आत्मनो ध्यायिनस्तात ज्ञानमेतदनुत्तमम् ॥ ००२ ॥

तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना ।
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा ॥ ००३ ॥

योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः ।
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ॥ ००४ ॥

क्रोधं शमेन जयति कामं सङ्कल्पवर्जनात् ।
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ॥ ००५ ॥

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुः श्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ ००६ ॥

अप्रमादाद्भयं जह्याल्लोभं प्राज्ञोपसेवनात् ।
एवमेतान्योगदोषाञ्जयेन्नित्यमतन्द्रितः ॥ ००७ ॥

अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च ।
वर्जयेद्रुषितां वाचं हिंसायुक्तां मनोनुगाम् ॥ ००८ ॥

ब्रह्म तेजोमयं शुक्रं यस्य सर्वमिदं रसः ।
एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमम् ॥ ००९ ॥

ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारसंशुद्धिरिन्द्रियाणां च निग्रहः ॥ ०१० ॥

एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ।
सिध्यन्ति चास्य सर्वार्था विज्ञानं च प्रवर्तते ॥ ०११ ॥

समः सर्वेषु भूतेषु लब्धालब्धेन वर्तयन् ।
धुतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः ॥ ०१२ ॥

कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ०१२ ॥

मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ।
प्राग्रात्रापररात्रेषु धारयेन्मन आत्मना ॥ ०१३ ॥

जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम् ।

ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम्  ॥ ०१४  ॥

मनस्तु पूर्वमादद्यात्कुमीनानिव मत्स्यहा ।
ततः श्रोत्रं ततश्चक्षुर्जिह्वां घ्राणं च योगवित्  ॥ ०१५  ॥

तत एतानि संयम्य मनसि स्थापयेद्यतिः ।
तथैवापोह्य सङ्कल्पान्मनो ह्यात्मनि धारयेत्  ॥ ०१६  ॥

पञ्च ज्ञानेन संधाय मनसि स्थापयेद्यतिः ।
यदैतान्यवतिष्ठन्ते मनःषष्ठानि चात्मनि  ॥ ०१७  ॥

प्रसीदन्ति च संस्थाय तदा ब्रह्म प्रकाशते  ॥ ०१७  ॥

विधूम इव दीप्तार्चिरादित्य इव दीप्तिमान् ।
वैद्युतोऽग्निरिवाकाशे पश्यत्यात्मानमात्मना  ॥ ०१८  ॥

सर्वं च तत्र सर्वत्र व्यापकत्वाच्च दृश्यते  ॥ ०१८  ॥

तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ।
धृतिमन्तो महाप्राज्ञाः सर्वभूतहिते रताः  ॥ ०१९  ॥

एवं परिमितं कालमाचरन्संशितव्रतः ।
आसीनो हि रहस्येको गच्छेदक्षरसात्म्यताम्  ॥ ०२०  ॥

प्रमोहो भ्रम आवर्तो घ्राणश्रवणदर्शने ।
अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः  ॥ ०२१  ॥

प्रतिभामुपसर्गांश्चाप्युपसङ्गृह्य योगतः ।
तांस्तत्त्वविदनादृत्य स्वात्मनैव निवर्तयेत्  ॥ ०२२  ॥

कुर्यात्परिचयं योगे त्रैकाल्यं नियतो मुनिः ।

गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजजेत्  ॥ ०२३  ॥

संनियम्येन्द्रियग्रामं गोष्ठे भाण्डमना इव ।
एकाग्रश्चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः  ॥ ०२४  ॥

येनोपायेन शक्येत संनियन्तुं चलं मनः ।
तं तं युक्तो निषेवेत न चैव विचलेत्ततः  ॥ ०२५  ॥

शून्या गिरिगुहाश्चैव देवतायतनानि च ।
शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत्  ॥ ०२६  ॥

नाभिष्वजेत्परं वाचा कर्मणा मनसापि वा ।
उपेक्षको यताहारो लब्धालब्धे समो भवेत्  ॥ ०२७  ॥

यश्चैनमभिनन्देत यश्चैनमपवादयेत् ।
समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम्  ॥ ०२८  ॥

न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत् ।
समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः  ॥ ०२९  ॥

एवं सर्वात्मनः साधोः सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते  ॥ ०३०  ॥

वेदनार्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः ।
एतस्मिन्निरतो मार्गे विरमेन्न विमोहितः  ॥ ०३१  ॥

अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम्  ॥ ०३२  ॥

अजं पुराणमजरं सनातनं; यदिन्द्रियैरुपलभते नरोऽचलः ।
अणोरणीयो महतो महत्तरं; तदात्मना पश्यति युक्त आत्मवान्  ॥ ०३३  ॥

इदं महर्षेर्वचनं महात्मनो ; यथावदुक्तं मनसानुदृश्य च ।
अवेक्ष्य चेयात्परमेष्ठिसात्म्यतां ; प्रयान्ति यां भूतगतिं मनीषिणः ॥ ०३४ ॥

---

# अध्याय २३३

शुक उवाच ॥

यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ ००१ ॥

एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
एतत्त्वन्योन्यवैरूप्ये वर्तते प्रतिकूलतः ॥ ००२ ॥

भीष्म उवाच ॥

इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥ ००३ ॥

यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमनाः पुत्र गह्वरं ह्येतदन्तरम् ॥ ००४ ॥

अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥ ००५ ॥

द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च सुभाषितः ॥ ००६ ॥

कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ००७ ॥

कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यव्ययात्मकः ॥ ००८ ॥

कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितरा नराः ।
तेन ते देहजालानि रमयन्त उपासते ॥ ००९ ॥

ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ ०१० ॥

कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ०११ ॥

यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ ०१२ ॥

यत्र तद्ब्रह्म परममव्यक्तमजरं ध्रुवम् ।
अव्याहतमनायासममृतं चावियोगि च ॥ ०१३ ॥

द्वंद्वैर्यत्र न बाध्यन्ते मानसेन च कर्मणा ।
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ ०१४ ॥

विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः ।
विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ॥ ०१५ ॥

तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते ।
नवजं शशिनं दृष्ट्वा वक्रं तन्तुमिवाम्बरे ॥ ०१६ ॥

एकादशविकारात्मा कलासंभारसंभृतः ।

मूर्तिमानिति तं विद्धि तात कर्मगुणात्मकम्  ॥ ०१७  ॥

देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीयान्नित्यं त्यागजितात्मकम्  ॥ ०१८  ॥

तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ।
जीवमात्मगुणं विद्यादात्मानं परमात्मनः  ॥ ०१९  ॥

सचेतनं जीवगुणं वदन्ति ; स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति ; प्रावर्तयद्यो भुवनानि सप्त  ॥ ०२०  ॥

---

# अध्याय २३४

शुक उवाच  ॥

क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च ।
बुद्ध्यैश्वर्याभिसर्गार्थं यद्ध्यानं चात्मनः शुभम्  ॥ ००१  ॥

भूय एव तु लोकेऽस्मिन्सद्वृत्तिं वृत्तिहैतुकीम् ।
यया सन्तः प्रवर्तन्ते तदिच्छाम्यनुवर्णितम्  ॥ ००२  ॥

वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि  ॥ ००३  ॥

लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् ।
कृत्वा बुद्धिं वियुक्तात्मा त्यक्ष्याम्यात्मानमव्यथः  ॥ ००४  ॥

व्यास उवाच ॥

यैषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ ००५ ॥

ब्रह्मचर्येण वै लोकाञ्जयन्ति परमर्षयः ।
आत्मनश्च हृदि श्रेयस्त्वन्विच्छ मनसात्मनि ॥ ००६ ॥

वने मूलफलाशी च तप्यन्सुविपुलं तपः ।
पुण्यायतनचारी च भूतानामविहिंसकः ॥ ००७ ॥

विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये ।
काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे ॥ ००८ ॥

निःस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
अरण्ये विचरैकाकी येन केनचिदाशितः ॥ ००९ ॥

शुक उवाच ॥

यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥ ०१० ॥

इत्येतच्छ्रोतुमिच्छामि भगवान्प्रब्रवीतु मे ।
कर्मणामविरोधेन कथमेतत्प्रवर्तते ॥ ०११ ॥

भीष्म उवाच ॥

इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम् ।
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः ॥ ०१२ ॥

गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।

यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम्  ॥ ०१३  ॥

एको य आश्रमानेताननुतिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तः स परत्र महीयते  ॥ ०१४  ॥

चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते  ॥ ०१५  ॥

आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः  ॥ ०१६  ॥

कर्मातिरेकेण गुरोरध्येतव्यं बुभूषता ।
दक्षिणो नापवादी स्यादाहूतो गुरुमाश्रयेत्  ॥ ०१७  ॥

जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः  ॥ ०१८  ॥

कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ।
किङ्करः सर्वकारी च सर्वकर्मसु कोविदः  ॥ ०१९  ॥

शुचिर्दक्षो गुणोपेतो ब्रूयादिषुरिवात्वरः ।
चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः  ॥ ०२०  ॥

नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ।
न तिष्ठति तथासीत नासुप्ते प्रस्वपेत च  ॥ ०२१  ॥

उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत्  ॥ ०२२  ॥

अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति ।
इदं करिष्ये भगवन्निदं चापि कृतं मया  ॥ ०२३  ॥

इति सर्वमनुज्ञाप्य निवेद्य गुरवे धनम् ।
कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे पुनः ॥ ०२४ ॥

यांस्तु गन्धान्रसान्वापि ब्रह्मचारी न सेवते ।
सेवेत तान्समावृत्त इति धर्मेषु निश्चयः ॥ ०२५ ॥

ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः ।
तान्सर्वाननुगृह्णीयाद्भवेच्चानपगो गुरोः ॥ ०२६ ॥

स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् ।
आश्रमेष्वाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा ॥ ०२७ ॥

वेदव्रतोपवासेन चतुर्थे चायुषो गते ।
गुरवे दक्षिणां दत्त्वा समावर्तेद्यथाविधि ॥ ०२८ ॥

धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य धर्मतः ।
द्वितीयमायुषो भागं गृहमेधिव्रती भवेत् ॥ ०२९ ॥

---

# अध्याय २३५

व्यास उवाच ॥

द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य सुव्रतः ॥ ००१ ॥

गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः ।

कुसूलधान्यः प्रथमः कुम्भीधान्यस्त्वनन्तरम् ॥ ००२ ॥

अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् ।
तेषां परः परो ज्यायान्धर्मतो लोकजित्तमः ॥ ००३ ॥

षट्कर्मा वर्तयत्येकस्त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ॥ ००४ ॥

गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ॥ ००४ ॥

नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
प्राणी वा यदि वाप्राणी संस्कारं यजुषार्हति ॥ ००५ ॥

न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ।
न भुञ्जीतान्तराकाले नानृतावाह्वयेत्स्त्रियम् ॥ ००६ ॥

नास्यानश्नन्वसेद्विप्रो गृहे कश्चिदपूजितः ।
तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा ॥ ००७ ॥

वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ॥ ००८ ॥

तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते ॥ ००८ ॥

न खरैः संप्रयातस्य स्वधर्माज्ञानकस्य च ।
अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः ॥ ००९ ॥

संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ०१० ॥

विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ।

अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम्  ॥ ०११  ॥

भृत्यशेषं तु योऽश्नाति तमाहुर्विघसाशिनम्  ॥ ०११  ॥

स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ।
ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः  ॥ ०१२  ॥

वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिबान्धवैः ।
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भार्यया  ॥ ०१३  ॥

दुहित्रा दासवर्गेण विवादं न समाचरेत् ।
एतान्विमुच्य संवादान्सर्वपापैः प्रमुच्यते  ॥ ०१४  ॥

एतैर्जितैस्तु जयति सर्वा.ण्ल्लोकान्न संशयः ।
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः  ॥ ०१५  ॥

अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः  ॥ ०१६  ॥

संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ।
वृद्धबालातुरकृशास्त्वाकाशे प्रभविष्णवः  ॥ ०१७  ॥

भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ।
छाया स्वा दाशवर्गस्तु दुहिता कृपणं परम्  ॥ ०१८  ॥

तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसञ्ज्वरः ।
गृहधर्मरतो विद्वान्धर्मनित्यो जितक्लमः  ॥ ०१९  ॥

न चार्थबद्धः कर्माणि धर्मं वा कञ्चिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम्  ॥ ०२०  ॥

परस्परं तथैवाहुश्चातुराश्रम्यमेव तत् ।
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता ॥ ०२१ ॥

कुम्भीधान्यैरुञ्छशिलैः कापोतीं चास्थितैस्तथा ।
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते ॥ ०२२ ॥

दश पूर्वान्दश परान्पुनाति च पितामहान् ।
गृहस्थवृत्तयस्त्वेता वर्तयेद्यो गतव्यथः ॥ ०२३ ॥

स चक्रचरलोकानां सदृशीं प्राप्नुयाद्गतिम् ।
यतेन्द्रियाणामथ वा गतिरेषा विधीयते ॥ ०२४ ॥

स्वर्गलोको गृहस्थानामुदारमनसां हितः ।
स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः ॥ ०२५ ॥

स्वर्गलोके गृहस्थानां प्रतिष्ठा नियतात्मनाम् ।
ब्रह्मणा विहिता श्रेणिरेषा यस्मात्प्रमुच्यते ॥ ०२६ ॥

द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ ०२६ ॥

अतः परं परममुदारमाश्रमं ; तृतीयमाहुस्त्यजतां कलेवरम् ।
वनौकसां गृहपतिनामनुत्तमं ; शृणुष्वैतत्क्लिष्टशरीरकारिणाम् ॥ ०२७ ॥

---

# अध्याय २३६

भीष्म उवाच ॥

प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिणाम् ।
तदनन्तरमुक्तं यत्तन्निबोध युधिष्ठिर ॥ ००१ ॥

क्रमशस्त्ववधूयैनां तृतीयां वृत्तिमुत्तमाम् ।
संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् ॥ ००२ ॥

श्रूयतां पार्थ भद्रं ते सर्वलोकाश्रयात्मनाम् ।
प्रेक्षापूर्वं प्रवृत्तानां पुण्यदेशनिवासिनाम् ॥ ००३ ॥

व्यास उवाच ॥

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ॥ ००४ ॥

तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन्परिचरेद्यजमानो दिवौकसः ॥ ००५ ॥

नियतो नियताहारः षष्ठभक्तोऽप्रमादवान् ।
तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ॥ ००६ ॥

अकृष्टं वै व्रीहियवं नीवारं विघसानि च ।
हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ॥ ००७ ॥

वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः ।
सद्यःप्रक्षालकाः केचित्केचिन्मासिकसञ्चयाः ॥ ००८ ॥

वार्षिकं सञ्चयं केचित्केचिद्द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थसिद्धये ॥ ००९ ॥

अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः ।
ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः ॥ ०१० ॥

भूमौ विपरिवर्तन्ते तिष्ठेद्वा प्रपदैरपि ।
स्थानासनैर्वर्तयन्ति सवनेष्वभिषिञ्चते ॥ ०११ ॥

दन्तोलूखलिनः केचिदश्मकुट्टास्तथापरे ।
शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत् ॥ ०१२ ॥

कृष्णपक्षे पिबन्त्येके भुञ्जते च यथाक्रमम् ।
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ॥ ०१३ ॥

वर्तयन्ति यथान्यायं वैखानसमतं श्रिताः ।
एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् ॥ ०१४ ॥

चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः ।
वानप्रस्थो गृहस्थश्च ततोऽन्यः संप्रवर्तते ॥ ०१५ ॥

अस्मिन्नेव युगे तात विप्रैः सर्वार्थदर्शिभिः ।
अगस्त्यः सप्त ऋषयो मधुच्छन्दोऽघमर्षणः ॥ ०१६ ॥

साङ्कृतिः सुदिवा तण्डिर्यवान्नोऽथ कृतश्रमः ।
अहोवीर्यस्तथा काव्यस्ताण्ड्यो मेधातिथिर्बुधः ॥ ०१७ ॥

शलो वाकश्च निर्वाकः शून्यपालः कृतश्रमः ।
एवंधर्मसु विद्वांसस्ततः स्वर्गमुपागमन् ॥ ०१८ ॥

तात प्रत्यक्षधर्माणस्तथा यायावरा गणाः ।
ऋषीणामुग्रतपसां धर्मनैपुणदर्शिनाम् ॥ ०१९ ॥

अवाच्यापरिमेयाश्च ब्राह्मणा वनमाश्रिताः ।
वैखानसा वालखिल्याः सिकताश्च तथापरे ॥ ०२० ॥

कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः ।
गताः प्रत्यक्षधर्माणस्ते सर्वे वनमाश्रिताः ॥ ०२१ ॥

अनक्षत्रा अनाधृष्या दृश्यन्ते ज्योतिषां गणाः ॥ ०२१ ॥

जरया च परिद्यूनो व्याधिना च प्रपीडितः ।
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ॥ ०२२ ॥

सद्यस्कारां निरूप्येष्टिं सर्ववेदसदक्षिणाम् ॥ ०२२ ॥

आत्मयाजी सोऽऽत्मरतिरात्मक्रीडात्मसंश्रयः ।
आत्मन्यग्नीन्समारोप्य त्यक्त्वा सर्वपरिग्रहान् ॥ ०२३ ॥

सद्यस्क्रांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा ।
सदैव याजिनां यज्ञादात्मनीज्या निवर्तते ॥ ०२४ ॥

त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्ममोक्षणात् ।
प्राणेभ्यो यजुषा पञ्च षड्ग्राश्नीयादकुत्सयन् ॥ ०२५ ॥

केशलोमनखान्वाप्य वानप्रस्थो मुनिस्ततः ।
आश्रमादाश्रमं सद्यः पूतो गच्छति कर्मभिः ॥ ०२६ ॥

अभयं सर्वभूतेभ्यो यो दत्त्वा प्रव्रजेद्द्विजः ।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ ०२७ ॥

सुशीलवृत्तो व्यपनीतकल्मषो ; न चेह नामुत्र च कर्तुमीहते ।
अरोषमोहो गतसंधिविग्रहो ; भवेदुदासीनवदात्मविन्नरः ॥ ०२८ ॥

यमेषु चैवात्मगतेषु न व्यथे ;त्स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः ।
भवेद्यथेष्टा गतिरात्मयाजिनो ; न संशयो धर्मपरे जीतेन्द्रिये ॥ ०२९ ॥

ततः परं श्रेष्ठमतीव सद्गुणै ;रधिष्ठितं त्रीनधिवृत्तमुत्तमम् ।
चतुर्थमुक्तं परमाश्रमं शृणु ; प्रकीर्त्यमानं परमं परायणम्  ॥ ०३०  ॥

---

# अध्याय २३७

शुक उवाच  ॥

वर्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा ।
योक्तव्योऽऽत्मा यथा शक्त्या परं वै काङ्क्षता पदम्  ॥ ००१  ॥

व्यास उवाच  ॥

प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम् ।
यत्कार्यं परमार्थार्थं तदिहैकमनाः शृणु  ॥ ००२  ॥

कषायं पाचयित्वा तु श्रेणिस्थानेषु च त्रिषु ।
प्रव्रजेच्च परं स्थानं परिव्रज्यामनुत्तमाम्  ॥ ००३  ॥

तद्भवानेवमभ्यस्य वर्ततां श्रूयतां तथा ।
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायवान्  ॥ ००४  ॥

एकश्चरति यः पश्यन्न जहाति न हीयते ।
अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेत्  ॥ ००५  ॥

अश्वस्तनविधानः स्यान्मुनिर्भावसमन्वितः ।
लघ्वाशी नियताहारः सकृदन्ननिषेविता  ॥ ००६  ॥

कपालं वृक्षमूलानि कुचेलमसहायता ।

उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम्  ॥ ००७  ॥

यस्मिन्वाचः प्रविशन्ति कूपे प्राप्ताः शिला इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत्  ॥ ००८  ॥

नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथञ्चन  ॥ ००९  ॥

यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन्भेषजमात्मनः  ॥ ०१०  ॥

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः  ॥ ०११  ॥

येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी च तं देवा ब्राह्मणं विदुः  ॥ ०१२  ॥

अहेरिव गणाद्भीतः सौहित्यान्नरकादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः  ॥ ०१३  ॥

न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः  ॥ ०१४  ॥

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा  ॥ ०१५  ॥

अनभ्याहतचित्तः स्यादनभ्याहतवाक्तथा ।
निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम्  ॥ ०१६  ॥

अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन  ॥ ०१७  ॥

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ ०१८ ॥

एवं सर्वमहिंसायां धर्मार्थमपिधीयते ।
अमृतः स नित्यं वसति योऽहिंसां प्रतिपद्यते ॥ ०१९ ॥

अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः ।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ ०२० ॥

एवं प्रज्ञानतृप्तस्य निर्भयस्य मनीषिणः ।
न मृत्युरतिगो भावः स मृत्युमधिगच्छति ॥ ०२१ ॥

विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥ ०२२ ॥

जीवितं यस्य धर्मार्थं धर्मोऽरत्यर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ ०२३ ॥

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ०२४ ॥

सर्वाणि भूतानि सुखे रमन्ते ; सर्वाणि दुःखस्य भृशं त्रसन्ति ।
तेषां भयोत्पादनजातखेदः ; कुर्यान्न कर्माणि हि श्रद्दधानः ॥ ०२५ ॥

दानं हि भूताभयदक्षिणायाः ; सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णां तनुं यः प्रथमं जहाति ; सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः ॥ ०२६ ॥

उत्तान आस्येन हविर्जुहोति ; लोकस्य नाभिर्जगतः प्रतिष्ठा ।
तस्याङ्गमङ्गानि कृताकृतं च ; वैश्वानरः सर्वमेव प्रपेदे ॥ ०२७ ॥

प्रादेशमात्रे हृदि निश्रितं य ;त्तस्मिन्प्राणानात्मयाजी जुहोति ।
तस्याग्निहोत्रं हुतमात्मसंस्थं ; सर्वेषु लोकेषु सदैवतेषु ॥ ०२८ ॥

दैवं त्रिधातुं त्रिवृतं सुपर्णं ; ये विद्युरग्र्यं परमार्थतां च ।
ते सर्वलोकेषु महीयमाना ; देवाः समर्थाः सुकृतं व्रजन्ति ॥ ०२९ ॥

वेदांश्च वेद्यं च विधिं च कृत्स्न ;मथो निरुक्तं परमार्थतां च ।
सर्वं शरीरात्मनि यः प्रवेद ; तस्मै स्म देवाः स्पृहयन्ति नित्यम् ॥ ०३० ॥

भूमावसक्तं दिवि चाप्रमेयं ; हिरण्मयं योऽण्डजमण्डमध्ये ।
पतत्रिणं पक्षिणमन्तरिक्षे ; यो वेद भोग्यात्मनि दीप्तरश्मिः ॥ ०३१ ॥

आवर्तमानमजरं विवर्तनं ; षण्णेमिकं द्वादशारं सुपर्व ।
यस्येदमास्ये परियाति विश्वं ; तत्कालचक्रं निहितं गुहायाम् ॥ ०३२ ॥

यः संप्रसादं जगतः शरीरं ; सर्वान्स लोकानधिगच्छतीह ।
तस्मिन्हुतं तर्पयतीह देवां ;स्ते वै तृप्तास्तर्पयन्त्यास्यमस्य ॥ ०३३ ॥

तेजोमयो नित्यतनुः पुराणो ; लोकाननन्तानभयानुपैति ।
भूतानि यस्मान्न त्रसन्ते कदा चि ;त्स भूतेभ्यो न त्रसते कदाचित् ॥ ०३४ ॥

अगर्हणीयो न च गर्हतेऽन्या ;न्स वै विप्रः परमात्मानमीक्षेत् ।
विनीतमोहो व्यपनीतकल्मषो ; न चेह नामुत्र च योऽर्थमृच्छति ॥ ०३५ ॥

अरोषमोहः समलोष्टकाञ्चनः ; प्रहीणशोको गतसंधिविग्रहः ।
अपेतनिन्दास्तुतिरप्रियाप्रिय ;श्चरन्नुदासीनवदेष भिक्षुकः ॥ ०३६ ॥

# अध्याय २३८

व्यास उवाच ॥

प्रकृतेस्तु विकारा ये क्षेत्रज्ञस्तैः परिश्रितः ।
ते चैनं न प्रजानन्ति स तु जानाति तानपि ॥ ००१ ॥

तैश्चैष कुरुते कार्यं मनःषष्ठैरिहेन्द्रियैः ।
सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥ ००२ ॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ ००३ ॥

महतः परमव्यक्तमव्यक्तात्परतोऽमृतम् ।
अमृतान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ००४ ॥

एवं सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ॥ ००५ ॥

अन्तरात्मनि संलीय मनःषष्ठानि मेधया ।
इन्द्रियाणीन्द्रियार्थांश्च बहु चिन्त्यमचिन्तयन् ॥ ००६ ॥

ध्यानोपरमणं कृत्वा विद्यासंपादितं मनः ।
अनीश्वरः प्रशान्तात्म ततोऽर्छत्यमृतं पदम् ॥ ००७ ॥

इन्द्रियाणां तु सर्वेषां वश्यात्मा चलितस्मृतिः ।
आत्मनः संप्रदानेन मर्त्यो मृत्युमुपाश्नुते ॥ ००८ ॥

हित्वा तु सर्वसङ्कल्पान्सत्त्वे चित्तं निवेशयेत् ।
सत्त्वे चित्तं समावेश्य ततः कालञ्जरो भवेत् ॥ ००९ ॥

चित्तप्रसादेन यतिर्जहाति हि शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ ०१० ॥

लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥ ०११ ॥

एवं पूर्वापरे रात्रे युञ्जन्नात्मानमात्मना ।
सत्त्वाहारविशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ०१२ ॥

रहस्यं सर्ववेदानामनैतिह्यमनागमम् ।
आत्मप्रत्ययिकं शास्त्रमिदं पुत्रानुशासनम् ॥ ०१३ ॥

धर्माख्यानेषु सर्वेषु सत्याख्यानेषु यद्वसु ।
दशेदमृक्सहस्राणि निर्मथ्यामृतमुद्धृतम् ॥ ०१४ ॥

नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च ।
तथैव विदुषां ज्ञानं पुत्रहेतोः समुद्धृतम् ॥ ०१५ ॥

स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् ॥ ०१५ ॥

तदिदं नाप्रशान्ताय नादान्तायातपस्विने ।
नावेदविदुषे वाच्यं तथा नानुगताय च ॥ ०१६ ॥

नासूयकायानृजवे न चानिर्दिष्टकारिणे ।
न तर्कशास्त्रदग्धाय तथैव पिशुनाय च ॥ ०१७ ॥

श्लाघते श्लाघनीयाय प्रशान्ताय तपस्विने ।
इदं प्रियाय पुत्राय शिष्यायानुगताय च ॥ ०१८ ॥

रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथञ्चन ॥ ०१८ ॥

यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः ।
इदमेव ततः श्रेय इति मन्येत तत्त्ववित् ॥ ०१९ ॥

अतो गुह्यतरार्थं तदध्यात्ममतिमानुषम् ।
यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते ॥ ०२० ॥

तत्तेऽहं संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥ ०२० ॥

---

# अध्याय २३९

शुक उवाच ॥

अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे ।
यदध्यात्मं यथा चेदं भगवन्नृषिसत्तम ॥ ००१ ॥

व्यास उवाच ॥

अध्यात्मं यदिदं तात पुरुषस्येह विद्यते ।
तत्तेऽहं संप्रवक्ष्यामि तस्य व्याख्यामिमां श्रृणु ॥ ००२ ॥

भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च ।
महाभूतानि भूतानां सागरस्योर्मयो यथा ॥ ००३ ॥

प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तद्वन्महान्ति भूतानि यवीयःसु विकुर्वते ॥ ००४ ॥

इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम् ।
सर्गे च प्रलये चैव तस्मान्निर्दिश्यते तथा ॥ ००५ ॥

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तात वैषम्यं यस्मिन्यदनुपश्यति ॥ ००६ ॥

शुक उवाच ॥

अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत् ।
इन्द्रियाणि गुणाः केचित्कथं तानुपलक्षयेत् ॥ ००७ ॥

व्यास उवाच ॥

एतत्ते वर्तयिष्यामि यथावदिह दर्शनम् ।
शृणु तत्त्वमिहैकाग्रो यथातत्त्वं यथा च तत् ॥ ००८ ॥

शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ ००९ ॥

रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते ।
रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसाम् ॥ ०१० ॥

घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः ।
एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ॥ ०११ ॥

वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते ।
आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ ०१२ ॥

मनो बुद्धिश्च भावश्च त्रय एतेऽऽत्मयोनिजाः ।
न गुणानतिवर्तन्ते गुणेभ्यः परमा मताः ॥ ०१३ ॥

इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमम् ॥ ०१४ ॥

चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ ०१५ ॥

रजस्तमश्च सत्त्वं च त्रय एते स्वयोनिजाः ।
समाः सर्वेषु भूतेषु तद्गुणेषूपलक्षयेत् ॥ ०१६ ॥

यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति ।
एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति ॥ ०१७ ॥

यदूर्ध्वं पादतलयोरवाङ्मूर्ध्नश्च पश्यति ।
एतस्मिन्नेव कृत्ये वै वर्तते बुद्धिरुत्तमा ॥ ०१८ ॥

गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ ०१९ ॥

तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत् ।
प्रशान्तमिव संशुद्धं सत्त्वं तदुपधारयेत् ॥ ०२० ॥

यत्तु संतापसंयुक्तं काये मनसि वा भवेत् ।
रजः प्रवर्तकं तत्स्यात्सततं हारि देहिनाम् ॥ ०२१ ॥

यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्यताम् ॥ ०२२ ॥

प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता ।
अकस्माद्यदि वा कस्माद्वर्तते सात्त्विको गुणः ॥ ०२३ ॥

अभिमानो मृषावादो लोभो मोहस्तथाक्षमा ।
लिङ्गानि रजसस्तानि वर्तन्ते हेत्वहेतुतः ॥ ०२४ ॥

तथा मोहः प्रमादश्च तन्द्री निद्राप्रबोधिता ।
कथञ्चिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः ॥ ०२५ ॥

---

# अध्याय २४०

व्यास उवाच ॥

मनः प्रसृजते भावं बुद्धिरध्यवसायिनी ।
हृदयं प्रियाप्रिये वेद त्रिविधा कर्मचोदना ॥ ००१ ॥

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः ॥ ००२ ॥

बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनोऽऽत्मिका ।
यदा विकुरुते भावं तदा भवति सा मनः ॥ ००३ ॥

इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियते ह्यणु ।
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥ ००४ ॥

पश्यन्ती भवते दृष्टी रसती रसनं भवेत् ।
जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥ ००५ ॥

इन्द्रियाणीति तान्याहुस्तेष्वदृश्याधितिष्ठति ।
तिष्ठती पुरुषे बुद्धिस्त्रिषु भावेषु वर्तते ॥ ००६ ॥

कदाचिल्लभते प्रीतिं कदाचिदपि शोचते ।
न सुखेन न दुःखेन कदाचिदिह युज्यते ॥ ००७ ॥

सेयं भावात्मिका भावांस्त्रीनेतानतिवर्तते ।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥ ००८ ॥

यदा प्रार्थयते किञ्चित्तदा भवति सा मनः ।
अधिष्ठानानि वै बुद्ध्या पृथगेतानि संस्मरेत् ॥ ००९ ॥

इन्द्रियाण्येव मेध्यानि विजेतव्यानि कृत्स्नशः ॥ ००९ ॥

सर्वाण्येवानुपूर्व्येण यद्यन्नानुविधीयते ।
अविभागगता बुद्धिर्भावे मनसि वर्तते ॥ ०१० ॥

प्रवर्तमानं तु रजः सत्त्वमप्यनुवर्तते ॥ ०१० ॥

ये चैव भावा वर्तन्ते सर्व एष्वेव ते त्रिषु ।
अन्वर्थाः संप्रवर्तन्ते रथनेमिमरा इव ॥ ०११ ॥

प्रदीपार्थं नरः कुर्यादिन्द्रियैर्बुद्धिसत्तमैः ।
निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया ॥ ०१२ ॥

एवंस्वभावमेवेदमिति विद्वान्न मुह्यति ।
अशोचन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ०१३ ॥

न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्तमानैरनये दुर्धरैरकृतात्मभिः ॥ ०१४ ॥

तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति ।
तदा प्रकाशते ह्यात्मा घटे दीप इव ज्वलन् ॥ ०१५ ॥

सर्वेषामेव भूतानां तमस्यपगते यथा ॥ ०१५ ॥

यथा वारिचरः पक्षी न लिप्यति जले चरन् ।

एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् ॥ ०१६ ॥

असज्जमानः सर्वेषु न कथञ्चन लिप्यते ॥ ०१६ ॥

त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य सदात्मनि ।
सर्वभूतात्मभूतस्य गुणमार्गेष्वसज्जतः ॥ ०१७ ॥

सत्त्वमात्मा प्रसवति गुणान्वापि कदा च न ।
न गुणा विदुरात्मानं गुणान्वेद स सर्वदा ॥ ०१८ ॥

परिद्रष्टा गुणानां स स्रष्टा चैव यथातथम् ।
सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ॥ ०१९ ॥

सृजते तु गुणानेक एको न सृजते गुणान् ।
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ॥ ०२० ॥

यथा मत्स्योऽद्भिरन्यः सन्संप्रयुक्तौ तथैव तौ ।
मशकोदुम्बरौ चापि संप्रयुक्तौ यथा सह ॥ ०२१ ॥

इषीका वा यथा मुञ्जे पृथक्च सह चैव च ।
तथैव सहितावेतावन्योन्यस्मिन्प्रतिष्ठितौ ॥ ०२२ ॥

---

# अध्याय २४१

व्यास उवाच ॥

सृजते तु गुणान्सत्त्वं क्षेत्रज्ञस्त्वनुतिष्ठति ।

गुणान्विक्रियतः सर्वानुदासीनवदीश्वरः ॥ ००१ ॥

स्वभावयुक्तं तत्सर्वं यदिमान्सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं सृजते तन्तुवद्गुणान् ॥ ००२ ॥

प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ००३ ॥

उभयं संप्रधार्यैतदध्यवस्येद्यथामति ।
अनेनैव विधानेन भवेद्गर्भशयो महान् ॥ ००४ ॥

अनादिनिधनं नित्यमासाद्य विचरेन्नरः ।
अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ००५ ॥

इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
अतीत्य सुखमासीत अशोचंश्छिन्नसंशयः ॥ ००६ ॥

तप्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः ।
अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा ॥ ००७ ॥

न तु ताम्यति वै विद्वान्स्थले चरति तत्त्ववित् ।
एवं यो विन्दतेऽऽत्मानं केवलं ज्ञानमात्मनः ॥ ००८ ॥

एवं बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम् ।
समवेक्ष्य शनैः सम्यग्लभते शममुत्तमम् ॥ ००९ ॥

एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः ।
आत्मज्ञानं शमश्चैव पर्याप्तं तत्परायणम् ॥ ०१० ॥

एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।
विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ ०११ ॥

न भवति विदुषां महद्भयं ; यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकास्ति कस्य चि ;द्भवति हि या विदुषः सनातनी ॥ ०१२ ॥

लोकमातुरमसूयते जन ;स्तत्तदेव च निरीक्ष्य शोचते ।
तत्र पश्य कुशलानशोचतो ; ये विदुस्तदुभयं कृताकृतम् ॥ ०१३ ॥

यत्करोत्यनभिसंधिपूर्वकं ; तच्च निर्णुदति यत्पुरा कृतम् ।
न प्रियं तदुभयं न चाप्रियं ; तस्य तज्जनयतीह कुर्वतः ॥ ०१४ ॥

---

# अध्याय २४२

शुक उवाच ॥

यस्माद्धर्मात्परो धर्मो विद्यते नेह कश्चन ।
यो विशिष्टश्च धर्मेभ्यस्तं भवान्प्रब्रवीतु मे ॥ ००१ ॥

व्यास उवाच ॥

धर्मं ते संप्रवक्ष्यामि पुराणमृषिसंस्तुतम् ।
विशिष्टं सर्वधर्मेभ्यस्तमिहैकमनाः शृणु ॥ ००२ ॥

इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः ।
सर्वतो निष्पतिष्णूनि पिता बालानिवात्मजान् ॥ ००३ ॥

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ ००४ ॥

तानि सर्वाणि संधाय मनःषष्ठानि मेधया ।
आत्मतृप्त इवासीत बहु चिन्त्यमचिन्तयन्  ॥ ००५  ॥

गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि ।
तदा त्वमात्मनात्मानं परं द्रक्ष्यसि शाश्वतम्  ॥ ००६  ॥

सर्वात्मानं महात्मानं विधूममिव पावकम् ।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः  ॥ ००७  ॥

यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ।
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम्  ॥ ००८  ॥

एवमात्मा न जानीते क्व गमिष्ये कुतो न्वहम् ।
अन्यो ह्यत्रान्तरात्मास्ति यः सर्वमनुपश्यति  ॥ ००९  ॥

ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना ।
दृष्ट्वा त्वमात्मनात्मानं निरात्मा भव सर्ववित्  ॥ ०१०  ॥

विमुक्तः सर्वपापेभ्यो मुक्तत्वच इवोरगः ।
परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः  ॥ ०११  ॥

सर्वतःस्रोतसं घोरां नदीं लोकप्रवाहिनीम् ।
पञ्चेन्द्रियग्राहवतीं मनःसङ्कल्परोधसम्  ॥ ०१२  ॥

लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् ।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम्  ॥ ०१३  ॥

अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः ।
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम्  ॥ ०१४  ॥

संसारसागरगमां योनिपातालदुस्तराम् ।

आत्मजन्मोद्भवां तात जिह्वावर्तां दुरासदाम्  ॥ ०१५  ॥

यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ।
तां तीर्णः सर्वतोमुक्तो विपूतात्मात्मविच्छुचिः  ॥ ०१६  ॥

उत्तमां बुद्धिमास्थाय ब्रह्मभूयं गमिष्यसि ।
संतीर्णः सर्वसङ्क्लेशान्प्रसन्नात्मा विकल्मषः  ॥ ०१७  ॥

भूमिष्ठानीव भूतानि पर्वतस्थो निशामय ।
अक्रुध्यन्नप्रहृष्यंश्च ननृशंसमतिस्तथा  ॥ ०१८  ॥

ततो द्रक्ष्यसि भूतानां सर्वेषां प्रभवाप्ययौ  ॥ ०१८  ॥

एवं वै सर्वधर्मेभ्यो विशिष्टं मेनिरे बुधाः ।
धर्मं धर्मभृतां श्रेष्ठ मुनयस्तत्त्वदर्शिनः  ॥ ०१९  ॥

आत्मनोऽव्ययिनो ज्ञात्वा इदं पुत्रानुशासनम् ।
प्रयताय प्रवक्तव्यं हितायानुगताय च  ॥ ०२०  ॥

आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् ।
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा  ॥ ०२१  ॥

नैव स्त्री न पुमानेतन्नैव चेदं नपुंसकम् ।
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम्  ॥ ०२२  ॥

नैतज्ज्ञात्वा पुमान्स्त्री वा पुनर्भवमवाप्नुयात् ।
अभवप्रतिपत्त्यर्थमेतद्वर्त्म विधीयते  ॥ ०२३  ॥

यथा मतानि सर्वाणि न चैतानि यथा तथा ।
कथितानि मया पुत्र भवन्ति न भवन्ति च  ॥ ०२४  ॥

तत्प्रीतियुक्तेन गुणान्वितेन ; पुत्रेण सत्पुत्रगुणान्वितेन ।
पृष्टो हीदं प्रीतिमता हितार्थं ; ब्रूयात्सुतस्येह यदुक्तमेतत्  ॥ ०२५  ॥

---

# अध्याय २४३

व्यास उवाच  ॥

गन्धान्रसान्नानुरुन्ध्यात्सुखं वा ; नालङ्कारांश्चाप्नुयात्तस्य तस्य ।
मानं च कीर्तिं च यशश्च नेच्छे ;त्स वै प्रचारः पश्यतो ब्राह्मणस्य  ॥ ००१  ॥

सर्वान्वेदानधीयीत शुश्रूषुर्ब्रह्मचर्यवान् ।
ऋचो यजूंषि सामानि न तेन न स ब्राह्मणः  ॥ ००२  ॥

ज्ञातिवत्सर्वभूतानां सर्ववित्सर्ववेदवित् ।
नाकामो म्रियते जातु न तेन न च ब्राह्मणः  ॥ ००३  ॥

इष्टीश्च विविधाः प्राप्य क्रतूंश्चैवाप्तदक्षिणान् ।
नैव प्राप्नोति ब्राह्मण्यमभिध्यानात्कथञ्चन  ॥ ००४  ॥

यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा  ॥ ००५  ॥

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा  ॥ ००६  ॥

कामबन्धनमेवैकं नान्यदस्तीह बन्धनम् ।
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते  ॥ ००७  ॥

कामतो मुच्यमानस्तु धूम्राभ्रादिव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण वर्तते ॥ ००८ ॥

आपूर्यमाणमचलप्रतिष्ठं ; समुद्रमापः प्रविशन्ति यद्वत् ।
स कामकान्तो न तु कामकामः ; स वै लोकात्स्वर्गमुपैति देही ॥ ००९ ॥

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषद्दानं दानस्योपनिषत्तपः ॥ ०१० ॥

तपसोपनिषत्त्यागस्त्यागस्योपनिषत्सुखम् ।
सुखस्योपनिषत्स्वर्गः स्वर्गस्योपनिषच्छमः ॥ ०११ ॥

क्लेदनं शोकमनसोः संतापं तृष्णया सह ।
सत्त्वमिच्छसि संतोषाच्छान्तिलक्षणमुत्तमम् ॥ ०१२ ॥

विशोको निर्ममः शान्तः प्रसन्नात्मात्मवित्तमः ।
षड्भिर्लक्षणवानेतैः समग्रः पुनरेष्यति ॥ ०१३ ॥

षड्भिः सत्त्वगुणोपेतैः प्राज्ञैरधिकमन्त्रिभिः ।
ये विदुः प्रेत्य चात्मानमिहस्थांस्तांस्तथा विदुः ॥ ०१४ ॥

अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम् ।
अध्यात्मं सुकृतप्रज्ञः सुखमव्ययमश्नुते ॥ ०१५ ॥

निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्वतः ।
यामयं लभते तुष्टिं सा न शक्यमतोऽन्यथा ॥ ०१६ ॥

येन तृप्यत्यभुञ्जानो येन तुष्यत्यवित्तवान् ।
येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ ०१७ ॥

सङ्गोप्य ह्यात्मनो द्वाराण्यपिधाय विचिन्तयन् ।
यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते ॥ ०१८ ॥

समाहितं परे तत्त्वे क्षीणकाममवस्थितम् ।
सर्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा ॥ ०१९ ॥

सविशेषाणि भूतानि गुणांश्चाभजतो मुनेः ।
सुखेनापोह्यते दुःखं भास्करेण तमो यथा ॥ ०२० ॥

तमतिक्रान्तकर्माणमतिक्रान्तगुणक्षयम् ।
ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः ॥ ०२१ ॥

स यदा सर्वतो मुक्तः समः पर्यवतिष्ठते ।
इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थोऽतिवर्तते ॥ ०२२ ॥

कारणं परमं प्राप्य अतिक्रान्तस्य कार्यताम् ।
पुनरावर्तनं नास्ति संप्राप्तस्य परात्परम् ॥ ०२३ ॥

---

# अध्याय २४४

व्यास उवाच ॥

द्वंद्वानि मोक्षजिज्ञासुरर्थधर्मावनुष्ठितः ।
वक्त्रा गुणवता शिष्यः श्राव्यः पूर्वमिदं महत् ॥ ००१ ॥

आकाशं मारुतो ज्योतिरापः पृथ्वी च पञ्चमी ।
भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु ॥ ००२ ॥

अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम् ।
तस्य शब्दं गुणं विद्यान्मूर्तिशास्त्रविधानवित्  ॥ ००३  ॥

चरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।
स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शं च तन्मयम्  ॥ ००४  ॥

ततः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम् ।
तस्य रूपं गुणं विद्यात्तमोऽन्ववसितात्मकम्  ॥ ००५  ॥

प्रक्लेदः क्षुद्रता स्नेह इत्यापो ह्युपदिश्यते ।
रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः  ॥ ००६  ॥

संघातः पार्थिवो धातुरस्थिदन्तनखानि च ।
श्मश्रु लोम च केशाश्च सिराः स्नायु च चर्म च  ॥ ००७  ॥

इन्द्रियं घ्राणसञ्ज्ञानं नासिकेत्यभिधीयते ।
गन्धश्चैवेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः  ॥ ००८  ॥

उत्तरेषु गुणाः सन्ति सर्वे सर्वेषु चोत्तराः ।
पञ्चानां भूतसंघानां संततिं मुनयो विदुः  ॥ ००९  ॥

मनो नवममेषां तु बुद्धिस्तु दशमी स्मृता ।
एकादशोऽन्तरात्मा च सर्वतः पर उच्यते  ॥ ०१०  ॥

व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम् ।
कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसञ्ज्ञकः  ॥ ०११  ॥

एभिः कालाष्टमैर्भावैर्यः सर्वैः सर्वमन्वितम् ।
पश्यत्यकलुषं प्राज्ञः स मोहं नानुवर्तते  ॥ ०१२  ॥

# अध्याय २४५

व्यास उवाच ॥

शरीराद्विप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम् ।
कर्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रचेतसः ॥ ००१ ॥

यथा मरीच्यः सहिताश्चरन्ति ; गच्छन्ति तिष्ठन्ति च दृश्यमानाः ।
देहैर्विमुक्ता विचरन्ति लोकां ;स्तथैव सत्त्वान्यतिमानुषाणि ॥ ००२ ॥

प्रतिरूपं यथैवाप्सु तापः सूर्यस्य लक्ष्यते ।
सत्त्ववांस्तु तथा सत्त्वं प्रतिरूपं प्रपश्यति ॥ ००३ ॥

तानि सूक्ष्माणि सत्त्वस्था विमुक्तानि शरीरतः ।
स्वेन तत्त्वेन तत्त्वज्ञाः पश्यन्ति नियतेन्द्रियाः ॥ ००४ ॥

स्वपतां जाग्रतां चैव सर्वेषामात्मचिन्तितम् ।
प्रधानद्वैधयुक्तानां जहतां कर्मजं रजः ॥ ००५ ॥

यथाहनि तथा रात्रौ यथा रात्रौ तथाहनि ।
वशे तिष्ठति सत्त्वात्मा सततं योगयोगिनाम् ॥ ००६ ॥

तेषां नित्यं सदानित्यो भूतात्मा सततं गुणैः ।
सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ॥ ००७ ॥

मनोबुद्धिपराभूतः स्वदेहपरदेहवित् ।
स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ॥ ००८ ॥

तत्रापि लभते दुःखं तत्रापि लभते सुखम् ।

क्रोधलोभौ तु तत्रापि कृत्वा व्यसनमर्छति ॥ ००९ ॥

प्रीणितश्चापि भवति महतोऽर्थानवाप्य च ।
करोति पुण्यं तत्रापि जाग्रन्निव च पश्यति ॥ ०१० ॥

तमेवमतितेजोंशं भूतात्मानं हृदि स्थितम् ।
तमोरजोभ्यामाविष्टा नानुपश्यन्ति मूर्तिषु ॥ ०११ ॥

शास्त्रयोगपरा भूत्वा स्वमात्मानं परीप्सवः ।
अनुच्छ्वासान्यमूर्तीनि यानि वज्रोपमान्यपि ॥ ०१२ ॥

पृथग्भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु ।
समाधौ योगमेवैतच्छाण्डिल्यः शममब्रवीत् ॥ ०१३ ॥

विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति ॥ ०१४ ॥

---

# अध्याय २४६

व्यास उवाच ॥

हृदि कामद्रुमश्चित्रो मोहसञ्चयसंभवः ।
क्रोधमानमहास्कन्धो विवित्सापरिमोचनः ॥ ००१ ॥

तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् ।
सोऽभ्यसूयापलाशो हि पुरादुष्कृतसारवान् ॥ ००२ ॥

संमोहचिन्ताविटपः शोकशाखो भयङ्करः ।
मोहनीभिः पिपासाभिर्लताभिः परिवेष्टितः ॥ ००३ ॥

उपासते महावृक्षं सुलुब्धास्तं फलेप्सवः ।
आयासैः संयतः पाशैः फलानि परिवेष्टयन् ॥ ००४ ॥

यस्तान्पाशान्वशे कृत्वा तं वृक्षमपकर्षति ।
गतः स दुःखयोरन्तं यतमानस्तयोर्द्वयोः ॥ ००५ ॥

संरोहत्यकृतप्रज्ञः संतापेन हि पादपम् ।
स तमेव ततो हन्ति विषं ग्रस्तमिवातुरम् ॥ ००६ ॥

तस्यानुशयमूलस्य मूलमुद्ध्रियते बलात् ।
त्यागाप्रमादाकृतिना साम्येन परमासिना ॥ ००७ ॥

एवं यो वेद कामस्य केवलं परिकर्षणम् ।
वधं वै कामशास्त्रस्य स दुःखान्यतिवर्तते ॥ ००८ ॥

शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते ।
तत्र बुद्धेः शरीरस्थं मनो नामार्थचिन्तकम् ॥ ००९ ॥

इन्द्रियाणि जनाः पौरास्तदर्थं तु परा कृतिः ।
तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा ॥ ०१० ॥

यदर्थमुपजीवन्ति पौराः सहपुरेश्वराः ।
अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ॥ ०११ ॥

तत्र बुद्धिर्हि दुर्धर्षा मनः साधर्म्यमुच्यते ।
पौराश्चापि मनस्त्रस्तास्तेषामपि चला स्थितिः ॥ ०१२ ॥

यदर्थं बुद्धिरध्यास्ते न सोऽर्थः परिषीदति ।

यदर्थं पृथगध्यास्ते मनस्तत्परिषीदति ॥ ०१३ ॥

पृथग्भूतं यदा बुद्ध्या मनो भवति केवलम् ।
तत्रैनं विवृतं शून्यं रजः पर्यवतिष्ठते ॥ ०१४ ॥

तन्मनः कुरुते सख्यं रजसा सह सङ्गतम् ।
तं चादाय जनं पौरं रजसे संप्रयच्छति ॥ ०१५ ॥

---

# अध्याय २४७

भीष्म उवाच ॥

भूतानां गुणसंख्यानं भूयः पुत्र निशामय ।
द्वैपायनमुखाद्भ्रष्टं श्लाघया परयानघ ॥ ००१ ॥

दीप्तानलनिभः प्राह भगवान्धूम्रवर्चसे ।
ततोऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनम् ॥ ००२ ॥

भूमेः स्थैर्यं पृथुत्वं च काठिन्यं प्रसवात्मता ।
गन्धो गुरुत्वं शक्तिश्च संघातः स्थापना धृतिः ॥ ००३ ॥

अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यता ।
जिह्वा विष्यन्दिनी चैव भौमाप्यास्रवणं तथा ॥ ००४ ॥

अग्नेर्दुर्धर्षता तेजस्तापः पाकः प्रकाशनम् ।
शौचं रागो लघुस्तैक्ष्ण्यं दशमं चोर्ध्वभागिता ॥ ००५ ॥

वायोरनियमः स्पर्शो वादस्थानं स्वतन्त्रता ।
बलं शैघ्र्यं च मोहश्च चेष्टा कर्मकृता भवः ॥ ००६ ॥

आकाशस्य गुणः शब्दो व्यापित्वं छिद्रतापि च ।
अनाश्रयमनालम्बमव्यक्तमविकारिता ॥ ००७ ॥

अप्रतीघातता चैव भूतत्वं विकृतानि च ।
गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतात्मभाविताः ॥ ००८ ॥

चलोपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा ।
सदसच्चाशुता चैव मनसो नव वै गुणाः ॥ ००९ ॥

इष्टानिष्टविकल्पश्च व्यवसायः समाधिता ।
संशयः प्रतिपत्तिश्च बुद्धौ पञ्चेह ये गुणाः ॥ ०१० ॥

युधिष्ठिर उवाच ॥

कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः ।
एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ॥ ०११ ॥

भीष्म उवाच ॥

आहुः षष्टिं भूतगुणान्वै ; भूतविशिष्टा नित्यविषक्ताः ।
भूतविषक्ताश्चाक्षरसृष्टाः ; पुत्र न नित्यं तदिह वदन्ति ॥ ०१२ ॥

तत्पुत्र चिन्ताकलितं यदुक्त ;मनागतं वै तव संप्रतीह ।
भूतार्थतत्त्वं तदवाप्य सर्वं ; भूतप्रभावाद्भव शान्तबुद्धिः ॥ ०१३ ॥

# (अविकम्पनारदसंवादे) मृत्यूत्पत्तिः

## अध्याय २४८

युधिष्ठिर उवाच ॥

य इमे पृथिवीपालाः शेरते पृथिवीतले ।
पृतनामध्य एते हि गतसत्त्वा महाबलाः ॥ ००१ ॥

एकैकशो भीमबला नागायुतबलास्तथा ।
एते हि निहताः संख्ये तुल्यतेजोबलैर्नरैः ॥ ००२ ॥

नैषां पश्यामि हन्तारं प्राणिनां संयुगे पुरा ।
विक्रमेणोपसंपन्नास्तेजोबलसमन्विताः ॥ ००३ ॥

अथ चेमे महाप्राज्ञ शेरते हि गतासवः ।
मृता इति च शब्दोऽयं वर्तत्येषु गतासुषु ॥ ००४ ॥

इमे मृता नृपतयः प्रायशो भीमविक्रमाः ।
तत्र मे संशयो जातः कुतः सञ्ज्ञा मृता इति ॥ ००५ ॥

कस्य मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः ।
हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ ००६ ॥

भीष्म उवाच ॥

पुरा कृतयुगे तात राजासीदविकम्पकः ।
स शत्रुवशमापन्नः सङ्ग्रामे क्षीणवाहनः ॥ ००७ ॥

तत्र पुत्रो हरिर्नाम नारायणसमो बले ।
स शत्रुभिर्हतः संख्ये सबलः सपदानुगः ॥ ००८ ॥

स राजा शत्रुवशगः पुत्रशोकसमन्वितः ।
यदृच्छयाशान्तिपरो ददर्श भुवि नारदम् ॥ ००९ ॥

स तस्मै सर्वमाचष्ट यथा वृत्तं जनेश्वरः ।
शत्रुभिर्ग्रहणं संख्ये पुत्रस्य मरणं तथा ॥ ०१० ॥

तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः ।
आख्यानमिदमाचष्ट पुत्रशोकापहं तदा ॥ ०११ ॥

राजञ्श्रृणु समाख्यानमद्येदं बहुविस्तरम् ।
यथा वृत्तं श्रुतं चैव मयापि वसुधाधिप ॥ ०१२ ॥

प्रजाः सृष्ट्वा महातेजाः प्रजासर्गे पितामहः ।
अतीव वृद्धा बहुला नामृष्यत पुनः प्रजाः ॥ ०१३ ॥

न ह्यन्तरमभूत्किञ्चित्क्वचिज्जन्तुभिरच्युत ।
निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ॥ ०१४ ॥

तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते ।
चिन्तयन्नाध्यगच्छच्च संहारे हेतुकारणम् ॥ ०१५ ॥

तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो राजन्ददाह स पितामहः ॥ ०१६ ॥

ततो दिवं भुवं खं च जगच्च सचराचरम् ।
ददाह पावको राजन्भगवत्कोपसंभवः ॥ ०१७ ॥

तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च ।
महता कोपवेगेन कुपिते प्रपितामहे ॥ ०१८ ॥

ततो हरिजटः स्थाणुर्वेदाध्वरपतिः शिवः ।
जगाद शरणं देवो ब्रह्माणं परवीरहा ॥ ०१९ ॥

तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीद्वरदो देवो ज्वलन्निव तदा शिवम् ॥ ०२० ॥

करवाण्यद्य कं कामं वरार्होऽसि मतो मम ।
कर्ता ह्यस्मि प्रियं शम्भो तव यद्धृदि वर्तते ॥ ०२१ ॥

---

# अध्याय २४९

स्थाणुरुवाच ॥

प्रजासर्गनिमित्तं मे कार्यवत्तामिमां प्रभो ।
विद्धि सृष्टास्त्वया हीमा मा कुप्यासां पितामह ॥ ००१ ॥

तव तेजोग्निना देव प्रजा दह्यन्ति सर्वशः ।
ता दृष्ट्वा मम कारुण्यं मा कुप्यासां जगत्प्रभो ॥ ००२ ॥

प्रजापतिरुवाच ॥

न कुप्ये न च मे कामो न भवेरन्प्रजा इति ।
लाघवार्थं धरण्यास्तु ततः संहार इष्यते ॥ ००३ ॥

इयं हि मां सदा देवी भारार्ता समचोदयत् ।
संहारार्थं महादेव भारेणाप्सु निमज्जति ॥ ००४ ॥

यदाहं नाधिगच्छामि बुद्ध्या बहु विचारयन् ।

संहारमासां वृद्धानां ततो मां क्रोध आविशत्  ॥ ००५  ॥

स्थाणुरुवाच  ॥

संहारान्तं प्रसीदस्व मा क्रुधस्त्रिदशेश्वर ।
मा प्रजाः स्थावरं वैच जङ्गमं च विनीनशः  ॥ ००६  ॥

पल्वलानि च सर्वाणि सर्वं चैव तृणोलपम् ।
स्थावरं जङ्गमं चैव भूतग्रामं चतुर्विधम्  ॥ ००७  ॥

तदेतद्भस्मसाद्भूतं जगत्सर्वमुपप्लुतम् ।
प्रसीद भगवन्साधो वर एष वृतो मया  ॥ ००८  ॥

नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथञ्चन ।
तस्मान्निवर्त्यतामेतत्तेजः स्वेनैव तेजसा  ॥ ००९  ॥

उपायमन्यं संपश्य प्रजानां हितकाम्यया ।
यथेमे जन्तवः सर्वे निवर्तेरन्परंतप  ॥ ०१०  ॥

अभावमभिगच्छेयुरुत्सन्नप्रजनाः प्रजाः ।
अधिदैवनियुक्तोऽस्मि त्वया लोकेष्विहेश्वर  ॥ ०११  ॥

त्वद्भवं हि जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः  ॥ ०१२  ॥

नारद उवाच  ॥

श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्मनाः ।
तेजस्तत्स्वं निजग्राह पुनरेवान्तरात्मना  ॥ ०१३  ॥

ततोऽग्निमुपसङ्गृह्य भगवा.ण्ल्लोकपूजितः ।

प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः ॥ ०१४ ॥

उपसंहरतस्तस्य तमग्निं रोषजं तदा ।
प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः ॥ ०१५ ॥

कृष्णा रक्ताम्बरधरा रक्तनेत्रतलान्तरा ।
दिव्यकुण्डलसंपन्ना दिव्याभरणभूषिता ॥ ०१६ ॥

सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम् ।
ददृशातेऽथ तौ कन्यां देवौ विश्वेश्वरावुभौ ॥ ०१७ ॥

तामाहूय तदा देवो लोकानामादिरीश्वरः ।
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ ०१८ ॥

त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ॥ ०१९ ॥

अविशेषेण चैव त्वं प्रजाः संहर भामिनि ।
मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि ॥ ०२० ॥

एवमुक्ता तु सा देवी मृत्युः कमलमालिनी ।
प्रदध्यौ दुःखिता बाला साश्रुपातमतीव हि ॥ ०२१ ॥

पाणिभ्यां चैव जग्राह तान्यश्रूणि जनेश्वरः ।
मानवानां हितार्थाय ययाचे पुनरेव च ॥ ०२२ ॥

# अध्याय २५०

नारद उवाच ॥

विनीय दुःखमबला सा त्वतीवायतेक्षणा ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता तदा ॥ ००१ ॥

त्वया सृष्टा कथं नारी मादृशी वदतां वर ।
रौद्रकर्माभिजायेत सर्वप्राणिभयङ्करी ॥ ००२ ॥

बिभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे ।
त्वं मां भीतामवेक्षस्व शिवेनेश्वर चक्षुषा ॥ ००३ ॥

बालान्वृद्धान्वयःस्थांश्च न हरेयमनागसः ।
प्राणिनः प्राणिनामीश नमस्तेऽभिप्रसीद मे ॥ ००४ ॥

प्रियान्पुत्रान्वयस्यांश्च भ्रातृन्मातृः पितृनपि ।
अपध्यास्यन्ति यद्देव मृतांस्तेषां बिभेम्यहम् ॥ ००५ ॥

कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीः समाः ।
तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ॥ ००६ ॥

यमस्य भवने देव यात्यन्ते पापकर्मिणः ।
प्रसादये त्वा वरद प्रसादं कुरु मे प्रभो ॥ ००७ ॥

एतमिच्छाम्यहं कामं त्वत्तो लोकपितामह ।
इच्छेयं त्वत्प्रसादाच्च तपस्तप्तुं सुरेश्वर ॥ ००८ ॥

पितामह उवाच ॥

मृत्यो सङ्कल्पिता मे त्वं प्रजासंहारहेतुना ।

गच्छ संहर सर्वास्त्वं प्रजा मा च विचारय ॥ ००९ ॥

एतदेवमवश्यं हि भविता नैतदन्यथा ।
क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ॥ ०१० ॥

नारद उवाच ॥

एवमुक्ता महाबाहो मृत्युः परपुरञ्जय ।
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ॥ ०११ ॥

पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी ।
तूष्णीमासीत्ततो देवो देवानामीश्वरेश्वरः ॥ ०१२ ॥

प्रससाद किल ब्रह्मा स्वयमेवात्मनात्मवान् ।
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत ॥ ०१३ ॥

निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।
सा कन्यापजगामास्य समीपादिति नः श्रुतम् ॥ ०१४ ॥

अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्ययात् ॥ ०१५ ॥

सा तत्र परमं देवी तपोऽचरत दुश्चरम् ।
समा ह्येकपदे तस्थौ दश पद्मानि पञ्च च ॥ ०१६ ॥

तां तथा कुर्वतीं तत्र तपः परमदुश्चरम् ।
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ॥ ०१७ ॥

कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा ।
तथैवैकपदे तात पुनरन्यानि सप्त सा ॥ ०१८ ॥

तस्थौ पद्मानि षड्चैव पञ्च द्वे चैव मानद ।
भूयः पद्मायुतं तात मृगैः सह चचार सा  ॥ ०१९  ॥

पुनर्गत्वा ततो राजन्मौनमातिष्ठदुत्तमम् ।
अप्सु वर्षसहस्राणि सप्त चैकं च पार्थिव  ॥ ०२०  ॥

ततो जगाम सा कन्या कौशिकीं भरतर्षभ ।
तत्र वायुजलाहारा चचार नियमं पुनः  ॥ ०२१  ॥

ततो ययौ महाभागा गङ्गां मेरुं च केवलम् ।
तस्थौ दार्विव निश्चेष्टा भूतानां हितकाम्यया  ॥ ०२२  ॥

ततो हिमवतो मूर्ध्नि यत्र देवाः समीजिरे ।
तत्राङ्गुष्ठेन राजेन्द्र निखर्वमपरं ततः  ॥ ०२३  ॥

तस्थौ पितामहं चैव तोषयामास यत्नतः  ॥ ०२३  ॥

ततस्तामब्रवीत्तत्र लोकानां प्रभवाप्ययः ।
किमिदं वर्तते पुत्रि क्रियतां तद्वचो मम  ॥ ०२४  ॥

ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ।
न हरेयं प्रजा देव पुनस्त्वाहं प्रसादये  ॥ ०२५  ॥

तामधर्मभयत्रस्तां पुनरेव च याचतीम् ।
तदाब्रवीद्देवदेवो निगृह्येदं वचस्ततः  ॥ ०२६  ॥

अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे ।
मया ह्युक्तं मृषा भद्रे भविता नेह किञ्चन  ॥ ०२७  ॥

धर्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यते ।
अहं च विबुधाश्चैव त्वद्धिते निरताः सदा  ॥ ०२८  ॥

इममन्यं च ते कामं ददामि मनसेप्सितम् ।
न त्वा दोषेण यास्यन्ति व्याधिसंपीडिताः प्रजाः ॥ ०२९ ॥

पुरुषेषु च रूपेण पुरुषस्त्वं भविष्यसि ।
स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकम् ॥ ०३० ॥

सैवमुक्ता महाराज कृताञ्जलिरुवाच ह ।
पुनरेव महात्मानं नेति देवेशमव्ययम् ॥ ०३१ ॥

तामब्रवीत्तदा देवो मृत्यो संहर मानवान् ।
अधर्मस्ते न भविता तथा ध्यास्याम्यहं शुभे ॥ ०३२ ॥

यानश्रुबिन्दून्पतितानपश्यं ; ये पाणिभ्यां धारितास्ते पुरस्तात् ।
ते व्याधयो मानवान्घोररूपाः ; प्राप्ते काले पीडयिष्यन्ति मृत्यो ॥ ०३३ ॥

सर्वेषां त्वं प्राणिनामन्तकाले ; कामक्रोधौ सहितौ योजयेथाः ।
एवं धर्मस्त्वामुपैष्यत्यमेयो ; न चाधर्मं लप्स्यसे तुल्यवृत्तिः ॥ ०३४ ॥

एवं धर्मं पालयिष्यस्यथोक्तं ; न चात्मानं मज्जयिष्यस्यधर्मे ।
तस्मात्कामं रोचयाभ्यागतं त्वं ; संयोज्याथो संहरस्वेह जन्तून् ॥ ०३५ ॥

सा वै तदा मृत्युसञ्ज्ञापदेशा ;च्छापाद्भीता बाढमित्यब्रवीत्तम् ।
अथो प्राणान्प्राणिनामन्तकाले ; कामक्रोधौ प्राप्य निर्मोह्य हन्ति ॥ ०३६ ॥

मृत्योर्ये ते व्याधयश्चाश्रुपाता ; मनुष्याणां रुज्यते यैः शरीरम् ।
सर्वेषां वै प्राणिनां प्राणनान्ते ; तस्माच्छोकं मा कृथा बुध्य बुद्ध्या ॥ ०३७ ॥

सर्वे देवाः प्राणिनां प्राणनान्ते ; गत्वा वृत्ताः संनिवृत्तास्तथैव ।
एवं सर्वे मानवाः प्राणनान्ते ; गत्वावृत्ता देववद्राजसिंह ॥ ०३८ ॥

वायुर्भीमो भीमनादो महौजाः ; सर्वेषां च प्राणिनां प्राणभूतः ।
नानावृत्तिर्देहिनां देहभेदे ; तस्माद्वायुर्देवदेवो विशिष्टः ॥ ०३९ ॥

सर्वे देवा मर्त्यसञ्ज्ञाविशिष्टाः ; सर्वे मर्त्या देवसञ्ज्ञाविशिष्टाः ।
तस्मात्पुत्रं मा शुचो राजसिंह ; पुत्रः स्वर्गं प्राप्य ते मोदते ह ॥ ०४० ॥

एवं मृत्युर्देवसृष्टा प्रजानां ; प्राप्ते काले संहरन्ती यथावत् ।
तस्याश्चैव व्याधयस्तेऽश्रुपाताः ; प्राप्ते काले संहरन्तीह जन्तून् ॥ ०४१ ॥

---

# अध्याय २५१

युधिष्ठिर उवाच ॥

इमे वै मानवाः सर्वे धर्मं प्रति विशङ्किताः ।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥ ००१ ॥

धर्मो न्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् ।
उभयार्थोऽपि वा धर्मस्तन्मे ब्रूहि पितामह ॥ ००२ ॥

भीष्म उवाच ॥

सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥ ००३ ॥

अपि ह्युक्तानि कर्माणि व्यवस्यन्त्युत्तरावरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥ ००४ ॥

उभयत्र सुखोदर्क इह चैव परत्र च ॥ ००४ ॥

अलब्ध्वा निपुणं धर्मं पापः पापे प्रसज्जति ।
न च पापकृतः पापान्मुच्यन्ते केचिदापदि ॥ ००५ ॥

अपापवादी भवति यदा भवति धर्मवित् ।
धर्मस्य निष्ठा स्वाचारस्तमेवाश्रित्य भोत्स्यसे ॥ ००६ ॥

यदाधर्मसमाविष्टो धनं गृह्णाति तस्करः ।
रमते निर्हरन्स्तेनः परवित्तमराजके ॥ ००७ ॥

यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति ।
तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ॥ ००८ ॥

अभीतः शुचिरभ्येति राजद्वारमशङ्कितः ।
न हि दुश्चरितं किञ्चिदन्तरात्मनि पश्यति ॥ ००९ ॥

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ ०१० ॥

अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक्पृथक् ।
अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः ॥ ०११ ॥

ते चेन्मिथोऽधृतिं कुर्युर्विनश्येयुरसंशयम् ॥ ०११ ॥

न हर्तव्यं परधनमिति धर्मः सनातनः ।
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम् ॥ ०१२ ॥

यदा नियतिदौर्बल्यमथैषामेव रोचते ॥ ०१२ ॥

न ह्यत्यन्तं बलयुता भवन्ति सुखिनोऽपि वा ।

तस्मादनार्जवे बुद्धिर्न कार्या ते कथञ्चन ॥ ०१३ ॥

असाधुभ्योऽस्य न भयं न चोरेभ्यो न राजतः ।
न किञ्चित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् ॥ ०१४ ॥

सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधाचरितं पापमन्यत्रैवानुपश्यति ॥ ०१५ ॥

मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।
न हि दुश्चरितं किञ्चिदात्मनोऽन्येषु पश्यति ॥ ०१६ ॥

दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥ ०१७ ॥

यदा नियतिकार्पण्यमर्थैषामेव रोचते ।
न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा ॥ ०१८ ॥

यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ ०१९ ॥

योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ।
यदन्यस्तस्य तत्कुर्यान्न मृष्येदिति मे मतिः ॥ ०२० ॥

जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ॥ ०२१ ॥

अतिरिक्तैः संविभजेद्भोगैरन्यानकिञ्चनान् ।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥ ०२२ ॥

यस्मिंस्तु देवाः समये संतिष्ठेरंस्तथा भवेत् ।
अथ चेल्लाभसमये स्थितिर्धर्मेऽपि शोभना ॥ ०२३ ॥

सर्वं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ ०२४ ॥

लोकसङ्ग्रहसंयुक्तं विधात्रा विहितं पुरा ।
सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥ ०२५ ॥

धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धिर्न कार्या ते कथञ्चन ॥ ०२६ ॥

---

# अध्याय २५२

युधिष्ठिर उवाच ॥

सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।
प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥ ००१ ॥

भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।
इममन्यं प्रवक्ष्यामि न राजन्विग्रहादिव ॥ ००२ ॥

इमानि हि प्रापयन्ति सृजन्त्युत्तारयन्ति च ।
न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥ ००३ ॥

अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥ ००४ ॥

सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः ।

साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणम्  ॥ ००५  ॥

दृश्यते धर्मरूपेण अधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन्  ॥ ००६  ॥

पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।
वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम्  ॥ ००७  ॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्तिकृता इव  ॥ ००८  ॥

आम्नायवचनं सत्यमित्ययं लोकसङ्ग्रहः ।
आम्नायेभ्यः परं वेदाः प्रसृता विश्वतोमुखाः  ॥ ००९  ॥

ते चेत्सर्वे प्रमाणं वै प्रमाणं तन्न विद्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः  ॥ ०१०  ॥

धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
या या विक्रियते संस्था ततः सापि प्रणश्यति  ॥ ०११  ॥

विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा ।
अणीयान्क्षुरधाराया गरीयान्पर्वतादपि  ॥ ०१२  ॥

गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम्  ॥ ०१३  ॥

निपानानीव गोभ्याशे क्षेत्रे कुल्येव भारत ।
स्मृतोऽपि शाश्वतो धर्मो विप्रहीणो न दृश्यते  ॥ ०१४  ॥

कामादन्ये क्षयादन्ये कारणैरपरैस्तथा ।
असन्तो हि वृथाचारं भजन्ते बहवोऽपरे  ॥ ०१५  ॥

धर्मो भवति स क्षिप्रं विलीनस्त्वेव साधुषु ।
अन्ये तानाहुरुन्मत्तानपि चावहसन्त्युत ॥ ०१६ ॥

महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः ।
न हि सर्वहितः कश्चिदाचारः संप्रदृश्यते ॥ ०१७ ॥

तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥ ०१८ ॥

येनैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥ ०१९ ॥

चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ ०२० ॥

---

# तुलाधारजाजलिसंवादः

## अध्याय २५३

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥ ००१ ॥

वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः ।
सागरोद्देशमागम्य तपस्तेपे महातपाः ॥ ००२ ॥

नियतो नियताहारश्चीराजिनजटाधरः ।
मलपङ्कधरो धीमान्बहून्वर्षगणान्मुनिः ॥ ००३ ॥

स कदाचिन्महातेजा जलवासो महीपते ।
चचार लोकान्विप्रर्षिः प्रेक्षमाणो मनोजवः ॥ ००४ ॥

स चिन्तयामास मुनिर्जलमध्ये कदाचन ।
विप्रेक्ष्य सागरान्तां वै महीं सवनकाननाम् ॥ ००५ ॥

न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।
अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ॥ ००६ ॥

स दृश्यमानो रक्षोभिर्जलमध्येऽवदत्ततः ।
अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ॥ ००७ ॥

तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ ००८ ॥

इत्युक्तो जाजलिर्भूतैः प्रत्युवाच महातपाः ।
पश्येयं तमहं प्राज्ञं तुलाधारं यशस्विनम् ॥ ००९ ॥

इति ब्रुवाणं तमृषिं रक्षांस्युद्धृत्य सागरात् ।
अब्रुवन्गच्छ पन्थानमास्थायेमं द्विजोत्तम ॥ ०१० ॥

इत्युक्तो जाजलिर्भूतैर्जगाम विमनास्तदा ।
वाराणस्यां तुलाधारं समासाद्याब्रवीद्वचः ॥ ०११ ॥

युधिष्ठिर उवाच ॥

किं कृतं सुकृतं कर्म तात जाजलिना पुरा ।

येन सिद्धिं परां प्राप्तस्तन्नो व्याख्यातुमर्हसि ॥ ०१२ ॥

भीष्म उवाच ॥

अतीव तपसा युक्तो घोरेण स बभूव ह ।
नद्युपस्पर्शनरतः सायं प्रातर्महातपाः ॥ ०१३ ॥

अग्नीन्परिचरन्सम्यक्स्वाध्यायपरमो द्विजः ।
वानप्रस्थविधानज्ञो जाजलिर्ज्वलितः श्रिया ॥ ०१४ ॥

सत्ये तपसि तिष्ठन्स न च धर्ममवैक्षत ।
वर्षास्वाकाशशायी स हेमन्ते जलसंश्रयः ॥ ०१५ ॥

वतातपसहो ग्रीष्मे न च धर्ममविन्दत ।
दुःखशय्याश्च विविधा भूमौ च परिवर्तनम् ॥ ०१६ ॥

ततः कदाचित्स मुनिर्वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ॥ ०१७ ॥

अथ तस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो ।
अरण्यगमनान्नित्यं मलिनो मलसंयुताः ॥ ०१८ ॥

स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥ ०१९ ॥

तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कुलिङ्गशकुनौ राजन्नीडं शिरसि चक्रतुः ॥ ०२० ॥

स तौ दयावान्विप्रर्षिरुपप्रैक्षत दम्पती ।
कुर्वाणं नीडकं तत्र जटासु तृणतन्तुभिः ॥ ०२१ ॥

यदा स न चलत्येव स्थाणुभूतो महातपाः ।
ततस्तौ परिविश्वस्तौ सुखं तत्रोषतुस्तदा ॥ ०२२ ॥

अतीतास्वथ वर्षासु शरत्काल उपस्थिते ।
प्राजापत्येन विधिना विश्वासात्काममोहितौ ॥ ०२३ ॥

तत्रापातयतां राजञ्शिरस्यण्डानि खेचरौ ।
तान्यबुध्यत तेजस्वी स विप्रः संशितव्रतः ॥ ०२४ ॥

बुद्ध्वा च स महातेजा न चचालैव जाजलिः ।
धर्मे धृतमना नित्यं नाधर्मं स त्वरोचयत् ॥ ०२५ ॥

अहन्यहनि चागम्य ततस्तौ तस्य मूर्धनि ।
आश्वासितौ वै वसतः संप्रहृष्टौ तदा विभो ॥ ०२६ ॥

अण्डेभ्यस्त्वथ पुष्टेभ्यः प्रजायन्त शकुन्तकाः ।
व्यवर्धन्त च तत्रैव न चाकम्पत जाजलिः ॥ ०२७ ॥

स रक्षमाणस्त्वण्डानि कुलिङ्गानां यतव्रतः ।
तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः ॥ ०२८ ॥

ततस्तु कालसमये बभूवुस्तेऽथ पक्षिणः ।
बुबुधे तांश्च स मुनिर्जातपक्षाञ्शकुन्तकान् ॥ ०२९ ॥

ततः कदाचित्तांस्तत्र पश्यन्पक्षीन्यतव्रतः ।
बभूव परमप्रीतस्तदा मतिमतां वरः ॥ ०३० ॥

तथा तानभिसंवृद्धान्दृष्ट्वा चाप्नुवतां मुदम् ।
शकुनौ निर्भयौ तत्र ऊषतुश्चात्मजैः सह ॥ ०३१ ॥

जातपक्षांश्च सोऽपश्यदुड्डीनान्पुनरागतान् ।

सायं सायं द्विजान्विप्रो न चाकम्पत जाजलिः ॥ ०३२ ॥

कदाचित्पुनरभ्येत्य पुनर्गच्छन्ति संततम् ।
त्यक्ता मातृपितृभ्यां ते न चाकम्पत जाजलिः ॥ ०३३ ॥

अथ ते दिवसं चारीं गत्वा सायं पुनर्नृप ।
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः ॥ ०३४ ॥

कदाचिद्दिवसान्पञ्च समुत्पत्य विहङ्गमाः ।
षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलिः ॥ ०३५ ॥

क्रमेण च पुनः सर्वे दिवसानि बहून्यपि ।
नोपावर्तन्त शकुना जातप्राणाः स्म ते यदा ॥ ०३६ ॥

कदाचिन्मासमात्रेण समुत्पत्य विहङ्गमाः ।
नैवागच्छंस्ततो राजन्प्रातिष्ठत स जाजलिः ॥ ०३७ ॥

ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः ।
सिद्धोऽस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥ ०३८ ॥

स तथा निर्गतान्दृष्ट्वा शकुन्तान्नियतव्रतः ।
संभावितात्मा संभाव्य भृशं प्रीतस्तदाभवन् ॥ ०३९ ॥

स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् ।
उदयन्तमथादित्यमभ्यगच्छन्महातपाः ॥ ०४० ॥

संभाव्य चटकान्मूर्ध्नि जाजलिर्जपतां वरः ।
आस्फोटयत्तदाकाशे धर्मः प्राप्तो मयेति वै ॥ ०४१ ॥

अथान्तरिक्षे वागासीत्तां स शुश्राव जाजलिः ।
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ ०४२ ॥

वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ०४३ ॥

सोऽमर्षवशमापन्नस्तुलाधारदिदृक्षया ।
पृथिवीमचरद्राजन्यत्रसायङ्गृहो मुनिः ॥ ०४४ ॥

कालेन महतागच्छत्स तु वाराणसीं पुरीम् ।
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ॥ ०४५ ॥

सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः ।
समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ॥ ०४६ ॥

तुलाधार उवाच ॥

आयानेवासि विदितो मम ब्रह्मन्न संशयः ।
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥ ०४७ ॥

सागरानूपमाश्रित्य तपस्तप्तं त्वया महत् ।
न च धर्मस्य सञ्ज्ञां त्वं पुरा वेत्थ कथञ्चन ॥ ०४८ ॥

ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः ।
क्षिप्रं शिरस्यजायन्त ते च संभावितास्त्वया ॥ ०४९ ॥

जातपक्षा यदा ते च गताश्चारीमितस्ततः ।
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज ॥ ०५० ॥

खे वाचं त्वमथाश्रौषीर्मां प्रति द्विजसत्तम ॥ ०५० ॥

अमर्षवशमापन्नस्ततः प्राप्तो भवानिह ।
करवाणि प्रियं किं ते तद्ब्रूहि द्विजसत्तम ॥ ०५१ ॥

# अध्याय २५४

भीष्म उवाच ॥

इत्युक्तः स तदा तेन तुलाधारेण धीमता ।
प्रोवाच वचनं धीमाञ्जाजलिर्जपतां वरः ॥ ००१ ॥

विक्रीणानः सर्वरसान्सर्वगन्धांश्च वाणिज ।
वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ ००२ ॥

अध्यगा नैष्ठिकीं बुद्धिं कुतस्त्वामिदमागतम् ।
एतदाचक्ष्व मे सर्वं निखिलेन महामते ॥ ००३ ॥

एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् ॥ ००४ ॥

जाजलिं कष्टतपसं ज्ञानतृप्तस्तदा नृप ॥ ००४ ॥

वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥ ००५ ॥

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥ ००६ ॥

परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् ।
अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ॥ ००७ ॥

रसांश्च तांस्तान्विप्रर्षे मद्यवर्जानहं बहून् ।
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया ॥ ००८ ॥

सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ ००९ ॥

नाहं परेषां कर्माणि प्रशंसामि शपामि वा ।
आकाशस्येव विप्रर्षे पश्य.ण्ल्लोकस्य चित्रताम् ॥ ०१० ॥

नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये ।
समोऽस्मि सर्वभूतेषु पश्य मे जाजले व्रतम् ॥ ०११ ॥

इष्टानिष्टविमुक्तस्य प्रीतिरागबहिष्कृतः ।
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ॥ ०१२ ॥

इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् ॥ ०१३ ॥

यथान्धबधिरोन्मत्ता उच्छ्वासपरमाः सदा ।
देवैरपिहितद्वाराः सोपमा पश्यतो मम ॥ ०१४ ॥

यथा वृद्धातुरकृशा निःस्पृहा विषयान्प्रति ।
तथार्थकामभोगेषु ममापि विगता स्पृहा ॥ ०१५ ॥

यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि तदा सिध्यति वै द्विजः ॥ ०१६ ॥

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ०१७ ॥

न भूतो न भविष्यश्च न च धर्मोऽस्ति कश्चन ।
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम्  ॥ ०१८  ॥

यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाक्क्रूराद्दण्डपारुष्यात्स प्राप्नोति महद्भयम्  ॥ ०१९  ॥

यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्राणां महात्मनाम्  ॥ ०२०  ॥

प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा बलवान्वा विमोह्यते  ॥ ०२१  ॥

आचाराज्जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा  ॥ ०२२  ॥

नद्यां यथा चेह काष्ठमुह्यमानं यदृच्छया ।
यदृच्छयैव काष्ठेन संधिं गच्छेत केनचित्  ॥ ०२३  ॥

तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः ।
तृणकाष्ठकरीषाणि कदा चिन्नसमीक्षया  ॥ ०२४  ॥

एवमेवायमाचारः प्रादुर्भूतो यतस्ततः  ॥ ०२४  ॥

यस्मान्नोद्विजते भूतं जातु किञ्चित्कथञ्चन ।
अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने  ॥ ०२५  ॥

यस्मादुद्विजते विद्वन्सर्वलोको वृकादिव ।
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः  ॥ ०२६  ॥

सहायवान्द्रव्यवान्यः सुभगोऽन्योऽपरस्तथा ।
ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत  ॥ ०२७  ॥

कीर्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥ ०२७ ॥

तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा ।
प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते ॥ ०२८ ॥

लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
स सर्वयज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम् ॥ ०२९ ॥

न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन ॥ ०२९ ॥

यस्मान्नोद्विजते भूतं जातु किञ्चित्कथञ्चन ।
सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ॥ ०३० ॥

यस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ।
न स धर्ममवाप्नोति इह लोके परत्र च ॥ ०३१ ॥

सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ०३२ ॥

दानं भूताभयस्याहुः सर्वदानेभ्य उत्तमम् ।
ब्रवीमि ते सत्यमिदं श्रद्दधस्व च जाजले ॥ ०३३ ॥

स एव सुभगो भूत्वा पुनर्भवति दुर्भगः ।
व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा ॥ ०३४ ॥

अकारणो हि नेहास्ति धर्मः सूक्ष्मोऽपि जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥ ०३५ ॥

सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः ।
उपलभ्यान्तरा चान्यानाचारानवबुध्यते ॥ ०३६ ॥

ये च छिन्दन्ति वृषणान्ये च भिन्दन्ति नस्तकान् ।
वहन्ति महतो भारान्बध्नन्ति दमयन्ति च ॥ ०३७ ॥

हत्वा सत्त्वानि खादन्ति तान्कथं न विगर्हसे ।
मानुषा मानुषानेव दासभोगेन बुञ्जते ॥ ०३८ ॥

वधबन्धविरोधेन कारयन्ति दिवानिशम् ।
आत्मना चापि जानासि यद्दुःखं वधताडने ॥ ०३९ ॥

पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् ।
आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ॥ ०४० ॥

तानि जीवानि विक्रीय का मृतेषु विचारणा ।
का तैले का घृते ब्रह्मन्मधुन्यप्स्वौषधेषु वा ॥ ०४१ ॥

अदंशमशके देशे सुखं संवर्धितान्पशून् ।
तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः ॥ ०४२ ॥

बहुदंशकुशान्देशान्नयन्ति बहुकर्दमान् ॥ ०४२ ॥

वाहसंपीडिता धुर्याः सीदन्त्यविधिनापरे ।
न मन्ये भ्रूणहत्यापि विशिष्टा तेन कर्मणा ॥ ०४३ ॥

कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा ।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥ ०४४ ॥

तथैवानडुहो युक्तान्समवेक्षस्व जाजले ॥ ०४४ ॥

अघ्न्या इति गवां नाम क एनान्हन्तुमर्हति ।
महच्चकाराकुशलं पृषध्रो गालभन्निव ॥ ०४५ ॥

ऋषयो यतयो ह्येतन्नहुषे प्रत्यवेदयन् ।
गां मातरं चाप्यवधीर्वृषभं च प्रजापतिम्  ॥ ०४६  ॥

अकार्यं नहुषाकार्षीर्लप्स्यामस्त्वत्कृते भयम्  ॥ ०४६  ॥

शतं चैकं च रोगाणां सर्वभूतेष्वपातयन् ।
ऋषयस्ते महाभागाः प्रजास्वेव हि जाजले  ॥ ०४७  ॥

भ्रूणहं नहुषं त्वाहुर्न ते होष्यामहे हविः  ॥ ०४७  ॥

इत्युक्त्वा ते महात्मानः सर्वे तत्त्वार्थदर्शिनः ।
ऋषयो यतयः शान्तास्तरसा प्रत्यवेदयन्  ॥ ०४८  ॥

ईदृशानशिवान्घोरानाचारानिह जाजले ।
केवलाचरितत्वात्तु निपुणान्नावबुध्यसे  ॥ ०४९  ॥

कारणाद्धर्ममन्विच्छेन्न लोकचरितं चरेत् ।
यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले  ॥ ०५०  ॥

समौ तावपि मे स्यातां न हि मे स्तः प्रियाप्रिये ।
एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः  ॥ ०५१  ॥

उपपत्त्या हि संपन्नो यतिभिश्चैव सेव्यते ।
सततं धर्मशीलैश्च नैपुण्येनोपलक्षितः  ॥ ०५२  ॥

# अध्याय २५५

जाजलिरुवाच ॥

यथा प्रवर्तितो धर्मस्तुलां धारयता त्वया ।
स्वर्गद्वारं च वृत्तिं च भूतानामवरोत्स्यते ॥ ००१ ॥

कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जीवसि ।
पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज ॥ ००२ ॥

यतो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि ।
न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलम् ॥ ००३ ॥

तुलाधार उवाच ॥

वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः ।
न च यज्ञं विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥ ००४ ॥

नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षात्रं यज्ञमिहास्थिताः ॥ ००५ ॥

लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः संप्रवर्तितम् ।
वेदवादानविज्ञाय सत्याभासमिवानृतम् ॥ ००६ ॥

इदं देयमिदं देयमिति नान्तं चिकीर्षति ।
अतः स्तैन्यं प्रभवति विकर्माणि च जाजले ॥ ००७ ॥

तदेव सुकृतं हव्यं येन तुष्यन्ति देवताः ॥ ००७ ॥

नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ।
पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनम् ॥ ००८ ॥

इष्टापूर्तादसाधूनां विषमा जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ॥ ००९ ॥

यजमानो यथात्मानमृत्विजश्च तथा प्रजाः ।
यज्ञात्प्रजा प्रभवति नभसोऽम्भ इवामलम् ॥ ०१० ॥

अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ०११ ॥

तस्मात्स्वनुष्ठितात्पूर्वे सर्वान्कामांश्च लेभिरे ।
अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन् ॥ ०१२ ॥

न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किञ्चन ॥ ०१२ ॥

शङ्कमानाः फलं यज्ञे ये यजेरन्कथञ्चन ।
जायन्तेऽसाधवो धूर्ता लुब्धा वित्तप्रयोजनाः ॥ ०१३ ॥

स स्म पापकृतां लोकान्गच्छेदशुभकर्मणा ।
प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः ॥ ०१४ ॥

पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम ॥ ०१४ ॥

कर्तव्यमिति कर्तव्यं वेत्ति यो ब्राह्मणोभयम् ।
ब्रह्मैव वर्तते लोके नैति कर्तव्यतां पुनः ॥ ०१५ ॥

विगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम ।
सर्वभूतोपघातश्च फलभावे च संयमः ॥ ०१६ ॥

सत्ययज्ञा दमयज्ञा अलुब्धाश्चात्मतृप्तयः ।
उत्पन्नत्यागिनः सर्वे जना आसन्नमत्सराः ॥ ०१७ ॥

क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः ।
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यमरानपि ॥ ०१८ ॥

अखिलं दैवतं सर्वं ब्रह्म ब्राह्मणसंश्रितम् ।
तृप्यन्ति तृप्यतो देवास्तृप्तास्तृप्तस्य जाजले ॥ ०१९ ॥

यथा सर्वरसैस्तृप्तो नाभिनन्दति किञ्चन ।
तथा प्रज्ञानतृप्तस्य नित्यं तृप्तिः सुखोदया ॥ ०२० ॥

धर्मारामा धर्मसुखाः कृत्स्नव्यवसितास्तथा ।
अस्ति नस्तत्त्वतो भूय इति प्रज्ञागवेषिणः ॥ ०२१ ॥

ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः ।
अतीव तत्सदा पुण्यं पुण्याभिजनसंहितम् ॥ ०२२ ॥

यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च ।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः ॥ ०२३ ॥

नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः ।
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥ ०२४ ॥

वनस्पतीनोषधीश्च फलमूलं च ते विदुः ।
न चैतानृत्विजो लुब्धा याजयन्ति धनार्थिनः ॥ ०२५ ॥

स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः ।
परिनिष्ठितकर्माणः प्रजानुग्रहकाम्यया ॥ ०२६ ॥

प्रापयेयुः प्रजाः स्वर्गं स्वधर्मचरणेन वै ।
इति मे वर्तते बुद्धिः समा सर्वत्र जाजले ॥ ०२७ ॥

प्रयुञ्जते यानि यज्ञे सदा प्राज्ञा द्विजर्षभ ।
तेन ते देवयानेन पथा यान्ति महामुने ॥ ०२८ ॥

आवृत्तिस्तत्र चैकस्य नास्त्यावृत्तिर्मनीषिणाम् ।
उभौ तौ देवयानेन गच्छतो जाजले पथा ॥ ०२९ ॥

स्वयं चैषामनडुहो युज्यन्ति च वहन्ति च ।
स्वयमुस्राश्च दुह्यन्ते मनःसङ्कल्पसिद्धिभिः ॥ ०३० ॥

स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः ।
यस्तथाभावितात्मा स्यात्स गामालब्धुमर्हति ॥ ०३१ ॥

ओषधीभिस्तथा ब्रह्मन्यजेरंस्ते नतादृशाः ।
बुद्धित्यागं पुरस्कृत्य तादृशं प्रब्रवीमि ते ॥ ०३२ ॥

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ ०३३ ॥

नाश्रावयन्न च यजन्न ददद्ब्राह्मणेषु च ।
ग्राम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ॥ ०३४ ॥

इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥ ०३४ ॥

जाजलिरुवाच ॥

न वै मुनीनां श्रृणुमः स्म तत्त्वं ; पृच्छामि त्वा वाणिज कष्टमेतत् ।
पूर्वे पूर्वे चास्य नावेक्षमाणा ; नातः परं तमृषयः स्थापयन्ति ॥ ०३५ ॥

अस्मिन्नेवात्मतीर्थे न पशवः प्राप्नुयुः सुखम् ।
अथ स्वकर्मणा केन वाणिज प्राप्नुयात्सुखम् ॥ ०३६ ॥

शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते  ॥ ०३६  ॥

तुलाधार उवाच  ॥

उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् ।
आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः  ॥ ०३७  ॥

वालैः शृङ्गेण पादेन संभवत्येव गौर्मखम्  ॥ ०३७  ॥

पत्नीं चानेन विधिना प्रकरोति नियोजयन् ।
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते  ॥ ०३८  ॥

सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव  ॥ ०३९  ॥

एतानीदृशकान्धर्मानाचरन्निह जाजले ।
कारणैर्धर्ममन्विच्छन्न लोकानाप्नुते शुभान्  ॥ ०४०  ॥

भीष्म उवाच  ॥

एतानीदृशकान्धर्मांस्तुलाधारः प्रशंसति ।
उपपत्त्या हि संपन्नान्नित्यं सद्भिर्निषेवितान्  ॥ ०४१  ॥

---

# अध्याय २५६

तुलाधार उवाच  ॥

सद्भिर्वा यदि वासद्भिरयं पन्थाः समाश्रितः ।

प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥ ००१ ॥

एते शकुन्ता बहवः समन्ताद्विचरन्ति हि ।
तवोत्तमाङ्गे संभूताः श्येनाश्चान्याश्च जातयः ॥ ००२ ॥

आह्वयैनान्महाब्रह्मन्विशमानांस्ततस्ततः ।
पश्येमान्हस्तपादेषु श्लिष्टान्देहे च सर्वशः ॥ ००३ ॥

संभावयन्ति पितरं त्वया संभाविताः खगाः ।
असंशयं पिता च त्वं पुत्रानाह्वय जाजले ॥ ००४ ॥

भीष्म उवाच ॥

ततो जाजलिना तेन समाहूताः पतत्रिणः ।
वाचमुच्चारयन्दिव्यां धर्मस्य वचनात्किल ॥ ००५ ॥

अहिंसादिकृतं कर्म इह चैव परत्र च ।
स्पर्धा निहन्ति वै ब्रह्मन्साहता हन्ति तं नरम् ॥ ००६ ॥

श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ।
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ॥ ००७ ॥

शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ।
देवाश्चित्तममन्यन्त सदृशं यज्ञकर्मणि ॥ ००८ ॥

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ।
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ ००९ ॥

प्रजापतिस्तानुवाच विषमं कृतमित्युत ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ ०१० ॥

भोज्यमन्नं वदान्यस्य कदर्यस्य न वार्धुषेः ॥ ०१० ॥

अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥ ०११ ॥

अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।
जहाति पापं श्रद्धावान्सर्पो जीर्णामिव त्वचम् ॥ ०१२ ॥

ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह ।
निवृत्तशीलदोषो यः श्रद्धावान्पूत एव सः ॥ ०१३ ॥

किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ०१४ ॥

इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः ।
वयं जिज्ञासमानास्त्वा संप्राप्ता धर्मदर्शनात् ॥ ०१५ ॥

स्पर्धां जहि महाप्राज्ञ ततः प्राप्स्यसि यत्परम् ।
श्रद्धावाञ्श्रद्दधानश्च धर्मांश्चैवेह वाणिजः ॥ ०१६ ॥

स्ववर्त्मनि स्थितश्चैव गरीयानेष जाजले ॥ ०१६ ॥

एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
सम्यक्चैवमुपालब्धो धर्मश्चोक्तः सनातनः ॥ ०१७ ॥

तस्य विख्यातवीर्यस्य श्रुत्वा वाक्यानि स द्विजः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥ ०१८ ॥

ततोऽचिरेण कालेन तुलाधारः स एव च ।
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम् ॥ ०१९ ॥

स्वं स्वं स्थानमुपागम्य स्वकर्मफलनिर्जितम्  ॥ ०१९  ॥

समानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते  ॥ ०२०  ॥

श्रद्धा वै सात्त्विकी देवी सूर्यस्य दुहिता नृप ।
सावित्री प्रसवित्री च जीवविश्वासिनी तथा  ॥ ०२१  ॥

वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च भारत ।
यथौपम्योपदेशेन किं भूयः श्रोतुमिच्छसि  ॥ ०२२  ॥

---

# विचख्नुगीता

## अध्याय २५७

भीष्म उवाच  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना  ॥ ००१  ॥

छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम् ।
गोग्रहे यज्ञवाटस्य प्रेक्षमाणः स पार्थिवः  ॥ ००२  ॥

स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम् ।
हिंसायां हि प्रवृत्तायामाशीरेषानुकल्पिता  ॥ ००३  ॥

अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ।

संशयात्मभिरव्यक्तैर्हिंसा समनुकीर्तिता ॥ ००४ ॥

सर्वकर्मस्वहिंसा हि धर्मात्मा मनुरब्रवीत् ।
कामरागाद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ॥ ००५ ॥

तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता ।
अहिंसैव हि सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥ ००६ ॥

उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः ।
आचार इत्यनाचाराः कृपणाः फलहेतवः ॥ ००७ ॥

यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते ॥ ००८ ॥

मांसं मधु सुरा मत्स्या आसवं कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ॥ ००९ ॥

कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रवर्तितम् ।
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ॥ ०१० ॥

पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम् ॥ ०१० ॥

यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किञ्चित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम् ॥ ०११ ॥

महासत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥ ०११ ॥

युधिष्ठिर उवाच ॥

शरीरमापदश्चापि विवदन्त्यविहिंसतः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यति ॥ ०१२ ॥

भीष्म उवाच ॥

यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥ ०१३ ॥

---

# चिरकारिकोपाख्यानम्

## अध्याय २५८

युधिष्ठिर उवाच ॥

कथं कार्यं परीक्षेत शीघ्रं वाथ चिरेण वा ।
सर्वथा कार्यदुर्गेऽस्मिन्भवान्नः परमो गुरुः ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चिरकारेस्तु यत्पूर्वं वृत्तमाङ्गिरसे कुले ॥ ००२ ॥

चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
चिरकारी हि मेधावी नापराध्यति कर्मसु ॥ ००३ ॥

चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः ।
चिरं हि सर्वकार्याणि समेक्षावान्प्रपद्यते ॥ ००४ ॥

चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रच्चिरं स्वपन् ।

चिरकार्याभिसंपत्तेश्चिरकारी तथोच्यते ॥ ००५ ॥

अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ ००६ ॥

व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ ००७ ॥

स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ ००८ ॥

पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छले नास्मिन्निमज्जेयमसाधुवत् ॥ ००९ ॥

पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किं नु मां नात्र पीडयेत् ॥ ०१० ॥

स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ ०११ ॥

अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणम् ।
युक्तक्षमावुभावेतौ नातिवर्तेतमां कथम् ॥ ०१२ ॥

पिता ह्यात्मानमाधत्ते जायायां जज्ञियामिति ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ ०१३ ॥

सोऽहमात्मा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः ।
विज्ञानं मे कथं न स्याद्बुबुधे चात्मसंभवम् ॥ ०१४ ॥

जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि ।
पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ॥ ०१५ ॥

गुरुरग्र्यः परो धर्मः पोषणाध्ययनाद्धितः ।
पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः ॥ ०१६ ॥

प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता ।
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ ०१७ ॥

तस्मात्पितुर्वचः कार्यं न विचार्यं कथञ्चन ।
पातकान्यपि पूयन्ते पितुर्वचनकारिणः ॥ ०१८ ॥

भोगे भाग्ये प्रसवने सर्वलोकनिदर्शने ।
भर्त्रा चैव समायोगे सीमन्तोन्नयने तथा ॥ ०१९ ॥

पिता स्वर्गः पिता धर्मः पिता परमकं तपः ।
पितरि प्रीतिमापन्ने सर्वाः प्रीयन्ति देवताः ॥ ०२० ॥

आशिषस्ता भजन्त्येनं पुरुषं प्राह याः पिता ।
निष्कृतिः सर्वपापानां पिता यदभिनन्दति ॥ ०२१ ॥

मुच्यते बन्धनात्पुष्पं फलं वृन्तात्प्रमुच्यते ।
क्लिश्यन्नपि सुतस्नेहैः पिता स्नेहं न मुञ्चति ॥ ०२२ ॥

एतद्विचिन्तितं तावत्पुत्रस्य पितृगौरवम् ।
पिता ह्यल्पतरं स्थानं चिन्तयिष्यामि मातरम् ॥ ०२३ ॥

यो ह्ययं मयि संघातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथारणिः ॥ ०२४ ॥

माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ॥ ०२४ ॥

न च शोचति नाप्येनं स्थाविर्यमपकर्षति ।

श्रिया हीनोऽपि यो गेहे अम्बेति प्रतिपद्यते ॥ ०२५ ॥

पुत्रपौत्रसमाकीर्णो जननीं यः समाश्रितः ।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ॥ ०२६ ॥

समर्थं वासमर्थं वा कृशं वाप्यकृशं तथा ।
रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ॥ ०२७ ॥

तदा स वृद्धो भवति यदा भवति दुःखितः ।
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ ०२८ ॥

नास्ति मातृसमा छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रपा ॥ ०२९ ॥

कुक्षिसंधारणाद्धात्री जननाज्जननी स्मृता ।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः ॥ ०३० ॥

शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम् ।
चेतनावान्नरो हन्याद्यस्य नासुषिरं शिरः ॥ ०३१ ॥

दम्पत्योः प्राणसंश्लेषे योऽभिसंधिः कृतः किल ।
तं माता वा पिता वेद भूतार्थो मातरि स्थितः ॥ ०३२ ॥

माता जानाति यद्गोत्रं माता जानाति यस्य सः ।
मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥ ०३३ ॥

पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च ।
यदि याप्यन्ति पुरुषाः स्त्रियो नार्हन्ति याप्यताम् ॥ ०३४ ॥

भरणाद्धि स्त्रियो भर्ता पात्याच्चैव स्त्रियाः पतिः ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पतिः पतिः ॥ ०३५ ॥

एवं स्त्री नापराध्नोति नर एवापराध्यति ।
व्युच्चरंश्च महादोषं नर एवापराध्यति ॥ ०३६ ॥

स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।
तस्यात्मना तु सदृशमात्मानं परमं ददौ ॥ ०३७ ॥

सर्वकार्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ॥ ०३७ ॥

यश्चनोक्तो हि निर्देशः स्त्रिया मैथुनतृप्तये ।
तस्य स्मारयतो व्यक्तमधर्मो नात्र संशयः ॥ ०३८ ॥

यावन्नारीं मातरं च गौरवे चाधिके स्थिताम् ।
अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणाः ॥ ०३९ ॥

देवतानां समावायमेकस्थं पितरं विदुः ।
मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ॥ ०४० ॥

एवं विमृशतस्तस्य चिरकारितया बहु ।
दीर्घः कालो व्यतिक्रान्तस्ततस्तस्यागमत्पिता ॥ ०४१ ॥

मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ।
विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ॥ ०४२ ॥

सोऽब्रवीद्दुःखसंतप्तो भृशमश्रूणि वर्तयन् ।
श्रुतधैर्यप्रसादेन पश्चात्तापमुपागतः ॥ ०४३ ॥

आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरंदरः ।
अतिथिव्रतमास्थाय ब्राह्मणं रूपमास्थितः ॥ ०४४ ॥

समया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ।

अर्घ्यं पाद्यं च न्यायेन तयाभिप्रतिपादितः ॥ ०४५ ॥

परवत्यस्मि चाप्युक्तः प्रणयिष्ये नयेन च ।
अत्र चाकुशले जाते स्त्रियो नास्ति व्यतिक्रमः ॥ ०४६ ॥

एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः ।
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ॥ ०४७ ॥

ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः ।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे ॥ ०४८ ॥

हत्वा साध्वीं च नारीं च व्यसनित्वाच्च शासिताम् ।
भर्तव्यत्वेन भार्यां च को नु मां तारयिष्यति ॥ ०४९ ॥

अन्तरेण मयाज्ञप्तश्चिरकारी ह्युदारधीः ।
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ॥ ०५० ॥

चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः ॥ ०५१ ॥

त्राहि मां मातरं चैव तपो यच्चार्जितं मया ।
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ॥ ०५२ ॥

सहजं चिरकारित्वं चिरप्राज्ञतया तव ।
सफलं तत्तवाद्यास्तु भवाद्य चिरकारिकः ॥ ०५३ ॥

चिरमाशंसितो मात्रा चिरं गर्भेण धारितः ।
सफलं चिरकारित्वं कुरु त्वं चिरकारिक ॥ ०५४ ॥

चिरायते च संतापाच्चिरं स्वपिति वारितः ।
आवयोश्चिरसंतापादवेक्ष्य चिरकारिक ॥ ०५५ ॥

एवं स दुःखितो राजन्महर्षिर्गौतमस्तदा ।
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ ०५६ ॥

चिरकारी तु पितरं दृष्ट्वा परमदुःखितः ।
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ॥ ०५७ ॥

गौतमस्तु सुतं दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीं चैव निराकारां परामभ्यगमन्मुदम् ॥ ०५८ ॥

न हि सा तेन संभेदं पत्नी नीता महात्मना ।
विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ॥ ०५९ ॥

हन्यात्त्वनपवादेन शस्त्रपाणौ सुते स्थिते ।
विनीतं प्रश्नयित्वा च व्यवस्येदात्मकर्मसु ॥ ०६० ॥

बुद्धिश्चासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ०६१ ॥

ततः पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि ।
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ॥ ०६२ ॥

एवं स गौतमः पुत्रं प्रीतिहर्षसमन्वितः ।
अभिनन्द्य महाप्राज्ञ इदं वचनमब्रवीत् ॥ ०६३ ॥

चिरकारिक भद्रं ते चिरकारी चिरं भव ।
चिरायमाणे त्वयि च चिरमस्मि सुदुःखितः ॥ ०६४ ॥

गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः ।
चिरकारिषु धीरेषु गुणोद्देशसमाश्रयात् ॥ ०६५ ॥

चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत् ।
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ ०६६ ॥

रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ०६७ ॥

बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ०६८ ॥

एवं स गौतमस्तस्य प्रीतः पुत्रस्य भारत ।
कर्मणा तेन कौरव्य चिरकारितया तया ॥ ०६९ ॥

एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः ।
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ॥ ०७० ॥

चिरं धारयते रोषं चिरं कर्म नियच्छति ।
पश्चात्तापकरं कर्म न किञ्चिदुपपद्यते ॥ ०७१ ॥

चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत् ।
चिरं धर्मान्निषेवेत कुर्याच्चान्वेषणं चिरम् ॥ ०७२ ॥

चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च ।
चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम् ॥ ०७३ ॥

ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिरं पृच्छेच्चिरं ब्रूयाच्चिरं न परिभूयते ॥ ०७४ ॥

उपास्य बहुलास्तस्मिन्नाश्रमे सुमहातपाः ।
समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ॥ ०७५ ॥

# सत्यवद् द्युमत्सेनसंवादः

## अध्याय २५९

युधिष्ठिर उवाच ॥

कथं राजा प्रजा रक्षेन्न च किञ्चित्प्रतापयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह ॥ ००२ ॥

अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम् ।
वधाय नीयमानेषु पितुरेवानुशासनात् ॥ ००३ ॥

अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम् ।
वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ॥ ००४ ॥

द्युमत्सेन उवाच ॥

अथ चेदवधो धर्मो धर्मः को जातु चिद्भवेत् ।
दस्यवश्चेन्न हन्येरन्सत्यवन्सङ्करो भवेत् ॥ ००५ ॥

ममेदमिति नास्यैतत्प्रवर्तेत कलौ युगे ।
लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः ॥ ००६ ॥

सत्यवानुवाच ॥

सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः ।
धर्मपाशनिबद्धानामल्पो व्यपचरिष्यति ॥ ००७ ॥

यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः ।
अयं मे न श्रृणोतीति तस्मिन्राजा प्रधारयेत् ॥ ००८ ॥

तत्त्वाभेदेन यच्छास्त्रं तत्कार्यं नान्यथा वधः ।
असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ॥ ००९ ॥

दस्यून्हिनस्ति वै राजा भूयसो वाप्यनागसः ।
भार्या माता पिता पुत्रो हन्यते पुरुषे हते ॥ ०१० ॥

परेणापकृते राजा तस्मात्सम्यक्प्रधारयेत् ॥ ०१० ॥

असाधुश्चैव पुरुषो लभते शीलमेकदा ।
साधोश्चापि ह्यसाधुभ्यो जायतेऽशोभना प्रजा ॥ ०११ ॥

न मूलघातः कर्तव्यो नैष धर्मः सनातनः ।
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥ ०१२ ॥

उद्वेजनेन बन्धेन विरूपकरणेन च ।
वधदण्डेन ते क्लेश्या न पुरोऽहितसंपदा ॥ ०१३ ॥

यदा पुरोहितं वा ते पर्येयुः शरणैषिणः ।
करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः ॥ ०१४ ॥

तदा विसर्गमर्हाः स्युरितीदं नृपशासनम् ।
बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽर्हति वाससम् ॥ ०१५ ॥

गरीयांसो गरीयांसमपराधे पुनः पुनः ।

तथा विसर्गमर्हन्ति न यथा प्रथमे तथा ॥ ०१६ ॥

द्युमत्सेन उवाच ॥

यत्र यत्रैव शक्येरन्संयन्तुं समये प्रजाः ।
स तावत्प्रोच्यते धर्मो यावन्न प्रतिलङ्घ्यते ॥ ०१७ ॥

अहन्यमानेषु पुनः सर्वमेव पराभवेत् ।
पूर्वे पूर्वतरे चैव सुशास्या अभवञ्जनाः ॥ ०१८ ॥

मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः ।
पुरा धिग्दण्ड एवासीद्वाग्दण्डस्तदनन्तरम् ॥ ०१९ ॥

आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते ।
वधेनापि न शक्यन्ते नियन्तुमपरे जनाः ॥ ०२० ॥

नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः ।
न गन्धर्वपितॄणां च कः कस्येह न कश्चन ॥ ०२१ ॥

पद्मं श्मशानादादत्ते पिशाचाच्चापि दैवतम् ।
तेषु यः समयं कुर्यादज्ञेषु हतबुद्धिषु ॥ ०२२ ॥

सत्यवानुवाच ॥

तान्न शक्नोषि चेत्साधून्परित्रातुमहिंसया ।
कस्यचिद्भूतभव्यस्य लाभेनान्तं तथा कुरु ॥ ०२३ ॥

द्युमत्सेन उवाच ॥

राजानो लोकयात्रार्थं तप्यन्ते परमं तपः ।
अपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च ॥ ०२४ ॥

वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति दुष्कृतीन् ।
सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः ॥ ०२५ ॥

श्रेयसः श्रेयसीमेवं वृत्तिं लोकोऽनुवर्तते ।
सदैव हि गुरोर्वृत्तमनुवर्तन्ति मानवाः ॥ ०२६ ॥

आत्मानमसमाधाय समाधित्सति यः परान् ।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥ ०२७ ॥

यो राज्ञो दम्भमोहेन किञ्चित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥ ०२८ ॥

आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता ।
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् ॥ ०२९ ॥

यत्र वै पापकृत्क्लेश्यो न महद्दुःखमर्छति ।
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम् ॥ ०३० ॥

इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ॥ ०३० ॥

इति चैवानुशिष्टोऽस्मि पूर्वैस्तात पितामहैः ।
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ॥ ०३१ ॥

एतत्प्रथमकल्पेन राजा कृतयुगेऽभजत् ।
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा ॥ ०३२ ॥

द्वापरे तु द्विपादेन पादेन त्वपरे युगे ॥ ०३२ ॥

तथा कलियुगे प्राप्ते राज्ञां दुश्चरितेन ह ।
भवेत्कालविशेषेण कला धर्मस्य षोडशी ॥ ०३३ ॥

अथ प्रथमकल्पेन सत्यवन्सङ्करो भवेत् ।
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत्  ॥ ०३४  ॥

सत्याय हि यथा नेह जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत्  ॥ ०३५  ॥

---

# कपिलगोसंवादः

## अध्याय २६०

युधिष्ठिर उवाच  ॥

अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः ।
यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह  ॥ ००१  ॥

गार्हस्थ्यस्य च धर्मस्य त्यागधर्मस्य चोभयोः ।
अदूरसंप्रस्थितयोः किं स्विच्छ्रेयः पितामह  ॥ ००२  ॥

भीष्म उवाच  ॥

उभौ धर्मौ महाभागावुभौ परमदुश्चरौ ।
उभौ महाफलौ तात सद्भिराचरितावुभौ  ॥ ००३  ॥

अत्र ते वर्तयिष्यामि प्रामाण्यमुभयोस्तयोः ।
शृणुष्वैकमनाः पार्थ छिन्नधर्मार्थसंशयम्  ॥ ००४  ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ॥ ००५ ॥

आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम् ।
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ॥ ००६ ॥

तां नियुक्तामदीनात्मा सत्त्वस्थः समये रतः ।
ज्ञानवान्नियताहारो ददर्श कपिलस्तदा ॥ ००७ ॥

स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।
स्मरामि शिथिलं सत्यं वेदा इत्यब्रवीत्सकृत् ॥ ००८ ॥

तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।
हंहो वेदा यदि मता धर्माः केनापरे मताः ॥ ००९ ॥

तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः ।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ ०१० ॥

तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः ।
का विवक्षास्ति वेदेषु निरारम्भस्य सर्वशः ॥ ०११ ॥

कपिल उवाच ॥

नाहं वेदान्विनिन्दामि न विवक्षामि कर्हिचित् ।
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥ ०१२ ॥

गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।
गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ ०१३ ॥

देवयाना हि पन्थानश्चत्वारः शाश्वता मताः ।
तेषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् ॥ ०१४ ॥

एवं विदित्वा सर्वार्थानारभेदिति वैदिकम् ।
नारभेदिति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ ०१५ ॥

अनारम्भे ह्यदोषः स्यादारम्भेऽदोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥ ०१६ ॥

यद्यत्र किञ्चित्प्रत्यक्षमहिंसायाः परं मतम् ।
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ ०१७ ॥

स्यूमरश्मिरुवाच ॥

स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ ०१८ ॥

अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्या ओषधयः प्राणस्यान्नमिति श्रुतिः ॥ ०१९ ॥

तथैवान्नं ह्यहरहः सायं प्रातर्निरुप्यते ।
पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः ॥ ०२० ॥

एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।
तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः ॥ ०२१ ॥

ते स्मान्योन्यञ्चराः सर्वे प्राणिनः सप्त सप्त च ।
यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसञ्ज्ञितम् ॥ ०२२ ॥

एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।
को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः ॥ ०२३ ॥

पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह ।

स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्त्वृते मखम्  ॥ ०२४  ॥

ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।
हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश  ॥ ०२५  ॥

ऋचो यजूंषि सामानि यजमानश्च षोडशः ।
अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते  ॥ ०२६  ॥

अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः  ॥ ०२६  ॥

आज्येन पयसा दध्ना शकृतामिक्षया त्वचा ।
वालैः श्रृङ्गेण पादेन संभवत्येव गौर्मखम्  ॥ ०२७  ॥

एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते  ॥ ०२७  ॥

यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः ।
संहत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत  ॥ ०२८  ॥

यज्ञार्थानि हि सृष्टानि यथा वै श्रूयते श्रुतिः ।
एवं पूर्वे पूर्वतराः प्रवृत्ताश्चैव मानवाः  ॥ ०२९  ॥

न हिनस्ति ह्यारभते नाभिद्रुह्यति किञ्चन ।
यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया  ॥ ०३०  ॥

यज्ञाङ्गान्यपि चैतानि यथोक्तानि नसंशयः ।
विधिना विधियुक्तानि तारयन्ति परस्परम्  ॥ ०३१  ॥

आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः ।
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात्  ॥ ०३२  ॥

ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।

अनु यज्ञं जगत्सर्वं यज्ञश्चानु जगत्सदा ॥ ०३३ ॥

ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥ ०३४ ॥

न तस्य त्रिषु लोकेषु परलोकभयं विदुः ।
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ॥ ०३५ ॥

ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः ।
यस्मिन्नेतानि सर्वाणि बहिरेव स वै द्विजः ॥ ०३६ ॥

अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।
यच्चेतरैर्महायज्ञैर्वेद तद्भगवान्स्वतः ॥ ०३७ ॥

तस्माद्ब्रह्मन्यजेतैव याजयेच्चाविचारयन् ।
यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ॥ ०३८ ॥

नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः ।
वेदवादविदश्चैव प्रमाणमुभयं तदा ॥ ०३९ ॥

---

# अध्याय २६१

कपिल उवाच ॥

एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ ००१ ॥

निर्द्वंद्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥ ००२ ॥

अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ ००३ ॥

विशोका नष्टरजसस्तेषां लोकाः सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ ००४ ॥

स्यूमरश्मिरुवाच ॥

यद्येषा परमा निष्ठा यद्येषा परमा गतिः ।
गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्तते ॥ ००५ ॥

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य वर्तन्त इतरेऽऽश्रमाः ॥ ००६ ॥

गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किञ्चिदेजते ॥ ००७ ॥

प्रजनाद्ध्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुने ।
प्रजनं चाप्युतान्यत्र न कथञ्चन विद्यते ॥ ००८ ॥

यास्ताः स्युर्बहिरोषध्यो बह्वरण्यास्तथा द्विज ।
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते ॥ ००९ ॥

कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ॥ ००९ ॥

अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः ।
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः ॥ ०१० ॥

श्रमस्योपरमो दृष्टः प्रव्रज्या नाम पण्डितैः ॥ ०१० ॥

त्रैलोक्यस्यैव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ॥ ०११ ॥

प्राग्गर्भाधानान्मन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्रम्भेषु वर्तन्ते विश्रम्भेष्वप्यसंशयम् ॥ ०१२ ॥

दाहः पुनः संश्रयणे संस्थिते पात्रभोजनम् ।
दानं गवां पशूनां वा पिण्डानां चाप्सु मज्जनम् ॥ ०१३ ॥

अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरः स्मृताः ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥ ०१४ ॥

एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥ ०१५ ॥

श्रिया विहीनैरलसैः पण्डितैरपलापितम् ।
वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ ०१६ ॥

न वै पापैर्ह्रियते कृष्यते वा ; यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यज्ञः पशुभिः सार्धमेति ; संतर्पितस्तर्पयते च कामैः ॥ ०१७ ॥

न वेदानां परिभवान्न शाठ्येन न मायया ।
महत्प्राप्नोति पुरुषो ब्रह्म ब्रह्मणि विन्दति ॥ ०१८ ॥

कपिल उवाच ॥

दर्शं च पौर्णमासं च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः ॥ ०१९ ॥

अनारम्भाः सुधृतयः शुचयो ब्रह्मसंश्रिताः ।
ब्रह्मणैव स्म ते देवांस्तर्पयन्त्यमृतैषिणः ॥ ०२० ॥

सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ०२१ ॥

चतुर्द्वारं पुरुषं चतुर्मुखं ; चतुर्धा चैनमुपयाति निन्दा ।
बाहुभ्यां वाच उदरादुपस्था ;त्तेषां द्वारं द्वारपालो बुभूषेत् ॥ ०२२ ॥

नाक्षैर्दीव्येन्नाददीतान्यवित्तं ; न वायोनीयस्य शृतं प्रगृह्णेत् ।
क्रुद्धो न चैव प्रहरेत धीमां ;स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ ०२३ ॥

नाक्रोशमर्छेन्न मृषा वदेच्च ; न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त ;स्तथास्य वाग्द्वारमथो सुगुप्तम् ॥ ०२४ ॥

नानाशनः स्यान्न महाशनः स्या ;दलोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत ; तथास्य स्याज्जाठरी द्वारगुप्तिः ॥ ०२५ ॥

न वीरपत्नीं विहरेत नारीं ; न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं ह्यात्मनि धारयीत ; तथास्योपस्थद्वारगुप्तिर्भवेत ॥ ०२६ ॥

द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं बाहू वाक्चतुर्थी स वै द्विजः ॥ ०२७ ॥

मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥ ०२८ ॥

अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥ ०२९ ॥

द्वंद्वारामेषु सर्वेषु य एको रमते मुनिः ।

परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ०३० ॥

येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥ ०३१ ॥

अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥ ०३२ ॥

नान्तरेणानुजानन्ति वेदानां यत्क्रियाफलम् ।
अनुज्ञाय च तत्सर्वमन्यद्रोचयतेऽफलम् ॥ ०३३ ॥

फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथानैकान्तिकानि च ॥ ०३४ ॥

गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चापि सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ०३५ ॥

स्यूमरश्मिरुवाच ॥

यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ०३६ ॥

कपिल उवाच ॥

प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥ ०३७ ॥

स्यूमरश्मिरुवाच ॥

स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ॥ ०३८ ॥

इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ॥ ०३८ ॥

प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ॥ ०३९ ॥

अन्यत्र तर्कशास्त्रेभ्य आगमाच्च यथागमम् ॥ ०३९ ॥

आगमो वेदवादस्तु तर्कशास्त्राणि चागमः ।
यथागममुपासीत आगमस्तत्र सिध्यति ॥ ०४० ॥

सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥ ०४० ॥

नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना ।
ह्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति ॥ ०४१ ॥

एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ॥ ०४१ ॥

नैव त्यागी न संतुष्टो नाशोको न निरामयः ।
न निर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥ ०४२ ॥

भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ०४३ ॥

एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये किं निरामयम् ॥ ०४४ ॥

कपिल उवाच ॥

यद्यदाचरते शास्त्रमथ सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ॥ ०४५ ॥

सर्वं पावयते ज्ञानं यो ज्ञानं ह्यनुवर्तते ।
ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥ ०४६ ॥

भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरागमाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥ ०४७ ॥

शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबला जनाः ।
कामद्वेषाभिभूतत्वादहङ्कारवशं गताः ॥ ०४८ ॥

याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमतयोऽशिवाः ॥ ०४९ ॥

वैगुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमःशरीराणां तम एव परायणम् ॥ ०५० ॥

यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ॥ ०५१ ॥

नित्यमेवाभिवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ ०५१ ॥

एतद्बुद्ध्यानुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमभीप्सन्तो यतयः संयमे रताः ॥ ०५२ ॥

स्यूमरश्मिरुवाच ॥

सर्वमेतन्मया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शात्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥ ०५३ ॥

यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥ ०५४ ॥

न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥ ०५५ ॥

शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः ।
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ॥ ०५६ ॥

अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥ ०५६ ॥

शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतोदिशम् ॥ ०५७ ॥

वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥ ०५७ ॥

इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥ ०५८ ॥

यद्येतदेवं कृत्वापि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥ ०५९ ॥

नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतःक्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥ ०६० ॥

तथ्यं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥ ०६१ ॥

---

# अध्याय २६२

कपिल उवाच ॥

वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतःकृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ ००१ ॥

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ००१ ॥

शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम् ।
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ॥ ००२ ॥

आनन्त्यमनुयुङ्क्ते यः कर्मणा तद्ब्रवीमि ते ।
निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम् ॥ ००३ ॥

धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः ।
उत्पन्नत्यागिनोऽलुब्धाः कृपासूयाविवर्जिताः ॥ ००४ ॥

धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ॥ ००४ ॥

अनाश्रिताः पापकृत्याः कदाचित्कर्मयोनितः ।
मनःसङ्कल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ॥ ००५ ॥

अक्रुध्यन्तोऽनसूयन्तो निरहङ्कारमत्सराः ।
ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥ ००६ ॥

आसन्गृहस्था भूयिष्ठमव्युत्क्रान्ताः स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥ ००७ ॥

समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ॥ ००८ ॥

पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवाधिसंहताः  ॥ ००९  ॥

संहत्य धर्मं चरतां पुरासीत्सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन  ॥ ०१०  ॥

सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः  ॥ ०११  ॥

य एव प्रथमः कल्पस्तमेवाभ्याचरन्सह ।
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते  ॥ ०१२  ॥

दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः  ॥ ०१२  ॥

यत एवंविधा विप्राः पुराणा यज्ञवाहनाः ।
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः  ॥ ०१३  ॥

यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः  ॥ ०१३  ॥

तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम् ।
आगमाश्च यथाकालं सङ्कल्पाश्च यथाव्रतम्  ॥ ०१४  ॥

अपेतकामक्रोधानां प्रकृत्या संशितात्मनाम् ।
ऋजूनां शमनित्यानां स्थितानां स्वेषु कर्मसु  ॥ ०१५  ॥

सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः  ॥ ०१५  ॥

तेषामदीनसत्त्वानां दुश्चराचारकर्मणाम् ।
स्वकर्मभिः संवृतानां तपो घोरत्वमागतम्  ॥ ०१६  ॥

तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
अशक्नुवद्भिश्चरितुं किञ्चिद्धर्मेषु सूचितम्  ॥ ०१७  ॥

निरापद्धर्म आचारस्त्वप्रमादोऽपराभवः ।
सर्ववर्णेषु यत्तेषु नासीत्कश्चिद्व्यतिक्रमः  ॥ ०१८  ॥

धर्ममेकं चतुष्पादमाश्रितास्ते नरर्षभाः ।
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम्  ॥ ०१९  ॥

गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ।
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः  ॥ ०२०  ॥

धर्ममेतं चतुष्पादमाश्रमं ब्राह्मणा विदुः ।
आनन्त्यं ब्रह्मणः स्थानं ब्राह्मणा नाम निश्चयः  ॥ ०२१  ॥

अत एवंविधा विप्राः पुराणा धर्मचारिणः ।
त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः  ॥ ०२२  ॥

नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ।
आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम्  ॥ ०२३  ॥

यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः ।
न लिप्यन्ते पापकृत्यैः कदाचित्कर्मयोनितः  ॥ ०२४  ॥

एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ।
कर्मैव पुरुषस्याह शुभं वा यदि वाशुभम्  ॥ ०२५  ॥

एवं पक्वकषायाणामानन्त्येन श्रुतेन च ।
सर्वमानन्त्यमेवासीदेवं नः शाश्वती श्रुतिः  ॥ ०२६  ॥

तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ।

चतुर्थ औपनिषदो धर्मः साधारणः स्मृतः ॥ ०२७ ॥

स सिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः ।
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ॥ ०२८ ॥

अपवर्गगतिर्नित्यो यतिधर्मः सनातनः ।
साधारणः केवलो वा यथाबलमुपास्यते ॥ ०२९ ॥

गच्छतो गच्छतः क्षेमं दुर्बलोऽत्रावसीदति ।
ब्रह्मणः पदमन्विच्छन्संसारान्मुच्यते शुचिः ॥ ०३० ॥

स्यूमरश्मिरुवाच ॥

ये भुञ्जते ये ददते यजन्तेऽधीयते च ये ।
मात्राभिर्धर्मलब्धाभिर्ये वा त्यागं समाश्रिताः ॥ ०३१ ॥

एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः ।
एतदाचक्ष्व मे ब्रह्मन्यथातथ्येन पृच्छतः ॥ ०३२ ॥

कपिल उवाच ॥

परिग्रहाः शुभाः सर्वे गुणतोऽभ्युदयाश्च ये ।
न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ॥ ०३३ ॥

स्यूमरश्मिरुवाच ॥

भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्मनिश्चयाः ।
आश्रमाणां च सर्वेषां निष्ठायामैक्यमुच्यते ॥ ०३४ ॥

एकत्वे च पृथक्त्वे च विशेषो नान्य उच्यते ।
तद्यथावद्यथान्यायं भगवान्प्रब्रवीतु मे ॥ ०३५ ॥

कपिल उवाच ॥

शरीरपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
पक्के कषाये वमनै रसज्ञाने न तिष्ठति ॥ ०३६ ॥

आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥ ०३७ ॥

पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत्परम् ।
तद्विद्वाननुबुध्येत मनसा कर्मनिश्चयम् ॥ ०३८ ॥

यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः ।
गतिं गच्छन्ति संतुष्टास्तामाहुः परमां गतिम् ॥ ०३९ ॥

वेदांश्च वेदितव्यं च विदित्वा च यथास्थिति ।
एवं वेदविदित्याहुरतोऽन्यो वातरेटकः ॥ ०४० ॥

सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ॥ ०४१ ॥

एषैव निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ।
एतदन्तं च मध्यं च सच्चासच्च विजानतः ॥ ०४२ ॥

समस्तत्याग इत्येव शम इत्येव निष्ठितः ।
संतोष इत्यत्र शुभमपवर्गे प्रतिष्ठितम् ॥ ०४३ ॥

ऋतं सत्यं विदितं वेदितव्यं ; सर्वस्यात्मा जङ्गमं स्थावरं च ।
सर्वं सुखं यच्छिवमुत्तमं च ; ब्रह्माव्यक्तं प्रभवश्चाव्ययश्च ॥ ०४४ ॥

तेजः क्षमा शान्तिरनामयं शुभं ; तथाविधं व्योम सनातनं ध्रुवम् ।

एतैः शब्दैर्गम्यते बुद्धिनेत्रै ;स्तस्मै नमो ब्रह्मणे ब्राह्मणाय ॥ ०४५ ॥

---

# कुण्डधारोपाख्यानम्

## अध्याय २६३

युधिष्ठिर उवाच ॥

धर्ममर्थं च कामं च वेदाः शंसन्ति भारत ।
कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
कुण्डधारेण यत्प्रीत्या भक्तायोपकृतं पुरा ॥ ००२ ॥

अधनो ब्राह्मणः कश्चित्कामाद्धर्ममवैक्षत ।
यज्ञार्थं स ततोऽर्थार्थी तपोऽतप्यत दारुणम् ॥ ००३ ॥

स निश्चयमथो कृत्वा पूजयामास देवताः ।
भक्त्या न चैवाध्यगच्छद्धनं संपूज्य देवताः ॥ ००४ ॥

ततश्चिन्तां पुनः प्राप्तः कतमद्दैवतं नु तत् ।
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ॥ ००५ ॥

अथ सौम्येन वपुषा देवानुचरमन्तिके ।
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ००६ ॥

दृष्ट्वैव तं महात्मानं तस्य भक्तिरजायत ।
अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम्  ॥ ००७  ॥

संनिकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः ।
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च  ॥ ००८  ॥

ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि ।
बलिभिर्विविधैश्चापि पूजयामास तं द्विजः  ॥ ००९  ॥

ततः स्वल्पेन कालेन तुष्टो जलधरस्तदा ।
तस्योपकारे नियतामिमां वाचमुवाच ह  ॥ ०१०  ॥

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः  ॥ ०११  ॥

आशायास्तनयोऽधर्मः क्रोधोऽसूयासुतः स्मृतः ।
पुत्रो लोभो निकृत्यास्तु कृतघ्नो नार्हति प्रजाम्  ॥ ०१२  ॥

ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा ।
अपश्यत्सर्वभूतानि कुशेषु शयितस्तदा  ॥ ०१३  ॥

शमेन तपसा चैव भक्त्या च निरुपस्कृतः ।
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत  ॥ ०१४  ॥

मणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् ।
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर  ॥ ०१५  ॥

तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च ।
शुभैः कर्मभिरारब्धाः प्रच्छिदन्त्यशुभेषु च  ॥ ०१६  ॥

पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः ।
निष्पत्य पतितो भूमौ देवानां भरतर्षभ ॥ ०१७ ॥

ततस्तु देववचनान्मणिभद्रो महायशाः ।
उवाच पतितं भूमौ कुण्डधार किमिष्यते ॥ ०१८ ॥

कुण्डधार उवाच ॥

यदि प्रसन्ना देवा मे भक्तोऽयं ब्राह्मणो मम ।
अस्यानुग्रहमिच्छामि कृतं किञ्चित्सुखोदयम् ॥ ०१९ ॥

भीष्म उवाच ॥

ततस्तं मणिभद्रस्तु पुनर्वचनमब्रवीत् ।
देवानामेव वचनात्कुण्डधारं महाद्युतिम् ॥ ०२० ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते कृतकार्यः सुखी भव ।
यावद्धनं प्रार्थयते ब्राह्मणोऽयं सखा तव ॥ ०२१ ॥

देवानां शासनात्तावदसंख्येयं ददाम्यहम् ॥ ०२१ ॥

विचार्य कुण्डधारस्तु मानुष्यं चलमध्रुवम् ।
तपसे मतिमाधत्त ब्राह्मणस्य यशस्विनः ॥ ०२२ ॥

कुण्डधार उवाच ॥

नाहं धनानि याचामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥ ०२३ ॥

पृथिवीं रत्नपूर्णां वा महद्वा धनसञ्चयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥ ०२४ ॥

धर्मेऽस्य रमतां बुद्धिर्धर्मं चैवोपजीवतु ।
धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ ०२५ ॥

मणिभद्र उवाच ॥

यदा धर्मफलं राज्यं सुखानि विविधानि च ।
फलान्येवायमश्नातु कायक्लेशविवर्जितः ॥ ०२६ ॥

भीष्म उवाच ॥

ततस्तदेव बहुशः कुण्डधारो महायशाः ।
अभ्यासमकरोद्धर्मे ततस्तुष्टास्य देवताः ॥ ०२७ ॥

मणिभद्र उवाच ॥

प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च ।
भविष्यत्येष धर्मात्मा धर्मे चाधास्यते मतिः ॥ ०२८ ॥

भीष्म उवाच ॥

ततः प्रीतो जलधरः कृतकार्यो युधिष्ठिर ।
ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभम् ॥ ०२९ ॥

ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।
पार्श्वतोऽभ्यागतो न्यस्तान्यथ निर्वेदमागतः ॥ ०३० ॥

ब्राह्मण उवाच ॥

अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम् ।
गच्छामि वनमेवाहं वरं धर्मेण जीवितुम् ॥ ०३१ ॥

भीष्म उवाच ॥

निर्वेदाद्देवतानां च प्रसादात्स द्विजोत्तमः ।
वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ॥ ०३२ ॥

देवतातिथिशेषेण फलमूलाशनो द्विजः ।
धर्मे चापि महाराज रतिरस्याभ्यजायत ॥ ०३३ ॥

त्यक्त्वा मूलफलं सर्वं पर्णाहारोऽभवद्द्विजः ।
पर्णं त्यक्त्वा जलाहारस्तदासीद्द्विजसत्तमः ॥ ०३४ ॥

वायुभक्षस्ततः पश्चाद्बहून्वर्षगणानभूत् ।
न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् ॥ ०३५ ॥

धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्ततः ।
कालेन महता तस्य दिव्या दृष्टिरजायत ॥ ०३६ ॥

तस्य बुद्धिः प्रादुरासीद्यदि दद्यां महद्धनम् ।
तुष्टः कस्मैचिदेवाहं न मिथ्या वाग्भवेन्मम ॥ ०३७ ॥

ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः ।
भूयश्चाचिन्तयत्सिद्धो यत्परं सोऽभ्यपद्यत ॥ ०३८ ॥

यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् ।
स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ॥ ०३९ ॥

तस्य साक्षात्कुण्डधारो दर्शयामास भारत ।
ब्राह्मणस्य तपोयोगात्सौहृदेनाभिचोदितः ॥ ०४० ॥

समागम्य स तेनाथ पूजां चक्रे यथाविधि ।

ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ॥ ०४१ ॥

ततोऽब्रवीत्कुण्डधारो दिव्यं ते चक्षुरुत्तमम् ।
पश्य राज्ञां गतिं विप्र लोकांश्चावेक्ष चक्षुषा ॥ ०४२ ॥

ततो राज्ञां सहस्राणि मग्नानि निरये तदा ।
दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ॥ ०४३ ॥

कुण्डधार उवाच ॥

मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः ।
कृतं मया भवेत्किं ते कश्च तेऽनुग्रहो भवेत् ॥ ०४४ ॥

पश्य पश्य च भूयस्त्वं कामानिच्छेत्कथं नरः ।
स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ॥ ०४५ ॥

भीष्म उवाच ॥

ततोऽपश्यत्स कामं च क्रोधं लोभं भयं मदम् ।
निद्रां तन्द्रीं तथालस्यमावृत्य पुरुषान्स्थितान् ॥ ०४६ ॥

कुण्डधार उवाच ॥

एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम् ।
तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ॥ ०४७ ॥

न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः ।
एष शक्तोऽसि तपसा राज्यं दातुं धनानि च ॥ ०४८ ॥

भीष्म उवाच ॥

ततः पपात शिरसा ब्राह्मणस्तोयधारिणे ।
उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः  ॥ ०४९  ॥

कामलोभानुबन्धेन पुरा ते यदसूयितम् ।
मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि  ॥ ०५०  ॥

क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम् ।
संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत  ॥ ०५१  ॥

ततः सर्वानिमा.ण्ल्लोकान्ब्राह्मणोऽनुचचार ह ।
कुण्डधारप्रसादेन तपसा योजितः पुरा  ॥ ०५२  ॥

विहायसा च गमनं तथा सङ्कल्पितार्थता ।
धर्माच्छक्त्या तथा योगाद्या चैव परमा गतिः  ॥ ०५३  ॥

देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ।
धार्मिकान्पूजयन्तीह न धनाढ्यान्न कामिनः  ॥ ०५४  ॥

सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।
धने सुखकला काचिद्धर्मे तु परमं सुखम्  ॥ ०५५  ॥

---

# उञ्छवृत्तेः पुरावृत्तम्

## अध्याय २६४

युधिष्ठिर उवाच  ॥

बहूनां यज्ञतपसामेकार्थानां पितामह ।
धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि नारदेनानुकीर्तितम् ।
उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य ह ॥ ००२ ॥

राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः ।
उञ्छवृत्तिर्ऋषिः कश्चिद्यज्ञे यज्ञं समादधे ॥ ००३ ॥

श्यामाकमशनं तत्र सूर्यपत्नी सुवर्चला ।
तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ॥ ००४ ॥

उपगम्य वने पृथ्वीं सर्वभूतविहिंसया ।
अपि मूलफलैरिज्यो यज्ञः स्वर्ग्यः परंतप ॥ ००५ ॥

तस्य भार्या व्रतकृशा शुचिः पुष्करचारिणी ।
यज्ञपत्नीत्वमानीता सत्येनानुविधीयते ॥ ००६ ॥

सा तु शापपरित्रस्ता न स्वभावानुवर्तिनी ॥ ००६ ॥

मयूरजीर्णपर्णानां वस्त्रं तस्याश्च पर्णिनाम् ।
अकामायाः कृतं तत्र यज्ञे होत्रानुमार्गतः ॥ ००७ ॥

शुक्रस्य पुनराजातिरपध्यानादधर्मवित् ।
तस्मिन्वने समीपस्थो मृगोऽभूत्सहचारिकः ॥ ००८ ॥

वचोभिरब्रवीत्सत्यं त्वया दुष्कृतकं कृतम् ॥ ००८ ॥

यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति वैकृतः ।

मां भोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमतन्द्रितः ॥ ००९ ॥

ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत् ।
निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् ॥ ०१० ॥

एवमुक्ता निवृत्ता सा प्रविष्टा यज्ञपावकम् ।
किं नु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलम् ॥ ०११ ॥

सा तु बद्धाञ्जलिं सत्यमयाचद्धरिणं पुनः ।
सत्येन संपरिष्वज्य संदिष्टो गम्यतामिति ॥ ०१२ ॥

ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्तत ।
साधु हिंसय मां सत्य हतो यास्यामि सद्गतिम् ॥ ०१३ ॥

पश्य ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा ।
विमानानि विचित्राणि गन्धर्वाणां महात्मनाम् ॥ ०१४ ॥

ततः सुरुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा ।
मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् ॥ ०१५ ॥

स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।
तस्य निष्कृतिमाधत्त न ह्यसौ यज्ञसंविधिः ॥ ०१६ ॥

तस्य तेन तु भावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ ०१७ ॥

ततस्तं भगवान्धर्मो यज्ञं याजयत स्वयम् ।
समाधानं च भार्याया लेभे स तपसा परम् ॥ ०१८ ॥

अहिंसा सकलो धर्मो हिंसा यज्ञेऽसमाहिता ।
सत्यं तेऽहं प्रवक्ष्यामि यो धर्मः सत्यवादिनाम् ॥ ०१९ ॥

# अध्याय २६५

युधिष्ठिर उवाच ॥

कथं भवति पापात्मा कथं धर्मं करोति वा ।
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ ००१ ॥

भीष्म उवाच ॥

विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥ ००२ ॥

विज्ञानार्थं हि पञ्चानामिच्छा पूर्वं प्रवर्तते ।
प्राप्य ताञ्जायते कामो द्वेषो वा भरतर्षभ ॥ ००३ ॥

ततस्तदर्थं यतते कर्म चारभते पुनः ।
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥ ००४ ॥

ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ००५ ॥

लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ००६ ॥

व्याजेन चरतो धर्ममर्थव्याजोऽपि रोचते ।
व्याजेन सिध्यमानेषु धनेषु कुरुनन्दन ॥ ००७ ॥

तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ॥ ००८ ॥

उत्तरं न्यायसंबद्धं ब्रवीति विधियोजितम् ।
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ ००९ ॥

पापं चिन्तयते चैव प्रब्रवीति करोति च ।
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ॥ ०१० ॥

एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥ ०११ ॥

एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ।
यथा कुशलधर्मा स कुशलं प्रतिपद्यते ॥ ०१२ ॥

य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते ॥ ०१३ ॥

तस्य साधुसमाचारादभ्यासाच्चैव वर्धते ।
प्रज्ञा धर्मे च रमते धर्मं चैवोपजीवति ॥ ०१४ ॥

सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥ ०१५ ॥

धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ।
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ॥ ०१६ ॥

शब्दे स्पर्शे तथा रूपे रसे गन्धे च भारत ।
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः ॥ ०१७ ॥

स धर्मस्य फलं लब्ध्वा न तृप्यति युधिष्ठिर ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ०१८ ॥

प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ।
विरज्यते तदा कामान्न च धर्मं विमुञ्चति ॥ ०१९ ॥

सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षाय यतते नानुपायादुपायतः ॥ ०२० ॥

शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ ०२१ ॥

एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मं तथा मोक्षं निर्वेदं चैव भारत ॥ ०२२ ॥

तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ ०२३ ॥

---

# अध्याय २६६

युधिष्ठिर उवाच ॥

मोक्षः पितामहेनोक्त उपायान्नानुपायतः ।
तमुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ ००१ ॥

भीष्म उवाच ॥

त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् ।

यदुपायेन सर्वार्थान्नित्यं मृगयसेऽनघ ॥ ००२ ॥

करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सानघ ।
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ ००३ ॥

पूर्वे समुद्रे यः पन्था न स गच्छति पश्चिमम् ।
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥ ००४ ॥

क्षमया क्रोधमुच्छिन्द्यात्कामं सङ्कल्पवर्जनात् ।
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेतुमर्हति ॥ ००५ ॥

अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात् ।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ ००६ ॥

भ्रमं प्रमोहमावर्तमभ्यासाद्विनिवर्तयेत् ।
निद्रां च प्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ००७ ॥

उपद्रवांस्तथा रोगान्हितजीर्णमिताशनात् ।
लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् ॥ ००८ ॥

अनुक्रोशादधर्मं च जयेद्धर्ममुपेक्षया ।
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ॥ ००९ ॥

अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः ॥ ०१० ॥

उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत् ।
मौनेन बहुभाष्यं च शौर्येण च भयं जयेत् ॥ ०११ ॥

यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ।
ज्ञानमात्मा महान्यच्छेत्तं यच्छेच्छान्तिरात्मनः ॥ ०१२ ॥

तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान्समुच्छिद्य पञ्च यान्कवयो विदुः ॥ ०१३ ॥

कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ।
परित्यज्य निषेवेत तथेमान्योगसाधनान् ॥ ०१४ ॥

ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः ॥ ०१५ ॥

एतैर्विवर्धते तेजः पाप्मानमपहन्ति च ।
सिध्यन्ति चास्य सङ्कल्पा विज्ञानं च प्रवर्तते ॥ ०१६ ॥

धूतपापः स तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ०१७ ॥

अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ।
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः ॥ ०१८ ॥

एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः ।
तथा वाक्कायमनसां नियमः कामतोऽन्यथा ॥ ०१९ ॥

---

# नारददेवलसंवादः

## अध्याय २६७

भीष्म उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं देवलस्यासितस्य च  ॥ ००१  ॥

आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरः ।
नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम्  ॥ ००२  ॥

कुतः सृष्टमिदं विश्वं ब्रह्मन्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तद्भवान्प्रब्रवीतु मे  ॥ ००३  ॥

असित उवाच  ॥

येभ्यः सृजति भूतानि कालो भावप्रचोदितः ।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः  ॥ ००४  ॥

तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः ।
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम्  ॥ ००५  ॥

विद्धि नारद पञ्चैताञ्शाश्वतानचलान्ध्रुवान् ।
महतस्तेजसो राशीन्कालषष्ठान्स्वभावतः  ॥ ००६  ॥

आपश्चैवान्तरिक्षं च पृथिवी वायुपावकौ ।
असिद्धिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम्  ॥ ००७  ॥

नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम् ।
वेत्थ तानभिनिर्वृत्तान्षडेते यस्य राशयः  ॥ ००८  ॥

पञ्चैव तानि कालश्च भावाभावौ च केवलौ ।
अष्टौ भूतानि भूतानां शाश्वतानि भवाप्ययौ  ॥ ००९  ॥

अभावाद्भावितेष्वेव तेभ्यश्च प्रभवन्त्यपि ।

विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा ॥ ०१० ॥

तस्य भूमिमयो देहः श्रोत्रमाकाशसंभवम् ।
सूर्यश्चक्षुरसुर्वायुरब्स्तु खलु शोणितम् ॥ ०११ ॥

चक्षुषी नासिकाकर्णौ त्वग्जिह्वेति च पञ्चमी ।
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः ॥ ०१२ ॥

दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा ।
उपपत्त्या गुणान्विद्धि पञ्च पञ्चसु पञ्चधा ॥ ०१३ ॥

रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः ।
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः ॥ ०१४ ॥

रूपं गन्धं रसं स्पर्शं शब्दं चैतांस्तु तद्गुणान् ।
इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥ ०१५ ॥

चित्तमिन्द्रियसंघातात्परं तस्मात्परं मनः ।
मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः ॥ ०१६ ॥

पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान्पृथक् ।
विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति ॥ ०१७ ॥

इन्द्रियैरुपलब्धार्थान्सर्वान्यस्त्वध्यवस्यति ॥ ०१७ ॥

चित्तमिन्द्रियसंघातं मनो बुद्धिं तथाष्टमीम् ।
अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः ॥ ०१८ ॥

पाणिपादं च पायुश्च मेहनं पञ्चमं मुखम् ।
इति संशब्द्यमानानि शृणु कर्मेन्द्रियाण्यपि ॥ ०१९ ॥

जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्मणः करणे करौ ॥ ०२० ॥

पायूपस्थौ विसर्गार्थमिन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चाभिकामिके ॥ ०२१ ॥

बलं षष्ठं षडेतानि वाचा सम्यग्यथागमम् ।
ज्ञानचेष्टेन्द्रियगुणाः सर्वे संशब्दिता मया ॥ ०२२ ॥

इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा ।
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः ॥ ०२३ ॥

इन्द्रियाणां व्युपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥ ०२४ ॥

सात्त्विकाश्चैव ये भावास्तथा राजसतामसाः ।
कर्मयुक्तान्प्रशंसन्ति सात्त्विकानितरांस्तथा ॥ ०२५ ॥

आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्त्विकस्य निमित्तानि भावान्संश्रयते स्मृतिः ॥ ०२६ ॥

जन्तुष्वेकतमेष्वेवं भावा ये विधिमास्थिताः ।
भावयोरीप्सितं नित्यं प्रत्यक्षगमनं द्वयोः ॥ ०२७ ॥

इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।
तेषामष्टादशो देही यः शरीरे स शाश्वतः ॥ ०२८ ॥

अथ वा सशरीरास्ते गुणाः सर्वे शरीरिणाम् ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते ॥ ०२९ ॥

अथ वा संनिपातोऽयं शरीरं पाञ्चभौतिकम् ।

एकश्च दश चाष्टौ च गुणाः सह शरीरिणाम् ॥ ०३० ॥

ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः ॥ ०३० ॥

महान्संधारयत्येतच्छरीरं वायुना सह ।
तस्यास्य भावयुक्तस्य निमित्तं देहभेदने ॥ ०३१ ॥

यथैवोत्पद्यते किंचित्पञ्चत्वं गच्छते तथा ।
पुण्यपापविनाशान्ते पुण्यपापसमीरितम् ॥ ०३२ ॥

देहं विशति कालेन ततोऽयं कर्मसंभवम् ॥ ०३२ ॥

हित्वा हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसञ्चोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ॥ ०३३ ॥

तत्र नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनाः संबन्धिमानिनः ॥ ०३४ ॥

न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखभाक् ॥ ०३५ ॥

नैव सञ्जायते जन्तुर्न च जातु विपद्यते ।
याति देहमयं भुक्त्वा कदाचित्परमां गतिम् ॥ ०३६ ॥

पुण्यपापमयं देहं क्षपयन्कर्मसञ्चयात् ।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ०३७ ॥

पुण्यपापक्षयार्थं च सांख्यं ज्ञानं विधीयते ।
तत्क्षये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ०३८ ॥

# माण्डव्यजनकसंवादः

## अध्याय २६८

युधिष्ठिर उवाच ॥

भ्रातरः पितरः पुत्रा ज्ञातयः सुहृदस्तथा ।
अर्थहेतोर्हताः क्रूरैरस्माभिः पापबुद्धिभिः ॥ ००१ ॥

येयमर्थोद्भवा तृष्णा कथमेतां पितामह ।
निवर्तयेम पापं हि तृष्णया कारिता वयम् ॥ ००२ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन माण्डव्यायानुपृच्छते ॥ ००३ ॥

सुसुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ ००४ ॥

अर्थाः खलु समृद्धा हि बाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥ ००५ ॥

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ००६ ॥

यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ ००७ ॥

किञ्चिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ ००८ ॥

न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मे कामं विवर्जयेत् ॥ ००९ ॥

विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं त्यजति वै सह ॥ ०१० ॥

उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभये च संत्यज्य संप्रशान्तो निरामयः ॥ ०११ ॥

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ०१२ ॥

चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् ।
धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् ॥ ०१३ ॥

राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः ।
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः ॥ ०१४ ॥

---

# हारीतगीता

## अध्याय २६९

युधिष्ठिर उवाच ॥

किंशीलः किंसमाचारः किंविद्यः किंपरायणः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ ००१ ॥

भीष्म उवाच ॥

मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति परमं स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ ००२ ॥

स्वगृहादभिनिःसृत्य लाभालाभे समो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥ ००३ ॥

न चक्षुषा न मनसा न वाचा दूषयेदपि ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत्कचित् ॥ ००४ ॥

न हिंस्यात्सर्वभूतानि मैत्रायणगतिश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ ००५ ॥

अतिवादांस्तितिक्षेत नाभिमन्येत्कथञ्चन ।
क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ॥ ००६ ॥

प्रदक्षिणं प्रसव्यं च ग्राममध्ये न चाचरेत् ।
भैक्षचर्यामनापन्नो न गच्छेत्पूर्वकेतितः ॥ ००७ ॥

अवकीर्णः सुगुप्तश्च न वाचा ह्यप्रियं वदेत् ।
मृदुः स्यादप्रतिक्रूरो विस्रब्धः स्यादरोषणः ॥ ००८ ॥

विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीते पात्रसञ्चारे भिक्षां लिप्सेत वै मुनिः ॥ ००९ ॥

अनुयात्रिकमर्थस्य मात्रालाभेष्वनादृतः ।

अलाभे न विहन्येत लाभश्चैनं न हर्षयेत्  ॥ ०१०  ॥

लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभं हि जुगुप्सेतैव तादृशः  ॥ ०११  ॥

न चान्नदोषान्निन्देत न गुणानभिपूजयेत् ।
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत्  ॥ ०१२  ॥

शून्यागारं वृक्षमूलमरण्यमथ वा गुहाम् ।
अज्ञातचर्यां गत्वान्यां ततोऽन्यत्रैव संविशेत्  ॥ ०१३  ॥

अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः ।
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि  ॥ ०१४  ॥

वाचो वेगं मनसः क्रोधवेगं ; विवित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्विनयेद्वै तपस्वी ; निन्दा चास्य हृदयं नोपहन्यात्  ॥ ०१५  ॥

मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः ।
एतत्पवित्रं परमं परिव्राजक आश्रमे  ॥ ०१६  ॥

महात्मा सुव्रतो दान्तः सर्वत्रैवानपाश्रितः ।
अपूर्वचारकः सौम्यो अनिकेतः समाहितः  ॥ ०१७  ॥

वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातलिप्सां लिप्सेत न चैनं हर्ष आविशेत्  ॥ ०१८  ॥

विजानतां मोक्ष एष श्रमः स्यादविजानताम् ।
मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत्  ॥ ०१९  ॥

अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात् ।
लोकास्तेजोमयास्तस्य तथानन्त्याय कल्पते  ॥ ०२०  ॥

# वृत्रगीता

## अध्याय २७०

युधिष्ठिर उवाच ॥

धन्या धन्या इति जनाः सर्वेऽस्मान्प्रवदन्त्युत ।
न दुःखिततरः कश्चित्पुमानस्माभिरस्ति ह ॥ ००१ ॥

लोकसंभावितैर्दुःखं यत्प्राप्तं कुरुसत्तम ।
प्राप्य जातिं मनुष्येषु देवैरपि पितामह ॥ ००२ ॥

कदा वयं करिष्यामः संन्यासं दुःखसञ्ज्ञकम् ।
दुःखमेतच्छरीराणां धारणं कुरुसत्तम ॥ ००३ ॥

विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः ।
इन्द्रियार्थैर्गुणैश्चैव अष्टाभिः प्रपितामह ॥ ००४ ॥

न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः ।
कदा वयं भविष्यामो राज्यं हित्वा परंतप ॥ ००५ ॥

भीष्म उवाच ॥

नास्त्यनन्तं महाराज सर्वं संख्यानगोचरम् ।
पुनर्भावोऽपि संख्यातो नास्ति किञ्चिदिहाचलम् ॥ ००६ ॥

न चापि गम्यते राजन्नैष दोषः प्रसङ्गतः ।
उद्योगादेव धर्मज्ञ कालेनैव गमिष्यथ ॥ ००७ ॥

ईशोऽयं सततं देही नृपते पुण्यपापयोः ।
तत एव समुत्थेन तमसा रुध्यतेऽपि च ॥ ००८ ॥

यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः ।
अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ॥ ००९ ॥

तथा कर्मफलैर्देही रञ्जितस्तमसावृतः ।
विवर्णो वर्णमाश्रित्य देहेषु परिवर्तते ॥ ०१० ॥

ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः ।
व्यपोहति तदा ब्रह्म प्रकाशेत सनातनम् ॥ ०११ ॥

अयत्नसाध्यं मुनयो वदन्ति ; ये चापि मुक्तास्त उपासितव्याः ।
त्वया च लोकेन च सामरेण ; तस्मान्न शाम्यन्ति महर्षिसंघाः ॥ ०१२ ॥

अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप ।
यथा दैत्येन वृत्रेण भ्रष्टैश्वर्येण चेष्टितम् ॥ ०१३ ॥

निर्जितेनासहायेन हृतराज्येन भारत ।
अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलाम् ॥ ०१४ ॥

भ्रष्टैश्वर्यं पुरा वृत्रमुशना वाक्यमब्रवीत् ।
कच्चित्पराजितस्याद्य न व्यथा तेऽस्ति दानव ॥ ०१५ ॥

वृत्र उवाच ॥

सत्येन तपसा चैव विदित्वा सङ्क्षयं ह्यहम् ।
न शोचामि न हृष्यामि भूतानामागतिं गतिम् ॥ ०१६ ॥

कालसञ्चोदिता जीवा मज्जन्ति नरकेऽवशाः ।
परिदृष्टानि सर्वाणि दिव्यान्याहुर्मनीषिणः ॥ ०१७ ॥

क्षपयित्वा तु तं कालं गणितं कालचोदिताः ।
सावशेषेण कालेन संभवन्ति पुनः पुनः ॥ ०१८ ॥

तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
निर्गच्छन्त्यवशा जीवाः कालबन्धनबन्धनाः ॥ ०१९ ॥

एवं संसरमाणानि जीवान्यहमदृष्टवान् ।
यथा कर्म तथा लाभ इति शास्त्रनिदर्शनम् ॥ ०२० ॥

तिर्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च ।
सुखदुःखे प्रियद्वेष्ये चरित्वा पूर्वमेव च ॥ ०२१ ॥

कृतान्तविधिसंयुक्तं सर्वलोकः प्रपद्यते ।
गतं गच्छन्ति चाध्वानं सर्वभूतानि सर्वदा ॥ ०२२ ॥

भीष्म उवाच ॥

कालसंख्यानसंख्यातं सृष्टिस्थितिपरायणम् ।
तं भाषमाणं भगवानुशना प्रत्यभाषत ॥ ०२३ ॥

भीमान्दुष्टप्रलापांस्त्वं तात कस्मात्प्रभाषसे ॥ ०२३ ॥

वृत्र उवाच ॥

प्रत्यक्षमेतद्भवतस्तथान्येषां मनीषिणाम् ।
मया यज्ञयलुब्धेन पुरा तप्तं महत्तपः ॥ ०२४ ॥

गन्धानादाय भूतानां रसांश्च विविधानपि ।
अवर्धं त्रीन्समाक्रम्य लोकान्वै स्वेन तेजसा ॥ ०२५ ॥

ज्वालामालापरिक्षिप्तो वैहायसचरस्तथा ।
अजेयः सर्वभूतानामासं नित्यमपेतभीः ॥ ०२६ ॥

ऐश्वर्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्मभिः ।
धृतिमास्थाय भगवन्न शोचामि ततस्त्वहम् ॥ ०२७ ॥

युयुत्सता महेन्द्रेण पुरा सार्धं महात्मना ।
ततो मे भगवान्दृष्टो हरिर्नारायणः प्रभुः ॥ ०२८ ॥

वैकुण्ठः पुरुषो विष्णुः शुक्लोऽनन्तः सनातनः ।
मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः ॥ ०२९ ॥

नूनं तु तस्य तपसः सावशेषं ममास्ति वै ।
यदहं प्रष्टुमिच्छामि भवन्तं कर्मणः फलम् ॥ ०३० ॥

ऐश्वर्यं वै महद्ब्रह्मन्कस्मिन्वर्णे प्रतिष्ठितम् ।
निवर्तते चापि पुनः कथमैश्वर्यमुत्तमम् ॥ ०३१ ॥

कस्माद्भूतानि जीवन्ति प्रवर्तन्तेऽथ वा पुनः ।
किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ॥ ०३२ ॥

केन वा कर्मणा शक्यमथ ज्ञानेन केन वा ।
ब्रह्मर्षे तत्फलं प्राप्तुं तन्मे व्याख्यातुमर्हसि ॥ ०३३ ॥

इतीदमुक्तः स मुनिस्तदानीं ; प्रत्याह यत्तच्छृणु राजसिंह ।
मयोच्यमानं पुरुषर्षभ त्व ;मनन्यचित्तः सह सोदरीयैः ॥ ०३४ ॥

# अध्याय २७१

उशनोवाच ॥

नमस्तस्मै भगवते देवाय प्रभविष्णवे ।
यस्य पृथ्वीतलं तात साकाशं बाहुगोचरम् ॥ ००१ ॥

मूर्धा यस्य त्वनन्तं च स्थानं दानवसत्तम ।
तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् ॥ ००२ ॥

भीष्म उवाच ॥

तयोः संवदतोरेवमाजगाम महामुनिः ।
सनत्कुमारो धर्मात्मा संशयच्छेदनाय वै ॥ ००३ ॥

स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा ।
निषसादासने राजन्महार्हे मुनिपुङ्गवः ॥ ००४ ॥

तमासीनं महाप्राज्ञमुशना वाक्यमब्रवीत् ।
ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमम् ॥ ००५ ॥

सनत्कुमारस्तु ततः श्रुत्वा प्राह वचोऽर्थवत् ।
विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ॥ ००६ ॥

शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम् ।
विष्णौ जगत्स्थितं सर्वमिति विद्धि परंतप ॥ ००७ ॥

सृजत्येष महाबाहो भूतग्रामं चराचरम् ।

एष चाक्षिपते काले काले विसृजते पुनः ॥ ००८ ॥

अस्मिन्गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ॥ ००८ ॥

नैष दानवता शक्यस्तपसा नैव चेज्यया ।
संप्राप्तुमिन्द्रियाणां तु संयमेनैव शक्यते ॥ ००९ ॥

बाह्ये चाभ्यन्तरे चैव कर्मणा मनसि स्थितः ।
निर्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते ॥ ०१० ॥

यथा हिरण्यकर्ता वै रूप्यमग्नौ विशोधयेत् ।
बहुशोऽतिप्रयत्नेन महतात्मकृतेन ह ॥ ०११ ॥

तद्वज्जातिशतैर्जीवः शुध्यतेऽल्पेन कर्मणा ।
यत्नेन महता चैवाप्येकजातौ विशुध्यते ॥ ०१२ ॥

लीलयाल्पं यथा गात्रात्प्रमृज्यादात्मनो रजः ।
बहु यत्नेन महता दोषनिर्हरणं तथा ॥ ०१३ ॥

यथा चाल्पेन माल्येन वासितं तिलसर्षपम् ।
न मुञ्चति स्वकं गन्धं तद्वत्सूक्ष्मस्य दर्शनम् ॥ ०१४ ॥

तदेव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः ।
विमुञ्चति स्वकं गन्धं माल्यगन्धेऽवतिष्ठति ॥ ०१५ ॥

एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु ।
बुद्ध्या निवर्तते दोषो यत्नेनाभ्यासजेन वै ॥ ०१६ ॥

कर्मणा स्वेन रक्तानि विरक्तानि च दानव ।
यथा कर्मविशेषांश्च प्राप्नुवन्ति तथा श्रृणु ॥ ०१७ ॥

यथा च संप्रवर्तन्ते यस्मिंस्तिष्ठन्ति वा विभो ।
तत्तेऽनुपूर्व्या व्याख्यास्ये तदिहैकमनाः शृणु ॥ ०१८ ॥

अनादिनिधनः श्रीमान्हरिर्नारायणः प्रभुः ।
स वै सृजति भूतानि स्थावराणि चराणि च ॥ ०१९ ॥

एष सर्वेषु भूतेषु क्षरश्चाक्षर एव च ।
एकादशविकारात्मा जगत्पिबति रश्मिभिः ॥ ०२० ॥

पादौ तस्य महीं विद्धि मूर्धानं दिवमेव च ।
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च ॥ ०२१ ॥

तस्य तेजोमयः सूर्यो मनश्चन्द्रमसि स्थितम् ।
बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रवर्तते ॥ ०२२ ॥

भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम ।
नक्षत्रचक्रं नेत्राभ्यां पादयोर्भूश्च दानव ॥ ०२३ ॥

रजस्तमश्च सत्त्वं च विद्धि नारायणात्मकम् ।
सोऽऽश्रमाणां मुखं तात कर्मणस्तत्फलं विदुः ॥ ०२४ ॥

अकर्मणः फलं चैव स एव परमव्ययः ।
छन्दांसि तस्य रोमाणि अक्षरं च सरस्वती ॥ ०२५ ॥

बह्वाश्रयो बहुमुखो धर्मो हृदि समाश्रितः ।
स ब्रह्मपरमो धर्मस्तपश्च सदसच्च सः ॥ ०२६ ॥

श्रुतिशास्त्रग्रहोपेतः षोडशर्त्विक्क्रतुश्च सः ।
पितामहश्च विष्णुश्च सोऽश्विनौ स पुरंदरः ॥ ०२७ ॥

मित्रश्च वरुणश्चैव यमोऽथ धनदस्तथा ।

ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम्  ॥ ०२८  ॥

एकस्य विद्धि देवस्य सर्वं जगदिदं वशे  ॥ ०२८  ॥

नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदत्ययम् ।
जन्तुः पश्यति ज्ञानेन ततः सत्त्वं प्रकाशते  ॥ ०२९  ॥

संहारविक्षेपसहस्रकोटी ;स्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये ।
प्रजाविसर्गस्य च पारिमाण्यं ; वापीसहस्राणि बहूनि दैत्य  ॥ ०३०  ॥

वाप्यः पुनर्योजनविस्तृतास्ताः ; क्रोशं च गम्भीरतयावगाढाः ।
आयामतः पञ्चशताश्च सर्वाः ; प्रत्येकशो योजनतः प्रवृद्धाः  ॥ ०३१  ॥

वाप्या जलं क्षिप्यति वालकोट्या ; त्वह्ना सकृच्चाप्यथ न द्वितीयम् ।
तासां क्षये विद्धि कृतं विसर्गं ; संहारमेकं च तथा प्रजानाम्  ॥ ०३२  ॥

षड्जीववर्णाः परमं प्रमाणं ; कृष्णो धूम्रो नीलमथास्य मध्यम् ।
रक्तं पुनः सह्यतरं सुखं तु ; हारिद्रवर्णं सुसुखं च शुक्लम्  ॥ ०३३  ॥

परं तु शुक्लं विमलं विशोकं ; गतक्लमं सिध्यति दानवेन्द्र ।
गत्वा तु योनिप्रभवानि दैत्य ; सहस्रशः सिद्धिमुपैति जीवः  ॥ ०३४  ॥

गतिं च यां दर्शनमाह देवो ; गत्वा शुभं दर्शनमेव चाह ।
गतिः पुनर्वर्णकृता प्रजानां ; वर्णस्तथा कालकृतोऽसुरेन्द्र  ॥ ०३५  ॥

शतं सहस्राणि चतुर्दशेह ; परा गतिर्जीवगुणस्य दैत्य ।
आरोहणं तत्कृतमेव विद्धि ; स्थानं तथा निःसरणं च तेषाम्  ॥ ०३६  ॥

कृष्णस्य वर्णस्य गतिर्निकृष्टा ; स मज्जते नरके पच्यमानः ।
स्थानं तथा दुर्गतिभिस्तु तस्य ; प्रजाविसर्गान्सुबहून्वदन्ति  ॥ ०३७  ॥

शतं सहस्राणि ततश्चरित्वा ; प्राप्नोति वर्णं हरितं तु पश्चात् ।
स चैव तस्मिन्निवसत्यनीशो ; युगक्षये तमसा संवृतात्मा ॥ ०३८ ॥

स वै यदा सत्त्वगुणेन युक्त ;स्तमो व्यपोहन्घटते स्वबुद्ध्या ।
स लोहितं वर्णमुपैति नीलो ; मनुष्यलोके परिवर्तते च ॥ ०३९ ॥

स तत्र संहारविसर्गमेव ; स्वकर्मजैर्बन्धनैः क्लिश्यमानः ।
ततः स हारिद्रमुपैति वर्णं ; संहारविक्षेपशते व्यतीते ॥ ०४० ॥

हारिद्रवर्णस्तु प्रजाविसर्गा ;न्सहस्रशस्तिष्ठति सञ्चरन्वै ।
अविप्रमुक्तो निरये च दैत्य ; ततः सहस्राणि दशापराणि ॥ ०४१ ॥

गतीः सहस्राणि च पञ्च तस्य ; चत्वारि संवर्तकृतानि चैव ।
विमुक्तमेनं निरयाच्च विद्धि ; सर्वेषु चान्येषु च संभवेषु ॥ ०४२ ॥

स देवलोके विहरत्यभीक्ष्णं ; ततश्च्युतो मानुषतामुपैति ।
संहारविक्षेपशतानि चाष्टौ ; मर्त्येषु तिष्ठन्नमृतत्वमेति ॥ ०४३ ॥

सोऽस्मादथ भ्रश्यति कालयोगा ;त्कृष्णे तले तिष्ठति सर्वकष्टे ।
यथा त्वयं सिध्यति जीवलोक ;स्तत्तेऽभिधास्याम्यसुरप्रवीर ॥ ०४४ ॥

दैवानि स व्यूहशतानि सप्त ; रक्तो हरिद्रोऽथ तथैव शुक्लः ।
संश्रित्य संधावति शुक्लमेत ;मष्टापरानर्च्यतमान्स लोकान् ॥ ०४५ ॥

अष्टौ च षष्टिं च शतानि यानि ; मनोविरुद्धानि महाद्युतीनाम् ।
शुक्लस्य वर्णस्य परा गतिर्या ; त्रीण्येव रुद्धानि महानुभाव ॥ ०४६ ॥

संहारविक्षेपमनिष्टमेकं ; चत्वारि चान्यानि वसत्यनीशः ।
षष्ठस्य वर्णस्य परा गतिर्या ; सिद्धा विशिष्टस्य गतक्लमस्य ॥ ०४७ ॥

सप्तोत्तरं तेषु वसत्यनीशः ; संहारविक्षेपशतं सशेषम् ।

तस्मादुपावृत्य मनुष्यलोके ; ततो महान्मानुषतामुपैति ॥ ०४८ ॥

तस्मादुपावृत्य ततः क्रमेण ; सोऽग्रे स्म संतिष्ठति भूतसर्गम् ।
स सप्तकृत्वश्च परैति लोका ;न्संहारविक्षेपकृतप्रवासः ॥ ०४९ ॥

सप्तैव संहारमुपप्लवानि ; संभाव्य संतिष्ठति सिद्धलोके ।
ततोऽव्ययं स्थानमनन्तमेति ; देवस्य विष्णोरथ ब्रह्मणश्च ॥ ०५० ॥

शेषस्य चैवाथ नरस्य चैव ; देवस्य विष्णोः परमस्य चैव ॥ ०५० ॥

संहारकाले परिदग्धकाया ; ब्रह्माणमायान्ति सदा प्रजा हि ।
चेष्टात्मनो देवगणाश्च सर्वे ; ये ब्रह्मलोकादमराः स्म तेऽपि ॥ ०५१ ॥

प्रजाविसर्गं तु सशेषकालं ; स्थानानि स्वान्येव सरन्ति जीवाः ।
निःशेषाणां तत्पदं यान्ति चान्ते ; सर्वापदा ये सदृशा मनुष्याः ॥ ०५२ ॥

ये तु च्युताः सिद्धलोकात्क्रमेण ; तेषां गतिं यान्ति तथानुपूर्व्या ।
जीवाः परे तद्बलवेषरूपा ; विधिं स्वकं यान्ति विपर्ययेण ॥ ०५३ ॥

स यावदेवास्ति सशेषभुक्ते ; प्रजाश्च देव्यौ च तथैव शुक्ले ।
तावत्तदा तेषु विशुद्धभावः ; संयम्य पञ्चेन्द्रियरूपमेतत् ॥ ०५४ ॥

शुद्धां गतिं तां परमां परैति ; शुद्धेन नित्यं मनसा विचिन्वन् ।
ततोऽव्ययं स्थानमुपैति ब्रह्म ; दुष्प्रापमभ्येति स शाश्वतं वै ॥ ०५५ ॥

इत्येतदाख्यातमहीनसत्त्व ; नारायणस्येह बलं मया ते ॥ ०५५ ॥

वृत्र उवाच ॥

एवं गते मे न विषादोऽस्ति कश्चि ;त्सम्यक्क पश्यामि वचस्तवैतत् ।
श्रुत्वा च ते वाचमदीनसत्त्व ; विकल्मषोऽस्म्यद्य तथा विपाप्मा ॥ ०५६ ॥

प्रवृत्तमेतद्भगवन्महर्षे ; महाद्युतेश्चक्रमनन्तवीर्यम् ।
विष्णोरनन्तस्य सनातनं त ;त्स्थानं सर्गा यत्र सर्वे प्रवृत्ताः ॥ ०५७ ॥

स वै महात्मा पुरुषोत्तमो वै ; तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितम् ॥ ०५७ ॥

भीष्म उवाच ॥

एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत् ।
योजयित्वा तथात्मानं परं स्थानमवाप्तवान् ॥ ०५८ ॥

युधिष्ठिर उवाच ॥

अयं स भगवान्देवः पितामह जनार्दनः ।
सनत्कुमारो वृत्राय यत्तदाख्यातवान्पुरा ॥ ०५९ ॥

भीष्म उवाच ॥

मूलस्थायी स भगवान्स्वेनानन्तेन तेजसा ।
तत्स्थः सृजति तान्भावान्नानारूपान्महातपाः ॥ ०६० ॥

तुरीयार्धेन तस्येमं विद्धि केशवमच्युतम् ।
तुरीयार्धेन लोकांस्त्रीन्भावयत्येष बुद्धिमान् ॥ ०६१ ॥

अर्वाक्स्थितस्तु यः स्थायी कल्पान्ते परिवर्तते ।
स शेते भगवानप्सु योऽसावतिबलः प्रभुः ॥ ०६२ ॥

तान्विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान् ॥ ०६२ ॥

सर्वाण्यशून्यानि करोत्यनन्तः ; सनत्कुमारः सञ्चरते च लोकान् ।
स चानिरुद्धः सृजते महात्मा ; तत्स्थं जगत्सर्वमिदं विचित्रम् ॥ ०६३ ॥

युधिष्ठिर उवाच ॥

वृत्रेण परमार्थज्ञ दृष्टा मन्येऽऽत्मनो गतिः ।
शुभा तस्मात्स सुखितो न शोचति पितामह ॥ ०६४ ॥

शुक्लः शुक्लाभिजातीयः साध्यो नावर्ततेऽनघ ।
तिर्यग्गतेश्च निर्मुक्तो निरयाच्च पितामह ॥ ०६५ ॥

हारिद्रवर्णे रक्ते वा वर्तमानस्तु पार्थिव ।
तिर्यगेवानुपश्येत कर्मभिस्तामसैर्वृतः ॥ ०६६ ॥

वयं तु भृशमापन्ना रक्ताः कष्टमुखेऽसुखे ।
कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमामथ ॥ ०६७ ॥

भीष्म उवाच ॥

शुद्धाभिजनसंपन्नाः पाण्डवाः संशितव्रताः ।
विहृत्य देवलोकेषु पुनर्मानुष्यमेष्यथ ॥ ०६८ ॥

प्रजाविसर्गं च सुखेन काले ; प्रत्येत्य देवेषु सुखानि भुक्त्वा ।
सुखेन संयास्यथ सिद्धसंख्यां ; मा वो भयं भूद्विमलाः स्थ सर्वे ॥ ०६९ ॥

# वृत्रवधः

## अध्याय २७२

युधिष्ठिर उवाच ॥

अहो धर्मिष्ठता तात वृत्रस्यामिततेजसः ।
यस्य विज्ञानमतुलं विष्णोर्भक्तिश्च तादृशी ॥ ००१ ॥

दुर्विज्ञेयमिदं तात विष्णोरमिततेजसः ।
कथं वा राजशार्दूल पदं तज्ज्ञातवानसौ ॥ ००२ ॥

भवता कथितं ह्येतच्छ्रद्दधे चाहमच्युत ।
भूयस्तु मे समुत्पन्ना बुद्धिरव्यक्तदर्शनात् ॥ ००३ ॥

कथं विनिहतो वृत्रः शक्रेण भरतर्षभ ।
धर्मिष्ठो विष्णुभक्तश्च तत्त्वज्ञश्च पदान्वये ॥ ००४ ॥

एतन्मे संशयं ब्रूहि पृच्छतो भरतर्षभ ।
वृत्रस्तु राजशार्दूल यथा शक्रेण निर्जितः ॥ ००५ ॥

यथा चैवाभवद्युद्धं तच्चाचक्ष्व पितामह ।
विस्तरेण महाबाहो परं कौतूहलं हि मे ॥ ००६ ॥

भीष्म उवाच ॥

रथेनेन्द्रः प्रयातो वै सार्धं सुरगणैः पुरा ।
ददर्शाथाग्रतो वृत्रं विष्ठितं पर्वतोपमम् ॥ ००७ ॥

योजनानां शतान्यूर्ध्वं पञ्चोच्छ्रितमरिंदम ।
शतानि विस्तरेणाथ त्रीण्येवाभ्यधिकानि तु ॥ ००८ ॥

तत्प्रेक्ष्य तादृशं रूपं त्रैलोक्येनापि दुर्जयम् ।
वृत्रस्य देवाः संत्रस्ता न शान्तिमुपलेभिरे ॥ ००९ ॥

शक्रस्य तु तदा राजन्नूरुस्तम्भो व्यजायत ।
भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमम् ॥ ०१० ॥

ततो नादः समभवद्वादित्राणां च निस्वनः ।
देवासुराणां सर्वेषां तस्मिन्युद्ध उपस्थिते ॥ ०११ ॥

अथ वृत्रस्य कौरव्य दृष्ट्वा शक्रमुपस्थितम् ।
न संभ्रमो न भीः काचिदास्था वा समजायत ॥ ०१२ ॥

ततः समभवद्युद्धं त्रैलोक्यस्य भयङ्करम् ।
शक्रस्य च सुरेन्द्रस्य वृत्रस्य च महात्मनः ॥ ०१३ ॥

असिभिः पट्टिशैः शूलैः शक्तितोमरमुद्गरैः ।
शिलाभिर्विविधाभिश्च कार्मुकैश्च महास्वनैः ॥ ०१४ ॥

अस्त्रैश्च विविधैर्दिव्यैः पावकोल्काभिरेव च ।
देवासुरैस्ततः सैन्यैः सर्वमासीत्समाकुलम् ॥ ०१५ ॥

पितामहपुरोगाश्च सर्वे देवगणास्तथा ।
ऋषयश्च महाभागास्तद्युद्धं द्रष्टुमागमन् ॥ ०१६ ॥

विमानाग्र्यैर्महाराज सिद्धाश्च भरतर्षभ ।
गन्धर्वाश्च विमानाग्र्यैरप्सरोभिः समागमन् ॥ ०१७ ॥

ततोऽन्तरिक्षमावृत्य वृत्रो धर्मभृतां वरः ।
अश्मवर्षेण देवेन्द्रं पर्वतात्समवाकिरत् ॥ ०१८ ॥

ततो देवगणाः क्रुद्धाः सर्वतः शस्त्रवृष्टिभिः ।
अश्मवर्षमपोहन्त वृत्रप्रेरितमाहवे ॥ ०१९ ॥

वृत्रश्च कुरुशार्दूल महामायो महाबलः ।
मोहयामास देवेन्द्रं मायायुद्धेन सर्वतः ॥ ०२० ॥

तस्य वृत्रार्दितस्याथ मोह आसीच्छतक्रतोः ।
रथंतरेण तं तत्र वसिष्ठः समबोधयत् ॥ ०२१ ॥

वसिष्ठ उवाच ॥

देवश्रेष्ठोऽसि देवेन्द्र सुरारिविनिबर्हण ।
त्रैलोक्यबलसंयुक्तः कस्माच्छक्र विषीदसि ॥ ०२२ ॥

एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्प्रभुः ।
सोमश्च भगवान्देवः सर्वे च परमर्षयः ॥ ०२३ ॥

मा कार्षीः कश्मलं शक्र कश्चिदेवेतरो यथा ।
आर्यां युद्धे मतिं कृत्वा जहि शत्रुं सुरेश्वर ॥ ०२४ ॥

एष लोकगुरुस्त्र्यक्षः सर्वलोकनमस्कृतः ।
निरीक्षते त्वां भगवांस्त्यज मोहं सुरेश्वर ॥ ०२५ ॥

एते ब्रह्मर्षयश्चैव बृहस्पतिपुरोगमाः ।
स्तवेन शक्र दिव्येन स्तुवन्ति त्वां जयाय वै ॥ ०२६ ॥

भीष्म उवाच ॥

एवं संबोध्यमानस्य वसिष्ठेन महात्मना ।
अतीव वासवस्यासीद्बलमुत्तमतेजसः ॥ ०२७ ॥

ततो बुद्धिमुपागम्य भगवान्पाकशासनः ।
योगेन महता युक्तस्तां मायां व्यपकर्षत ॥ ०२८ ॥

ततोऽङ्गिरःसुतः श्रीमांस्ते चैव परमर्षयः ।
दृष्ट्वा वृत्रस्य विक्रान्तमुपगम्य महेश्वरम् ॥ ०२९ ॥

ऊचुर्वृत्रविनाशार्थं लोकानां हितकाम्यया ॥ ०२९ ॥

ततो भगवतस्तेजो ज्वरो भूत्वा जगत्पतेः ।
समाविशन्महारौद्रं वृत्रं दैत्यवरं तदा ॥ ०३० ॥

विष्णुश्च भगवान्देवः सर्वलोकाभिपूजितः ।
ऐन्द्रं समाविशद्वज्रं लोकसंरक्षणे रतः ॥ ०३१ ॥

ततो बृहस्पतिर्धीमानुपागम्य शतक्रतुम् ।
वसिष्ठश्च महातेजाः सर्वे च परमर्षयः ॥ ०३२ ॥

ते समासाद्य वरदं वासवं लोकपूजितम् ।
ऊचुरेकाग्रमनसो जहि वृत्रमिति प्रभो ॥ ०३३ ॥

महेश्वर उवाच ॥

एष वृत्रो महाञ्शक्र बलेन महता वृतः ।
विश्वात्मा सर्वगश्चैव बहुमायश्च विश्रुतः ॥ ०३४ ॥

तदेनमसुरश्रेष्ठं त्रैलोक्येनापि दुर्जयम् ।
जहि त्वं योगमास्थाय मावमंस्थाः सुरेश्वर ॥ ०३५ ॥

अनेन हि तपस्तप्तं बलार्थममराधिप ।
षष्टिं वर्षसहस्राणि ब्रह्मा चास्मै वरं ददौ ॥ ०३६ ॥

महत्त्वं योगिनां चैव महामायत्वमेव च ।
महाबलत्वं च तथा तेजश्चाग्र्यं सुरेश्वर ॥ ०३७ ॥

एतद्वै मामकं तेजः समाविशति वासव ।
वृत्रमेनं त्वमप्येवं जहि वज्रेण दानवम् ॥ ०३८ ॥

शक्र उवाच ॥

भगवंस्त्वत्प्रसादेन दितिजं सुदुरासदम् ।
वज्रेण निहनिष्यामि पश्यतस्ते सुरर्षभ ॥ ०३९ ॥

भीष्म उवाच ॥

आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे ।
देवतानामृषीणां च हर्षान्नादो महानभूत् ॥ ०४० ॥

ततो दुन्दुभयश्चैव शङ्खाश्च सुमहास्वनाः ।
मुरजा डिण्डिमाश्चैव प्रावाद्यन्त सहस्रशः ॥ ०४१ ॥

असुराणां तु सर्वेषां स्मृतिलोपोऽभवन्महान् ।
प्रज्ञानाशश्च बलवान्क्षणेन समपद्यत ॥ ०४२ ॥

तमाविष्टमथो ज्ञात्वा ऋषयो देवतास्तथा ।
स्तुवन्तः शक्रमीशानं तथा प्राचोदयन्नपि ॥ ०४३ ॥

रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः ।
ऋषिभिः स्तूयमानस्य रूपमासीत्सुदुर्दृशम् ॥ ०४४ ॥

# अध्याय २७३

भीष्म उवाच ॥

वृत्रस्य तु महाराज ज्वराविष्टस्य सर्वशः ।
अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु ॥ ००१ ॥

ज्वलितास्योऽभवद्घोरो वैवर्ण्यं चागमत्परम् ।
गात्रकम्पश्च सुमहाञ्श्वासश्चाप्यभवन्महान् ॥ ००२ ॥

रोमहर्षश्च तीव्रोऽभून्निःश्वासश्च महान्नृप ॥ ००२ ॥

शिवा चाशिवसङ्काशा तस्य वक्त्रात्सुदारुणा ।
निष्पपात महाघोरा स्मृतिः सा तस्य भारत ॥ ००३ ॥

उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ॥ ००३ ॥

गृध्रकङ्कवडाश्चैव वाचोऽमुञ्चन्सुदारुणाः ।
वृत्रस्योपरि संहृष्टाश्चक्रवत्परिबभ्रमुः ॥ ००४ ॥

ततस्तं रथमास्थाय देवाप्यायितमाहवे ।
वज्रोद्यतकरः शक्रस्तं दैत्यं प्रत्यवैक्षत ॥ ००५ ॥

अमानुषमथो नादं स मुमोच महासुरः ।
व्यजृम्भत च राजेन्द्र तीव्रज्वरसमन्वितः ॥ ००६ ॥

अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् ॥ ००६ ॥

स वज्रः सुमहातेजाः कालाग्निसदृशोपमः ।
क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् ॥ ००७ ॥

ततो नादः समभवत्पुनरेव समन्ततः ।

वृत्रं विनिहतं दृष्ट्वा देवानां भरतर्षभ ॥ ००८ ॥

वृत्रं तु हत्वा भगवान्दानवारिर्महायशाः ।
वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् ॥ ००९ ॥

अथ वृत्रस्य कौरव्य शरीरादभिनिःसृता ।
ब्रह्महत्या महाघोरा रौद्रा लोकभयावहा ॥ ०१० ॥

करालदशना भीमा विकृता कृष्णपिङ्गला ।
प्रकीर्णमूर्धजा चैव घोरनेत्रा च भारत ॥ ०११ ॥

कपालमालिनी चैव कृशा च भरतर्षभ ।
रुधिरार्द्रा च धर्मज्ञ चीरवस्त्रनिवासिनी ॥ ०१२ ॥

साभिनिष्क्रम्य राजेन्द्र तादृग्रूपा भयावहा ।
वज्रिणं मृगयामास तदा भरतसत्तम ॥ ०१३ ॥

कस्यचित्त्वथ कालस्य वृत्रहा कुरुनन्दन ।
स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया ॥ ०१४ ॥

बिसान्निःसरमाणं तु दृष्ट्वा शक्रं महौजसम् ।
कण्ठे जग्राह देवेन्द्रं सुलग्ना चाभवत्तदा ॥ ०१५ ॥

स हि तस्मिन्समुत्पन्ने ब्रह्महत्याकृते भये ।
नलिन्यां बिसमध्यस्थो बभूवाब्दगणान्बहून् ॥ ०१६ ॥

अनुसृत्य तु यत्नात्स तया वै ब्रह्महत्यया ।
तदा गृहीतः कौरव्य निश्चेष्टः समपद्यत ॥ ०१७ ॥

तस्या व्यपोहने शक्रः परं यत्नं चकार ह ।
न चाशकत्तां देवेन्द्रो ब्रह्महत्यां व्यपोहितुम् ॥ ०१८ ॥

गृहीत एव तु तया देवेन्द्रो भरतर्षभ ।
पितामहमुपागम्य शिरसा प्रत्यपूजयत्  ॥ ०१९  ॥

ज्ञात्वा गृहीतं शक्रं तु द्विजप्रवरहत्यया ।
ब्रह्मा सञ्चिन्तयामास तदा भरतसत्तम  ॥ ०२०  ॥

तामुवाच महाबाहो ब्रह्महत्यां पितामहः ।
स्वरेण मधुरेणाथ सान्त्वयन्निव भारत  ॥ ०२१  ॥

मुच्यतां त्रिदशेन्द्रोऽयं मत्प्रियं कुरु भामिनि ।
ब्रूहि किं ते करोम्यद्य कामं कं त्वमिहेच्छसि  ॥ ०२२  ॥

ब्रह्महत्योवाच  ॥

त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्तरि ।
कृतमेवेह मन्येऽहं निवासं तु विधत्स्व मे  ॥ ०२३  ॥

त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना ।
स्थापना वै सुमहती त्वया देव प्रवर्तिता  ॥ ०२४  ॥

प्रीते तु त्वयि धर्मज्ञ सर्वलोकेश्वरे प्रभो ।
शक्रादपगमिष्यामि निवासं तु विधत्स्व मे  ॥ ०२५  ॥

भीष्म उवाच  ॥

तथेति तां प्राह तदा ब्रह्महत्यां पितामहः ।
उपायतः स शक्रस्य ब्रह्महत्यां व्यपोहत  ॥ ०२६  ॥

ततः स्वयंभुवा ध्यातस्तत्र वह्निर्महात्मना ।
ब्रह्माणमुपसङ्गम्य ततो वचनमब्रवीत्  ॥ ०२७  ॥

प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमरिंदम ।
यत्कर्तव्यं मया देव तद्भवान्वक्तुमर्हति ॥ ०२८ ॥

ब्रह्मोवाच ॥

बहुधा विभजिष्यामि ब्रह्महत्यामिमामहम् ।
शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ मे ॥ ०२९ ॥

अग्निरुवाच ॥

मम मोक्षस्य कोऽन्तो वै ब्रह्मन्ध्यायस्व वै प्रभो ।
एतदिच्छामि विज्ञातुं तत्त्वतो लोकपूजित ॥ ०३० ॥

ब्रह्मोवाच ॥

यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित् ।
बीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः ॥ ०३१ ॥

तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
ब्रह्महत्या हव्यवाह व्येतु ते मानसो ज्वरः ॥ ०३२ ॥

भीष्म उवाच ॥

इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक् ।
पितामहस्य भगवांस्तथा च तदभूत्प्रभो ॥ ०३३ ॥

ततो वृक्षौषधितृणं समाहूय पितामहः ।
इममर्थं महाराज वक्तुं समुपचक्रमे ॥ ०३४ ॥

ततो वृक्षौषधितृणं तथैवोक्तं यथातथम् ।

व्यथितं वह्निवद्राजन्ब्रह्माणमिदमब्रवीत्  ॥ ०३५  ॥

अस्माकं ब्रह्महत्यातो कोऽन्तो लोकपितामह ।
स्वभावनिहतानस्मान्न पुनर्हन्तुमर्हसि  ॥ ०३६  ॥

वयमग्निं तथा शीतं वर्षं च पवनेरितम् ।
सहामः सततं देव तथा छेदनभेदनम्  ॥ ०३७  ॥

ब्रह्महत्यामिमामद्य भवतः शासनाद्वयम् ।
ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान्  ॥ ०३८  ॥

ब्रह्मोवाच  ॥

पर्वकाले तु संप्राप्ते यो वै छेदनभेदनम् ।
करिष्यति नरो मोहात्तमेषानुगमिष्यति  ॥ ०३९  ॥

भीष्म उवाच  ॥

ततो वृक्षौषधितृणमेवमुक्तं महात्मना ।
ब्रह्माणमभिसंपूज्य जगामाशु यथागतम्  ॥ ०४०  ॥

आहूयाप्सरसो देवस्ततो लोकपितामहः ।
वाचा मधुरया प्राह सान्त्वयन्निव भारत  ॥ ०४१  ॥

इयमिन्द्रादनुप्राप्ता ब्रह्महत्या वराङ्गनाः ।
चतुर्थमस्या भागं हि मयोक्ताः संप्रतीच्छत  ॥ ०४२  ॥

अप्सरस ऊचुः  ॥

ग्रहणे कृतबुद्धीनां देवेश तव शासनात् ।
मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह  ॥ ०४३  ॥

ब्रह्मोवाच ॥

रजस्वलासु नारीषु यो वै मैथुनमाचरेत् ।
तमेषा यास्यति क्षिप्रं व्येतु वो मानसो ज्वरः ॥ ०४४ ॥

भीष्म उवाच ॥

तथेति हृष्टमनस उक्त्वाथाप्सरसां गणाः ।
स्वानि स्थानानि संप्राप्य रेमिरे भरतर्षभ ॥ ०४५ ॥

ततस्त्रिलोककृद्देवः पुनरेव महातपाः ।
अपः सञ्चिन्तयामास ध्यातास्ताश्चाप्यथागमन् ॥ ०४६ ॥

तास्तु सर्वाः समागम्य ब्रह्माणममितौजसम् ।
इदमूचुर्वचो राजन्प्रणिपत्य पितामहम् ॥ ०४७ ॥

इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिंदम ।
शासनात्तव देवेश समाज्ञापय नो विभो ॥ ०४८ ॥

ब्रह्मोवाच ॥

इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया ।
ब्रह्महत्या चतुर्थांशमस्या यूयं प्रतीच्छत ॥ ०४९ ॥

आप ऊचुः ॥

एवं भवतु लोकेश यथा वदसि नः प्रभो ।
मोक्षं समयतोऽस्माकं सञ्चिन्तयितुमर्हसि ॥ ०५० ॥

त्वं हि देवेश सर्वस्य जगतः परमो गुरुः ।

कोऽन्यः प्रसादो हि भवेद्यः कृच्छ्रान्नः समुद्धरेत् ॥ ०५१ ॥

ब्रह्मोवाच ॥

अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः ।
श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ॥ ०५२ ॥

तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः ॥ ०५३ ॥

भीष्म उवाच ॥

ततो विमुच्य देवेन्द्रं ब्रह्महत्या युधिष्ठिर ।
यथानिसृष्टं तं देशमगच्छद्देवशासनात् ॥ ०५४ ॥

एवं शक्रेण संप्राप्ता ब्रह्महत्या जनाधिप ।
पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत् ॥ ०५५ ॥

श्रूयते हि महाराज संप्राप्ता वासवेन वै ।
ब्रह्महत्या ततः शुद्धिं हयमेधेन लब्धवान् ॥ ०५६ ॥

समवाप्य श्रियं देवो हत्वारींश्च सहस्रशः ।
प्रहर्षमतुलं लेभे वासवः पृथिवीपते ॥ ०५७ ॥

वृत्रस्य रुधिराच्चैव खुखुण्डाः पार्थ जज्ञिरे ।
द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ॥ ०५८ ॥

सर्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु ।
इमे हि भूतले देवाः प्रथिताः कुरुनन्दन ॥ ०५९ ॥

एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः ।

उपायपूर्वं निहतो वृत्रोऽथामिततेजसा ॥ ०६० ॥

एवं त्वमपि कौरव्य पृथिव्यामपराजितः ।
भविष्यसि यथा देवः शतक्रतुरमित्रहा ॥ ०६१ ॥

ये तु शक्रकथां दिव्यामिमां पर्वसु पर्वसु ।
विप्रमध्ये पठिष्यन्ति न ते प्राप्स्यन्ति किल्बिषम् ॥ ०६२ ॥

इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत् ।
कथितं कर्म ते तात किं भूयः श्रोतुमिच्छसि ॥ ०६३ ॥

---

# ज्वरोत्पत्तिः

## अध्याय २७४

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
अस्ति वृत्रवधादेव विवक्षा मम जायते ॥ ००१ ॥

ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप ।
निहतो वासवेनेह वज्रेणेति ममानघ ॥ ००२ ॥

कथमेष महाप्राज्ञ ज्वरः प्रादुरभूत्कुतः ।
ज्वरोत्पत्तिं निपुणतः श्रोतुमिच्छाम्यहं प्रभो ॥ ००३ ॥

भीष्म उवाच ॥

श‍ृणु राजञ्ज्वरस्येह संभवं लोकविश्रुतम् ।
विस्तरं चास्य वक्ष्यामि यादृशं चैव भारत ॥ ००४ ॥

पुरा मेरोर्महाराज श‍ृङ्गं त्रैलोक्यविश्रुतम् ।
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ ००५ ॥

अप्रमेयमनाधृष्यं सर्वलोकेषु भारत ॥ ००५ ॥

तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ॥ ००६ ॥

शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ ।
तथा देवा महात्मानो वसवश्च महौजसः ॥ ००७ ॥

तथैव च महात्मानावश्विनौ भिषजां वरौ ।
तथा वैश्रवणो राजा गुह्यकैरभिसंवृतः ॥ ००८ ॥

यक्षाणामधिपः श्रीमान्कैलासनिलयः प्रभुः ।
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे ॥ ००९ ॥

विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ।
अप्सरोगणसंघाश्च समाजग्मुरनेकशः ॥ ०१० ॥

ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः ।
सर्वर्तुकुसुमोपेताः पुष्पवन्तो महाद्रुमाः ॥ ०११ ॥

तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ।
महादेवं पशुपतिं पर्युपासन्त भारत ॥ ०१२ ॥

भूतानि च महाराज नानारूपधराण्यथ ।

राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥ ०१३ ॥

बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ।
देवस्यानुचरास्तत्र तस्थिरे चानलोपमाः ॥ ०१४ ॥

नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः ।
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ॥ ०१५ ॥

गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ।
पर्युपासत तं देवं रूपिणी कुरुनन्दन ॥ ०१६ ॥

एवं स भगवांस्तत्र पूज्यमानः सुरर्षिभिः ।
देवैश्च सुमहाभागैर्महादेवो व्यतिष्ठत ॥ ०१७ ॥

कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः ।
पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत ॥ ०१८ ॥

ततस्तस्य मखं देवाः सर्वे शक्रपुरोगमाः ।
गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ ०१९ ॥

ते विमानैर्महात्मानो ज्वलितैर्ज्वलनप्रभाः ।
देवस्यानुमतेऽगच्छन्गङ्गाद्वारमिति श्रुतिः ॥ ०२० ॥

प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा ।
उवाच वचनं साध्वी देवं पशुपतिं पतिम् ॥ ०२१ ॥

भगवन्क नु यान्त्येते देवाः शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ॥ ०२२ ॥

महेश्वर उवाच ॥

दक्षो नाम महाभागे प्रजानां पतिरुत्तमः ।
हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ ०२३ ॥

उमा उवाच ॥

यज्ञमेतं महाभाग किमर्थं नाभिगच्छसि ।
केन वा प्रतिषेधेन गमनं ते न विद्यते ॥ ०२४ ॥

महेश्वर उवाच ॥

सुरैरेव महाभागे सर्वमेतदनुष्ठितम् ।
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः ॥ ०२५ ॥

पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि ।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः ॥ ०२६ ॥

उमा उवाच ॥

भगवन्सर्वभूतेषु प्रभवाभ्यधिको गुणैः ।
अजेयश्चाप्रधृष्यश्च तेजसा यशसा श्रिया ॥ ०२७ ॥

अनेन ते महाभाग प्रतिषेधेन भागतः ।
अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ ॥ ०२८ ॥

भीष्म उवाच ॥

एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम् ।
तूष्णींभूताभवद्राजन्दह्यमानेन चेतसा ॥ ०२९ ॥

अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितम् ।
स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनम् ॥ ०३० ॥

ततो योगबलं कृत्वा सर्वयोगेश्वरेश्वरः ।
तं यज्ञं सुमहातेजा भीमैरनुचरैस्तदा ॥ ०३१ ॥

सहसा घातयामास देवदेवः पिनाकधृक् ॥ ०३१ ॥

केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे ।
रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन् ॥ ०३२ ॥

केचिद्यूपान्समुत्पाट्य बभ्रमुर्विकृताननाः ।
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान् ॥ ०३३ ॥

ततः स यज्ञो नृपते वध्यमानः समन्ततः ।
आस्थाय मृगरूपं वै खमेवाभ्यपतत्तदा ॥ ०३४ ॥

तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः ।
धनुरादाय बाणं च तदान्वसरत प्रभुः ॥ ०३५ ॥

ततस्तस्य सुरेशस्य क्रोधादमिततेजसः ।
ललाटात्प्रसृतो घोरः स्वेदबिन्दुर्बभूव ह ॥ ०३६ ॥

तस्मिन्पतितमात्रे तु स्वेदबिन्दौ तथा भुवि ।
प्रादुर्बभूव सुमहानग्निः कालानलोपमः ॥ ०३७ ॥

तत्र चाजायत तदा पुरुषः पुरुषर्षभ ।
ह्रस्वोऽतिमात्ररक्ताक्षो हरिश्मश्रुर्विभीषणः ॥ ०३८ ॥

ऊर्ध्वकेशोऽतिलोमाङ्गः श्येनोलूकस्तथैव च ।
करालः कृष्णवर्णश्च रक्तवासास्तथैव च ॥ ०३९ ॥

तं यज्ञं स महासत्त्वोऽदहत्कक्षमिवानलः ।

देवाश्चाप्यद्रवन्सर्वे ततो भीता दिशो दश ॥ ०४० ॥

तेन तस्मिन्विचरता पुरुषेण विशां पते ।
पृथिवी व्यचलद्राजन्नतीव भरतर्षभ ॥ ०४१ ॥

हाहाभूते प्रवृत्ते तु नादे लोकभयङ्करे ।
पितामहो महादेवं दर्शयन्प्रत्यभाषत ॥ ०४२ ॥

भवतोऽपि सुराः सर्वे भागं दास्यन्ति वै प्रभो ।
क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ ०४३ ॥

इमा हि देवताः सर्वा ऋषयश्च परंतप ।
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ ०४४ ॥

यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम ।
ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ०४५ ॥

एकीभूतस्य न ह्यस्य धारणे तेजसः प्रभो ।
समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ ०४६ ॥

इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते ।
भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥ ०४७ ॥

परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृक् ।
अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ॥ ०४८ ॥

ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा ।
शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥ ०४९ ॥

शीर्षाभितापो नागानां पर्वतानां शिलाजतुः ।
अपां तु नीलिकां विद्यान्निर्मोकं भुजगेषु च ॥ ०५० ॥

खोरकः सौरभेयाणामूषरं पृथिवीतले ।
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम्  ॥ ०५१  ॥

रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना  ॥ ०५२  ॥

अब्जानां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः  ॥ ०५३  ॥

शार्दूलेष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते ।
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः  ॥ ०५४  ॥

मरणे जन्मनि तथा मध्ये चाविशते नरम्  ॥ ०५४  ॥

एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ।
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः  ॥ ०५५  ॥

अनेन हि समाविष्टो वृत्रो धर्मभृतां वरः ।
व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत्  ॥ ०५६  ॥

प्रविश्य वज्रो वृत्रं तु दारयामास भारत ।
दारितश्च स वज्रेण महायोगी महासुरः  ॥ ०५७  ॥

जगाम परमं स्थानं विष्णोरमिततेजसः  ॥ ०५७  ॥

विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्पुरा ।
तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान्  ॥ ०५८  ॥

इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया ।
विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते  ॥ ०५९  ॥

इमां ज्वरोत्पत्तिमदीनमानसः ; पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स सुखी मुदा युतो ; लभेत कामान्स यथामनीषितान् ॥ ०६० ॥

---

# नारदसम ण्गसंवादः

## अध्याय २७५

युधिष्ठिर उवाच ॥

शोकाद्दुःखाच्च मृत्योश्च त्रस्यन्ति प्राणिनः सदा ।
उभयं मे यथा न स्यात्तन्मे ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं समङ्गस्य च भारत ॥ ००२ ॥

नारद उवाच ॥

उरसेव प्रणमसे बाहुभ्यां तरसीव च ।
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥ ००३ ॥

उद्वेगं नेह ते किञ्चित्सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥ ००४ ॥

समङ्ग उवाच ॥

भूतं भव्यं भविष्यच्च सर्वं सत्त्वेषु मानद ।
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥ ००५ ॥

उपक्रमानहं वेद पुनरेव फलोदयान् ।
लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ ००६ ॥

अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ ००७ ॥

विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः ।
बलवन्तोऽबलाश्चैव तद्वदस्मान्सभाजय ॥ ००८ ॥

सहस्रिणश्च जीवन्ति जीवन्ति शतिनस्तथा ।
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥ ००९ ॥

यदा न शोचेमहि किं नु न स्या ;द्धर्मेण वा नारद कर्मणा वा ।
कृतान्तवश्यानि यदा सुखानि ; दुःखानि वा यन्न विधर्षयन्ति ॥ ०१० ॥

यस्मै प्रज्ञां कथयन्ते मनुष्याः ; प्रज्ञामूलो हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति यदेन्द्रियाणि ; प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥ ०११ ॥

मूढस्य दर्पः स पुनर्मोह एव ; मूढस्य नायं न परोऽस्ति लोकः ।
न ह्येव दुःखानि सदा भवन्ति ; सुखस्य वा नित्यशो लाभ एव ॥ ०१२ ॥

भावात्मकं संपरिवर्तमानं ; न मादृशः सञ्ज्वरं जातु कुर्यात् ।
इष्टान्भोगान्नानुरुध्येत्सुखं वा ; न चिन्तयेद्दुःखमभ्यागतं वा ॥ ०१३ ॥

समाहितो न स्पृहयेत्परेषां ; नानागतं नाभिनन्देत लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे ; तथार्थनाशे च न वै विषीदेत् ॥ ०१४ ॥

न बान्धवा न च वित्तं न कौली ; न च श्रुतं न च मन्त्रा न वीर्यम् ।
दुःखात्त्रातुं सर्व एवोत्सहन्ते ; परत्र शीले न तु यान्ति शान्तिम्  ॥ ०१५  ॥

नास्ति बुद्धिरयुक्तस्य नायोगाद्विद्यते सुखम् ।
धृतिश्च दुःखत्यागश्चाप्युभयं नः सुखोदयम्  ॥ ०१६  ॥

प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः ।
उत्सेको नरकायैव तस्मात्तं संत्यजाम्यहम्  ॥ ०१७  ॥

एताञ्शोकभयोत्सेकान्मोहनान्सुखदुःखयोः ।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात्  ॥ ०१८  ॥

अर्थकामौ परित्यज्य विशोको विगतज्वरः ।
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम्  ॥ ०१९  ॥

न मृत्युतो न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तमिह चामुत्र वा भयम्  ॥ ०२०  ॥

एतद्ब्रह्मन्विजानामि महत्कृत्वा तपोऽव्ययम् ।
तेन नारद संप्राप्तो न मां शोकः प्रबाधते  ॥ ०२१  ॥

---

# नारदगालवसंवादः

## अध्याय २७६

युधिष्ठिर उवाच  ॥

अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ ००१ ॥

भीष्म उवाच ॥

गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते ॥ ००२ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गालवस्य च संवादं देवर्षेर्नारदस्य च ॥ ००३ ॥

वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम् ।
श्रेयस्कामं जितात्मानं नारदं गालवोऽब्रवीत् ॥ ००४ ॥

यैः कैश्चित्संमतो लोके गुणैस्तु पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणा.ण्ल्लक्षयाम्यहम् ॥ ००५ ॥

भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति ।
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ॥ ००६ ॥

ज्ञाने ह्येवं प्रवृत्तिः स्यात्कार्याकार्ये विजानतः ।
यत्कार्यं न व्यवस्यामस्तद्भवान्वक्तुमर्हति ॥ ००७ ॥

भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः ।
इदं श्रेय इदं श्रेय इति नानाप्रधाविताः ॥ ००८ ॥

तांस्तु विप्रस्थितान्दृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः ।
स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे ॥ ००९ ॥

शास्त्रं यदि भवेदेकं व्यक्तं श्रेयो भवेत्तदा ।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥ ०१० ॥

एतस्मात्कारणाच्छ्रेयः कलिलं प्रतिभाति माम् ।
ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः ॥ ०११ ॥

नारद उवाच ॥

आश्रमास्तात चत्वारो यथासङ्कल्पिताः पृथक् ।
तान्सर्वाननुपश्य त्वं समाश्रित्यैव गालव ॥ ०१२ ॥

तेषां तेषां तथा हि त्वमाश्रमाणां ततस्ततः ।
नानारूपगुणोद्देशं पश्य विप्रस्थितं पृथक् ॥ ०१३ ॥

नयन्ति चैव ते सम्यगभिप्रेतमसंशयम् ॥ ०१३ ॥

ऋजु पश्यंस्तथा सम्यगाश्रमाणां परां गतिम् ।
यत्तु निःश्रेयसं सम्यक्तच्चैवासंशयात्मकम् ॥ ०१४ ॥

अनुग्रहं च मित्राणाममित्राणां च निग्रहम् ।
सङ्ग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः ॥ ०१५ ॥

निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ।
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ॥ ०१६ ॥

मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ।
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ॥ ०१७ ॥

देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि ।
असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् ॥ ०१८ ॥

सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ।
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम् ॥ ०१९ ॥

अहङ्कारस्य च त्यागः प्रणयस्य च निग्रहः ।
संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते ॥ ०२० ॥

धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च ।
विद्यार्थानां च जिज्ञासा श्रेय एतदसंशयम् ॥ ०२१ ॥

शब्दरूपरसस्पर्शान्सह गन्धेन केवलान् ।
नात्यर्थमुपसेवेत श्रेयसोऽर्थी परंतप ॥ ०२२ ॥

नक्तञ्चर्या दिवास्वप्नमालस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत् ॥ ०२३ ॥

कर्मोत्कर्षं न मार्गेत परेषां परिनिन्दया ।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ ०२४ ॥

निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविनो नराः ।
दोषैरन्यान्गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ ०२५ ॥

अनुच्यमानाश्च पुनस्ते मन्यन्ते महाजनात् ।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ ०२६ ॥

अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः ॥ ०२७ ॥

अब्रुवन्वाति सुरभिर्गन्धः सुमनसां शुचिः ।
तथैवाव्याहरन्भाति विमलो भानुरम्बरे ॥ ०२८ ॥

एवमादीनि चान्यानि परित्यक्तानि मेधया ।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च ॥ ०२९ ॥

न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ ०३० ॥

असन्नुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति ।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ॥ ०३१ ॥

मूढानामवलिप्तानामसारं भाषितं बहु ।
दर्शयत्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ०३२ ॥

एतस्मात्कारणात्प्रज्ञां मृगयन्ते पृथग्विधाम् ।
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति माम् ॥ ०३३ ॥

नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः ।
ज्ञानवानपि मेधावी जडवल्लोकमाचरेत् ॥ ०३४ ॥

ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ ०३५ ॥

चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथञ्चन ॥ ०३६ ॥

निरारम्भोऽप्ययमिह यथालब्धोपजीवनः ।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ॥ ०३७ ॥

अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शमुभयोः पापपुण्ययोः ॥ ०३८ ॥

अपश्यन्तोऽन्नविषयं भुञ्जते विघसाशिनः ।
भुञ्जानं चान्नविषयान्विषयं विद्धि कर्मणाम् ॥ ०३९ ॥

यत्रागमयमानानामसत्कारेण पृच्छताम् ।

प्रब्रूयाद्ब्रह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥ ०४० ॥

शिष्योपाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता ।
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ॥ ०४१ ॥

आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चिताम् ।
आत्मपूजाभिकामा वै को वसेत्तत्र पण्डितः ॥ ०४२ ॥

यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव शैलान्तं कस्तं देशं न संत्यजेत् ॥ ०४३ ॥

यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ०४४ ॥

धर्ममर्थनिमित्तं तु चरेयुर्यत्र मानवाः ।
नताननुवसेज्जातु ते हि पापकृतो जनाः ॥ ०४५ ॥

कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ ०४६ ॥

येन खट्वां समारूढः कर्मणानुशयी भवेत् ।
आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ॥ ०४७ ॥

यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।
कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ ०४८ ॥

श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः ।
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥ ०४९ ॥

स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ॥ ०५० ॥

अशुचीन्यत्र पश्येत ब्राह्मणान्वृत्तिकर्शितान् ।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम्  ॥ ०५१  ॥

प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान्  ॥ ०५२  ॥

दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु  ॥ ०५३  ॥

उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुषु ।
अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम्  ॥ ०५४  ॥

यत्र राजा धर्मनित्यो राज्यं वै पर्युपासिता ।
अपास्य कामान्कामेशो वसेत्तत्राविचारयन्  ॥ ०५५  ॥

तथाशीला हि राजानः सर्वान्विषयवासिनः ।
श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते  ॥ ०५६  ॥

पृच्छतस्ते मया तात श्रेय एतदुदाहृतम् ।
न हि शक्यं प्रधानेन श्रेयः संख्यातुमात्मनः  ॥ ०५७  ॥

एवं प्रवर्तमानस्य वृत्तिं प्रणिहितात्मनः ।
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति  ॥ ०५८  ॥

# अरिष्टनेमिसगरसंवादः

## अध्याय २७७

युधिष्ठिर उवाच ॥

कथं नु मुक्तः पृथिवीं चरेदस्मद्विधो नृपः ।
नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ ००२ ॥

सगर उवाच ॥

किं श्रेयः परमं ब्रह्मन्कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ॥ ००३ ॥

भीष्म उवाच ॥

एवमुक्तस्तदा तार्क्ष्यः सर्वशास्त्रविशारदः ।
विबुध्य संपदं चाग्र्यां सद्वाक्यमिदमब्रवीत् ॥ ००४ ॥

सुखं मोक्षसुखं लोके न च लोकोऽवगच्छति ।
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ॥ ००५ ॥

सक्तबुद्धिरशान्तात्मा न स शक्यश्चिकित्सितुम् ।
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ ००६ ॥

स्नेहजानिह ते पाशान्वक्ष्यामि शृणु तान्मम ।

सकर्णकेन शिरसा शक्यश्छेत्तुं विजानता ॥ ००७ ॥

संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च ।
समर्थाञ्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ ००८ ॥

भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि काले त्वं परार्थमनुदृश्य च ॥ ००९ ॥

सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥ ०१० ॥

कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लाभेषु च समो भव ॥ ०११ ॥

एष तावत्समासेन तव सङ्कीर्तितो मया ।
मोक्षार्थो विस्तरेणापि भूयो वक्ष्यामि तच्छृणु ॥ ०१२ ॥

मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ ०१३ ॥

आहारसञ्चयाश्चैव तथा कीटपिपीलिकाः ।
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः ॥ ०१४ ॥

स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे मया विनाभूता भविष्यन्ति कथं त्विति ॥ ०१५ ॥

स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्धते ।
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥ ०१६ ॥

भोजनाच्छादने चैव मात्रा पित्रा च सङ्ग्रहम् ।
स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥ ०१७ ॥

धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥ ०१८ ॥

स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुः स्वजनं पोष्टुं रक्षितुं वाद्दढात्मनः ॥ ०१९ ॥

स्वजनं हि यदा मृत्युर्हन्त्येव तव पश्यतः ।
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना ॥ ०२० ॥

जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ॥ ०२१ ॥

यदा मृतश्च स्वजनं न ज्ञास्यसि कथञ्चन ।
सुखितं दुःखितं वापि ननु बोद्धव्यमात्मना ॥ ०२२ ॥

मृते वा त्वयि जीवे वा यदि भोक्ष्यति वै जनः ।
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः ॥ ०२३ ॥

एवं विजान.ण्ल्लोकेऽस्मिन्कः कस्येत्यभिनिश्चितः ।
मोक्षे निवेशय मनो भूयश्चाप्युपधारय ॥ ०२४ ॥

क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्त्ववान्मुक्त एव सः ॥ ०२५ ॥

द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः ।
न प्रमाद्यति संमोहात्सततं मुक्त एव सः ॥ ०२६ ॥

दिवसे दिवसे नाम रात्रौ रात्रौ सदा सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स उच्यते ॥ ०२७ ॥

आत्मभावं तथा स्त्रीषु मुक्तमेव पुनः पुनः ।
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ॥ ०२८ ॥

संभवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः ॥ ०२९ ॥

प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकस्थानं यः पश्यति स मुच्यते ॥ ०३० ॥

मृत्युनाभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ॥ ०३१ ॥

यः पश्यति सुखी तुष्टो नपश्यंश्च विहन्यते ।
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन्मुक्त एव सः ॥ ०३२ ॥

अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ॥ ०३३ ॥

पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः ।
शालयश्च कदन्नं च यस्य स्यान्मुक्त एव सः ॥ ०३४ ॥

क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥ ०३५ ॥

पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ॥ ०३६ ॥

सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ॥ ०३७ ॥

रक्तमूत्रपुरीषाणां दोषाणां सञ्चयं तथा ।

शरीरं दोषबहुलं दृष्ट्वा चेदं विमुच्यते ॥ ०३८ ॥

वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ ०३९ ॥

पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ०४० ॥

गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ॥ ०४१ ॥

प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥ ०४२ ॥

अर्थांश्च दुर्लभा.ण्ल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ०४३ ॥

अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन्भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥ ०४४ ॥

शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
असारमिव मानुष्यं सर्वथा मुक्त एव सः ॥ ०४५ ॥

एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् ।
गार्हस्थ्ये यदि ते मोक्षे कृता बुद्धिरविक्लवा ॥ ०४६ ॥

तत्तस्य वचनं श्रुत्वा सम्यक्स पृथिवीपतिः ।
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ०४७ ॥

# काव्योपाख्यानम्

## अध्याय २७८

युधिष्ठिर उवाच ॥

तिष्ठते मे सदा तात कौतूहलमिदं हृदि ।
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥ ००१ ॥

कथं देवर्षिरुशना सदा काव्यो महामतिः ।
असुराणां प्रियकरः सुराणामप्रिये रतः ॥ ००२ ॥

वर्धयामास तेजश्च किमर्थममितौजसाम् ।
नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ॥ ००३ ॥

कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः ।
ऋद्धिं च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ॥ ००४ ॥

न याति च स तेजस्वी मध्येन नभसः कथम् ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥ ००५ ॥

भीष्म उवाच ॥

शृणु राजन्नवहितः सर्वमेतद्यथातथम् ।
यथामति यथा चैतच्छ्रुतपूर्वं मयानघ ॥ ००६ ॥

एष भार्गवदायादो मुनिः सत्यो दृढव्रतः ।
असुराणां प्रियकरो निमित्ते करुणात्मके ॥ ००७ ॥

इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः स च ।
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ ००८ ॥

तस्यात्मानमथाविश्य योगसिद्धो महामुनिः ।
रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ॥ ००९ ॥

हृते धने ततः शर्म न लेभे धनदस्तथा ।
आपन्नमन्युः संविग्नः सोऽभ्यगात्सुरसत्तमम् ॥ ०१० ॥

निवेदयामास तदा शिवायामिततेजसे ।
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ०११ ॥

कुबेर उवाच ॥

योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु ।
योगेनात्मगतिं कृत्वा निःसृतश्च महातपाः ॥ ०१२ ॥

भीष्म उवाच ॥

एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः ।
संरक्तनयनो राजञ्शूलमादाय तस्थिवान् ॥ ०१३ ॥

क्वास्वौ क्वासाविति प्राह गृहीत्वा परमायुधम् ।
उशना दूरतस्तस्य बभौ ज्ञात्वा चिकीर्षितम् ॥ ०१४ ॥

स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः ।
गतिमागमनं वेत्ति स्थानं वेत्ति ततः प्रभुः ॥ ०१५ ॥

सञ्चिन्त्योग्रेण तपसा महात्मानं महेश्वरम् ।
उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत ॥ ०१६ ॥

विज्ञातरूपः स तदा तपःसिद्धेन धन्विना ।
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् ॥ ०१७ ॥

आनतेनाथ शूलेन पाणिनामिततेजसा ।
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ ०१८ ॥

पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः ।
आस्यं विवृत्य ककुदी पाणिं संप्राक्षिपच्छनैः ॥ ०१९ ॥

स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ ०२० ॥

युधिष्ठिर उवाच ॥

किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः ।
जठरे देवदेवस्य किं चाकार्षीन्महाद्युतिः ॥ ०२१ ॥

भीष्म उवाच ॥

पुरा सोऽन्तर्जलगतः स्थाणुभूतो महाव्रतः ।
वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानि च ॥ ०२२ ॥

उदतिष्ठत्तपस्तप्त्वा दुश्चरं स महाह्रदात् ।
ततो देवातिदेवस्तं ब्रह्मा समुपसर्पत ॥ ०२३ ॥

तपोवृद्धिमपृच्छच्च कुशलं चैनमव्ययम् ।
तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः ॥ ०२४ ॥

तत्संयोगेन वृद्धिं चाप्यपश्यत्स तु शङ्करः ।
महामतिरचिन्त्यात्मा सत्यधर्मरतः सदा ॥ ०२५ ॥

स तेनाढ्यो महायोगी तपसा च धनेन च ।
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् ॥ ०२६ ॥

ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशना तु समुद्विग्नो निलिल्ये जठरे ततः ॥ ०२७ ॥

तुष्टाव च महायोगी देवं तत्रस्थ एव च ।
निःसारं काङ्क्षमाणस्तु तेजसा प्रत्यहन्यत ॥ ०२८ ॥

उशना तु तदोवाच जठरस्थो महामुनिः ।
प्रसादं मे कुरुष्वेति पुनः पुनररिंदम ॥ ०२९ ॥

तमुवाच महादेवो गच्छ शिश्नेन मोक्षणम् ।
इति स्रोतांसि सर्वाणि रुद्ध्वा त्रिदशपुङ्गवः ॥ ०३० ॥

अपश्यमानः स द्वारं सर्वतःपिहितो मुनिः ।
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ॥ ०३१ ॥

स विनिष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्येण तेन नभसो नागच्छत च मध्यतः ॥ ०३२ ॥

निष्क्रान्तमथ तं दृष्ट्वा ज्वलन्तमिव तेजसा ।
भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ॥ ०३३ ॥

न्यवारयत तं देवी क्रुद्धं पशुपतिं पतिम् ।
पुत्रत्वमगमद्देव्या वारिते शङ्करे च सः ॥ ०३४ ॥

देव्युवाच ॥

हिंसनीयस्त्वया नैष मम पुत्रत्वमागतः ।
न हि देवोदरात्कश्चिन्निःसृतो नाशमर्छति ॥ ०३५ ॥

भीष्म उवाच ॥

ततः प्रीतोऽभवद्देव्याः प्रहसंश्चेदमब्रवीत् ।
गच्छत्वेष यथाकाममिति राजन्पुनः पुनः ॥ ०३६ ॥

ततः प्रणम्य वरदं देवं देवीमुमां तथा ।
उशना प्राप तद्धीमान्गतिमिष्टां महामुनिः ॥ ०३७ ॥

एतत्ते कथितं तात भार्गवस्य महात्मनः ।
चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ ०३८ ॥

---

# पराशरगीता

## अध्याय २७९

युधिष्ठिर उवाच ॥

अतः परं महाबाहो यच्छ्रेयस्तद्वदस्व मे ।
न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ ००१ ॥

किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम ।
श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥ ००२ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः ।
पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ००३ ॥

किं श्रेयः सर्वभूतानामस्मि.ण्ल्लोके परत्र च ।

यद्भवेत्प्रतिपत्तव्यं तद्भवान्प्रब्रवीतु मे ॥ ००४ ॥

ततः स तपसा युक्तः सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ००५ ॥

धर्म एव कृतः श्रेयानिह लोके परत्र च ।
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥ ००६ ॥

प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।
धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम ॥ ००७ ॥

तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ ००७ ॥

चतुर्विधा हि लोकस्य यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ॥ ००८ ॥

सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।
दशार्धप्रविभक्तानां भूतानां बहुधा गतिः ॥ ००९ ॥

सौवर्णं राजतं वापि यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ ०१० ॥

नाबीजाज्जायते किञ्चिन्नाकृत्वा सुखमेधते ।
सुकृती विन्दति सुखं प्राप्य देहक्षयं नरः ॥ ०११ ॥

दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥ ०१२ ॥

प्रेत्य जातिकृतं कर्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ ०१३ ॥

लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः ।
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम्  ॥ ०१४  ॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते  ॥ ०१५  ॥

निरन्तरं च मिश्रं च फलते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते  ॥ ०१६  ॥

कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते  ॥ ०१७  ॥

ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाद्दुष्कृतं च तद्विद्धि मनुजाधिप  ॥ ०१८  ॥

दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसाव्यसनिता दाक्ष्यं चेति सुखावहाः  ॥ ०१९  ॥

दुष्कृते सुकृते वापि न जन्तुरयतो भवेत् ।
नित्यं मनःसमाधाने प्रयतेत विचक्षणः  ॥ ०२०  ॥

नायं परस्य सुकृतं दुष्कृतं वापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते  ॥ ०२१  ॥

सुखदुःखे समाधाय पुमानन्येन गच्छति ।
अन्येनैव जनः सर्वः सङ्गतो यश्च पार्थिव  ॥ ०२२  ॥

परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ।
यो ह्यसूयुस्तथायुक्तः सोऽवहासं नियच्छति  ॥ ०२३  ॥

भीरू राजन्यो ब्राह्मणः सर्वभक्षो ; वैश्योऽनीहावान्हीनवर्णोऽलसश्च ।

विद्वांश्चाशीलो वृत्तहीनः कुलीनः ; सत्याद्भ्रष्टो ब्राह्मणः स्त्री च दुष्टा ॥ ०२४ ॥

रागी मुक्तः पचमानोऽऽत्महेतो ;र्मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।
एते सर्वे शोच्यतां यान्ति राज ;न्यश्चायुक्तः स्नेहहीनः प्रजासु ॥ ०२५ ॥

---

# अध्याय २८०

पराशर उवाच ॥

मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।
रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् ॥ ००१ ॥

सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते ।
द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्परस्परम् ॥ ००२ ॥

आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशां पते ।
उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥ ००३ ॥

वर्णेभ्योऽपि परिभ्रष्टः स वै संमानमर्हति ।
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ॥ ००४ ॥

वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।
दुर्लभं तमलब्धा हि हन्यात्पापेन कर्मणा ॥ ००५ ॥

अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत् ।
पापं हि कर्म फलति पापमेव स्वयं कृतम् ॥ ००६ ॥

तस्मात्पापं न सेवेत कर्म दुःखफलोदयम्  ॥ ००६  ॥

पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी शुचिः कुसलिलं यथा  ॥ ००७  ॥

किङ्कष्टमनुपश्यामि फलं पापस्य कर्मणः ।
प्रत्यापन्नस्य हि सतो नात्मा तावद्विरोचते  ॥ ००८  ॥

प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते ।
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते  ॥ ००९  ॥

विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् ।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे  ॥ ०१०  ॥

स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति ।
प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथक्  ॥ ०११  ॥

अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति ।
ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः  ॥ ०१२  ॥

तथा कामकृतं चास्य विहिंसैवापकर्षति ।
इत्याहुर्धर्मशास्त्रज्ञा ब्राह्मणा वेदपारगाः  ॥ ०१३  ॥

अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्तं प्रकाशं च पापेनानुपसंहितम्  ॥ ०१४  ॥

यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम् ।
बुद्धियुक्तानि तानीह कृतानि मनसा सह  ॥ ०१५  ॥

भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा  ॥ ०१६  ॥

कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्  ॥ ०१७  ॥

सञ्चिन्त्य मनसा राजन्विदित्वा शक्तिमात्मनः ।
करोति यः शुभं कर्म स वै भद्राणि पश्यति  ॥ ०१८  ॥

नवे कपाले सलिलं संन्यस्तं हीयते यथा ।
नवेतरे तथाभावं प्राप्नोति सुखभावितम्  ॥ ०१९  ॥

सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते ।
वृद्धे वृद्धिमवाप्नोति सलिले सलिलं यथा  ॥ ०२०  ॥

एवं कर्माणि यानीह बुद्धियुक्तानि भूपते ।
नसमानीह हीनानि तानि पुण्यतमान्यपि  ॥ ०२१  ॥

राज्ञा जेतव्याः सायुधाश्चोन्नताश्च ; सम्यक्कर्तव्यं पालनं च प्रजानाम् ।
अग्निश्चेयो बहुभिश्चापि यज्ञै ;रन्ते मध्ये वा वनमाश्रित्य स्थेयम्  ॥ ०२२  ॥

दमान्वितः पुरुषो धर्मशीलो ; भूतानि चात्मानमिवानुपश्येत् ।
गरीयसः पूजयेदात्मशक्त्या ; सत्येन शीलेन सुखं नरेन्द्र  ॥ ०२३  ॥

---

# अध्याय २८१

पराशर उवाच  ॥

कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति ।
प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना  ॥ ००१  ॥

गौरवेण परित्यक्तं निःस्नेहं परिवर्जयेत् ।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम्  ॥ ००२  ॥

विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ ।
तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः  ॥ ००३  ॥

न्यायागतं धनं वर्णैर्न्यायेनैव विवर्धितम् ।
संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः  ॥ ००४  ॥

न धर्मार्थी नृशंसेन कर्मणा धनमर्जयेत् ।
शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरेत्  ॥ ००५  ॥

अपो हि प्रयतः शीतास्तापिता ज्वलनेन वा ।
शक्तितोऽतिथये दत्त्वा क्षुधार्तायाश्नुते फलम्  ॥ ००६  ॥

रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना ।
फलपत्रैरथो मूलैर्मुनीनर्चितवानसौ  ॥ ००७  ॥

तैरेव फलपत्रैश्च स माठरमतोषयत् ।
तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः  ॥ ००८  ॥

देवतातिथिभृत्येभ्यः पितृभ्योऽथात्मनस्तथा ।
ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत्  ॥ ००९  ॥

स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा ।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च  ॥ ०१०  ॥

वाचः शेषावहार्येण पालनेनात्मनोऽपि च ।
यथावद्भृत्यवर्गस्य चिकीर्षेद्धर्ममादितः  ॥ ०११  ॥

प्रयत्नेन च संसिद्धा धनैरपि विवर्जिताः ।
सम्यग्घुत्वा हुतवहं मुनयः सिद्धिमागताः ॥ ०१२ ॥

विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत् ।
ऋग्भिः स्तुत्वा महाभागो देवान्वै यज्ञभागिनः ॥ ०१३ ॥

गतः शुक्रत्वमुशना देवदेवप्रसादनात् ।
देवीं स्तुत्वा तु गगने मोदते तेजसा वृतः ॥ ०१४ ॥

असितो देवलश्चैव तथा नारदपर्वतौ ।
कक्षीवाञ्जामदग्न्यश्च रामस्ताण्ड्यस्तथांशुमान् ॥ ०१५ ॥

वसिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च ।
भरद्वाजो हरिश्मश्रुः कुण्डधारः श्रुतश्रवाः ॥ ०१६ ॥

एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः ।
लेभिरे तपसा सिद्धिं प्रसादात्तस्य धीमतः ॥ ०१७ ॥

अनर्हाश्चार्हतां प्राप्ताः सन्तः स्तुत्वा तमेव ह ।
न तु वृद्धिमिहान्विच्छेत्कर्म कृत्वा जुगुप्सितम् ॥ ०१८ ॥

येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ ०१९ ॥

आहिताग्निर्हि धर्मात्मा यः स पुण्यकृदुत्तमः ।
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ॥ ०२० ॥

स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते ।
श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् ॥ ०२१ ॥

अग्निरात्मा च माता च पिता जनयिता तथा ।

गुरुश्च नरशार्दूल परिचर्या यथातथम्  ॥ ०२२  ॥

मानं त्यक्त्वा यो नरो वृद्धसेवी ; विद्वान्क्लीबः पश्यति प्रीतियोगात् ।
दाक्ष्येणाहीनो धर्मयुक्तो नदान्तो ; लोकेऽस्मिन्वै पूज्यते सद्भिरार्यः  ॥ ०२३  ॥

---

# अध्याय २८२

पराशर उवाच  ॥

वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना ।
प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान्कुरुते सदा  ॥ ००१  ॥

वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा ।
न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत्  ॥ ००२  ॥

सद्भिस्तु सह संसर्गः शोभते धर्मदर्शिभिः ।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः  ॥ ००३  ॥

यथोदयगिरौ द्रव्यं संनिकर्षेण दीप्यते ।
तथा सत्संनिकर्षेण हीनवर्णोऽपि दीप्यते  ॥ ००४  ॥

यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम् ।
तादृशं कुरुते रूपमेतदेवमवैहि मे  ॥ ००५  ॥

तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।
अनित्यमिह मर्त्यानां जीवितं हि चलाचलम्  ॥ ००६  ॥

सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः ।
यश्चिनोति शुभान्येव स भद्राणीह पश्यति ॥ ००७ ॥

धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥ ००८ ॥

यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः ॥ ००९ ॥

स्वयंभूरसृजच्चाग्रे धातारं लोकपूजितम् ।
धातासृजत्पुत्रमेकं प्रजानां धारणे रतम् ॥ ०१० ॥

तमर्चयित्वा वैश्यस्तु कुर्यादत्यर्थमृद्धिमत् ।
रक्षितव्यं तु राजन्यैरुपयोज्यं द्विजातिभिः ॥ ०११ ॥

अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः ।
शूद्रैर्निर्माजनं कार्यमेवं धर्मो न नश्यति ॥ ०१२ ॥

अप्रनष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः ।
सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः ॥ ०१३ ॥

तस्माद्यो रक्षति नृपः स धर्मेणाभिपूज्यते ।
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः ॥ ०१४ ॥

यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रियः ।
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात्परिहीयते ॥ ०१५ ॥

प्राणसंतापनिर्दिष्टाः काकिण्योऽपि महाफलाः ।
न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः ॥ ०१६ ॥

सत्कृत्य तु द्विजातिभ्यो यो ददाति नराधिप ।

यादृशं तादृशं नित्यमश्नाति फलमूर्जितम्  ॥ ०१७  ॥

अभिगम्य दत्तं तुष्ट्या यद्धन्यमाहुरभिष्टुतम् ।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं बुधाः  ॥ ०१८  ॥

अवज्ञया दीयते यत्तथैवाश्रद्धयापि च ।
तदाहुरधमं दानं मुनयः सत्यवादिनः  ॥ ०१९  ॥

अतिक्रमे मज्जमानो विविधेन नरः सदा ।
तथा प्रयत्नं कुर्वीत यथा मुच्येत संशयात्  ॥ ०२०  ॥

दमेन शोभते विप्रः क्षत्रियो विजयेन तु ।
धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते  ॥ ०२१  ॥

---

# अध्याय २८३

पराशर उवाच  ॥

प्रतिग्रहागता विप्रे क्षत्रिये शस्त्रनिर्जिताः ।
वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयार्जिताः  ॥ ००१  ॥

स्वल्पाप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः  ॥ ००१  ॥

नित्यं त्रयाणां वर्णानां शूद्रः शुश्रूषुरुच्यते ।
क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतति द्विजः  ॥ ००२  ॥

शूद्रकर्मा यदा तु स्यात्तदा पतति वै द्विजः  ॥ ००२  ॥

वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजीवनम् ।
शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ॥ ००३ ॥

रङ्गावतरणं चैव तथा रूपोपजीवनम् ।
मद्यमांसोपजीव्यं च विक्रयो लोहचर्मणोः ॥ ००४ ॥

अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् ।
कृतपूर्विणस्तु त्यजतो महान्धर्म इति श्रुतिः ॥ ००५ ॥

संसिद्धः पुरुषो लोके यदाचरति पापकम् ।
मदेनाभिप्लुतमनास्तच्च नग्राह्यमुच्यते ॥ ००६ ॥

श्रूयन्ते हि पुराणे वै प्रजा धिग्दण्डशासनाः ।
दान्ता धर्मप्रधानाश्च न्यायधर्मानुवर्तकाः ॥ ००७ ॥

धर्म एव सदा नृणामिह राजन्प्रशस्यते ।
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ॥ ००८ ॥

तं धर्ममसुरास्तात नामृष्यन्त जनाधिप ।
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन्प्रजाः ॥ ००९ ॥

तेषां दर्पः समभवत्प्रजानां धर्मनाशनः ।
दर्पात्मनां ततः क्रोधः पुनस्तेषामजायत ॥ ०१० ॥

ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम् ।
ह्रीश्चैवाप्यनशद्राजंस्ततो मोहो व्यजायत ॥ ०११ ॥

ततो मोहपरीतास्ते नापश्यन्त यथा पुरा ।
परस्परावमर्देन वर्तयन्ति यथासुखम् ॥ ०१२ ॥

तान्प्राप्य तु स धिग्दण्डो नकारणमतोऽभवत् ।
ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह ॥ ०१३ ॥

एतस्मिन्नेव काले तु देवा देववरं शिवम् ।
अगच्छञ्शरणं वीरं बहुरूपं गणाधिपम् ॥ ०१४ ॥

तेन स्म ते गगनगाः सपुराः पातिताः क्षितौ ।
तिस्रोऽप्येकेन बाणेन देवाप्यायिततेजसा ॥ ०१५ ॥

तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः ।
देवतानां भयकरः स हतः शूलपाणिना ॥ ०१६ ॥

तस्मिन्हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः ।
प्रावर्तन्त च वेदा वै शास्त्राणि च यथा पुरा ॥ ०१७ ॥

ततोऽभ्यषिञ्चन्राज्येन देवानां दिवि वासवम् ।
सप्तर्षयश्चान्वयुञ्जन्नराणां दण्डधारणे ॥ ०१८ ॥

सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः ।
राजानः क्षत्रियाश्चैव मण्डलेषु पृथक्पृथक् ॥ ०१९ ॥

महाकुलेषु ये जाता वृत्ताः पूर्वतराश्च ये ।
तेषामथासुरो भावो हृदयान्नापसर्पति ॥ ०२० ॥

तस्मात्तेनैव भावेन सानुषङ्गेन पार्थिवाः ।
आसुराण्येव कर्माणि न्यषेवन्भीमविक्रमाः ॥ ०२१ ॥

प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्ति च ।
भजन्ते तानि चाद्यापि ये बालिशतमा नराः ॥ ०२२ ॥

तस्मादहं ब्रवीमि त्वां राजन्सञ्चिन्त्य शास्त्रतः ।

संसिद्धाधिगमं कुर्यात्कर्म हिंसात्मकं त्यजेत् ॥ ०२३ ॥

न सङ्करेण द्रविणं विचिन्वीत विचक्षणः ।
धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते ॥ ०२४ ॥

स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय ॥ ०२५ ॥

इष्टानिष्टसमायोगो वैरं सौहार्दमेव च ।
अथ जातिसहस्राणि बहूनि परिवर्तते ॥ ०२६ ॥

तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।
निर्गुणो यो हि दुर्बुद्धिरात्मनः सोऽरिरुच्यते ॥ ०२७ ॥

मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथान्येषु भूतेषु मनुष्यरहितेष्विह ॥ ०२८ ॥

धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा ।
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसयन् ॥ ०२९ ॥

यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ०३० ॥

---

# अध्याय २८४

पराशर उवाच ॥

एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।

तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु ॥ ००१ ॥

प्रायेण हि गृहस्थस्य ममत्वं नाम जायते ।
सङ्गागतं नरश्रेष्ठ भावैस्तामसराजसैः ॥ ००२ ॥

गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥ ००३ ॥

एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥ ००४ ॥

रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजाता रतिर्नाम समुपैति नराधिप ॥ ००५ ॥

कृतार्थो भोगतो भूत्वा स वै रतिपरायणः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ००६ ॥

ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ००७ ॥

स जानन्नपि चाकार्यमर्थार्थं सेवते नरः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥ ००८ ॥

ततो मानेन संपन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोगी स्यामिति तस्माद्विनश्यति ॥ ००९ ॥

तपो हि बुद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम् ।
अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥ ०१० ॥

स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ०११ ॥

निर्वेदादात्मसंबोधः संबोधाच्छास्त्रदर्शनम् ।
शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥ ०१२ ॥

दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति ॥ ०१३ ॥

तपः सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रदेशकम् ॥ ०१४ ॥

प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः ।
क्वचित्क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव ॥ ०१५ ॥

आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः ।
विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः ॥ ०१६ ॥

यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौकसः ।
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः ॥ ०१७ ॥

ये चादौ ब्रह्मणा सृष्टा ब्राह्मणास्तपसा पुरा ।
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा ॥ ०१८ ॥

मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः ।
महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम् ॥ ०१९ ॥

कौशिकानि च वस्त्राणि शुभान्याभरणानि च ।
वाहनासनयानानि सर्वं तत्तपसः फलम् ॥ ०२० ॥

मनोनुकूलाः प्रमदा रूपवत्यः सहस्रशः ।
वासः प्रासादपृष्ठे च तत्सर्वं तपसः फलम् ॥ ०२१ ॥

शयनानि च मुख्यानि भोज्यानि विविधानि च ।
अभिप्रेतानि सर्वाणि भवन्ति कृतकर्मणाम् ॥ ०२२ ॥

नाप्राप्यं तपसा किञ्चित्त्रैलोक्येऽस्मिन्परंतप ।
उपभोगपरित्यागः फलान्यकृतकर्मणाम् ॥ ०२३ ॥

सुखितो दुःखितो वापि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ॥ ०२४ ॥

असंतोषोऽसुखायैव लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥ ०२५ ॥

नष्टप्रज्ञो यदा भवति तदा न्यायं न पश्यति ।
तस्मात्सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् ॥ ०२६ ॥

यदिष्टं तत्सुखं प्राहुर्द्वेष्यं दुःखमिहोच्यते ।
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ ०२७ ॥

नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते ।
प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः ॥ ०२८ ॥

अप्रियाण्यवमानांश्च दुःखं बहुविधात्मकम् ।
फलार्थी सत्पथत्यक्तः प्राप्नोति विषयात्मकम् ॥ ०२९ ॥

धर्मे तपसि दाने च विचिकित्सास्य जायते ।
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ॥ ०३० ॥

सुखे तु वर्तमानो वै दुःखे वापि नरोत्तम ।
स्ववृत्ताद्यो न चलति शास्त्रचक्षुः स मानवः ॥ ०३१ ॥

इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता ।

रसने दर्शने घ्राणे श्रवणे च विशां पते ॥ ०३२ ॥

ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः ।
बुधा येन प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥ ०३३ ॥

ततः फलार्थं चरति भवन्ति ज्यायसो गुणाः ।
धर्मवृत्त्या च सततं कामार्थाभ्यां न हीयते ॥ ०३४ ॥

अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा ।
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ ०३५ ॥

मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।
धर्मक्रियावियुक्तानामशक्त्या संवृतात्मनाम् ॥ ०३६ ॥

क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ०३७ ॥

सर्वात्मना तु कुर्वीत गृहस्थः कर्मनिश्चयम् ।
दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरेन्नृप ॥ ०३८ ॥

यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ०३९ ॥

---

# अध्याय २८५

जनक उवाच ॥

वर्णो विशेषवर्णानां महर्षे केन जायते ।
एतदिच्छाम्यहं श्रोतुं तद्ब्रूहि वदतां वर ॥ ००१ ॥

यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः ।
कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ॥ ००२ ॥

पराशर उवाच ॥

एवमेतन्महाराज येन जातः स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ ००३ ॥

सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥ ००४ ॥

वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ॥ ००५ ॥

मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रबन्धवः ।
ऊरुजा धनिनो राजन्पादजाः परिचारकाः ॥ ००६ ॥

चतुर्णामेव वर्णानामागमः पुरुषर्षभ ।
अतोऽन्ये त्वतिरिक्ता ये ते वै सङ्करजाः स्मृताः ॥ ००७ ॥

क्षत्रजातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः ॥ ००८ ॥

आयोगाः करणा व्रात्याश्चण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परम् ॥ ००९ ॥

जनक उवाच ॥

ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।
बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥ ०१० ॥

यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथापरे ॥ ०११ ॥

पराशर उवाच ॥

राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥ ०१२ ॥

उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥ ०१३ ॥

पितामहश्च मे पूर्वमृश्यश्रृङ्गश्च काश्यपः ।
वटस्ताण्ड्यः कृपश्चैव कक्षीवान्कमठादयः ॥ ०१४ ॥

यवक्रीतश्च नृपते द्रोणश्च वदतां वरः ।
आयुर्मतङ्गो दत्तश्च द्रुपदो मत्स्य एव च ॥ ०१५ ॥

एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽऽश्रयात् ।
प्रतिष्ठिता वेदविदो दमे तपसि चैव हि ॥ ०१६ ॥

मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च ॥ ०१७ ॥

कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ ०१८ ॥

जनक उवाच ॥

विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम ।
तथा सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ ०१९ ॥

पराशर उवाच ॥

प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ ०२० ॥

कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥ ०२१ ॥

विशेषधर्मा नृपते वर्णानां परिकीर्तिताः ।
धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे ॥ ०२२ ॥

आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ ०२३ ॥

स्वेषु दारेषु संतोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥ ०२४ ॥

ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥ ०२५ ॥

विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथासन्तमाश्रित्येह स्वकर्मसु ॥ ०२६ ॥

न चापि शूद्रः पततीति निश्चयो ; न चापि संस्कारमिहार्हतीति वा ।
श्रुतिप्रवृत्तं न च धर्ममाप्नुते ; न चास्य धर्मे प्रतिषेधन
कृतम् ॥ ०२७ ॥

वैदेहकं शूद्रमुदाहरन्ति ; द्विजा महाराज श्रुतोपपन्नाः ।

अहं हि पश्यामि नरेन्द्र देवं ; विश्वस्य विष्णुं जगतः प्रधानम्  ॥ ०२८  ॥

सतां वृत्तमनुष्ठाय निहीना उज्जिहीर्षवः ।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः  ॥ ०२९  ॥

यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते  ॥ ०३०  ॥

जनक उवाच  ॥

किं कर्म दूषयत्येनमथ जातिर्महामुने ।
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि  ॥ ०३१  ॥

पराशर उवाच  ॥

असंशयं महाराज उभयं दोषकारकम् ।
कर्म चैव हि जातिश्च विशेषं तु निशामय  ॥ ०३२  ॥

जात्या च कर्मणा चैव दुष्टं कर्म निषेवते ।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः  ॥ ०३३  ॥

जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम् ।
कर्म तद्दूषयत्येनं तस्मात्कर्म नशोभनम्  ॥ ०३४  ॥

जनक उवाच  ॥

कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा  ॥ ०३५  ॥

पराशर उवाच  ॥

श्रृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥ ०३६ ॥

संन्यस्याग्नीनुपासीनाः पश्यन्ति विगतज्वराः ।
नैःश्रेयसं धर्मपथं समारुह्य यथाक्रमम् ॥ ०३७ ॥

प्रश्रिता विनयोपेता दमनित्याः सुसंशिताः ।
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥ ०३८ ॥

सर्वे वर्णा धर्मकार्याणि सम्य ;क्कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वाधर्मं दारुणं जीवलोके ; यान्ति स्वर्गं नात्र कार्यो विचारः ॥ ०३९ ॥

---

# अध्याय २८६

पराशर उवाच ॥

पिता सखायो गुरवः स्त्रियश्च ; न निर्गुणा नाम भवन्ति लोके ।
अनन्यभक्ताः प्रियवादिनश्च ; हिताश्च वश्याश्च तथैव राजन् ॥ ००१ ॥

पिता परं दैवतं मानवानां ; मातुर्विशिष्टं पितरं वदन्ति ।
ज्ञानस्य लाभं परमं वदन्ति ; जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ ००२ ॥

रणाजिरे यत्र शराग्निसंस्तरे ; नृपात्मजो घातमवाप्य दह्यते ।
प्रयाति लोकानमरैः सुदुर्लभा ;न्निषेवते स्वर्गफलं यथासुखम् ॥ ००३ ॥

श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं ; पराङ्मुखं परिबर्हैश्च हीनम् ।
अनुद्यतं रोगिणं याचमानं ; न वै हिंस्याद्बालवृद्धौ च राजन् ॥ ००४ ॥

परिबर्हैः सुसंपन्नमुद्यतं तुल्यतां गतम् ।
अतिक्रमेत नृपतिः सङ्ग्रामे क्षत्रियात्मजम्  ॥ ००५  ॥

तुल्यादिह वधः श्रेयान्विशिष्टाच्चेति निश्चयः ।
निहीनात्कातराच्चैव नृपाणां गर्हितो वधः  ॥ ००६  ॥

पापात्पापसमाचारान्निहीनाच्च नराधिप ।
पाप एव वधः प्रोक्तो नरकायेति निश्चयः  ॥ ००७  ॥

न कश्चित्त्राति वै राजन्दिष्टान्तवशमागतम् ।
सावशेषायुषं चापि कश्चिदेवापकर्षति  ॥ ००८  ॥

स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत् ।
हिंसात्मकानि कर्माणि नायुरिच्छेत्परायुषा  ॥ ००९  ॥

गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम्  ॥ ०१०  ॥

आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति ।
नाकारणात्तद्भवति कारणैरुपपादितम्  ॥ ०११  ॥

तथा शरीरं भवति देहाद्येनोपपादितम् ।
अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम्  ॥ ०१२  ॥

द्वितीयं कारणं तत्र नान्यत्किञ्चन विद्यते ।
तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्तते  ॥ ०१३  ॥

सिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसङ्कुलम् ।
भूतानामिन्द्रियाणां च गुणानां च समागमम्  ॥ ०१४  ॥

त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः ।
गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् ॥ ०१५ ॥

शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम् ।
भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति ॥ ०१६ ॥

भावितं कर्मयोगेन जायते तत्र तत्र ह ।
इदं शरीरं वैदेह म्रियते यत्र तत्र ह ॥ ०१७ ॥

तत्स्वभावोऽपरो दृष्टो विसर्गः कर्मणस्तथा ॥ ०१७ ॥

न जायते तु नृपते कञ्चित्कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् ॥ ०१८ ॥

स पुनर्जायते राजन्प्राप्येहायतनं नृप ।
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः ॥ ०१९ ॥

द्विविधानां च भूतानां जङ्गमाः परमा नृप ।
जङ्गमानामपि तथा द्विपदाः परमा मताः ॥ ०२० ॥

द्विपदानामपि तथा द्विजा वै परमाः स्मृताः ॥ ०२० ॥

द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः ।
प्राज्ञानामात्मसंबुद्धाः संबुद्धानाममानिनः ॥ ०२१ ॥

जातमन्वेति मरणं नृणामिति विनिश्चयः ।
अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः ॥ ०२२ ॥

आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत् ।
नक्षत्रे च मुहूर्ते च पुण्ये राजन्स पुण्यकृत् ॥ ०२३ ॥

अयोजयित्वा क्लेशेन जनं प्लाव्य च दुष्कृतम् ।
मृत्युनाप्राकृतेनेह कर्म कृत्वात्मशक्तितः ॥ ०२४ ॥

विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः ।
दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते ॥ ०२५ ॥

न चैभिः पुण्यकर्माणो युज्यन्ते नाभिसंधिजैः ।
एवंविधैश्च बहुभिरपरैः प्राकृतैरपि ॥ ०२६ ॥

ऊर्ध्वं हित्वा प्रतिष्ठन्ते प्राणाः पुण्यकृतां नृप ।
मध्यतो मध्यपुण्यानामधो दुष्कृतकर्मणाम् ॥ ०२७ ॥

एकः शत्रुर्न द्वितीयोऽस्ति शत्रु ;रज्ञानतुल्यः पुरुषस्य राजन् ।
येनावृतः कुरुते संप्रयुक्तो ; घोराणि कर्माणि सुदारुणानि ॥ ०२८ ॥

प्रबोधनार्थं श्रुतिधर्मयुक्तं ; वृद्धानुपास्यं च भवेत यस्य ।
प्रयत्नसाध्यो हि स राजपुत्र ; प्रज्ञाशरेणोन्मथितः परैति ॥ ०२९ ॥

अधीत्य वेदांस्तपसा ब्रह्मचारी ; यज्ञाञ्शक्त्या संनिसृज्येह पञ्च ।
वनं गच्छेत्पुरुषो धर्मकामः ; श्रेयश्चित्वा स्थापयित्वा स्ववंशम् ॥ ०३० ॥

उपभोगैरपि त्यक्तं नात्मानमवसादयेत् ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात दुर्लभम् ॥ ०३१ ॥

इयं हि योनिः प्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥ ०३२ ॥

कथं न विप्रणश्येम योनितोऽस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ ०३३ ॥

यो दुर्लभतरं प्राप्य मानुष्यमिह वै नरः ।

धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ॥ ०३४ ॥

यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्चिर्न नश्यति ॥ ०३५ ॥

सान्त्वेनानुप्रदानेन प्रियवादेन चाप्युत ।
समदुःखसुखो भूत्वा स परत्र महीयते ॥ ०३६ ॥

दानं त्यागः शोभना मूर्तिरद्भ्यो ; भूयः प्लाव्यं तपसा वै शरीरम् ।
सरस्वतीनैमिषपुष्करेषु ; ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ॥ ०३७ ॥

गृहेषु येषामसवः पतन्ति ; तेषामथो निर्हरणं प्रशस्तम् ।
यानेन वै प्रापणं च श्मशाने ; शौचेन नूनं विधिना चैव दाहः ॥ ०३८ ॥

इष्टिः पुष्टिर्यजनं याजनं च ; दानं पुण्यानां कर्मणां च प्रयोगः ।
शक्त्या पित्र्यं यच्च किञ्चित्प्रशस्तं ; सर्वाण्यात्मार्थे मानवो यः करोति ॥ ०३९ ॥

धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।
श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥ ०४० ॥

भीष्म उवाच ॥

एवद्वै सर्वमाख्यातं मुनिना सुमहात्मना ।
विदेहराजाय पुरा श्रेयसोऽर्थे नराधिप ॥ ०४१ ॥

# अध्याय २८७

भीष्म उवाच ॥

पुनरेव तु पप्रच्छ जनको मिथिलाधिपः ।
पराशरं महात्मानं धर्मे परमनिश्चयम् ॥ ००१ ॥

किं श्रेयः का गतिर्ब्रह्मन्किं कृतं न विनश्यति ।
क्व गतो न निवर्तेत तन्मे ब्रूहि महामुने ॥ ००२ ॥

पराशर उवाच ॥

असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा ।
चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ॥ ००३ ॥

छित्त्वाधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
दत्त्वाभयकृतं दानं तदा सिद्धिमवाप्नुयात् ॥ ००४ ॥

यो ददाति सहस्राणि गवामश्वशतानि च ।
अभयं सर्वभूतेभ्यस्तद्दानमतिवर्तते ॥ ००५ ॥

वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ॥ ००६ ॥

नाधर्मः श्लिष्यते प्राज्ञमापः पुष्करपर्णवत् ।
अप्राज्ञमधिकं पापं श्लिष्यते जतु काष्ठवत् ॥ ००७ ॥

नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति ।
कर्ता खलु यथाकालं तत्सर्वमभिपद्यते ॥ ००८ ॥

न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ॥ ००८ ॥

बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते ।
शुभाशुभेषु सक्तात्मा प्राप्नोति सुमहद्भयम् ॥ ००९ ॥

वीतरागो जितक्रोधः सम्यग्भवति यः सदा ।
विषये वर्तमानोऽपि न स पापेन युज्यते ॥ ०१० ॥

मर्यादायां धर्मसेतुर्निबद्धो नैव सीदति ।
पुष्टस्रोत इवायत्तः स्फीतो भवति सञ्चयः ॥ ०११ ॥

यथा भानुगतं तेजो मणिः शुद्धः समाधिना ।
आदत्ते राजशार्दूल तथा योगः प्रवर्तते ॥ ०१२ ॥

यथा तिलानामिह पुष्पसंश्रया ;त्पृथक्पृथग्याति गुणोऽतिसौम्यताम् ।
तथा नराणां भुवि भावितात्मनां ; यथाश्रयं सत्त्वगुणः प्रवर्तते ॥ ०१३ ॥

जहाति दारानिहते न संपदः ; सदश्वयानं विविधाश्च याः क्रियाः ।
त्रिविष्टपे जातमतिर्यदा नर ;स्तदास्य बुद्धिर्विषयेषु भिद्यते ॥ ०१४ ॥

प्रसक्तबुद्धिर्विषयेषु यो नरो ; यो बुध्यते ह्यात्महितं कदा च न ।
स सर्वभावानुगतेन चेतसा ; नृपामिषेणेव झषो विकृष्यते ॥ ०१५ ॥

संघातवान्मर्त्यलोकः परस्परमपाश्रितः ।
कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ॥ ०१६ ॥

न धर्मकालः पुरुषस्य निश्चितो ; न चापि मृत्युः पुरुषं प्रतीक्षते ।
क्रिया हि धर्मस्य सदैव शोभना ; यदा नरो मृत्युमुखेऽभिवर्तते ॥ ०१७ ॥

यथान्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति ।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥ ०१८ ॥

मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम् ।
अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत्  ॥ ०१९  ॥

यथा मृणालोऽनुगतमाशु मुञ्चति कर्दमम् ।
तथात्मा पुरुषस्येह मनसा परिमुच्यते  ॥ ०२०  ॥

मनः प्रणयतेऽऽत्मानं स एनमभियुञ्जति  ॥ ०२०  ॥

परार्थे वर्तमानस्तु स्वकार्यं योऽभिमन्यते ।
इन्द्रियार्थेषु सक्तः सन्स्वकार्यात्परिहीयते  ॥ ०२१  ॥

अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम् ।
प्राप्नोति स्वकृतैरात्मा प्राज्ञस्येहेतरस्य च  ॥ ०२२  ॥

मृन्मये भाजने पक्के यथा वै न्यस्यते द्रवः ।
तथा शरीरं तपसा तप्तं विषयमश्नुते  ॥ ०२३  ॥

विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।
यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति  ॥ ०२४  ॥

नीहारेण हि संवीतः शिश्नोदरपरायणः ।
जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते  ॥ ०२५  ॥

वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।
तथा मर्त्यार्णवे जन्तोः कर्मविज्ञानतो गतिः  ॥ ०२६  ॥

अहोरात्रमये लोके जरारूपेण सञ्चरन् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा  ॥ ०२७  ॥

स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते ।
नाकृतं लभते कश्चित्किञ्चिदत्र प्रियाप्रियम्  ॥ ०२८  ॥

शयानं यान्तमासीनं प्रवृत्तं विषयेषु च ।
शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा ॥ ०२९ ॥

न ह्यन्यत्तीरमासाद्य पुनस्तर्तुं व्यवस्यति ।
दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ॥ ०३० ॥

यथा भारावसक्ता हि नौर्महाम्भसि तन्तुना ।
तथा मनोऽभियोगाद्वै शरीरं प्रतिकर्षति ॥ ०३१ ॥

यथा समुद्रमभितः संस्यूताः सरितोऽपराः ।
तथाद्या प्रकृतिर्योगादभिसंस्यूयते सदा ॥ ०३२ ॥

स्नेहपाशैर्बहुविधैरासक्तमनसो नराः ।
प्रकृतिस्था विषीदन्ति जले सैकतवेश्मवत् ॥ ०३३ ॥

शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः ।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ ०३४ ॥

विस्तराः क्लेशसंयुक्ताः सङ्क्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ ०३५ ॥

सङ्कल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः ।
भार्या दासाश्च पुत्राश्च स्वमर्थमनुयुञ्जते ॥ ०३६ ॥

न माता न पिता किञ्चित्कस्यचित्प्रतिपद्यते ।
दानपथ्योदनो जन्तुः स्वकर्मफलमश्नुते ॥ ०३७ ॥

माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा ।
अष्टापदपदस्थाने त्वक्षमुद्रेव न्यस्यते ॥ ०३८ ॥

सर्वाणि कर्माणि पुरा कृतानि ; शुभाशुभान्यात्मनो यान्ति जन्तोः ।
उपस्थितं कर्मफलं विदित्वा ; बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ ०३९ ॥

व्यवसायं समाश्रित्य सहायान्योऽधिगच्छति ।
न तस्य कश्चिदारम्भः कदाचिदवसीदति ॥ ०४० ॥

अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।
न श्रीः संत्यजते नित्यमादित्यमिव रश्मयः ॥ ०४१ ॥

आस्तिक्यव्यवसायाभ्यामुपायाद्विस्मयाद्धिया ।
यमारभत्यनिन्द्यात्मा न सोऽर्थः परिसीदति ॥ ०४२ ॥

सर्वः स्वानि शुभाशुभानि नियतं कर्माणि जन्तुः स्वयं ;
गर्भात्संप्रतिपद्यते तदुभयं यत्तेन पूर्वं कृतम् ।
मृत्युश्चापरिहारवान्समगतिः कालेन विच्छेदिता ;
दारोश्चूर्णमिवाश्मसारविहितं कर्मान्तिकं प्रापयेत् ॥ ०४३ ॥

स्वरूपतामात्मकृतं च विस्तरं ; कुलान्वयं द्रव्यसमृद्धिसञ्चयम् ।
नरो हि सर्वो लभते यथाकृतं ; शुभाशुभेनात्मकृतेन कर्मणा ॥ ०४४ ॥

भीष्म उवाच ॥

इत्युक्तो जनको राजन्यथातथ्यं मनीषिणा ।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ ०४५ ॥

# हंससाध्यसंवादः

## अध्याय २८८

युधिष्ठिर उवाच ॥

सत्यं क्षमां दमं प्रज्ञां प्रशंसन्ति पितामह ।
विद्वांसो मनुजा लोके कथमेतन्मतं तव ॥ ००१ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
साध्यानामिह संवादं हंसस्य च युधिष्ठिर ॥ ००२ ॥

हंसो भूत्वाथ सौवर्णस्त्वजो नित्यः प्रजापतिः ।
स वै पर्येति लोकांस्त्रीनथ साध्यानुपागमत् ॥ ००३ ॥

साध्या ऊचुः ॥

शकुने वयं स्म देवा वै साध्यास्त्वामनुयुज्महे ।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ ००४ ॥

श्रुतोऽसि नः पण्डितो धीरवादी ; साधुशब्दः पतते ते पतत्रिन् ।
किं मन्यसे श्रेष्ठतमं द्विज त्वं ; कस्मिन्मनस्ते रमते महात्मन् ॥ ००५ ॥

तन्नः कार्यं पक्षिवर प्रशाधि ; यत्कार्याणां मन्यसे श्रेष्ठमेकम् ।
यत्कृत्वा वै पुरुषः सर्वबन्धै ;र्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ ००६ ॥

हंस उवाच ॥

इदं कार्यममृताशाः श्रृणोमि ; तपो दमः सत्यमात्माभिगुप्तिः ।

ग्रन्थीन्विमुच्य हृदयस्य सर्वा ;न्प्रियाप्रिये स्वं वशमानयीत ॥ ००७ ॥

नारुंतुदः स्यान्न नृशंसवादी ; न हीनतः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत ; न तां वदेद्रुशतीं पापलोक्याम् ॥ ००८ ॥

वाक्सायका वदनान्निष्पतन्ति ; यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति ; तान्पण्डितो नावसृजेत्परेषु ॥ ००९ ॥

परश्चेदेनमतिवादबाणै ;र्भृशं विध्येच्छम एवेह कार्यः ।
संरोष्यमाणः प्रतिमृष्यते यः ; स आदत्ते सुकृतं वै परस्य ॥ ०१० ॥

क्षेपाभिमानादभिषङ्गव्यलीकं ; निगृह्णाति ज्वलितं यश्च मन्युम् ।
अदुष्टचेता मुदितोऽनसूयुः ; स आदत्ते सुकृतं वै परेषाम् ॥ ०११ ॥

आक्रुश्यमानो न वदामि किं चि ;त्क्षमाम्यहं ताड्यमानश्च नित्यम् ।
श्रेष्ठं ह्येतत्क्षममप्याहुरार्याः ; सत्यं तथैवार्जवमानृशंस्यम् ॥ ०१२ ॥

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ ०१३ ॥

वाचो वेगं मनसः क्रोधवेगं ; विवित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्यो विषहत्युदीर्णा ;स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ ०१४ ॥

अक्रोधनः क्रुध्यतां वै विशिष्ट ;स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषान्मानुषो वै विशिष्ट ;स्तथाज्ञानाज्ज्ञानवान्वै प्रधानः ॥ ०१५ ॥

आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ०१६ ॥

यो नात्युक्तः प्राह रूक्षं प्रियं वा ; यो वा हतो न प्रतिहन्ति धैर्यात् ।
पापं च यो नेच्छति तस्य हन्तु ;स्तस्मै देवाः स्पृहयन्ते सदैव ॥ ०१७ ॥

पापीयसः क्षमेतैव श्रेयसः सदृशस्य च ।
विमानितो हतोऽऽक्रुष्ट एवं सिद्धिं गमिष्यति ॥ ०१८ ॥

सदाहमार्यान्निभृतोऽप्युपासे ; न मे विवित्सा न च मेऽस्ति रोषः ।
न चाप्यहं लिप्समानः परैमि ; न चैव किञ्चिद्विषमेण यामि ॥ ०१९ ॥

नाहं शप्तः प्रतिशपामि किं चि ;द्दमं द्वारं ह्यमृतस्येह वेद्मि ।
गुह्यं ब्रह्म तदिदं वो ब्रवीमि ; न मानुषाच्छ्रेष्ठतरं हि किञ्चित् ॥ ०२० ॥

विमुच्यमानः पापेभ्यो धनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण सिध्यति ॥ ०२१ ॥

यः सर्वेषां भवति ह्यर्चनीय ; उत्सेचने स्तम्भ इवाभिजातः ।
यस्मै वाचं सुप्रशस्तां वदन्ति ; स वै देवान्गच्छति संयतात्मा ॥ ०२२ ॥

न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ ०२३ ॥

यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ ०२४ ॥

आक्रोशनावमानाभ्यामबुधाद्वर्धते बुधः ।
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् ॥ ०२५ ॥

अमृतस्येव संतृप्येदवमानस्य वै द्विजः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ ०२६ ॥

यत्क्रोधनो यजते यद्ददाति ; यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं ; मोघः श्रमो भवति क्रोधनस्य ॥ ०२७ ॥

चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित्  ॥ ०२८  ॥

सत्यं दमं ह्यार्जवमानृशंस्यं ; धृतिं तितिक्षामभिसेवमानः ।
स्वाध्यायनित्योऽस्पृहयन्परेषा ;मेकान्तशील्यूर्ध्वगतिर्भवेत्सः  ॥ ०२९  ॥

सर्वानेताननुचरन्वत्सवच्चतुरः स्तनान् ।
न पावनतमं किञ्चित्सत्यादध्यगमं क्वचित्  ॥ ०३०  ॥

आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसञ्चरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव  ॥ ०३१  ॥

यादृशैः संनिवसति यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः  ॥ ०३२  ॥

यदि सन्तं सेवते यद्यसन्तं ; तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति ; तथा स तेषां वशमभ्युपैति  ॥ ०३३  ॥

सदा देवाः साधुभिः संवदन्ते ; न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुः समः स्यादसमो हि वायु ;रुच्चावचं विषयं यः स वेद  ॥ ०३४  ॥

अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै  ॥ ०३५  ॥

शिश्नोदरे येऽभिरताः सदैव ; स्तेना नरा वाक्परुषाश्च नित्यम् ।
अपेतदोषानिति तान्विदित्वा ; दूराद्देवाः संपरिवर्जयन्ति  ॥ ०३६  ॥

न वै देवा हीनसत्त्वेन तोष्याः ; सर्वाशिना दुष्कृतकर्मणा वा ।
सत्यव्रता ये तु नराः कृतज्ञा ; धर्मे रतास्तैः सह संभजन्ते  ॥ ०३७  ॥

अव्याहृतं व्याहृताच्छ्रेय आहुः ; सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।

धर्मं वदेद्व्याहृतं तत्तृतीयं ; प्रियं वदेद्व्याहृतं तच्चतुर्थम्  ॥ ०३८  ॥

साध्या ऊचुः  ॥

केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति  ॥ ०३९  ॥

हंस उवाच  ॥

अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति  ॥ ०४०  ॥

साध्या ऊचुः  ॥

कः स्विदेको रमते ब्राह्मणानां ; कः स्विदेको बहुभिर्जोषमास्ते ।
कः स्विदेको बलवान्दुर्बलोऽपि ; कः स्विदेषां कलहं नान्ववैति  ॥ ०४१  ॥

हंस उवाच  ॥

प्राज्ञ एको रमते ब्राह्मणानां ; प्राज्ञ एको बहुभिर्जोषमास्ते ।
प्राज्ञ एको बलवान्दुर्बलोऽपि ; प्राज्ञ एषां कलहं नान्ववैति  ॥ ०४२  ॥

साध्या ऊचुः  ॥

किं ब्राह्मणानां देवत्वं किं च साधुत्वमुच्यते ।
असाधुत्वं च किं तेषां किमेषां मानुषं मतम्  ॥ ०४३  ॥

हंस उवाच  ॥

स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुषमुच्यते  ॥ ०४४  ॥

भीष्म उवाच ॥

संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ०४५ ॥

---

# योगकथनम्

## अध्याय २८९

युधिष्ठिर उवाच ॥

सांख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव सर्वज्ञ सर्वं हि विदितं कुरुसत्तम ॥ ००१ ॥

भीष्म उवाच ॥

सांख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणैः श्रैष्ठ्यं स्वपक्षोद्भावनाय वै ॥ ००२ ॥

अनीश्वरः कथं मुच्येदित्येवं शत्रुकर्शन ।
वदन्ति कारणैः श्रैष्ठ्यं योगाः सम्यङ्मनीषिणः ॥ ००३ ॥

वदन्ति कारणं चेदं सांख्याः सम्यग्द्विजातयः ।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ॥ ००४ ॥

ऊर्ध्वं स देहात्सुव्यक्तं विमुच्येदिति नान्यथा ।

एतदाहुर्महाप्राज्ञाः सांख्यं वै मोक्षदर्शनम् ॥ ००५ ॥

स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ॥ ००६ ॥

प्रत्यक्षहेतवो योगाः सांख्याः शास्त्रविनिश्चयाः ।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥ ००७ ॥

उभे चैते मते ज्ञाने नृपते शिष्टसंमते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ००८ ॥

तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ॥ ००९ ॥

युधिष्ठिर उवाच ॥

यदि तुल्यं व्रतं शौचं दया चात्र पितामह ।
तुल्यं न दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥ ०१० ॥

भीष्म उवाच ॥

रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वादितो दोषान्पञ्चैतान्प्राप्नुवन्ति तत् ॥ ०११ ॥

यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥ ०१२ ॥

तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥ ०१३ ॥

लोभजानि तथा राजन्बन्धनानि बलान्विताः ।

छित्त्वा योगाः परं मार्गं गच्छन्ति विमलाः शिवम् ॥ ०१४ ॥

अबलाश्च मृगा राजन्वागुरासु तथापरे ।
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥ ०१५ ॥

बलहीनाश्च कौन्तेय यथा जालगता झषाः ।
अन्तं गच्छन्ति राजेन्द्र तथा योगाः सुदुर्बलाः ॥ ०१६ ॥

यथा च शकुनाः सूक्ष्माः प्राप्य जालमरिंदम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः ॥ ०१७ ॥

कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परंतप ।
अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः ॥ ०१८ ॥

अल्पकश्च यथा राजन्वह्निः शाम्यति दुर्बलः ।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगोऽबलः प्रभो ॥ ०१९ ॥

स एव च यदा राजन्वह्निर्जातबलः पुनः ।
समीरणयुतः कृत्स्नां दहेत्क्षिप्रं महीमपि ॥ ०२० ॥

तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥ ०२१ ॥

दुर्बलश्च यथा राजन्स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः ॥ ०२२ ॥

तदेव च यथा स्रोतो विष्टम्भयति वारणः ।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान्बहून् ॥ ०२३ ॥

विशन्ति चावशाः पार्थ योगा योगबलान्विताः ।
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः ॥ ०२४ ॥

न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥ ०२५ ॥

आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ ०२६ ॥

प्राप्नुयाद्विषयांश्चैव पुनश्चोग्रं तपश्चरेत् ।
सङ्क्षिपेच्च पुनः पार्थ सूर्यस्तेजोगुणानिव ॥ ०२७ ॥

बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षप्रभविष्णुत्वमुपपन्नमसंशयम् ॥ ०२८ ॥

बलानि योगे प्रोक्तानि मयैतानि विशां पते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ ०२९ ॥

आत्मनश्च समाधाने धारणां प्रति चाभिभो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ०३० ॥

अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥ ०३१ ॥

स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम् ।
पुरुषो यत्त आरोहेत्सोपानं युक्तमानसः ॥ ०३२ ॥

युक्त्वा तथायमात्मानं योगः पार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ०३३ ॥

यथा च नावं कौन्तेय कर्णधारः समाहितः ।
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ॥ ०३४ ॥

तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ०३५ ॥

सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः ।
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ ०३६ ॥

तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ॥ ०३७ ॥

आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।
पापं हन्तेव मीनानां पदमाप्नोति सोऽजरम् ॥ ०३८ ॥

नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने स्पर्शने चापि घ्राणे चामितविक्रम ॥ ०३९ ॥

स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशां पते ॥ ०४० ॥

स शीघ्रममलप्रज्ञः कर्म दग्ध्वा शुभाशुभम् ।
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ०४१ ॥

युधिष्ठिर उवाच ॥

आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ ०४२ ॥

भीष्म उवाच ॥

कणानां भक्षणे युक्तः पिण्याकस्य च भक्षणे ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ ०४३ ॥

भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम ।
एकारामो विशुद्धात्मा योगी बलमवाप्नुयात्  ॥ ०४४  ॥

पक्षान्मासानृतूंश्चित्रान्सञ्चरंश्च गुहास्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात्  ॥ ०४५  ॥

अखण्डमपि वा मासं सततं मनुजेश्वर ।
उपोष्य सम्यक्शुद्धात्मा योगी बलमवाप्नुयात्  ॥ ०४६  ॥

कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं निद्रां तथा श्वासं पौरुषं विषयांस्तथा  ॥ ०४७  ॥

अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।
स्पर्शान्सर्वांस्तथा तन्द्रीं दुर्जयां नृपसत्तम  ॥ ०४८  ॥

दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्राज्ञा ध्यानाध्ययनसंपदा  ॥ ०४९  ॥

दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ  ॥ ०५०  ॥

यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम्  ॥ ०५१  ॥

अभक्तमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा  ॥ ०५२  ॥

योगमार्गं तथासाद्य यः कश्चिद्भजते द्विजः ।
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः  ॥ ०५३  ॥

सुस्थेयं क्षुरधारासु निशितासु महीपते ।

धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ॥ ०५४ ॥

विपन्ना धारणास्तात नयन्ति नशुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥ ०५५ ॥

यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ॥ ०५६ ॥

नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम् ।
परं योगं तु यत्कृत्स्नं निश्चितं तद्द्विजातिषु ॥ ०५७ ॥

परं हि तद्ब्रह्म महन्महात्म ;न्ब्रह्माणमीशं वरदं च विष्णुम् ।
भवं च धर्मं च षडाननं च ; षड्ब्रह्मपुत्रांश्च महानुभावान् ॥ ०५८ ॥

तमश्च कष्टं सुमहद्रजश्च ; सत्त्वं च शुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं ; तेजश्च कृत्स्नं सुमहच्च धैर्यम् ॥ ०५९ ॥

ताराधिपं वै विमलं सतारं ; विश्वांश्च देवानुरगान्पितॄंश्च ।
शैलांश्च कृत्स्नानुदधींश्च घोरा ;न्नदीश्च सर्वाः
सवनान्घनांश्च ॥ ०६० ॥

नागान्नगान्यक्षगणान्दिशश्च ; गन्धर्वसंघान्पुरुषान्स्त्रियश्च ।
परस्परं प्राप्य महान्महात्मा ; विशेत योगी नचिराद्विमुक्तः ॥ ०६१ ॥

कथा च येयं नृपते प्रसक्ता ; देवे महावीर्यमतौ शुभेयम् ।
योगान्स सर्वानभिभूय मर्त्या ;न्नारायणात्मा कुरुते महात्मा ॥ ०६२ ॥

# सांख्यवर्णनम्

## अध्याय २९०

युधिष्ठिर उवाच ॥

सम्यक्त्वयायं नृपते वर्णितः शिष्टसंमतः ।
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ ००१ ॥

सांख्ये त्विदानीं कात्स्न्र्येन विधिं प्रब्रूहि पृच्छते ।
त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते ॥ ००२ ॥

भीष्म उवाच ॥

श्रृणु मे त्वमिदं शुद्धं सांख्यानां विदितात्मनाम् ।
विहितं यतिभिर्बुद्धैः कपिलादिभिरीश्वरैः ॥ ००३ ॥

यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥ ००४ ॥

ज्ञानेन परिसंख्याय सदोषान्विषयान्नृप ।
मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥ ००५ ॥

राक्षसान्विषयाञ्ज्ञात्वा यक्षाणां विषयांस्तथा ।
विषयानौरगाञ्ज्ञात्वा गान्धर्वविषयांस्तथा ॥ ००६ ॥

पितृणां विषयाञ्ज्ञात्वा तिर्यक्षु चरतां नृप ।
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा ॥ ००७ ॥

राजर्षिविषयाञ्ज्ञात्वा ब्रह्मर्षिविषयांस्तथा ।

आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च ॥ ००८ ॥

देवर्षिविषयाञ्ज्ञात्वा योगानामपि चेश्वरान् ।
विषयांश्च प्रजेशानां ब्रह्मणो विषयांस्तथा ॥ ००९ ॥

आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः ।
सुखस्य च परं तत्त्वं विज्ञाय वदतां वर ॥ ०१० ॥

प्राप्ते काले च यद्दुःखं पततां विषयैषिणाम् ।
तिर्यक्क पततां दुःखं पततां नरके च यत् ॥ ०११ ॥

स्वर्गस्य च गुणान्कृत्स्नान्दोषान्सर्वांश्च भारत ।
वेदवादे च ये दोषा गुणा ये चापि वैदिकाः ॥ ०१२ ॥

ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप ।
सांख्यज्ञाने च ये दोषास्तथैव च गुणा नृप ॥ ०१३ ॥

सत्त्वं दशगुणं ज्ञात्वा रजो नवगुणं तथा ।
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा ॥ ०१४ ॥

षड्गुणं च नभो ज्ञात्वा मनः पञ्चगुणं तथा ।
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं महत् ॥ ०१५ ॥

द्विगुणं च रजो ज्ञात्वा सत्त्वमेकगुणं पुनः ।
मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणं तथा ॥ ०१६ ॥

ज्ञानविज्ञानसंपन्नाः कारणैर्भाविताः शुभैः ।
प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इह नभः परम् ॥ ०१७ ॥

रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च ।
शब्दे सक्तं तथा श्रोत्रं जिह्वां रसगुणेषु च ॥ ०१८ ॥

तनुं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम् ।
मोहं तमसि संसक्तं लोभमर्थेषु संश्रितम् ॥ ०१९ ॥

विष्णुं क्रान्ते बले शक्रं कोष्ठे सक्तं तथानलम् ।
अप्सु देवीं तथा सक्तामपस्तेजसि चाश्रिताः ॥ ०२० ॥

तेजो वायौ तु संसक्तं वायुं नभसि चाश्रितम् ।
नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् ॥ ०२१ ॥

बुद्धिं तमसि संसक्तां तमो रजसि चाश्रितम् ।
रजः सत्त्वे तथा सक्तं सत्त्वं सक्तं तथात्मनि ॥ ०२२ ॥

सक्तमात्मानमीशे च देवे नारायणे तथा ।
देवं मोक्षे च संसक्तं मोक्षं सक्तं तु न क्वचित् ॥ ०२३ ॥

ज्ञात्वा सत्त्वयुतं देहं वृतं षोडशभिर्गुणैः ।
स्वभावं चेतनां चैव ज्ञात्वा वै देहमाश्रिते ॥ ०२४ ॥

मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते ।
द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् ॥ ०२५ ॥

इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान् ।
प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः ॥ ०२६ ॥

अवाक्चैवानिलं ज्ञात्वा प्रवहं चानिलं पुनः ।
सप्त वातांस्तथा शेषान्सप्तधा विधिवत्पुनः ॥ ०२७ ॥

प्रजापतीनृषींश्चैव मार्गांश्च सुबहून्वरान् ।
सप्तर्षींश्च बहूञ्ज्ञात्वा राजर्षींश्च परंतप ॥ ०२८ ॥

सुरर्षीन्महतश्चान्यान्महर्षीन्सूर्यसंनिभान् ।
ऐश्वर्याच्च्यावितान्ज्ञात्वा कालेन महता नृप ॥ ०२९ ॥

महतां भूतसंघानां श्रुत्वा नाशं च पार्थिव ।
गतिं चाप्यशुभां ज्ञात्वा नृपते पापकर्मणाम् ॥ ०३० ॥

वैतरण्यां च यद्दुःखं पतितानां यमक्षये ।
योनीषु च विचित्रासु संसारानशुभांस्तथा ॥ ०३१ ॥

जठरे चाशुभे वासं शोणितोदकभाजने ।
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ॥ ०३२ ॥

शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे ।
सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ॥ ०३३ ॥

विज्ञायाहितमात्मानं योगांश्च विविधान्नृप ।
तामसानां च जन्तूनां रमणीयावृतात्मनाम् ॥ ०३४ ॥

सात्त्विकानां च जन्तूनां कुत्सितं भरतर्षभ ।
गर्हितं महतामर्थे सांख्यानां विदितात्मनाम् ॥ ०३५ ॥

उपप्लवांस्तथा घोराञ्शशिनस्तेजसस्तथा ।
ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ॥ ०३६ ॥

द्वंद्वानां विप्रयोगं च विज्ञाय कृपणं नृप ।
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् ॥ ०३७ ॥

बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम् ।
रागे मोहे च संप्राप्ते क्वचित्सत्त्वं समाश्रितम् ॥ ०३८ ॥

सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः ।

दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ॥ ०३९ ॥

बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ।
विषयाणां च दौरात्म्यं विज्ञाय नृपते पुनः ॥ ०४० ॥

गतासूनां च कौन्तेय देहान्दृष्ट्वा तथाशुभान् ।
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत ॥ ०४१ ॥

ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम् ।
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम् ॥ ०४२ ॥

गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ॥ ०४२ ॥

जननीषु च वर्तन्ते ये न सम्यग्युधिष्ठिर ।
सदेवकेषु लोकेषु ये न वर्तन्ति मानवाः ॥ ०४३ ॥

तेन ज्ञानेन विज्ञाय गतिं चाशुभकर्मणाम् ।
तिर्यग्योनिगतानां च विज्ञाय गतयः पृथक् ॥ ०४४ ॥

वेदवादांस्तथा चित्रानृतूनां पर्ययांस्तथा ।
क्षयं संवत्सराणां च मासानां प्रक्षयं तथा ॥ ०४५ ॥

पक्षक्षयं तथा दृष्ट्वा दिवसानां च सङ्क्षयम् ।
क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ॥ ०४६ ॥

वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः ।
क्षयं धनानां च तथा पुनर्वृद्धिं तथैव च ॥ ०४७ ॥

संयोगानां क्षयं दृष्ट्वा युगानां च विशेषतः ।
क्षयं च दृष्ट्वा शैलानां क्षयं च सरितां तथा ॥ ०४८ ॥

वर्णानां च क्षयं दृष्ट्वा क्षयान्तं च पुनः पुनः ।
जरामृत्युं तथा जन्म दृष्ट्वा दुःखानि चैव ह ॥ ०४९ ॥

देहदोषांस्तथा ज्ञात्वा तेषां दुःखं च तत्त्वतः ।
देहविक्लवतां चैव सम्यग्विज्ञाय भारत ॥ ०५० ॥

आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान् ।
स्वदेहादुत्थितान्गन्धांस्तथा विज्ञाय चाशुभान् ॥ ०५१ ॥

युधिष्ठिर उवाच ॥

कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम ।
एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ॥ ०५२ ॥

भीष्म उवाच ॥

पञ्च दोषान्प्रभो देहे प्रवदन्ति मनीषिणः ।
मार्गज्ञाः कापिलाः सांख्याः शृणु तानरिसूदन ॥ ०५३ ॥

कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते ।
एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम् ॥ ०५४ ॥

छिन्दन्ति क्षमया क्रोधं कामं सङ्कल्पवर्जनात् ।
सत्त्वसंशीलनान्निद्रामप्रमादाद्भयं तथा ॥ ०५५ ॥

छिन्दन्ति पञ्चमं श्वासं लघ्वाहारतया नृप ॥ ०५५ ॥

गुणान्गुणशतैर्ज्ञात्वा दोषान्दोषशतैरपि ।
हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञाय तत्त्वतः ॥ ०५६ ॥

अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतम् ।

चित्तभित्तिप्रतीकाशं नलसारमनर्थकम्  ॥ ०५७  ॥

तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसंनिभम् ।
नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्  ॥ ०५८  ॥

रजस्तमसि संमग्नं पङ्के द्विपमिवावशम्  ॥ ०५८  ॥

सांख्या राजन्महाप्राज्ञास्त्यक्त्वा देहं प्रजाकृतम् ।
ज्ञानज्ञेयेन सांख्येन व्यापिना महता नृप  ॥ ०५९  ॥

राजसानशुभान्गन्धांस्तामसांश्च तथाविधान् ।
पुण्यांश्च सात्त्विकान्गन्धान्स्पर्शजान्देहसंश्रितान्  ॥ ०६०  ॥

छित्त्वाशु ज्ञानशस्त्रेण तपोदण्डेन भारत  ॥ ०६०  ॥

ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदम् ।
व्याधिमृत्युमहाग्राहं महाभयमहोरगम्  ॥ ०६१  ॥

तमःकूर्मं रजोमीनं प्रज्ञया संतरन्त्युत ।
स्नेहपङ्कं जरादुर्गं स्पर्शद्वीपमरिंदम  ॥ ०६२  ॥

कर्मागाधं सत्यतीरं स्थितव्रतमिदं नृप ।
हिंसाशीघ्रमहावेगं नानारसमहाकरम्  ॥ ०६३  ॥

नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम् ।
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहागजम्  ॥ ०६४  ॥

अस्थिसंघातसंघाटं श्लेष्मफेनमरिंदम ।
दानमुक्ताकरं भीमं शोणितह्रदविद्रुमम्  ॥ ०६५  ॥

हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम् ।

रोदनाश्रुमलक्षारं सङ्गत्यागपरायणम् ॥ ०६६ ॥

पुनराजन्मलोकौघं पुत्रबान्धवपत्तनम् ।
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ॥ ०६७ ॥

वेदान्तगमनद्वीपं सर्वभूतदयोदधिम् ।
मोक्षदुष्प्रापविषयं वडवामुखसागरम् ॥ ०६८ ॥

तरन्ति मुनयः सिद्धा ज्ञानयोगेन भारत ।
तीर्त्वा च दुस्तरं जन्म विशन्ति विमलं नभः ॥ ०६९ ॥

ततस्तान्सुकृतीन्सांख्यान्सूर्यो वहति रश्मिभिः ।
पद्मतन्तुवदाविश्य प्रवहन्विषयान्नृप ॥ ०७० ॥

तत्र तान्प्रवहो वायुः प्रतिगृह्णाति भारत ।
वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ॥ ०७१ ॥

सूक्ष्मः शीतः सुगन्धी च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान्गाच्छति यः शुभान् ॥ ०७२ ॥

स तान्वहति कौन्तेय नभसः परमां गतिम् ॥ ०७२ ॥

नभो वहति लोकेश रजसः परमां गतिम् ।
रजो वहति राजेन्द्र सत्त्वस्य परमां गतिम् ॥ ०७३ ॥

सत्त्वं वहति शुद्धात्मन्परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ०७४ ॥

परमात्मानमासाद्य तद्भूतायतनामलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभिभो ॥ ०७५ ॥

परमा सा गतिः पार्थ निर्द्वंद्वानां महात्मनाम्  ॥ ०७५  ॥

युधिष्ठिर उवाच  ॥

स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः ।
आजन्ममरणं वा ते स्मरन्त्युत न वानघ  ॥ ०७६  ॥

यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि ।
त्वदृते मानवं नान्यं प्रष्टुमर्हामि कौरव  ॥ ०७७  ॥

मोक्षदोषो महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे  ॥ ०७८  ॥

प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ।
मग्नस्य हि परे ज्ञाने किं नु दुःखतरं भवेत्  ॥ ०७९  ॥

भीष्म उवाच  ॥

यथान्यायं त्वया तात प्रश्नः पृष्टः सुसङ्कटः ।
बुद्धानामपि संमोहः प्रश्नेऽस्मिन्भरतर्षभ  ॥ ०८०  ॥

अत्रापि तत्त्वं परमं श‍ृणु सम्यङ्मयेरितम्  ॥ ०८०  ॥

बुद्धिश्च परमा यत्र कापिलानां महात्मनाम् ।
इन्द्रियाण्यपि बुध्यन्ते स्वदेहं देहिनो नृप  ॥ ०८१  ॥

कारणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः  ॥ ०८१  ॥

आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु ।
विनश्यन्ति न संदेहः फेना इव महार्णवे  ॥ ०८२  ॥

इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥ ०८३ ॥

स पश्यति यथान्यायं स्पर्शान्स्पृशति चाभिभो ।
बुध्यमानो यथापूर्वमखिलेनेह भारत ॥ ०८४ ॥

इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात्प्रलीयन्ते सर्पा हतविषा इव ॥ ०८५ ॥

इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयः सूक्ष्माश्चरत्यात्मा न संशयः ॥ ०८६ ॥

सत्त्वस्य च गुणान्कृत्स्नान्रजसश्च गुणान्पुनः ।
गुणांश्च तमसः सर्वान्गुणान्बुद्धेश्च भारत ॥ ०८७ ॥

गुणांश्च मनसस्तद्वन्नभसश्च गुणांस्तथा ।
गुणान्वायोश्च धर्मात्मंस्तेजसश्च गुणान्पुनः ॥ ०८८ ॥

अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्य क्षेत्रज्ञः स युधिष्ठिर ॥ ०८९ ॥

आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ॥ ०९० ॥

प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वंद्वं प्रकृतेः परम् ॥ ०९१ ॥

विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥ ०९२ ॥

शिष्टं त्वत्र मनस्तात इन्द्रियाणि च भारत ।

आगच्छन्ति यथाकालं गुरोः संदेशकारिणः ॥ ०९३ ॥

शक्यं चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना ।
एवं युक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ॥ ०९४ ॥

सांख्या राजन्महाप्राज्ञा गच्छन्ति परमां गतिम् ।
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ॥ ०९५ ॥

अत्र ते संशयो मा भूज्ज्ञानं सांख्यं परं मतम् ।
अक्षरं ध्रुवमव्यक्तं पूर्वं ब्रह्म सनातनम् ॥ ०९६ ॥

अनादिमध्यनिधनं निर्द्वंद्वं कर्तृ शाश्वतम् ।
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः ॥ ०९७ ॥

यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः ॥ ०९८ ॥

सर्वे विप्राश्च देवाश्च तथागमविदो जनाः ।
ब्रह्मण्यं परमं देवमनन्तं परतोऽच्युतम् ॥ ०९९ ॥

प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः ।
सम्यग्युक्तास्तथा योगाः सांख्याश्चामितदर्शनाः ॥ १०० ॥

अमूर्तेस्तस्य कौन्तेय सांख्यं मूर्तिरिति श्रुतिः ।
अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ॥ १०१ ॥

द्विविधानीह भूतानि पृथिव्यां पृथिवीपते ।
जङ्गमागमसञ्ज्ञानि जङ्गमं तु विशिष्यते ॥ १०२ ॥

ज्ञानं महद्यद्धि महत्सु राज ;न्वेदेषु सांख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणं ; सांख्यागतं तन्निखिलं नरेन्द्र ॥ १०३ ॥

यच्चेतिहासेषु महत्सु दृष्टं; यच्चार्थशास्त्रे नृप शिष्टजुष्टे ।
ज्ञानं च लोके यदिहास्ति किं चि ;त्सांख्यागतं तच्च महन्महात्मन् ॥ १०४ ॥

शमश्च दृष्टः परमं बलं च; ज्ञानं च सूक्ष्मं च यथावदुक्तम् ।
तपांसि सूक्ष्माणि सुखानि चैव; सांख्ये यथावद्विहितानि राजन् ॥ १०५ ॥

विपर्यये तस्य हि पार्थ देवा ;न्गच्छन्ति सांख्याः सततं सुखेन ।
तांश्चानुसञ्चार्य ततः कृतार्थाः; पतन्ति विप्रेषु यतेषु भूयः ॥ १०६ ॥

हित्वा च देहं प्रविशन्ति मोक्षं; दिवौकसो द्यामिव पार्थ सांख्याः ।
ततोऽधिकं तेऽभिरता महार्हे; सांख्ये द्विजाः पार्थिव शिष्टजुष्टे ॥ १०७ ॥

तेषां न तिर्यग्गमनं हि दृष्टं; नावाग्गतिः पापकृतां निवासः ।
न चाबुधानामपि ते द्विजातयो; ये ज्ञानमेतन्नृपतेऽनुरक्ताः ॥ १०८ ॥

साङ्ख्यं विशालं परमं पुराणं; महार्णवं विमलमुदारकान्तम् ।
कृत्स्नं च सांख्यं नृपते महात्मा; नारायणो धारयतेऽप्रमेयम् ॥ १०९ ॥

एतन्मयोक्तं नरदेव तत्त्वं; नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं; संहारकाले च तदत्ति भूयः ॥ ११० ॥

---

# वसिष्ठकरालजनकसंवादः

## अध्याय २९१

युधिष्ठिर उवाच ॥

किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः ।
किं च तत्क्षरमित्युक्तं यस्मादावर्तते पुनः ॥ ००१ ॥

अक्षरक्षरयोर्व्यक्तिमिच्छाम्यरिनिषूदन ।
उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन ॥ ००२ ॥

त्वं हि ज्ञाननिधिर्विप्रैरुच्यसे वेदपारगैः ।
ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः ॥ ००३ ॥

शेषमल्पं दिनानां ते दक्षिणायनभास्करे ।
आवृत्ते भगवत्यर्के गन्तासि परमां गतिम् ॥ ००४ ॥

त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयम् ।
कुरुवंशप्रदीपस्त्वं ज्ञानद्रव्येण दीप्यसे ॥ ००५ ॥

तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह ।
न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम् ॥ ००६ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं करालजनकस्य च ॥ ००७ ॥

वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परम् ॥ ००८ ॥

परमध्यात्मकुशलमध्यात्मगतिनिश्चयम् ।
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः ॥ ००९ ॥

स्वक्षरं प्रश्रितं वाक्यं मधुरं चाप्यनुल्बणम् ।

पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥ ०१० ॥

भगवञ्श्रोतुमिच्छामि परं ब्रह्म सनातनम् ।
यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः ॥ ०११ ॥

यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत् ।
यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयम् ॥ ०१२ ॥

वसिष्ठ उवाच ॥

श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत् ।
यन्न क्षरति पूर्वेण यावत्कालेन चाप्यथ ॥ ०१३ ॥

युगं द्वादशसाहस्त्रं कल्पं विद्धि चतुर्गुणम् ।
दशकल्पशतावृत्तं तदहर्ब्राह्ममुच्यते ॥ ०१४ ॥

रात्रिश्चैतावती राजन्यस्यान्ते प्रतिबुध्यते ॥ ०१४ ॥

सृजत्यनन्तकर्माणं महान्तं भूतमग्रजम् ।
मूर्तिमन्तममूर्तात्मा विश्वं शंभुः स्वयंभुवः ॥ ०१५ ॥

अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् ॥ ०१५ ॥

सर्वतःपाणिपादान्तं सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ०१६ ॥

हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः ।
महानिति च योगेषु विरिञ्चि इति चाप्युत ॥ ०१७ ॥

सांख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ।
विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः ॥ ०१८ ॥

वृतं नैकात्मकं येन कृत्स्नं त्रैलोक्यमात्मना ।
तथैव बहुरूपत्वाद्विश्वरूप इति स्मृतः ॥ ०१९ ॥

एष वै विक्रियापन्नः सृजत्यात्मानमात्मना ।
अहङ्कारं महातेजाः प्रजापतिमहङ्कृतम् ॥ ०२० ॥

अव्यक्ताद्व्यक्तमुत्पन्नं विद्यासर्गं वदन्ति तम् ।
महान्तं चाप्यहङ्कारमविद्यासर्गमेव च ॥ ०२१ ॥

अविधिश्च विधिश्चैव समुत्पन्नौ तथैकतः ।
विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः ॥ ०२२ ॥

भूतसर्गमहङ्कारात्तृतीयं विद्धि पार्थिव ।
अहङ्कारेषु भूतेषु चतुर्थं विद्धि वैकृतम् ॥ ०२३ ॥

वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा ।
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ॥ ०२४ ॥

एवं युगपदुत्पन्नं दशवर्गमसंशयम् ।
पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥ ०२५ ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ ०२६ ॥

बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च ।
संभूतानीह युगपन्मनसा सह पार्थिव ॥ ०२७ ॥

एषा तत्त्वचतुर्विंशा सर्वाकृतिषु वर्तते ।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ ०२८ ॥

एतद्देहं समाख्यातं त्रैलोक्ये सर्वदेहिषु ।
वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ ०२९ ॥

सयक्षभूतगन्धर्वे सकिंनरमहोरगे ।
सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ०३० ॥

सदंशकीटमशके सपूतिकृमिमूषके ।
शुनि श्वपाके वैणेये सचण्डाले सपुल्कसे ॥ ०३१ ॥

हस्त्यश्वखरशार्दूले सवृक्षे गवि चैव ह ।
यच्च मूर्तिमयं किञ्चित्सर्वत्रैतन्निदर्शनम् ॥ ०३२ ॥

जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः ।
स्थानं देहवतामस्ति इत्येवमनुशुश्रुम ॥ ०३३ ॥

कृत्स्नमेतावतस्तात क्षरते व्यक्तसञ्ज्ञकम् ।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ०३४ ॥

एतदक्षरमित्युक्तं क्षरतीदं यथा जगत् ।
जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तसञ्ज्ञकम् ॥ ०३५ ॥

महांश्चैवाग्रजो नित्यमेतत्क्षरनिदर्शनम् ।
कथितं ते महाराज यस्मान्नावर्तते पुनः ॥ ०३६ ॥

पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसञ्ज्ञकः ।
तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः ॥ ०३७ ॥

यदमूर्त्यसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति ।
चतुर्विंशतिमो व्यक्तो ह्यमूर्तः पञ्चविंशकः ॥ ०३८ ॥

स एव हृदि सर्वासु मूर्तिष्वातिष्ठतेऽऽत्मवान् ।

चेतयंश्चेतनो नित्यः सर्वमूर्तिरमूर्तिमान् ॥ ०३९ ॥

सर्गप्रलयधर्मिण्या असर्गप्रलयात्मकः ।
गोचरे वर्तते नित्यं निर्गुणो गुणसञ्ज्ञकः ॥ ०४० ॥

एवमेष महानात्मा सर्गप्रलयकोविदः ।
विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ ०४१ ॥

तमःसत्त्वरजोयुक्तस्तासु तास्विह योनिषु ।
लीयतेऽप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ०४२ ॥

सहवासो निवासात्मा नान्योऽहमिति मन्यते ।
योऽहं सोऽहमिति ह्युक्त्वा गुणाननु निवर्तते ॥ ०४३ ॥

तमसा तामसान्भावान्विविधान्प्रतिपद्यते ।
रजसा राजसांश्चैव सात्त्विकान्सत्त्वसंश्रयात् ॥ ०४४ ॥

शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु ।
सर्वाण्येतानि रूपाणि जानीहि प्राकृतानि वै ॥ ०४५ ॥

तामसा निरयं यान्ति राजसा मानुषांस्तथा ।
सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः ॥ ०४६ ॥

निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात् ।
पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ॥ ०४७ ॥

एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः ।
पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्तते ॥ ०४८ ॥

# अध्याय २९२

वसिष्ठ उवाच ॥

एवमप्रतिबुद्धत्वादबुद्धमनुवर्तते ।
देहाद्देहसहस्राणि तथा समभिपद्यते ॥ ००१ ॥

तिर्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि ।
उपपद्यति संयोगाद्गुणैः सह गुणक्षयात् ॥ ००२ ॥

मानुषत्वाद्दिवं याति दिवो मानुष्यमेव च ।
मानुष्यान्निरयस्थानमानन्त्यं प्रतिपद्यते ॥ ००३ ॥

कोशकारो यथात्मानं कीटः समनुरुन्धति ।
सूत्रतन्तुगुणैर्नित्यं तथायमगुणो गुणैः ॥ ००४ ॥

द्वंद्वमेति च निर्द्वंद्वस्तासु तास्विह योनिषु ।
शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ॥ ००५ ॥

जलोदरेऽर्शसां रोगे ज्वरगण्डविषूचिके ।
श्वित्रे कुष्ठेऽग्निदाहे च सिध्मापस्मारयोरपि ॥ ००६ ॥

यानि चान्यानि द्वंद्वानि प्राकृतानि शरीरिषु ।
उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते ॥ ००७ ॥

अभिमन्यत्यभीमानात्तथैव सुकृतान्यपि ॥ ००७ ॥

एकवासाश्च दुर्वासाः शायी नित्यमधस्तथा ।
मण्डूकशायी च तथा वीरासनगतस्तथा ॥ ००८ ॥

चीरधारणमाकाशे शयनं स्थानमेव च ।

इष्टकाप्रस्तरे चैव कण्टकप्रस्तरे तथा ॥ ००९ ॥

भस्मप्रस्तरशायी च भूमिशय्यानुलेपनः ।
वीरस्थानाम्बुपङ्के च शयनं फलकेषु च ॥ ०१० ॥

विविधासु च शय्यासु फलगृद्ध्यान्वितोऽफलः ।
मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ॥ ०११ ॥

शाणीवालपरीधानो व्याघ्रचर्मपरिच्छदः ।
सिंहचर्मपरीधानः पट्टवासास्तथैव च ॥ ०१२ ॥

कीटकावसनश्चैव चीरवासास्तथैव च ।
वस्त्राणि चान्यानि बह्वन्यभिमन्यत्यबुद्धिमान् ॥ ०१३ ॥

भोजनानि विचित्राणि रत्नानि विविधानि च ।
एकवस्त्रान्तराशित्वमेककालिकभोजनम् ॥ ०१४ ॥

चतुर्थाष्टमकालश्च षष्ठकालिक एव च ।
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः ॥ ०१५ ॥

सप्तरात्रदशाहारो द्वादशाहार एव च ।
मासोपवासी मूलाशी फलाहारस्तथैव च ॥ ०१६ ॥

वायुभक्षोऽम्बुपिण्याकगोमयादन एव च ।
गोमूत्रभोजनश्चैव शाकपुष्पाद एव च ॥ ०१७ ॥

शैवालभोजनश्चैव तथाचामेन वर्तयन् ।
वर्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः ॥ ०१८ ॥

विविधानि च कृच्छ्राणि सेवते सुखकाङ्क्षया ।
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च ॥ ०१९ ॥

चातुराश्रम्यपन्थानमाश्रयत्याश्रमानपि ।
उपासीनश्च पाषण्डान्गुहाः शैलांस्तथैव च ॥ ०२० ॥

विविक्ताश्च शिलाछायास्तथा प्रस्रवणानि च ।
विविधानि च जप्यानि विविधानि व्रतानि च ॥ ०२१ ॥

नियमान्सुविचित्रांश्च विविधानि तपांसि च ।
यज्ञांश्च विविधाकारान्विधींश्च विविधांस्तथा ॥ ०२२ ॥

वणिक्पथं द्विजक्षत्रं वैश्यशूद्रं तथैव च ।
दानं च विविधाकारं दीनान्धकृपणेष्वपि ॥ ०२३ ॥

अभिमन्यत्यसंबोधात्तथैव त्रिविधान्गुणान् ।
सत्त्वं रजस्तमश्चैव धर्मार्थौ काम एव च ॥ ०२४ ॥

प्रकृत्यात्मानमेवात्मा एवं प्रविभजत्युत ॥ ०२४ ॥

स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः ।
याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम् ॥ ०२५ ॥

यजनाध्ययने चैव यच्चान्यदपि किञ्चन ॥ ०२५ ॥

जन्ममृत्युविवादे च तथा विशसनेऽपि च ।
शुभाशुभमयं सर्वमेतदाहुः क्रियापथम् ॥ ०२६ ॥

प्रकृतिः कुरुते देवी महाप्रलयमेव च ।
दिवसान्ते गुणानेतानभ्येत्यैकोऽवतिष्ठति ॥ ०२७ ॥

रश्मिजालमिवादित्यस्तत्कालेन नियच्छति ।
एवमेषोऽसकृत्सर्वं क्रीडार्थमभिमन्यते ॥ ०२८ ॥

आत्मरूपगुणानेतान्विविधान्हृदयप्रियान् ।
एवमेव विकुर्वाणः सर्गप्रलयकर्मणी ॥ ०२९ ॥

क्रियाक्रिया पथे रक्तस्त्रिगुणस्त्रिगुणातिगः ।
क्रियाक्रियापथोपेतस्तथा तदिति मन्यते ॥ ०३० ॥

एवं द्वंद्वान्यथैतानि वर्तन्ते मम नित्यशः ।
ममैवैतानि जायन्ते बाधन्ते तानि मामिति ॥ ०३१ ॥

निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप ।
मन्यतेऽयं ह्यबुद्धित्वात्तथैव सुकृतान्यपि ॥ ०३२ ॥

भोक्तव्यानि मयैतानि देवलोकगतेन वै ।
इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ॥ ०३३ ॥

सुखमेव च कर्तव्यं सकृत्कृत्वा सुखं मम ।
यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति ॥ ०३४ ॥

भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम् ।
महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ ०३५ ॥

निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः ।
मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः ॥ ०३६ ॥

मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ॥ ०३६ ॥

य एवं वेत्ति वै नित्यं निरात्मात्मगुणैर्वृतः ।
तेन देवमनुष्येषु निरये चोपपद्यते ॥ ०३७ ॥

ममत्वेनावृतो नित्यं तत्रैव परिवर्तते ।

सर्गकोटिसहस्राणि मरणान्तासु मूर्तिषु  ॥ ०३८  ॥

य एवं कुरुते कर्म शुभाशुभफलात्मकम् ।
स एव फलमश्नाति त्रिषु लोकेषु मूर्तिमान्  ॥ ०३९  ॥

प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा  ॥ ०४०  ॥

तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ।
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानि ह  ॥ ०४१  ॥

अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गमनुमानाद्धि पश्यति  ॥ ०४२  ॥

स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ।
व्रणद्वाराण्यधिष्ठाय कर्माण्यात्मनि मन्यते  ॥ ०४३  ॥

श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाणि च ।
वागादीनि प्रवर्तन्ते गुणेष्वेव गुणैः सह  ॥ ०४४  ॥

अहमेतानि वै कुर्वन्ममैतानीन्द्रियाणि च  ॥ ०४४  ॥

निरिन्द्रियोऽभिमन्येत व्रणवानस्मि निर्व्रणः ।
अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः  ॥ ०४५  ॥

असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः ।
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः  ॥ ०४६  ॥

अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः ।
अतपास्तप आत्मानमगतिर्गतिमात्मनः  ॥ ०४७  ॥

अभवो भवमात्मानमभयो भयमात्मनः ।
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते ॥ ०४८ ॥

---

# अध्याय २९३

वसिष्ठ उवाच ॥

एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ।
सर्गकोटिसहस्राणि पतनान्तानि गच्छति ॥ ००१ ॥

धाम्ना धामसहस्राणि मरणान्तानि गच्छति ।
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ॥ ००२ ॥

चन्द्रमा इव कोशानां पुनस्तत्र सहस्रशः ।
लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ॥ ००३ ॥

कलाः पञ्चदशा योनिस्तद्धाम इति पठ्यते ।
नित्यमेतद्विजानीहि सोमः षोडशमी कला ॥ ००४ ॥

कलायां जायतेऽजस्रं पुनः पुनरबुद्धिमान् ।
धाम तस्योपयुञ्जन्ति भूय एव तु जायते ॥ ००५ ॥

षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ।
न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ ००६ ॥

एवं तां क्षपयित्वा हि जायते नृपसत्तम ।
सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ॥ ००७ ॥

तदेवं षोडशकलं देहमव्यक्तसञ्ज्ञकम् ।
ममायमिति मन्वानस्तत्रैव परिवर्तते ॥ ००८ ॥

पञ्चविंशस्तथैवात्मा तस्यैवा प्रतिबोधनात् ।
विमलस्य विशुद्धस्य शुद्धानिलनिषेवणात् ॥ ००९ ॥

अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
अबुद्धसेवनाच्चापि बुद्धोऽप्यबुधतां व्रजेत् ॥ ०१० ॥

तथैवाप्रतिबुद्धोऽपि ज्ञेयो नृपतिसत्तम ।
प्रकृतेस्त्रिगुणायास्तु सेवनात्प्राकृतो भवेत् ॥ ०११ ॥

करालजनक उवाच ॥

अक्षरक्षरयोरेष द्वयोः संबन्ध इष्यते ।
स्त्रीपुंसोर्वापि भगवन्संबन्धस्तद्वदुच्यते ॥ ०१२ ॥

ऋते न पुरुषेणेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा ॥ ०१३ ॥

अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् ।
रूपं निर्वर्तयत्येतदेवं सर्वासु योनिषु ॥ ०१४ ॥

रत्यर्थमभिसंरोधादन्योन्यगुणसंश्रयात् ।
ऋतौ निर्वर्तते रूपं तद्वक्ष्यामि निदर्शनम् ॥ ०१५ ॥

ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा ।
अस्थि स्नायु च मज्जा च जानीमः पितृतो द्विज ॥ ०१६ ॥

त्वङ्मांसं शोणितं चैव मातृजान्यपि शुश्रुम ।
एवमेतद्द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते ॥ ०१७ ॥

प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणं च प्रमाणं तत्सनातनम् ॥ ०१८ ॥

एवमेवाभिसंबद्धौ नित्यं प्रकृतिपूरुषौ ।
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ॥ ०१९ ॥

अथ वानन्तरकृतं किञ्चिदेव निदर्शनम् ।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥ ०२० ॥

मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।
अदेहमजरं दिव्यमतीन्द्रियमनीश्वरम् ॥ ०२१ ॥

वसिष्ठ उवाच ॥

यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम् ।
एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ ०२२ ॥

धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः ।
न तु ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर ॥ ०२३ ॥

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ ०२४ ॥

भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ ०२५ ॥

ग्रन्थस्यार्थं च पृष्टः संस्तादृशो वक्तुमर्हति ।
यथा तत्त्वाभिगमनादर्थं तस्य स विन्दति ॥ ०२६ ॥

यस्तु संसत्सु कथयेद्ग्रन्थार्थं स्थूलबुद्धिमान् ।

स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ ०२७ ॥

निर्णयं चापि छिद्रात्मा न तं वक्ष्यति तत्त्वतः ।
सोपहासात्मतामेति यस्माच्चैवात्मवानपि ॥ ०२८ ॥

तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते ।
याथातथ्येन सांख्येषु योगेषु च महात्मसु ॥ ०२९ ॥

यदेव योगाः पश्यन्ति सांख्यैस्तदनुगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स बुद्धिमान् ॥ ०३० ॥

त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च ।
एतदैन्द्रियकं तात यद्भवानिदमाह वै ॥ ०३१ ॥

द्रव्याद्द्रव्यस्य निष्पत्तिरिन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ॥ ०३२ ॥

निरिन्द्रियस्याबीजस्य निर्द्रव्यस्यास्य देहिनः ।
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ॥ ०३३ ॥

गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ।
एवं गुणाः प्रकृतितो जायन्ते च न सन्ति च ॥ ०३४ ॥

त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थि स्नायु च ।
अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै ॥ ०३५ ॥

पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम् ।
नैव पुमान्पुमांश्चैव स लिङ्गीत्यभिधीयते ॥ ०३६ ॥

अलिङ्गा प्रकृतिर्लिङ्गैरुपलभ्यति सात्मजैः ।
यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ॥ ०३७ ॥

एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।
पञ्चविंशतिमस्तात लिङ्गेष्वनियतात्मकः ॥ ०३८ ॥

अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वाद्गुणेष्वगुण उच्यते ॥ ०३९ ॥

गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः ॥ ०४० ॥

यदा त्वेष गुणान्सर्वान्प्राकृतानभिमन्यते ।
तदा स गुणवानेव परमेणानुपश्यति ॥ ०४१ ॥

यत्तद्बुद्धेः परं प्राहुः सांख्या योगाश्च सर्वशः ।
बुध्यमानं महाप्राज्ञमबुद्धपरिवर्जनात् ॥ ०४२ ॥

अप्रबुद्धमथाव्यक्तं सगुणं प्राहुरीश्वरम् ।
निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ॥ ०४३ ॥

प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ।
सांख्ययोगे च कुशला बुध्यन्ते परमैषिणः ॥ ०४४ ॥

यदा प्रबुद्धास्त्वव्यक्तमवस्थाजन्मभीरवः ।
बुध्यमानं प्रबुध्यन्ति गमयन्ति समं तदा ॥ ०४५ ॥

एतन्निदर्शनं सम्यगसम्यगनुदर्शनम् ।
बुध्यमानाप्रबुद्धाभ्यां पृथक्पृथगरिंदम ॥ ०४६ ॥

परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम् ।
एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ॥ ०४७ ॥

पञ्चविंशतिनिष्ठोऽयं यदासम्यक्प्रवर्तते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम्  ॥ ०४८  ॥

तत्त्वनिस्तत्त्वयोरेतत्पृथगेव निदर्शनम् ।
पञ्चविंशतिसर्गं तु तत्त्वमाहुर्मनीषिणः  ॥ ०४९  ॥

निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम् ।
वर्गस्य वर्गमाचारं तत्त्वं तत्त्वात्सनातनम्  ॥ ०५०  ॥

---

# अध्याय २९४

करालजनक उवाच  ॥

नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम ।
पश्यामि चाभिसंदिग्धमेतयोर्वै निदर्शनम्  ॥ ००१  ॥

तथाप्रबुद्धबुद्धाभ्यां बुध्यमानस्य चानघ ।
स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः  ॥ ००२  ॥

अक्षरक्षरयोरुक्तं त्वया यदपि कारणम् ।
तदप्यस्थिरबुद्धित्वात्प्रनष्टमिव मेऽनघ  ॥ ००३  ॥

तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम् ।
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः  ॥ ००४  ॥

विद्याविद्ये च भगवन्नक्षरं क्षरमेव च ।
सांख्यं योगं च कार्त्स्न्येन पृथक्चैवापृथक्क ह  ॥ ००५  ॥

वसिष्ठ उवाच ॥

हन्त ते संप्रवक्ष्यामि यदेतदनुपृच्छसि ।
योगकृत्यं महाराज पृथगेव श‍ृणुष्व मे ॥ ००६ ॥

योगकृत्यं तु योगानां ध्यानमेव परं बलम् ।
तच्चापि द्विविधं ध्यानमाहुर्वेदविदो जनाः ॥ ००७ ॥

एकाग्रता च मनसः प्राणायामस्तथैव च ।
प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ॥ ००८ ॥

मूत्रोत्सर्गे पुरीषे च भोजने च नराधिप ।
त्रिकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ॥ ००९ ॥

इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा मुनिः ।
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः ॥ ०१० ॥

तं चोदनाभिर्मतिमानात्मानं चोदयेदथ ।
तिष्ठन्तमजरं तं तु यत्तदुक्तं मनीषिभिः ॥ ०११ ॥

तैश्चात्मा सततं ज्ञेय इत्येवमनुशुश्रुम ।
द्रव्यं ह्यहीनमनसो नान्यथेति विनिश्चयः ॥ ०१२ ॥

विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
पूर्वरात्रे परे चैव धारयेत मनोऽऽत्मनि ॥ ०१३ ॥

स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥ ०१४ ॥

स्थाणुवच्चाप्यकम्पः स्याद्गिरिवच्चापि निश्चलः ।
बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते ॥ ०१५ ॥

न शृणोति न चाघ्राति न रस्यति न पश्यति ।
न च स्पर्शं विजानाति न सङ्कल्पयते मनः ॥ ०१६ ॥

न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥ ०१७ ॥

निवाते च यथा दीप्यन्दीपस्तद्वत्स दृश्यते ।
निरिङ्गश्चाचलश्चोर्ध्वं न तिर्यग्गतिमाप्नुयात् ॥ ०१८ ॥

तदा तमनुपश्येत यस्मिन्दृष्टे तु कथ्यते ।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥ ०१९ ॥

विधूम इव सप्तार्चिरादित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा तथात्मनि ॥ ०२० ॥

यं पश्यन्ति महात्मानो धृतिमन्तो मनीषिणः ।
ब्राह्मणा ब्रह्मयोनिष्ठा ह्ययोनिममृतात्मकम् ॥ ०२१ ॥

तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ॥ ०२२ ॥

बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत् ।
महतस्तमसस्तात पारे तिष्ठन्नतामसः ॥ ०२३ ॥

स तमोनुद इत्युक्तस्तत्त्वज्ञैर्वेदपारगैः ।
विमलो वितमस्कश्च निर्लिङ्गोऽलिङ्गसञ्ज्ञितः ॥ ०२४ ॥

योगमेतद्धि योगानां मन्ये योगस्य लक्षणम् ।
एवं पश्यं प्रपश्यन्ति आत्मानमजरं परम् ॥ ०२५ ॥

योगदर्शनमेतावदुक्तं ते तत्त्वतो मया ।
सांख्यज्ञानं प्रवक्ष्यामि परिसंख्यानिदर्शनम्  ॥ ०२६  ॥

अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ।
तस्मान्महत्समुत्पन्नं द्वितीयं राजसत्तम  ॥ ०२७  ॥

अहङ्कारस्तु महतस्तृतीयमिति नः श्रुतम् ।
पञ्च भूतान्यहङ्कारादाहुः सांख्यानुदर्शिनः  ॥ ०२८  ॥

एताः प्रकृतयस्त्वष्टौ विकाराश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च  ॥ ०२९  ॥

एतावदेव तत्त्वानां सांख्यमाहुर्मनीषिणः ।
सांख्ये विधिविधानज्ञा नित्यं सांख्यपथे रताः  ॥ ०३०  ॥

यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते ।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना  ॥ ०३१  ॥

अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा  ॥ ०३२  ॥

सर्गप्रलय एतावान्प्रकृतेर्नृपसत्तम ।
एकत्वं प्रलये चास्य बहुत्वं च यदासृजत्  ॥ ०३३  ॥

एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः  ॥ ०३३  ॥

अधिष्ठातारमव्यक्तमस्याप्येतन्निदर्शनम् ।
एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववान्  ॥ ०३४  ॥

एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात्  ॥ ०३४  ॥

बहुधात्मा प्रकुर्वीत प्रकृतिं प्रसवात्मिकाम् ।
तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ॥ ०३५ ॥

अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः ।
अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम् ॥ ०३६ ॥

क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते ।
अव्यक्तिके पुरे शेते पुरुषश्चेति कथ्यते ॥ ०३७ ॥

अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते ।
क्षेत्रमव्यक्तमित्युक्तं ज्ञाता वै पञ्चविंशकः ॥ ०३८ ॥

अन्यदेव च ज्ञानं स्यादन्यज्ज्ञेयं तदुच्यते ।
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ॥ ०३९ ॥

अव्यक्तं क्षेत्रमित्युक्तं तथा सत्त्वं तथेश्वरम् ।
अनीश्वरमतत्त्वं च तत्त्वं तत्पञ्चविंशकम् ॥ ०४० ॥

सांख्यदर्शनमेतावत्परिसंख्यानदर्शनम् ।
सांख्यं प्रकुरुते चैव प्रकृतिं च प्रचक्षते ॥ ०४१ ॥

तत्त्वानि च चतुर्विंशत्परिसंख्याय तत्त्वतः ।
सांख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥ ०४२ ॥

पञ्चविंशोऽप्रबुद्धात्मा बुध्यमान इति स्मृतः ।
यदा तु बुध्यतेऽऽत्मानं तदा भवति केवलः ॥ ०४३ ॥

सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः ।
एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ॥ ०४४ ॥

सम्यङ्निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा ।

गुणतत्त्वान्यथैतानि निर्गुणोऽन्यस्तथा भवेत् ॥ ०४५ ॥

न त्वेवं वर्तमानानामावृत्तिर्विद्यते पुनः ।
विद्यतेऽक्षरभावत्वादपरस्परमव्ययम् ॥ ०४६ ॥

पश्येरन्नेकमतयो न सम्यक्तेषु दर्शनम् ।
तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिंदम ॥ ०४७ ॥

सर्वमेतद्विजानन्तो न सर्वस्य प्रबोधनात् ।
व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ॥ ०४८ ॥

सर्वमव्यक्तमित्युक्तमसर्वः पञ्चविंशकः ।
य एनमभिजानन्ति न भयं तेषु विद्यते ॥ ०४९ ॥

---

# अध्याय २९५

वसिष्ठ उवाच ॥

सांख्यदर्शनमेतावदुक्तं ते नृपसत्तम ।
विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्वशः ॥ ००१ ॥

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मि वै ।
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम् ॥ ००२ ॥

परस्परमविद्यां वै तन्निबोधानुपूर्वशः ।
यथोक्तमृषिभिस्तात सांख्यस्यास्य निदर्शनम् ॥ ००३ ॥

कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम् ।

बुद्धीन्द्रियाणां च तथा विशेषा इति नः श्रुतम्  ॥ ००४  ॥

विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः ।
मनसः पञ्चभूतानि विद्या इत्यभिचक्षते  ॥ ००५  ॥

अहङ्कारस्तु भूतानां पञ्चानां नात्र संशयः ।
अहङ्कारस्य च तथा बुद्धिर्विद्या नरेश्वर  ॥ ००६  ॥

बुद्धेः प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरम् ।
विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः  ॥ ००७  ॥

अव्यक्तस्य परं प्राहुर्विद्यां वै पञ्चविंशकम् ।
सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव  ॥ ००८  ॥

ज्ञानमव्यक्तमित्युक्तं ज्ञेयं वै पञ्चविंशकम् ।
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः  ॥ ००९  ॥

विद्याविद्यार्थतत्त्वेन मयोक्तं ते विशेषतः ।
अक्षरं च क्षरं चैव यदुक्तं तन्निबोध मे  ॥ ०१०  ॥

उभावेतौ क्षरावुक्तावुभावेतौ च नक्षरौ ।
कारणं तु प्रवक्ष्यामि यथा ख्यातौ तु तत्त्वतः  ॥ ०११  ॥

अनादिनिधनावेतावुभावेवेश्वरौ मतौ ।
तत्त्वसञ्ज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः  ॥ ०१२  ॥

सर्गप्रलयधर्मित्वादव्यक्तं प्राहुरक्षरम् ।
तदेतद्गुणसर्गाय विकुर्वाणं पुनः पुनः  ॥ ०१३  ॥

गुणानां महदादीनामुत्पद्यति परस्परम् ।
अधिष्ठानात्क्षेत्रमाहुरेतत्तत्पञ्चविंशकम्  ॥ ०१४  ॥

यदा तु गुणजालं तदव्यक्तात्मनि सङ्क्षिपेत् ।
तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते ॥ ०१५ ॥

गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ।
क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते ॥ ०१६ ॥

तदाक्षरत्वं प्रकृतिर्गच्छते गुणसञ्ज्ञिता ।
निर्गुणत्वं च वैदेह गुणेषु प्रतिवर्तनात् ॥ ०१७ ॥

एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षये ।
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ ०१८ ॥

क्षरो भवत्येष यदा तदा गुणवतीमथ ।
प्रकृतिं त्वभिजानाति निर्गुणत्वं तथात्मनः ॥ ०१९ ॥

तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।
अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् ॥ ०२० ॥

तदैषोऽन्यत्वतामेति न च मिश्रत्वमाव्रजेत् ।
प्रकृत्या चैव राजेन्द्र नमिश्रोऽन्यश्च दृश्यते ॥ ०२१ ॥

यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते ।
पश्यते चापरं पश्यं तदा पश्यन्न सञ्चरेत् ॥ ०२२ ॥

किं मया कृतमेतावद्योऽहं कालमिमं जनम् ।
मत्स्यो जालं ह्यविज्ञानादनुवर्तितवांस्तथा ॥ ०२३ ॥

अहमेव हि संमोहादन्यमन्यं जनाज्जनम् ।
मत्स्यो यथोदकज्ञानादनुवर्तितवानिह ॥ ०२४ ॥

मत्स्योऽन्यत्वं यथाज्ञानादुदकान्नाभिमन्यते ।
आत्मानं तद्वदज्ञानादन्यत्वं चैव वेद्म्यहम् ॥ ०२५ ॥

ममास्तु धिगबुद्धस्य योऽहं मग्नमिमं पुनः ।
अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् ॥ ०२६ ॥

अयमत्र भवेद्बन्धुरनेन सह मोक्षणम् ।
साम्यमेकत्वमायातो यादृशस्तादृशस्त्वहम् ॥ ०२७ ॥

तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ।
अयं हि विमलो व्यक्तमहमीदृशकस्तथा ॥ ०२८ ॥

योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान् ।
ससङ्गयाहं निःसङ्गः स्थितः कालमिमं त्वहम् ॥ ०२९ ॥

अनयाहं वशीभूतः कालमेतं न बुद्धवान् ।
उच्चमध्यमनीचानां तामहं कथमावसे ॥ ०३० ॥

समानयानया चेह सहवासमहं कथम् ।
गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे ॥ ०३१ ॥

सहवासं न यास्यामि कालमेतद्धि वञ्चनात् ।
वञ्चितोऽस्म्यनया यद्धि निर्विकारो विकारया ॥ ०३२ ॥

न चायमपराधोऽस्या अपराधो ह्ययं मम ।
योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः ॥ ०३३ ॥

ततोऽस्मि बहुरूपासु स्थितो मूर्तिष्वमूर्तिमान् ।
अमूर्तश्चापि मूर्तात्मा ममत्वेन प्रधर्षितः ॥ ०३४ ॥

प्रकृतेरनयत्वेन तासु तास्विह योनिषु ।

निर्ममस्य ममत्वेन किं कृतं तासु तासु च ॥ ०३५ ॥

योनीषु वर्तमानेन नष्टसञ्ज्ञेन चेतसा ॥ ०३५ ॥

न ममात्रानया कार्यमहङ्कारकृतात्मया ।
आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति माम् ॥ ०३६ ॥

इदानीमेष बुद्धोऽस्मि निर्ममो निरहङ्कृतः ॥ ०३६ ॥

ममत्वमनया नित्यमहङ्कारकृतात्मकम् ।
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ ०३७ ॥

अनेन साम्यं यास्यामि नानयाहमचेतसा ।
क्षमं मम सहानेन नैकत्वमनया सह ॥ ०३८ ॥

एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान् ॥ ०३८ ॥

अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम् ।
अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा ॥ ०३९ ॥

निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ॥ ०३९ ॥

अक्षरक्षरयोरेतदुक्तं तव निदर्शनम् ।
मयेह ज्ञानसंपन्नं यथाश्रुतिनिदर्शनात् ॥ ०४० ॥

निःसंदिग्धं च सूक्ष्मं च विबुद्धं विमलं तथा ।
प्रवक्ष्यामि तु ते भूयस्तन्निबोध यथाश्रुतम् ॥ ०४१ ॥

सांख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात् ।
यदेव शास्त्रं सांख्योक्तं योगदर्शनमेव तत् ॥ ०४२ ॥

प्रबोधनकरं ज्ञानं सांख्यानामवनीपते ।
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ०४३ ॥

बृहच्चैव हि तच्छास्त्रमित्याहुः कुशला जनाः ।
अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनः शरः ॥ ०४४ ॥

पञ्चविंशात्परं तत्त्वं न पश्यति नराधिप ।
सांख्यानां तु परं तत्र यथावदनुवर्णितम् ॥ ०४५ ॥

बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ०४६ ॥

---

# अध्याय २९६

वसिष्ठ उवाच ॥

अप्रबुद्धमथाव्यक्तमिमं गुणविधिं शृणु ।
गुणान्धारयते ह्येषा सृजत्याक्षिपते तथा ॥ ००१ ॥

अजस्रं त्विह क्रीडार्थं विकुर्वन्ती नराधिप ।
आत्मानं बहुधा कृत्वा तान्येव च विचक्षते ॥ ००२ ॥

एतदेवं विकुर्वाणां बुध्यमानो न बुध्यते ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ००३ ॥

न त्वेव बुध्यतेऽव्यक्तं सगुणं वाथ निर्गुणम् ।
कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ ००४ ॥

बुध्यते यदि वाव्यक्तमेतद्वै पञ्चविंशकम् ।
बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ॥ ००५ ॥

अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम् ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ॥ ००६ ॥

पञ्चविंशं महात्मानं न चासावपि बुध्यते ।
षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ॥ ००७ ॥

सततं पञ्चविंशं च चतुर्विंशं च बुध्यते ।
दृश्यादृश्ये ह्यनुगतमुभावेव महाद्युती ॥ ००८ ॥

अव्यक्तं न तु तद्ब्रह्म बुध्यते तात केवलम् ।
केवलं पञ्चविंशं च चतुर्विंशं न पश्यति ॥ ००९ ॥

बुध्यमानो यदात्मानमन्योऽहमिति मन्यते ।
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ॥ ०१० ॥

बुध्यते च परां बुद्धिं विशुद्धाममलां यदा ।
षड्विंशो राजशार्दूल तदा बुद्धत्वमाव्रजेत् ॥ ०११ ॥

ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मिणम् ।
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ॥ ०१२ ॥

ततः केवलधर्मासौ भवत्यव्यक्तदर्शनात् ।
केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ॥ ०१३ ॥

एतत्तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ।
तत्त्वसंश्रयणादेतत्तत्त्ववन्न च मानद ॥ ०१४ ॥

पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ॥ ०१४ ॥

न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणम्  ॥ ०१५  ॥

षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम्  ॥ ०१६  ॥

षड्विंशेन प्रबुद्धेन बुध्यमानोऽप्यबुद्धिमान् ।
एतन्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात्  ॥ ०१७  ॥

चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते  ॥ ०१८  ॥

बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप  ॥ ०१९  ॥

निःसङ्गात्मानमासाद्य षड्विंशकमजं विदुः ।
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते  ॥ ०२०  ॥

चतुर्विंशमगाधं च षड्विंशस्य प्रबोधनात्  ॥ ०२०  ॥

एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात्  ॥ ०२१  ॥

नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः  ॥ ०२१  ॥

मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योऽम्भसि यथा तद्वदन्यत्वमुपलभ्यते  ॥ ०२२  ॥

एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्विमोक्ष इत्युक्तमव्यक्तज्ञानसंहितम्  ॥ ०२३  ॥

पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ ०२४ ॥

सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥ ०२५ ॥

विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ ०२६ ॥

नियोगधर्मिणा चैव नियोगात्मा भवत्यपि ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥ ०२७ ॥

शुचिकर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥ ०२८ ॥

केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ ०२९ ॥

एतावदेतत्कथितं मया ते ; तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरत्वं प्रतिगृह्य चार्थं ; सनातनं ब्रह्म विशुद्धमाद्यम् ॥ ०३० ॥

न वेदनिष्ठस्य जनस्य राज ;न्प्रदेयमेतत्परमं त्वया भवेत् ।
विवित्समानाय विबोधकारकं ; प्रबोधहेतोः प्रणतस्य शासनम् ॥ ०३१ ॥

न देयमेतच्च तथानृतात्मने ; शठाय क्लीबाय न जिह्मबुद्धये ।
न पण्डितज्ञानपरोपतापिने ; देयं त्वयेदं विनिबोध यादृशे ॥ ०३२ ॥

श्रद्धान्वितायाथ गुणान्विताय ; परापवादाद्विरताय नित्यम् ।
विशुद्धयोगाय बुधाय चैव ; क्रियावतेऽथ क्षमिणे हिताय ॥ ०३३ ॥

विविक्तशीलाय विधिप्रियाय ; विवादहीनाय बहुश्रुताय ।
विजानते चैव न चाहितक्षमे ; दमे च शक्ताय शमे च देहिनाम्  ॥ ०३४  ॥

एतैर्गुणैर्हीनतमे न देय ;मेतत्परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं ; धर्मप्रवक्तारमपात्रदानात्  ॥ ०३५  ॥

पृथ्वीमिमां यद्यपि रत्नपूर्णां ; दद्यान्नदेयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते ; भवेत्प्रदेयं परमं नरेन्द्र  ॥ ०३६  ॥

कराल मा ते भयमस्तु किं चि ;देतच्छ्रुतं ब्रह्म परं त्वयाद्य ।
यथावदुक्तं परमं पवित्रं ; निःशोकमत्यन्तमनादिमध्यम्  ॥ ०३७  ॥

अगाधजन्मामरणं च राज ;न्निरामयं वीतभयं शिवं च ।
समीक्ष्य मोहं त्यज चाद्य सर्वं ; ज्ञानस्य तत्त्वार्थमिदं विदित्वा  ॥ ०३८  ॥

अवाप्तमेतद्धि पुरा सनातना ;द्धिरण्यगर्भाद्गदतो नराधिप ।
प्रसाद्य यत्नेन तमुग्रतेजसं ; सनातनं ब्रह्म यथाद्य वै त्वया  ॥ ०३९  ॥

पृष्टस्त्वया चास्मि यथा नरेन्द्र ; तथा मयेदं त्वयि चोक्तमद्य ।
तथावाप्तं ब्रह्मणो मे नरेन्द्र ; महज्ज्ञानं मोक्षविदां पुराणम्  ॥ ०४०  ॥

भीष्म उवाच  ॥

एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात्  ॥ ०४१  ॥

पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरः  ॥ ०४२  ॥

एतन्निःश्रेयसकरं ज्ञानानां ते परं मया ।
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप  ॥ ०४३  ॥

हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना ।
वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम्  ॥ ०४४  ॥

नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनम् ।
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत्परमं पदम्  ॥ ०४५  ॥

येन क्षराक्षरे वित्ते न भयं तस्य विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव  ॥ ०४६  ॥

अविज्ञानाच्च मूढात्मा पुनः पुनरुपद्रवन् ।
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते  ॥ ०४७  ॥

देवलोकं तथा तिर्यङ्मानुष्यमपि चाश्नुते ।
यदि शुध्यति कालेन तस्मादज्ञानसागरात्  ॥ ०४८  ॥

अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते ।
अहन्यहनि मज्जन्ति यत्र भूतानि भारत  ॥ ०४९  ॥

यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात् ।
तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव  ॥ ०५०  ॥

---

# भृगुजनकसंवादः

## अध्याय २९७

भीष्म उवाच  ॥

मृगयां विचरन्कश्चिद्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥ ००१ ॥

तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥ ००२ ॥

भगवन्किमिदं श्रेयः प्रेत्य वापीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥ ००३ ॥

सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ ००४ ॥

मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ॥ ००५ ॥

धर्मः सतां हितः पुंसां धर्मश्चैवाश्रयः सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ॥ ००६ ॥

स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ ००७ ॥

यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥ ००८ ॥

असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥ ००९ ॥

वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ ०१० ॥

मनोवाक्कर्मके धर्मे कुरु श्रद्धां समाहितः ।
निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ॥ ०११ ॥

नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः ॥ ०१२ ॥

शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् ।
क्रोधमुत्सृज्य दत्त्वा च नानुतप्येन्न कीर्तयेत् ॥ ०१३ ॥

अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः ।
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥ ०१४ ॥

सत्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते ॥ ०१५ ॥

स एव धर्मः सोऽधर्मस्तं तं प्रतिनरं भवेत् ।
पात्रकर्मविशेषेण देशकालाववेक्ष्य च ॥ ०१६ ॥

लीलयाल्पं यथा गात्रात्प्रमृज्याद्रजसः पुमान् ।
बहुयत्नेन महता पापनिर्हरणं तथा ॥ ०१७ ॥

विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्यधर्मः सुखावहः ॥ ०१८ ॥

मानसं सर्वभूतेषु वर्तते वै शुभाशुभे ।
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतारयेत् ॥ ०१९ ॥

सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय ।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥ ०२० ॥

अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव ।

अप्रशान्त प्रशाम्य त्वमप्राज्ञ प्राज्ञवच्चर ॥ ०२१ ॥

तेजसा शक्यते प्राप्तुमुपायसहचारिणा ।
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ॥ ०२२ ॥

राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः ।
ययातिः क्षीणपुण्यश्च धृत्या लोकानवाप्तवान् ॥ ०२३ ॥

तपस्विनां धर्मवतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ॥ ०२४ ॥

स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह ॥ ०२५ ॥

---

# याज्ञवल्क्यजनकसंवादः

## अध्याय २९८

युधिष्ठिर उवाच ॥

धर्माधर्मविमुक्तं यद्विमुक्तं सर्वसंश्रयात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ॥ ००१ ॥

यच्छिवं नित्यमभयं नित्यं चाक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति ॥ ००२ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ००३ ॥

याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरः ॥ ००४ ॥

कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ ००५ ॥

प्रभवं चाप्ययं चैव कालसंख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ ००६ ॥

अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ ००७ ॥

याज्ञवल्क्य उवाच ॥

श्रूयतामवनीपाल यदेतदनुपृच्छसि ।
योगानां परमं ज्ञानं सांख्यानां च विशेषतः ॥ ००८ ॥

न तवाविदितं किञ्चिन्मां तु जिज्ञासते भवान् ।
पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः ॥ ००९ ॥

अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।
अथ सप्त तु व्यक्तानि प्राहुरध्यात्मचिन्तकाः ॥ ०१० ॥

अव्यक्तं च महांश्चैव तथाहङ्कार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ०११ ॥

एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।

श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ॥ ०१२ ॥

शब्दस्पर्शौ च रूपं च रसो गन्धस्तथैव च ।
वाक्क हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ ०१३ ॥

एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥ ०१४ ॥

मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः ।
त्वं चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः ॥ ०१५ ॥

अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः ॥ ०१६ ॥

महतश्चाप्यहङ्कार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम् ॥ ०१७ ॥

अहङ्काराच्च संभूतं मनो भूतगुणात्मकम् ।
तृतीयः सर्ग इत्येष आहङ्कारिक उच्यते ॥ ०१८ ॥

मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं परिचक्षते ॥ ०१९ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः ॥ ०२० ॥

श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥ ०२१ ॥

अधः श्रोत्रेन्द्रियग्राम उत्पद्यति नराधिप ।
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ॥ ०२२ ॥

ऊर्ध्वस्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥ ०२३ ॥

तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप ।
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥ ०२४ ॥

एतानि नव सर्गाणि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुति निदर्शनात् ॥ ०२५ ॥

अत ऊर्ध्वं महाराज गुणस्यैतस्य तत्त्वतः ।
महात्मभिरनुप्रोक्तां कालसंख्यां निबोध मे ॥ ०२६ ॥

---

# अध्याय २९९

याज्ञवल्क्य उवाच ॥

अव्यक्तस्य नरश्रेष्ठ कालसंख्यां निबोध मे ।
पञ्च कल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ ००१ ॥

रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप ।
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् ॥ ००२ ॥

ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवम् ।
सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥ ००३ ॥

संवत्सरमुषित्वाण्डे निष्क्रम्य च महामुनिः ।

संदधेऽर्धं महीं कृत्स्नां दिवमर्धं प्रजापतिः ॥ ००४ ॥

द्यावापृथिव्योरित्येष राजन्वेदेषु पठ्यते ।
तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः ॥ ००५ ॥

एतस्यापि च संख्यानं वेदवेदाङ्गपारगैः ।
दश कल्पसहस्राणि पादोनान्यहरुच्यते ॥ ००६ ॥

रात्रिमेतावतीं चास्य प्राहुरध्यात्मचिन्तकाः ॥ ००६ ॥

सृजत्यहङ्कारमृषिर्भूतं दिव्यात्मकं तथा ।
चतुरश्चापरान्पुत्रान्देहात्पूर्वं महानृषिः ॥ ००७ ॥

ते वै पितृभ्यः पितरः श्रूयन्ते राजसत्तम ॥ ००७ ॥

देवाः पितृणां च सुता देवैर्लोकाः समावृताः ।
चराचरा नरश्रेष्ठ इत्येवमनुशुश्रुम ॥ ००८ ॥

परमेष्ठी त्वहङ्कारोऽसृजद्भूतानि पञ्चधा ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ००९ ॥

एतस्यापि निशामाहुस्तृतीयमिह कुर्वतः ।
पञ्च कल्पसहस्राणि तावदेवाहरुच्यते ॥ ०१० ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ ०११ ॥

यैराविष्टानि भूतानि अहन्यहनि पार्थिव ॥ ०११ ॥

अन्योन्यं स्पृहयन्त्येते अन्योन्यस्य हिते रताः ।
अन्योन्यमभिमन्यन्ते अन्योन्यस्पर्धिनस्तथा ॥ ०१२ ॥

ते वध्यमाना अन्योन्यं गुणैर्हारिभिरव्ययाः ।
इहैव परिवर्तन्ते तिर्यग्योनिप्रवेशिनः ॥ ०१३ ॥

त्रीणि कल्पसहस्राणि एतेषामहरुच्यते ।
रत्रिरेतावती चैव मनसश्च नराधिप ॥ ०१४ ॥

मनश्चरति राजेन्द्र चरितं सर्वमिन्द्रियैः ।
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ॥ ०१५ ॥

चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा ।
मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति ॥ ०१६ ॥

तथेन्द्रियाणि सर्वाणि पश्यन्तीत्यभिचक्षते ॥ ०१६ ॥

मनस्युपरते राजन्निन्द्रियोपरमो भवेत् ।
न चेन्द्रियव्युपरमे मनस्युपरमो भवेत् ॥ ०१७ ॥

एवं मनःप्रधानानि इन्द्रियाणि विभावयेत् ॥ ०१७ ॥

इन्द्रियाणां हि सर्वेषामीश्वरं मन उच्यते ।
एतद्विशन्ति भूतानि सर्वाणीह महायशाः ॥ ०१८ ॥

---

# अध्याय ३००

याज्ञवल्क्य उवाच ॥

तत्त्वानां सर्गसंख्या च कालसंख्या तथैव च ।

मया प्रोक्तानुपूर्व्येण संहारमपि मे शृणु ॥ ००१ ॥

यथा संहरते जन्तून्ससर्ज च पुनः पुनः ।
अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च ॥ ००२ ॥

अहःक्षयमथो बुद्ध्वा निशि स्वप्नमनास्तथा ।
चोदयामास भगवानव्यक्तोऽहङ्कृतं नरम् ॥ ००३ ॥

ततः शतसहस्रांशुरव्यक्तेनाभिचोदितः ।
कृत्वा द्वादशधात्मानमादित्यो ज्वलदग्निवत् ॥ ००४ ॥

चतुर्विधं प्रजाजालं निर्दहत्याशु तेजसा ।
जराय्वण्डस्वेदजातमुद्भिज्जं च नराधिप ॥ ००५ ॥

एतदुन्मेषमात्रेण विनिष्टं स्थाणुजङ्गमम् ।
कूर्मपृष्ठसमा भूमिर्भवत्यथ समन्ततः ॥ ००६ ॥

जगद्दग्ध्वामितबलः केवलं जगतीं ततः ।
अम्भसा बलिना क्षिप्रमापूर्यत समन्ततः ॥ ००७ ॥

ततः कालाग्निमासाद्य तदम्भो याति सङ्क्षयम् ।
विनष्टेऽम्भसि राजेन्द्र जाज्वलीत्यनलो महान् ॥ ००८ ॥

तमप्रमेयोऽतिबलं ज्वलमानं विभावसुम् ।
ऊष्माणं सर्वभूतानां सप्तार्चिषमथाञ्जसा ॥ ००९ ॥

भक्षयामास बलवान्वायुरष्टात्मको बली ।
विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा ॥ ०१० ॥

तमप्रतिबलं भीममाकाशं ग्रसतेऽऽत्मना ।
आकाशमप्यतिनदन्मनो ग्रसति चारिकम् ॥ ०११ ॥

मनो ग्रसति सर्वात्मा सोऽहङ्कारः प्रजापतिः ।
अहङ्कारं महानात्मा भूतभव्यभविष्यवित् ॥ ०१२ ॥

तमप्यनुपमात्मानं विश्वं शंभुः प्रजापतिः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ ०१३ ॥

सर्वतःपाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
सर्वतःश्रुतिमा.णल्लोके सर्वमावृत्य तिष्ठति ॥ ०१४ ॥

हृदयं सर्वभूतानां पर्वणोऽङ्गुष्ठमात्रकः ।
अनुग्रसत्यनन्तं हि महात्मा विश्वमीश्वरः ॥ ०१५ ॥

ततः समभवत्सर्वमक्षयाव्ययमव्रणम् ।
भूतभव्यमनुष्याणां स्रष्टारमनघं तथा ॥ ०१६ ॥

एषोऽप्ययस्ते राजेन्द्र यथावत्परिभाषितः ।
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥ ०१७ ॥

---

# अध्याय ३०१

याज्ञवल्क्य उवाच ॥

पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् ॥ ००१ ॥

पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ।
विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम् ॥ ००२ ॥

उपस्थोऽध्यात्ममित्याहुर्यथायोगनिदर्शनम् ।
अधिभूतं तथानन्दो दैवतं च प्रजापतिः ॥ ००३ ॥

हस्तावध्यात्ममित्याहुर्यथासांख्यनिदर्शनम् ।
कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ॥ ००४ ॥

वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शनम् ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ ००५ ॥

चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम् ।
रूपमत्राधिभूतं तु सूर्यस्तत्राधिदैवतम् ॥ ००६ ॥

श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम् ।
शब्दस्तत्राधिभूतं तु दिशस्तत्राधिदैवतम् ॥ ००७ ॥

जिह्वामध्यात्ममित्याहुर्यथातत्त्वनिदर्शनम् ।
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ॥ ००८ ॥

घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनम् ।
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ॥ ००९ ॥

त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः ।
स्पर्श एवाधिभूतं तु पवनश्चाधिदैवतम् ॥ ०१० ॥

मनोऽध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शनम् ।
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ॥ ०११ ॥

अहङ्कारिकमध्यात्ममाहुस्तत्त्वनिदर्शनम् ।
अभिमानोऽधिभूतं तु भवस्तत्राधिदैवतम् ॥ ०१२ ॥

बुद्धिरध्यात्ममित्याहुर्यथावेदनिदर्शनम् ।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञोऽत्राधिदैवतम्  ॥ ०१३  ॥

एषा ते व्यक्ततो राजन्विभूतिरनुवर्णिता ।
आदौ मध्ये तथा चान्ते यथातत्त्वेन तत्त्ववित्  ॥ ०१४  ॥

प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया ।
क्रीडार्थं तु महाराज शतशोऽथ सहस्रशः  ॥ ०१५  ॥

यथा दीपसहस्राणि दीपान्मर्त्याः प्रकुर्वते ।
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान्बहून्  ॥ ०१६  ॥

सत्त्वमानन्द उद्रेकः प्रीतिः प्राकाश्यमेव च ।
सुखं शुद्धित्वमारोग्यं संतोषः श्रद्दधानता  ॥ ०१७  ॥

अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता ।
समता सत्यमानृण्यं मार्दवं ह्रीरचापलम्  ॥ ०१८  ॥

शौचमार्जवमाचारमलौल्यं हृद्यसंभ्रमः ।
इष्टानिष्टवियोगानां कृतानामविकत्थनम्  ॥ ०१९  ॥

दानेन चानुग्रहणमस्पृहार्थे परार्थता ।
सर्वभूतदया चैव सत्त्वस्यैते गुणाः स्मृताः  ॥ ०२०  ॥

रजोगुणानां संघातो रूपमैश्वर्यविग्रहे ।
अत्याशित्वमकारुण्यं सुखदुःखोपसेवनम्  ॥ ०२१  ॥

परापवादेषु रतिर्विवादानां च सेवनम् ।
अहङ्कारस्त्वसत्कारश्चिन्ता वैरोपसेवनम्  ॥ ०२२  ॥

परितापोऽपहरणं ह्रीनाशोऽनार्जवं तथा ।

भेदः परुषता चैव कामक्रोधौ मदस्तथा ॥ ०२३ ॥

दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः ॥ ०२३ ॥

तामसानां तु संघातं प्रवक्ष्याम्युपधार्यताम् ।
मोहोऽप्रकाशस्तामिस्त्रमन्धतामिस्त्रसञ्ज्ञितम् ॥ ०२४ ॥

मरणं चान्धतामिस्त्रं तामिस्त्रं क्रोध उच्यते ।
तमसो लक्षणानीह भक्षाणामभिरोचनम् ॥ ०२५ ॥

भोजनानामपर्याप्तिस्तथा पेयेष्वतृप्तता ।
गन्धवासो विहारेषु शयनेष्वासनेषु च ॥ ०२६ ॥

दिवास्वप्ने विवादे च प्रमादेषु च वै रतिः ।
नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता ॥ ०२७ ॥

द्वेषो धर्मविशेषाणामेते वै तामसा गुणाः ॥ ०२७ ॥

---

# अध्याय ३०२

याज्ञवल्क्य उवाच ॥

एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम ।
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा ॥ ००१ ॥

शतधा सहस्रधा चैव तथा शतसहस्रधा ।
कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ॥ ००२ ॥

सात्त्विकस्योत्तमं स्थानं राजसस्येह मध्यमम् ।
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः ॥ ००३ ॥

केवलेनेह पुण्येन गतिमूर्ध्वामवाप्नुयात् ।
पुण्यपापेन मानुष्यमधर्मेणाप्यधोगतिम् ॥ ००४ ॥

द्वंद्वमेषां त्रयाणां तु संनिपातं च तत्त्वतः ।
सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे ॥ ००५ ॥

सत्त्वस्य तु रजो दृष्टं रजसश्च तमस्तथा ।
तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेव च ॥ ००६ ॥

अव्यक्तसत्त्वसंयुक्तो देवलोकमवाप्नुयात् ।
रजःसत्त्वसमायुक्तो मनुष्येषूपपद्यते ॥ ००७ ॥

रजस्तमोभ्यां संयुक्तस्तिर्यग्योनिषु जायते ।
रजस्तामससत्त्वैश्च युक्तो मानुष्यमाप्नुयात् ॥ ००८ ॥

पुण्यपापवियुक्तानां स्थानमाहुर्मनीषिणाम् ।
शास्वतं चाव्ययं चैव अक्षरं चाभयं च यत् ॥ ००९ ॥

ज्ञानिनां संभवं श्रेष्ठं स्थानमव्रणमच्युतम् ।
अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् ॥ ०१० ॥

अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
स एष प्रकृतिष्ठो हि तस्थुरित्यभिधीयते ॥ ०११ ॥

अचेतनश्चैष मतः प्रकृतिस्थश्च पार्थिव ।
एतेनाधिष्ठितश्चैव सृजते संहरत्यपि ॥ ०१२ ॥

जनक उवाच ॥

अनादिनिधनावेतावुभावेव महामुने ।
अमूर्तिमन्तावचलावप्रकम्प्यौ च निर्व्रणौ ॥ ०१३ ॥

अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥ ०१४ ॥

त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे ।
साकल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः ॥ ०१५ ॥

अस्तित्वं केवलत्वं च विनाभावं तथैव च ।
तथैवोत्क्रमणस्थानं देहिनोऽपि वियुज्यतः ॥ ०१६ ॥

कालेन यद्धि प्राप्नोति स्थानं तद्ब्रूहि मे द्विज ।
सांख्यज्ञानं च तत्त्वेन पृथग्योगं तथैव च ॥ ०१७ ॥

अरिष्टानि च तत्त्वेन वक्तुमर्हसि सत्तम ।
विदितं सर्वमेतत्ते पाणावामलकं यथा ॥ ०१८ ॥

---

# अध्याय ३०३

याज्ञवल्क्य उवाच ॥

न शक्यो निर्गुणस्तात गुणीकर्तुं विशां पते ।
गुणवांश्चाप्यगुणवान्यथातत्त्वं निबोध मे ॥ ००१ ॥

गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा ।

प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः ॥ ००२ ॥

गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।
उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः ॥ ००३ ॥

अव्यक्तस्तु न जानीते पुरुषो ज्ञः स्वभावतः ।
न मत्तः परमस्तीति नित्यमेवाभिमन्यते ॥ ००४ ॥

अनेन कारणेनैतदव्यक्तं स्यादचेतनम् ।
नित्यत्वादक्षरत्वाच्च क्षराणां तत्त्वतोऽन्यथा ॥ ००५ ॥

यदाज्ञानेन कुर्वीत गुणसर्गं पुनः पुनः ।
यदात्मानं न जानीते तदाव्यक्तमिहोच्यते ॥ ००६ ॥

कर्तृत्वाच्चापि तत्त्वानां तत्त्वधर्मी तथोच्यते ।
कर्तृत्वाच्चैव योनीनां योनिधर्मा तथोच्यते ॥ ००७ ॥

कर्तृत्वात्प्रकृतीनां तु तथा प्रकृतिधर्मिता ।
कर्तृत्वाच्चापि बीजानां बीजधर्मी तथोच्यते ॥ ००८ ॥

गुणानां प्रसवत्वाच्च तथा प्रसवधर्मवान् ।
कर्तृत्वात्प्रलयानां च तथा प्रलयधर्मिता ॥ ००९ ॥

बीजत्वात्प्रकृतित्वाच्च प्रलयत्वात्तथैव च ।
उपेक्षकत्वादन्यत्वादभिमानाच्च केवलम् ॥ ०१० ॥

मन्यन्ते यतयः शुद्धा अध्यात्मविगतज्वराः ।
अनित्यं नित्यमव्यक्तमेवमेतद्धि शुश्रुम ॥ ०११ ॥

अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषस्तथा ।
सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः ॥ ०१२ ॥

अन्यः स पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसञ्ज्ञकः ।
यथा मुञ्ज इषीकायास्तथैवैतद्धि जायते ॥ ०१३ ॥

अन्यं च मशकं विद्यादन्यच्चोदुम्बरं तथा ।
न चोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते ॥ ०१४ ॥

अन्य एव तथा मत्स्यस्तथान्यदुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः ॥ ०१५ ॥

अन्यो ह्यग्निरुखाप्यन्या नित्यमेवमवैहि भोः ।
न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै ॥ ०१६ ॥

पुष्करं त्वन्यदेवात्र तथान्यदुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् ॥ ०१७ ॥

एतेषां सह संवासं विवासं चैव नित्यशः ।
यथा तथैनं पश्यन्ति न नित्यं प्राकृता जनाः ॥ ०१८ ॥

ये त्वन्यथैव पश्यन्ति न सम्यक्तेषु दर्शनम् ।
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ ०१९ ॥

सांख्यदर्शनमेतत्ते परिसंख्यातमुत्तमम् ।
एवं हि परिसंख्याय सांख्याः केवलतां गताः ॥ ०२० ॥

ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनम् ।
अतः परं प्रवक्ष्यामि योगानामपि दर्शनम् ॥ ०२१ ॥

# अध्याय ३०४

याज्ञवल्क्य उवाच ॥

सांख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे ।
यथाश्रुतं यथादृष्टं तत्त्वेन नृपसत्तम ॥ ००१ ॥

नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
तावुभावेकचर्यौ तु उभावनिधनौ स्मृतौ ॥ ००२ ॥

पृथक्पृथक्तु पश्यन्ति येऽल्पबुद्धिरता नराः ।
वयं तु राजन्पश्याम एकमेव तु निश्चयात् ॥ ००३ ॥

यदेव योगाः पश्यन्ति तत्सांख्यैरपि दृश्यते ।
एकं सांख्यं च योगं च यः पश्यति स तत्त्ववित् ॥ ००४ ॥

रुद्रप्रधानानपरान्विद्धि योगान्परंतप ।
तेनैव चाथ देहेन विचरन्ति दिशो दश ॥ ००५ ॥

यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन वै ।
योगेन लोकान्विचरन्सुखं संन्यस्य चानघ ॥ ००६ ॥

वेदेषु चाष्टगुणितं योगमाहुर्मनीषिणः ।
सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम ॥ ००७ ॥

द्विगुणं योगकृत्यं तु योगानां प्राहुरुत्तमम् ।
सगुणं निर्गुणं चैव यथाशास्त्रनिदर्शनम् ॥ ००८ ॥

धारणा चैव मनसः प्राणायामश्च पार्थिव ।
प्राणायामो हि सगुणो निर्गुणं धारणं मनः ॥ ००९ ॥

यत्र दृश्येत मुञ्चन्वै प्राणान्मैथिलसत्तम ।
वाताधिक्यं भवत्येव तस्माद्धि न समाचरेत्  ॥ ०१० ॥

निशायाः प्रथमे यामे चोदना द्वादश स्मृताः ।
मध्ये सुप्त्वा परे यामे द्वादशैव तु चोदनाः  ॥ ०११ ॥

तदेवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण बुद्धेन योक्तव्योऽऽत्मा न संशयः  ॥ ०१२ ॥

पञ्चानामिन्द्रियाणां तु दोषानाक्षिप्य पञ्चधा ।
शब्दं स्पर्शं तथा रूपं रसं गन्धं तथैव च  ॥ ०१३ ॥

प्रतिभामपवर्गं च प्रतिसंहृत्य मैथिल ।
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह  ॥ ०१४ ॥

मनस्तथैवाहङ्कारे प्रतिष्ठाप्य नराधिप ।
अहङ्कारं तथा बुद्धौ बुद्धिं च प्रकृतावपि  ॥ ०१५ ॥

एवं हि परिसंख्याय ततो ध्यायेत केवलम् ।
विरजस्कमलं नित्यमनन्तं शुद्धमव्रणम्  ॥ ०१६ ॥

तस्थुषं पुरुषं सत्त्वमभेद्यमजरामरम् ।
शाश्वतं चाव्ययं चैव ईशानं ब्रह्म चाव्ययम्  ॥ ०१७ ॥

युक्तस्य तु महाराज लक्षणान्युपधारयेत् ।
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत्  ॥ ०१८ ॥

निवाते तु यथा दीपो ज्वलेत्स्नेहसमन्वितः ।
निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः  ॥ ०१९ ॥

पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः ।

नालं चालयितुं शक्यस्तथा युक्तस्य लक्षणम् ॥ ०२० ॥

शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः ।
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् ॥ ०२१ ॥

तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः ।
सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः ॥ ०२२ ॥

संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ।
तथैवोत्तरमाणस्य एकाग्रमनसस्तथा ॥ ०२३ ॥

स्थिरत्वादिन्द्रियाणां तु निश्चलत्वात्तथैव च ।
एवं युक्तस्य तु मुनेर्लक्षणान्युपधारयेत् ॥ ०२४ ॥

स युक्तः पश्यति ब्रह्म यत्तत्परममव्ययम् ।
महतस्तमसो मध्ये स्थितं ज्वलनसंनिभम् ॥ ०२५ ॥

एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ।
कालेन महता राजञ्श्रुतिरेषा सनातनी ॥ ०२६ ॥

एतद्धि योगं योगानां किमन्यद्योगलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ ०२७ ॥

---

# अध्याय ३०५

याज्ञवल्क्य उवाच ॥

तथैवोत्क्रममाणं तु शृणुष्वावहितो नृप ।

पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ ००१ ॥

जङ्घाभ्यां तु वसून्देवानाप्नुयादिति नः श्रुतम् ।
जानुभ्यां च महाभागान्देवान्साध्यानवाप्नुयात् ॥ ००२ ॥

पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्यां तु प्रजापतिम् ॥ ००३ ॥

पार्श्वाभ्यां मरुतो देवान्नासाभ्यामिन्दुमेव च ।
बाहुभ्यामिन्द्रमित्याहुरुरसा रुद्रमेव च ॥ ००४ ॥

ग्रीवायास्तमृषिश्रेष्ठं नरमाप्नोत्यनुत्तमम् ।
विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ॥ ००५ ॥

घ्राणेन गन्धवहनं नेत्राभ्यां सूर्यमेव च ।
भ्रूभ्यां चैवाश्विनौ देवौ ललाटेन पितॄनथ ॥ ००६ ॥

ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा ।
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥ ००७ ॥

अरिष्टानि तु वक्ष्यामि विहितानि मनीषिभिः ।
संवत्सरवियोगस्य संभवेयुः शरीरिणः ॥ ००८ ॥

योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन ।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ॥ ००९ ॥

खण्डाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ॥ ००९ ॥

परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ।
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः ॥ ०१० ॥

अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा ।
प्रकृतेर्विक्रियापत्तिः षण्मासान्मृत्युलक्षणम् ॥ ०११ ॥

दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ।
कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ॥ ०१२ ॥

शीर्णनाभि यथा चक्रं छिद्रं सोमं प्रपश्यति ।
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ॥ ०१३ ॥

शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ।
देवतायतनस्थस्तु षड्रात्रेण स मृत्युभाक् ॥ ०१४ ॥

कर्णनासावनमनं दन्तदृष्टिविरागिता ।
सञ्ज्ञालोपो निरूष्मत्वं सद्योमृत्युनिदर्शनम् ॥ ०१५ ॥

अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ।
मूर्धतश्चोत्पतेद्धूमः सद्योमृत्युनिदर्शनम् ॥ ०१६ ॥

एतावन्ति त्वरिष्टानि विदित्वा मानवोऽऽत्मवान् ।
निशि चाहनि चात्मानं योजयेत्परमात्मनि ॥ ०१७ ॥

प्रतीक्षमाणस्तत्कालं यत्कालं प्रति तद्भवेत् ।
अथास्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् ॥ ०१८ ॥

सर्वगन्धान्रसांश्चैव धारयेत समाहितः ।
तथा हि मृत्युं जयति तत्परेणान्तरात्मना ॥ ०१९ ॥

ससांख्यधारणं चैव विदित्वा मनुजर्षभ ।
जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना ॥ ०२० ॥

गच्छेत्प्राप्याक्षयं कृत्स्नमजन्म शिवमव्ययम् ।

शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ॥ ०२१ ॥

---

# अध्याय ३०६

याज्ञवल्क्य उवाच ॥

अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ॥ ००१ ॥

यथार्षेणेह विधिना चरतावमतेन ह ।
मयादित्यादवाप्तानि यजूंषि मिथिलाधिप ॥ ००२ ॥

महता तपसा देवस्तपिष्ठः सेवितो मया ।
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदानघ ॥ ००३ ॥

वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम् ।
तत्ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ॥ ००४ ॥

ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः ।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ॥ ००५ ॥

ततो मां भगवानाह वितरिष्यामि ते द्विज ।
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति ॥ ००६ ॥

ततो मामाह भगवानास्यं स्वं विवृतं कुरु ।
विवृतं च ततो मेऽऽस्यं प्रविष्टा च सरस्वती ॥ ००७ ॥

ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदानघ ।

अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ॥ ००८ ॥

ततो विदह्यमानं मामुवाच भगवान्रविः ।
मुहूर्तं सह्यतां दाहस्ततः शीतीभविष्यसि ॥ ००९ ॥

शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः ।
प्रतिष्ठास्यति ते वेदः सोत्तरः सखिलो द्विज ॥ ०१० ॥

कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ ।
तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ॥ ०११ ॥

प्राप्स्यसे च यदिष्टं तत्सांख्ययोगेप्सितं पदम् ।
एतावदुक्त्वा भगवानस्तमेवाभ्यवर्तत ॥ ०१२ ॥

ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ ।
गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥ ०१३ ॥

ततः प्रवृत्तातिशुभा स्वरव्यञ्जनभूषिता ।
ओङ्कारमादितः कृत्वा मम देवी सरस्वती ॥ ०१४ ॥

ततोऽहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम् ।
तपतां च वरिष्ठाय निषण्णस्तत्परायणः ॥ ०१५ ॥

ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥ ०१६ ॥

कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् ।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ ०१७ ॥

ततः सशिष्येण मया सूर्येणेव गभस्तिभिः ।
व्याप्तो यज्ञो महाराज पितुस्तव महात्मनः ॥ ०१८ ॥

मिषतो देवलस्यापि ततोऽर्धं हृतवानहम् ।
स्ववेददक्षिणायाथ विमर्दे मातुलेन ह ॥ ०१९ ॥

सुमन्तुनाथ पैलेन तथा जैमिनिना च वै ।
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥ ०२० ॥

दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयानघ ।
तथैव लोमहर्षाच्च पुराणमवधारितम् ॥ ०२१ ॥

बीजमेतत्पुरस्कृत्य देवीं चैव सरस्वतीम् ।
सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥ ०२२ ॥

कर्तुं शतपथं वेदमपूर्वं कारितं च मे ।
यथाभिलषितं मार्गं तथा तच्चोपपादितम् ॥ ०२३ ॥

शिष्याणामखिलं कृत्स्नमनुज्ञातं ससङ्ग्रहम् ।
सर्वे च शिष्याः शुचयो गताः परमहर्षिताः ॥ ०२४ ॥

शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः ।
प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिन्तयम् ॥ ०२५ ॥

किमत्र ब्रह्मण्यमृतं किं च वेद्यमनुत्तमम् ।
चिन्तये तत्र चागत्य गन्धर्वो मामपृच्छत ॥ ०२६ ॥

विश्वावसुस्ततो राजन्वेदान्तज्ञानकोविदः ।
चतुर्विंशतिकान्प्रश्नान्पृष्ट्वा वेदस्य पार्थिव ॥ ०२७ ॥

पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तथा ॥ ०२७ ॥

विश्वाविश्वं तथाश्वाश्वं मित्रं वरुणमेव च ।

ज्ञानं ज्ञेयं तथाज्ञो ज्ञः कस्तपा अतपास्तथा ॥ ०२८ ॥

सूर्यादः सूर्य इति च विद्याविद्ये तथैव च ॥ ०२८ ॥

वेद्यावेद्यं तथा राजन्नचलं चलमेव च ।
अपूर्वमक्षयं क्षय्यमेतत्प्रश्नमनुत्तमम् ॥ ०२९ ॥

अथोक्तश्च मया राजन्राजा गन्धर्वसत्तमः ।
पृष्टवाननुपूर्वेण प्रश्नमुत्तममर्थवत् ॥ ०३० ॥

मुहूर्तं मृष्यतां तावद्यावदेनं विचिन्तये ।
बाढमित्येव कृत्वा स तूष्णीं गन्धर्व आस्थितः ॥ ०३१ ॥

ततोऽन्वचिन्तयमहं भूयो देवीं सरस्वतीम् ।
मनसा स च मे प्रश्नो दध्नो घृतमिवोद्धृतम् ॥ ०३२ ॥

तत्रोपनिषदं चैव परिशेषं च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥ ०३३ ॥

चतुर्थी राजशार्दूल विद्यैषा सांपरायिकी ।
उदीरिता मया तुभ्यं पञ्चविंशेऽधि धिष्ठिता ॥ ०३४ ॥

अथोक्तस्तु मया राजन्राजा विश्वावसुस्तदा ।
श्रूयतां यद्भवानस्मान्प्रश्नं संपृष्टवानिह ॥ ०३५ ॥

विश्वाविश्वेति यदिदं गन्धर्वेन्द्रानुपृच्छसि ।
विश्वाव्यक्तं परं विद्याद्भूतभव्यभयङ्करम् ॥ ०३६ ॥

त्रिगुणं गुणकर्तृत्वादविश्वो निष्कलस्तथा ।
अश्वस्तथैव मिथुनमेवमेवानुदृश्यते ॥ ०३७ ॥

अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणम् ।
तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ॥ ०३८ ॥

ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं निष्कलमेव च ।
अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कल उच्यते ॥ ०३९ ॥

कस्तपा अतपाः प्रोक्तः कोऽसौ पुरुष उच्यते ।
तपाः प्रकृतिरित्याहुरतपा निष्कलः स्मृतः ॥ ०४० ॥

तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ।
चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु ॥ ०४१ ॥

चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः ।
अक्षेपसर्गयोःकर्ता निश्चलः पुरुषः स्मृतः ॥ ०४२ ॥

अजावुभावप्रजौ च अक्षयौ चाप्युभावपि ।
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयाः ॥ ०४३ ॥

अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम् ।
अक्षयं पुरुषं प्राहुः क्षयो ह्यस्य न विद्यते ॥ ०४४ ॥

गुणक्षयत्वात्प्रकृतिः कर्तृत्वादक्षयं बुधाः ।
एषा तेऽऽन्वीक्षिकी विद्या चतुर्थी सांपरायिकी ॥ ०४५ ॥

विद्योपेतं धनं कृत्वा कर्मणा नित्यकर्मणि ।
एकान्तदर्शना वेदाः सर्वे विश्वावसो स्मृताः ॥ ०४६ ॥

जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम ॥ ०४७ ॥

साङ्गोपाङ्गानपि यदि पञ्च वेदानधीयते ।

वेदवेद्यं न जानीते वेदभारवहो हि सः ॥ ०४८ ॥

यो घृतार्थी खरीक्षीरं मथेद्गन्धर्वसत्तम ।
विष्ठां तत्रानुपश्येत न मण्डं नापि वा घृतम् ॥ ०४९ ॥

तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति ।
स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः ॥ ०५० ॥

द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना ।
यथास्य जन्मनिधने न भवेतां पुनः पुनः ॥ ०५१ ॥

अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम् ।
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ॥ ०५२ ॥

यदा तु पश्यतेऽत्यन्तमहन्यहनि काश्यप ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ ०५३ ॥

अन्यश्च शश्वदव्यक्तस्तथान्यः पञ्चविंशकः ।
तस्य द्वावनुपश्येत तमेकमिति साधवः ॥ ०५४ ॥

तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्योगाः सांख्याश्च परमैषिणः ॥ ०५५ ॥

विश्वावसुरुवाच ॥

पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।
तथा तन्न तथा वेति तद्भवान्वक्तुमर्हति ॥ ०५६ ॥

जैगीषव्यस्यासितस्य देवलस्य च मे श्रुतम् ।
पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः ॥ ०५७ ॥

भिक्षोः पञ्चशिखस्याथ कपिलस्य शुकस्य च ।
गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ॥ ०५८ ॥

नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः ।
सनत्कुमारस्य ततः शुक्रस्य च महात्मनः ॥ ०५९ ॥

कश्यपस्य पितुश्चैव पूर्वमेव मया श्रुतम् ।
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ॥ ०६० ॥

दैवतेभ्यः पितृभ्यश्च दैत्येभ्यश्च ततस्ततः ।
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ॥ ०६१ ॥

तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण ।
भवान्प्रबर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान् ॥ ०६२ ॥

न तवाविदितं किञ्चिद्भवाञ्श्रुतिनिधिः स्मृतः ।
कथ्यते देवलोके च पितृलोके च ब्राह्मण ॥ ०६३ ॥

ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः ।
पतिश्च तपतां शश्वदादित्यस्तव भाषते ॥ ०६४ ॥

सांख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च ।
तथैव योगज्ञानं च याज्ञवल्क्य विशेषतः ॥ ०६५ ॥

निःसंदिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम् ।
श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ॥ ०६६ ॥

याज्ञवल्क्य उवाच ॥

कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञाससि च मां राजंस्तन्निबोध यथाश्रुतम् ॥ ०६७ ॥

अबुध्यमानां प्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ॥ ०६८ ॥

अनेनाप्रतिबोधेन प्रधानं प्रवदन्ति तम् ।
सांख्ययोगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥ ०६९ ॥

पश्यंस्तथैवापश्यंश्च पश्यत्यन्यस्तथानघ ।
षड्विंशः पञ्चविंशं च चतुर्विंशं च पश्यति ॥ ०७० ॥

न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ॥ ०७० ॥

पञ्चविंशोऽभिमन्येत नान्योऽस्ति परमो मम ।
न चतुर्विंशकोऽग्राह्यो मनुजैर्ज्ञानदर्शिभिः ॥ ०७१ ॥

मत्स्येवोदकमन्वेति प्रवर्तति प्रवर्तनात् ।
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते ॥ ०७२ ॥

सस्नेहः सहवासाच्च साभिमानश्च नित्यशः ॥ ०७२ ॥

स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य ममत्वेनाभिसंवृतः ॥ ०७३ ॥

यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजः ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ ०७४ ॥

अन्यश्च राजन्नवरस्तथान्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥ ०७५ ॥

तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्भीता योगाः सांख्याश्च काश्यप ॥ ०७६ ॥

षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः ॥ ०७६ ॥

यदा स केवलीभूतः षड्विंशमनुपश्यति ।
तदा स सर्वविद्विद्वान्न पुनर्जन्म विन्दति ॥ ०७७ ॥

एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् ॥ ०७८ ॥

पश्यापश्यं योऽनुपश्येत्क्षेमं तत्त्वं च काश्यप ।
केवलाकेवलं चाद्यं पञ्चविंशात्परं च यत् ॥ ०७९ ॥

विश्वावसुरुवाच ॥

तथ्यं शुभं चैतदुक्तं त्वया भोः ; सम्यक्क्षेम्यं देवताद्यं यथावत् ।
स्वस्त्यक्षयं भवतश्चास्तु नित्यं ; बुद्ध्या सदा बुद्धियुक्तं नमस्ते ॥ ०८० ॥

याज्ञवल्क्य उवाच ॥

एवमुक्त्वा संप्रयातो दिवं स ; विभ्राजन्वै श्रीमता दर्शनेन ।
तुष्टश्च तुष्ट्या परयाभिनन्द्य ; प्रदक्षिणं मम कृत्वा महात्मा ॥ ०८१ ॥

ब्रह्मादीनां खेचराणां क्षितौ च ; ये चाधस्तात्संवसन्ते नरेन्द्र ।
तत्रैव तद्दर्शनं दर्शयन्वै ; सम्यक्क्षेम्यं ये पथं संश्रिता वै ॥ ०८२ ॥

सांख्याः सर्वे सांख्यधर्मे रताश्च ; तद्वद्योगा योगधर्मे रताश्च ।
ये चाप्यन्ये मोक्षकामा मनुष्या ;स्तेषामेतद्दर्शनं ज्ञानदृष्टम् ॥ ०८३ ॥

ज्ञानान्मोक्षो जायते पूरुषाणां ; नास्त्यज्ञानादेवमाहुर्नरेन्द्र ।
तस्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं ; येनात्मानं मोक्षयेज्जन्ममृत्योः ॥ ०८४ ॥

प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा ; वैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं ; न श्रद्धिनं जन्ममृत्यू विशेताम् ॥ ०८५ ॥

सर्वे वर्णा ब्राह्मणा ब्रह्मजाश्च ; सर्वे नित्यं व्याहरन्ते च ब्रह्म ।
तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि ; सर्वं विश्वं ब्रह्म चैतत्समस्तम् ॥ ०८६ ॥

ब्रह्मास्यतो ब्राह्मणाः संप्रसूता ; बाहुभ्यां वै क्षत्रियाः संप्रसूताः ।
नाभ्यां वैश्याः पादतश्चापि शूद्राः ; सर्वे वर्णा नान्यथा वेदितव्याः ॥ ०८७ ॥

अज्ञानतः कर्मयोनिं भजन्ते ; तां तां राजंस्ते यथा यान्त्यभावम् ।
तथा वर्णा ज्ञानहीनाः पतन्ते ; घोरादज्ञानात्प्राकृतं योनिजालम् ॥ ०८८ ॥

तस्माज्ज्ञानं सर्वतो मार्गितव्यं ; सर्वत्रस्थं चैतदुक्तं मया ते ।
तस्थौ ब्रह्मा तस्थिवांश्चापरो य ;स्तस्मै नित्यं मोक्षमाहुर्द्विजेन्द्राः ॥ ०८९ ॥

यत्ते पृष्टं तन्मया चोपदिष्टं ; याथातथ्यं तद्विशोको भवस्व ।
राजन्गच्छस्वैतदर्थस्य पारं ; सम्यक्प्रोक्तं स्वस्ति तेऽस्त्वत्र नित्यम् ॥ ०९० ॥

भीष्म उवाच ॥

स एवमनुशास्तस्तु याज्ञवल्क्येन धीमता ।
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ॥ ०९१ ॥

गते मुनिवरे तस्मिन्कृते चापि प्रदक्षिणे ।
दैवरातिर्नरपतिरासीनस्तत्र मोक्षवित् ॥ ०९२ ॥

गोकोटिं स्पर्शयामास हिरण्यस्य तथैव च ।
रत्नाञ्जलिमथैकं च ब्राह्मणेभ्यो ददौ तदा ॥ ०९३ ॥

विदेहराज्यं च तथा प्रतिष्ठाप्य सुतस्य वै ।
यतिधर्ममुपासंश्चाप्यवसन्मिथिलाधिपः ॥ ०९४ ॥

सांख्यज्ञानमधीयानो योगशास्त्रं च कृत्स्नशः ।
धर्माधर्मौ च राजेन्द्र प्राकृतं परिगर्हयन् ॥ ०९५ ॥

अनन्तमिति कृत्वा स नित्यं केवलमेव च ।
धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ॥ ०९६ ॥

जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत् ।
ब्रह्माव्यक्तस्य कर्मेदमिति नित्यं नराधिप ॥ ०९७ ॥

पश्यन्ति योगाः सांख्याश्च स्वशास्त्रकृतलक्षणाः ।
इष्टानिष्टवियुक्तं हि तस्थौ ब्रह्म परात्परम् ॥ ०९८ ॥

नित्यं तमाहुर्विद्वांसः शुचिस्तस्माच्छुचिर्भव ॥ ०९८ ॥

दीयते यच्च लभते दत्तं यच्चानुमन्यते ।
ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह ॥ ०९९ ॥

ददात्यव्यक्तमेवैतत्प्रतिगृह्णाति तच्च वै ॥ ०९९ ॥

आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्त्वत्तोऽधिको भवेत् ।
एवं मन्यस्व सततमन्यथा मा विचिन्तय ॥ १०० ॥

यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः ।
तेन तीर्थानि यज्ञाश्च सेवितव्याविपश्चिता ॥ १०१ ॥

न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन ।
लभतेऽव्यक्तसंस्थानं ज्ञात्वाव्यक्तं महीपते ॥ १०२ ॥

तथैव महतः स्थानमाहङ्कारिकमेव च ।
अहङ्कारात्परं चापि स्थानानि समवाप्नुयात् ॥ १०३ ॥

ये त्वव्यक्तात्परं नित्यं जानते शास्त्रतत्पराः ।
जन्ममृत्युवियुक्तं च वियुक्तं सदसच्च यत् ॥ १०४ ॥

एतन्मयाप्तं जनकात्पुरस्ता ;त्तेनापि चाप्तं नृप याज्ञवल्क्यात् ।
ज्ञानं विशिष्टं न तथा हि यज्ञा ; ज्ञानेन दुर्गं तरते न यज्ञैः ॥ १०५ ॥

दुर्गं जन्म निधनं चापि राज ;न्न भूतिकं ज्ञानविदो वदन्ति ।
यज्ञैस्तपोभिर्नियमैर्व्रतैश्च ; दिवं समासाद्य पतन्ति भूमौ ॥ १०६ ॥

तस्मादुपासस्व परं महच्छुचि ; शिवं विमोक्षं विमलं पवित्रम् ।
क्षेत्रज्ञवित्पार्थिव ज्ञानयज्ञ ;मुपास्य वै तत्त्वमृषिर्भविष्यसि ॥ १०७ ॥

उपनिषदमुपाकरोत्तदा वै ; जनकनृपस्य पुरा हि याज्ञवल्क्यः ।
यदुपगणितशाश्वताव्ययं त ;च्छुभममृतत्वमशोकमृच्छतीति ॥ १०८ ॥

---

# पञ्चशिखजनकसंवादः

## अध्याय ३०७

युधिष्ठिर उवाच ॥

ऐश्वर्यं वा महत्प्राप्य धनं वा भरतर्षभ ।
दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ॥ ००१ ॥

तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा कैर्नोपैति जरान्तकौ ॥ ००२ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ॥ ००३ ॥

वैदेहो जनको राजा महर्षिं वेदवित्तमम् ।
पर्यपृच्छत्पञ्चशिखं छिन्नधर्मार्थसंशयम् ॥ ००४ ॥

केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ ।
तपसा वाथ बुद्ध्या वा कर्मणा वा श्रुतेन वा ॥ ००५ ॥

एवमुक्तः स वैदेहं प्रत्युवाच परोक्षवित् ।
निवृत्तिर्नैतयोरस्ति नानिवृत्तिः कथञ्चन ॥ ००६ ॥

न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ॥ ००७ ॥

सर्वभूतसमुच्छेदः स्रोतसेवोह्यते सदा ।
उह्यमानं निमज्जन्तमप्लवे कालसागरे ॥ ००८ ॥

जरामृत्युमहाग्राहे न कश्चिदभिपद्यते ॥ ००८ ॥

नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् ।
पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ ००९ ॥

नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ॥ ००९ ॥

क्षिप्यन्ते तेन तेनैव निष्टनन्तः पुनः पुनः ।
कालेन जाता जाता हि वायुनेवाभ्रसञ्चयाः ॥ ०१० ॥

जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ ०११ ॥

एवंभूतेषु भूतेषु नित्यभूताध्रुवेषु च ।
कथं हृष्येत जातेषु मृतेषु च कथं ज्वरेत् ॥ ०१२ ॥

कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा ।
कस्मिन्स्थितः क्व भविता कस्मात्किमनुशोचसि ॥ ०१३ ॥

द्रष्टा स्वर्गस्य न ह्यस्ति तथैव नरकस्य च ।
आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च ॥ ०१४ ॥

---

# सुलभाजनकसंवादः

## अध्याय ३०८

युधिष्ठिर उवाच ॥

अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम ।
कः प्राप्तो विनयं बुद्ध्या मोक्षतत्त्वं वदस्व मे ॥ ००१ ॥

संन्यस्यते यथात्मायं संन्यस्तात्मा यथा च यः ।
परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ॥ ००२ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

जनकस्य च संवादं सुलभायाश्च भारत ॥ ००३ ॥

संन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा ।
मैथिलो जनको नाम धर्मध्वज इति श्रुतः ॥ ००४ ॥

स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतागमः ।
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ ००५ ॥

तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्तताम् ।
लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वर ॥ ००६ ॥

अथ धर्मयुगे तस्मिन्योगधर्ममनुष्ठिता ।
महीमनुचचारैका सुलभा नाम भिक्षुकी ॥ ००७ ॥

तया जगदिदं सर्वमटन्त्या मिथिलेश्वरः ।
तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ ००८ ॥

सा सुसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया ।
दर्शने जातसङ्कल्पा जनकस्य बभूव ह ॥ ००९ ॥

ततः सा विप्रहायाथ पूर्वरूपं हि योगतः ।
अबिभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥ ०१० ॥

चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी ।
विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ॥ ०११ ॥

सा प्राप्य मिथिलां रम्यां समृद्धजनसङ्कुलाम् ।
भैक्षचर्यापदेशेन ददर्श मिथिलेश्वरम् ॥ ०१२ ॥

राजा तस्याः परं दृष्ट्वा सौकुमार्यं वपुस्तथा ।
केयं कस्य कुतो वेति बभूवागतविस्मयः ॥ ०१३ ॥

ततोऽस्याः स्वागतं कृत्वा व्यादिश्य च वरासनम् ।
पूजितां पादशौचेन वरान्नेनाप्यतर्पयत्  ॥ ०१४  ॥

अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतम् ।
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकी  ॥ ०१५  ॥

सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया ।
सत्त्वं सत्त्वेन योगज्ञा प्रविवेश महीपते  ॥ ०१६  ॥

नेत्राभ्यां नेत्रयोरस्य रश्मीन्संयोज्य रश्मिभिः ।
सा स्म सञ्चोदयिष्यन्तं योगबन्धैर्बबन्ध ह  ॥ ०१७  ॥

जनकोऽप्युत्स्मयन्राजा भावमस्या विशेषयन् ।
प्रतिजग्राह भावेन भावमस्या नृपोत्तमः  ॥ ०१८  ॥

तदेकस्मिन्नधिष्ठाने संवादः श्रूयतामयम् ।
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके  ॥ ०१९  ॥

भगवत्याः क्व चर्येयं कृता क्व च गमिष्यसि ।
कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः  ॥ ०२०  ॥

श्रुते वयसि जातौ च सद्भावो नाधिगम्यते ।
एष्वर्थेषूत्तरं तस्मात्प्रवेद्यं सत्समागमे  ॥ ०२१  ॥

छत्रादिषु विशेषेषु मुक्तं मां विद्धि सर्वशः ।
स त्वां संमन्तुमिच्छामि मानार्हासि मता हि मे  ॥ ०२२  ॥

यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा ।
यस्य नान्यः प्रवक्तास्ति मोक्षे तमपि मे श्रृणु  ॥ ०२३  ॥

पाराशर्यसगोत्रस्य वृद्धस्य सुमहात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमसंमतः ॥ ०२४ ॥

सांख्यज्ञाने तथा योगे महीपालविधौ तथा ।
त्रिविधे मोक्षधर्मेऽस्मिन्गताध्वा छिन्नसंशयः ॥ ०२५ ॥

स यथाशास्त्रदृष्टेन मार्गेणेह परिव्रजन् ।
वार्षिकांश्चतुरो मासान्पुरा मयि सुखोषितः ॥ ०२६ ॥

तेनाहं सांख्यमुख्येन सुदृष्टार्थेन तत्त्वतः ।
श्रावितस्त्रिविधं मोक्षं न च राज्याद्विचालितः ॥ ०२७ ॥

सोऽहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम् ।
मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥ ०२८ ॥

वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ ०२९ ॥

ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वंद्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ ०३० ॥

सेयं परमिका बुद्धिः प्राप्ता निर्द्वंद्वता मया ।
इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ ०३१ ॥

यथा क्षेत्रं मृदूभूतमद्भिराप्लावितं तथा ।
जनयत्यङ्कुरं कर्म नृणां तद्वत्पुनर्भवम् ॥ ०३२ ॥

यथा चोत्तापितं बीजं कपाले यत्र तत्र वा ।
प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ॥ ०३३ ॥

तद्वद्भगवता तेन शिखाप्रोक्तेन भिक्षुणा ।

ज्ञानं कृतमबीजं मे विषयेषु न जायते ॥ ०३४ ॥

नाभिषज्जति कस्मिंश्चिन्नानर्थे न परिग्रहे ।
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागदोषयोः ॥ ०३५ ॥

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् ।
सव्यं वास्या च यस्तक्षेत्समावेतावुभौ मम ॥ ०३६ ॥

सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ ०३७ ॥

मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महर्षिभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥ ०३८ ॥

ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥ ०३९ ॥

प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥ ०४० ॥

यमे च नियमे चैव द्वेषे कामे परिग्रहे ।
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ॥ ०४१ ॥

त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन केनचित् ।
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ॥ ०४२ ॥

येन येन हि यस्यार्थः कारणेनेह कस्यचित् ।
तत्तदालम्बते द्रव्यं सर्वः स्वे स्वे परिग्रहे ॥ ०४३ ॥

दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरम् ।
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥ ०४४ ॥

आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मनि ।
राजर्षिभिक्षुकाचार्या मुच्यन्ते केन हेतुना ॥ ०४५ ॥

अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम् ।
मुच्यन्ते किं न मुच्यन्ते पदे परमके स्थिताः ॥ ०४६ ॥

काषायधारणं मौण्ड्यं त्रिविष्टब्धः कमण्डलुः ।
लिङ्गान्यत्यर्थमेतानि न मोक्षायेति मे मतिः ॥ ०४७ ॥

यदि सत्यपि लिङ्गेऽस्मिञ्ज्ञानमेवात्र कारणम् ।
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥ ०४८ ॥

अथ वा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः ।
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ ०४९ ॥

आकिञ्चन्ये न मोक्षोऽस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥ ०५० ॥

तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे ।
बन्धनायतनेष्वेषु विद्धबन्धे पदे स्थितम् ॥ ०५१ ॥

राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः ।
मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ॥ ०५२ ॥

सोऽहमेवङ्गतो मुक्तो जातास्थस्त्वयि भिक्षुकि ।
अयथार्थो हि ते वर्णो वक्ष्यामि शृणु तन्मम ॥ ०५३ ॥

सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः ।
तवैतानि समस्तानि नियमश्चेति संशयः ॥ ०५४ ॥

यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम् ।
मुक्तोऽयं स्यान्न वेत्यस्माद्धर्षितो मत्परिग्रहः ॥ ०५५ ॥

न च कामसमायुक्ते मुक्तेऽप्यस्ति त्रिदण्डकम् ।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥ ०५६ ॥

मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः ।
आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् ॥ ०५७ ॥

प्रवेशस्ते कृतः केन मम राष्ट्रे पुरे तथा ।
कस्य वा संनिसर्गात्त्वं प्रविष्टा हृदयं मम ॥ ०५८ ॥

वर्णप्रवरमुख्यासि ब्राह्मणी क्षत्रियो ह्यहम् ।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करम् ॥ ०५९ ॥

वर्तसे मोक्षधर्मेषु गार्हस्थ्ये त्वहमाश्रमे ।
अयं चापि सुकष्टस्ते द्वितीयोऽऽश्रमसङ्करः ॥ ०६० ॥

सगोत्रां वासगोत्रां वा न वेद त्वां न वेत्थ माम् ।
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसङ्करः ॥ ०६१ ॥

अथ जीवति ते भर्ता प्रोषितोऽप्यथ वा क्वचित् ।
अगम्या परभार्येति चतुर्थो धर्मसङ्करः ॥ ०६२ ॥

सा त्वमेतान्यकार्याणि कार्यापेक्षा व्यवस्यसि ।
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ॥ ०६३ ॥

अथ वापि स्वतन्त्रासि स्वदोषेणेह केनचित् ।
यदि किञ्चिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ॥ ०६४ ॥

इदमन्यत्तृतीयं ते भावस्पर्शविघातकम् ।

दुष्टाया लक्ष्यते लिङ्गं प्रवक्तव्यं प्रकाशितम्  ॥ ०६५  ॥

न मय्येवाभिसंधिस्ते जयैषिण्या जये कृतः ।
येयं मत्परिषत्कृत्स्ना जेतुमिच्छसि तामपि  ॥ ०६६  ॥

तथा ह्येवं पुनश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि ।
मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च  ॥ ०६७  ॥

सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता ।
भूयः सृजसि योगास्त्रं विषामृतमिवैकधा  ॥ ०६८  ॥

इच्छतोर्हि द्वयोर्लाभः स्त्रीपुंसोरमृतोपमः ।
अलाभश्चाप्यरक्तस्य सोऽत्र दोषो विषोपमः  ॥ ०६९  ॥

मा स्प्राक्षीः सधु जानीष्व स्वशास्त्रमनुपालय ।
कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम  ॥ ०७०  ॥

एतत्सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितुम्  ॥ ०७०  ॥

सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः ।
तत्त्वं सत्रप्रतिच्छन्ना मयि नार्हसि गूहितुम्  ॥ ०७१  ॥

न राजानं मृषा गच्छेन्न द्विजातिं कथञ्चन ।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः  ॥ ०७२  ॥

राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम् ।
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम्  ॥ ०७३  ॥

अत एतैर्बलैरेते बलिनः स्वार्थमिच्छता ।
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम्  ॥ ०७४  ॥

सा त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः ।

कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ॥ ०७५ ॥

इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसैः ।
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ॥ ०७६ ॥

उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना ।
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ॥ ०७७ ॥

नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः ।
अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ॥ ०७८ ॥

सौक्ष्म्यं संख्याक्रमौ चोभौ निर्णयः सप्रयोजनः ।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ ०७९ ॥

एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां सुलक्षणम् ।
शृणु संसार्यमाणानां पदार्थैः पदवाक्यतः ॥ ०८० ॥

ज्ञानं ज्ञेयेषु भिन्नेषु यथाभेदेन वर्तते ।
तत्रातिशयिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्तते ॥ ०८१ ॥

दोषाणां च गुणानां च प्रमाणं प्रविभागशः ।
कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम् ॥ ०८२ ॥

इदं पूर्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितम् ।
क्रमयोगं तमप्याहुर्वाक्यं वाक्यविदो जनाः ॥ ०८३ ॥

धर्मार्थकाममोक्षेषु प्रतिज्ञाय विशेषतः ।
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ ०८४ ॥

इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते ।
तत्र या नृपते वृत्तिस्तत्प्रयोजनमिष्यते ॥ ०८५ ॥

तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप ।
एकार्थसमवेतानि वाक्यं मम निशामय ॥ ०८६ ॥

उपेतार्थमभिन्नार्थं नापवृत्तं न चाधिकम् ।
नाश्लक्ष्णं न च संदिग्धं वक्ष्यामि परमं तव ॥ ०८७ ॥

न गुर्वक्षरसंबद्धं पराङ्मुखमुखं न च ।
नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥ ०८८ ॥

न न्यूनं कष्टशब्दं वा व्युत्क्रमाभिहितं न च ।
न शेषं नानुकल्पेन निष्कारणमहेतुकम् ॥ ०८९ ॥

कामात्क्रोधाद्भयाल्लोभाद्दैन्यादानार्यकात्तथा ।
ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथञ्चन ॥ ०९० ॥

वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप ।
सममेति विवक्षायां तदा सोऽर्थः प्रकाशते ॥ ०९१ ॥

वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते ।
स्वार्थमाह परार्थं वा तदा वाक्यं न रोहति ॥ ०९२ ॥

अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः ।
विशङ्का जायते तस्मिन्वाक्यं तदपि दोषवत् ॥ ०९३ ॥

यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते ।
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥ ०९४ ॥

तदर्थवदिदं वाक्यमुपेतं वाक्यसंपदा ।
अविक्षिप्तमना राजन्नेकाग्रः श्रोतुमर्हसि ॥ ०९५ ॥

कासि कस्य कुतो वेति त्वयाहमभिचोदिता ।
तत्रोत्तरमिदं वाक्यं राजन्नेकमनाः श्रृणु ॥ ०९६ ॥

यथा जतु च काष्ठं च पांसवश्चोदबिन्दुभिः ।
सुश्लिष्टानि तथा राजन्प्राणिनामिह संभवः ॥ ०९७ ॥

शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च ।
पृथगात्मा दशात्मानः संश्लिष्टा जतुकाष्ठवत् ॥ ०९८ ॥

न चैषां चोदना काचिदस्तीत्येष विनिश्चयः ।
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ॥ ०९९ ॥

न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्तते ।
तथैव व्यभिचारेण न वर्तन्ते परस्परम् ॥ १०० ॥

संश्लिष्टा नाभिजायन्ते यथाप इह पांसवः ॥ १०० ॥

बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे श्रृणु ।
रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ॥ १०१ ॥

यथैवात्र तथान्येषु ज्ञानज्ञेयेषु हेतवः ॥ १०१ ॥

ज्ञानज्ञेयान्तरे तस्मिन्मनो नामापरो गुणः ।
विचारयति येनायं निश्चये साध्वसाधुनी ॥ १०२ ॥

द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः ।
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति ॥ १०३ ॥

अथ द्वादशके तस्मिन्सत्त्वं नामापरो गुणः ।
महासत्त्वोऽल्पसत्त्वो वा जन्तुर्येनानुमीयते ॥ १०४ ॥

क्षेत्रज्ञ इति चाप्यन्यो गुणस्तत्र चतुर्दशः ।
ममायमिति येनायं मन्यते न च मन्यते ॥ १०५ ॥

अथ पञ्चदशो राजन्गुणस्तत्रापरः स्मृतः ।
पृथक्कलासमूहस्य सामग्र्यं तदिहोच्यते ॥ १०६ ॥

गुणस्त्वेवापरस्तत्र संघात इति षोडशः ।
आकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन्समाश्रितौ ॥ १०७ ॥

सुखदुःखे जरामृत्यू लाभालाभौ प्रियाप्रिये ।
इति चैकोनविंशोऽयं द्वंद्वयोग इति स्मृतः ॥ १०८ ॥

ऊर्ध्वमेकोनविंशत्याः कालो नामापरो गुणः ।
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् ॥ १०९ ॥

विंशकश्चैष संघातो महाभूतानि पञ्च च ।
सदसद्भावयोगौ च गुणावन्यौ प्रकाशकौ ॥ ११० ॥

इत्येवं विंशतिश्चैव गुणाः सप्त च ये स्मृताः ।
विधिः शुक्रं बलं चेति त्रय एते गुणाः परे ॥ १११ ॥

एकविंशश्च दश च कलाः संख्यानतः स्मृताः ।
समग्रा यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ॥ ११२ ॥

अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।
व्यक्तं चासां तथैवान्यः स्थूलदर्शी प्रपश्यति ॥ ११३ ॥

अव्यक्तं यदि वा व्यक्तं द्वयीमथ चतुष्टयीम् ।
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ॥ ११४ ॥

सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता ।

अहं च त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः ॥ ११५ ॥

बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसंभवाः ।
यासामेव निपातेन कललं नाम जायते ॥ ११६ ॥

कललादर्बुदोत्पत्तिः पेशी चाप्यर्बुदोद्भवा ।
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः ॥ ११७ ॥

संपूर्णे नवमे मासे जन्तोर्जातस्य मैथिल ।
जायते नामरूपत्वं स्त्री पुमान्वेति लिङ्गतः ॥ ११८ ॥

जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि ।
कौमाररूपमापन्नं रूपतो नोपलभ्यते ॥ ११९ ॥

कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात् ।
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते ॥ १२० ॥

कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे ।
वर्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥ १२१ ॥

न चैषामप्ययो राज.ण्लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥ १२२ ॥

तस्याप्येवंप्रभावस्य सदश्वस्येव धावतः ।
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः ॥ १२३ ॥

कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः ।
संबन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह ॥ १२४ ॥

यथादित्यान्मणेश्चैव वीरुद्भ्यश्चैव पावकः ।
भवत्येवं समुदयात्कलानामपि जन्तवः ॥ १२५ ॥

आत्मन्येवात्मनात्मानं यथा त्वमनुपश्यसि ।
एवमेवात्मनात्मानमन्यस्मिन्किं न पश्यसि ॥ १२६ ॥

यद्यात्मनि परस्मिंश्च समतामध्यवस्यसि ॥ १२६ ॥

अथ मां कासि कस्येति किमर्थमनुपृच्छसि ।
इदं मे स्यादिदं नेति द्वंद्वैर्मुक्तस्य मैथिल ॥ १२७ ॥

कासि कस्य कुतो वेति वचने किं प्रयोजनम् ॥ १२७ ॥

रिपौ मित्रेऽथ मध्यस्थे विजये संधिविग्रहे ।
कृतवान्यो महीपाल किं तस्मिन्मुक्तलक्षणम् ॥ १२८ ॥

त्रिवर्गे सप्तधा व्यक्तं यो न वेदेह कर्मसु ।
सङ्गवान्यस्त्रिवर्गे च किं तस्मिन्मुक्तलक्षणम् ॥ १२९ ॥

प्रिये चैवाप्रिये चैव दुर्बले बलवत्यपि ।
यस्य नास्ति समं चक्षुः किं तस्मिन्मुक्तलक्षणम् ॥ १३० ॥

तदमुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप ।
सुहृद्भिः स निवार्यस्ते विचित्तस्येव भेषजैः ॥ १३१ ॥

तानि तान्यनुसंदृश्य सङ्गस्थानान्यरिंदम ।
आत्मनात्मनि संपश्येत्किं तस्मिन्मुक्तलक्षणम् ॥ १३२ ॥

इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित् ।
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १३३ ॥

य इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह ।
एकमेव स वै राजा पुरमध्यावसत्युत ॥ १३४ ॥

तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति ।
गृहे शयनमप्येकं निशायां यत्र लीयते ॥ १३५ ॥

शय्यार्धं तस्य चाप्यत्र स्त्रीपूर्वमधितिष्ठति ।
तदनेन प्रसङ्गेन फलेनैवेह युज्यते ॥ १३६ ॥

एवमेवोपभोगेषु भोजनाच्छादनेषु च ।
गुणेषु परिमेयेषु निग्रहानुग्रहौ प्रति ॥ १३७ ॥

परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते ।
संधिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता ॥ १३८ ॥

स्त्रीषु क्रीडाविहारेषु नित्यमस्यास्वतन्त्रता ।
मन्त्रे चामात्यसमितौ कुत एव स्वतन्त्रता ॥ १३९ ॥

यदा त्वाज्ञापयत्यन्यांस्तदास्योक्ता स्वतन्त्रता ।
अवशः कार्यते तत्र तस्मिंस्तस्मिन्गुणे स्थितः ॥ १४० ॥

स्वप्तुकामो न लभते स्वप्तुं कार्यार्थिभिर्जनैः ।
शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः ॥ १४१ ॥

स्नाह्यालभ पिब प्राश जुहुध्यग्नीन्यजेति च ।
वदस्व शृणु चापीति विवशः कार्यते परैः ॥ १४२ ॥

अभिगम्याभिगम्यैनं याचन्ते सततं नराः ।
न चाप्युत्सहते दातुं वित्तरक्षी महाजनात् ॥ १४३ ॥

दाने कोशक्षयो ह्यस्य वैरं चाप्यप्रयच्छतः ।
क्षणेनास्योपवर्तन्ते दोषा वैराग्यकारकाः ॥ १४४ ॥

प्राज्ञाञ्शूरांस्तथैवाढ्यानेकस्थानेऽपि शङ्कते ।
भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते ॥ १४५ ॥

यदा चैते प्रदुष्यन्ति राजन्ये कीर्तिता मया ।
तदैवास्य भयं तेभ्यो जायते पश्य यादृशम् ॥ १४६ ॥

सर्वः स्वे स्वे गृहे राजा सर्वः स्वे स्वे गृहे गृही ।
निग्रहानुग्रहौ कुर्वंस्तुल्यो जनक राजभिः ॥ १४७ ॥

पुत्रा दारास्तथैवात्मा कोशो मित्राणि सञ्चयः ।
परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ १४८ ॥

हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः ।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥ १४९ ॥

अमुक्तो मानसैर्दुःखैरिच्छाद्वेषप्रियोद्भवैः ।
शिरोरोगादिभी रोगैस्तथैव विनिपातिभिः ॥ १५० ॥

द्वंद्वैस्तैस्तैरुपहतः सर्वतः परिशङ्कितः ।
बहुप्रत्यर्थिकं राज्यमुपास्ते गणयन्निशाः ॥ १५१ ॥

तदल्पसुखमत्यर्थं बहुदुःखमसारवत् ।
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् ॥ १५२ ॥

ममेदमिति यच्चेदं पुरं राष्ट्रं च मन्यसे ।
बलं कोशममात्यांश्च कस्यैतानि न वा नृप ॥ १५३ ॥

मित्रामात्यं पुरं राष्ट्रं दण्डः कोशो महीपतिः ।
सप्ताङ्गश्चक्रसंघातो राज्यमित्युच्यते नृप ॥ १५४ ॥

सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः ।

अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥ १५५ ॥

तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते ।
येन यत्सिध्यते कार्यं तत्प्राधान्याय कल्पते ॥ १५६ ॥

सप्ताङ्गश्चापि संघातस्त्रयश्चान्ये नृपोत्तम ।
संभूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥ १५७ ॥

यश्च राजा महोत्साहः क्षत्रधर्मरतो भवेत् ।
स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः ॥ १५८ ॥

नास्त्यसाधारणो राजा नास्ति राज्यमराजकम् ।
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् ॥ १५९ ॥

योऽप्यत्र परमो धर्मः पवित्रं राजराज्ययोः ।
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न विद्यते ॥ १६० ॥

साहमेतानि कर्माणि राज्यदुःखानि मैथिल ।
समर्था शतशो वक्तुमथ वापि सहस्रशः ॥ १६१ ॥

स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे ।
न मामेवंविधां मुक्तामीदृशं वक्तुमर्हसि ॥ १६२ ॥

ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः ।
सोपायः सोपनिषदः सोपासङ्गः सनिश्चयः ॥ १६३ ॥

तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः ।
छत्रादिषु विशेषेषु कथं सङ्गः पुनर्नृप ॥ १६४ ॥

श्रुतं ते न श्रुतं मन्ये मिथ्या वापि श्रुतं श्रुतम् ।
अथ वा श्रुतसङ्काशं श्रुतमन्यच्छ्रुतं त्वया ॥ १६५ ॥

अथापीमासु सञ्ज्ञासु लौकिकीषु प्रतिष्ठसि ।
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो मया ॥ १६६ ॥

सत्त्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया ।
किं तवापकृतं तत्र यदि मुक्तोऽसि सर्वतः ॥ १६७ ॥

नियमो ह्येष धर्मेषु यतीनां शून्यवासिता ।
शून्यमावासयन्त्या च मया किं कस्य दूषितम् ॥ १६८ ॥

न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ ।
न गात्रावयवैरन्यैः स्पृशामि त्वा नराधिप ॥ १६९ ॥

कुले महति जातेन ह्रीमता दीर्घदर्शिना ।
नैतत्सदसि वक्तव्यं सद्वासद्वा मिथः कृतम् ॥ १७० ॥

ब्राह्मणा गुरवश्चेमे तथामात्या गुरूत्तमाः ।
त्वं चाथ गुरुरप्येषामेवमन्योन्यगौरवम् ॥ १७१ ॥

तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता ।
स्त्रीपुंसोः समवायोऽयं त्वया वाच्यो न संसदि ॥ १७२ ॥

यथा पुष्करपर्णस्थं जलं तत्पर्णसंस्थितम् ।
तिष्ठत्यस्पृशती तद्वत्त्वयि वत्स्यामि मैथिल ॥ १७३ ॥

यदि वाप्यस्पृशन्त्या मे स्पर्शं जानासि कञ्चन ।
ज्ञानं कृतमबीजं ते कथं तेनेह भिक्षुणा ॥ १७४ ॥

स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं नावाप्य दुर्विदम् ।
उभयोरन्तराले च वर्तसे मोक्षवातिकः ॥ १७५ ॥

न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः ।
भावाभावसमायोगे जायते वर्णसङ्करः ॥ १७६ ॥

वर्णाश्रमपृथक्त्वे च दृष्टार्थस्यापृथक्त्विनः ।
नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्प्रवर्तते ॥ १७७ ॥

पाणौ कुण्डं तथा कुण्डे पयः पयसि मक्षिकाः ।
आश्रिताश्रययोगेन पृथक्त्वेनाश्रया वयम् ॥ १७८ ॥

न तु कुण्डे पयोभावः पयश्चापि न मक्षिकाः ।
स्वयमेवाश्रयन्त्येते भावा न तु पराश्रयम् ॥ १७९ ॥

पृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च ।
परस्परपृथक्त्वाच्च कथं ते वर्णसङ्करः ॥ १८० ॥

नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा ।
तव राजन्सवर्णास्मि शुद्धयोनिरविप्लुता ॥ १८१ ॥

प्रधानो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ॥ १८२ ॥

द्रोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः ।
मम सत्रेषु पूर्वेषां चिता मघवता सह ॥ १८३ ॥

साहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे ।
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ १८४ ॥

नास्मि सत्रप्रतिच्छन्ना न परस्वाभिमानिनी ।
न धर्मसङ्करकरी स्वधर्मेऽस्मि धृतव्रता ॥ १८५ ॥

नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्यप्रवादिनी ।

नासमीक्ष्यागता चाहं त्वत्सकाशं जनाधिप ॥ १८६ ॥

मोक्षे ते भावितां बुद्धिं श्रुत्वाहं कुशलैषिणी ।
तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ॥ १८७ ॥

न वर्गस्था ब्रवीम्येतत्स्वपक्षपरपक्षयोः ।
मुक्तो न मुच्यते यश्च शान्तो यश्च न शाम्यति ॥ १८८ ॥

यथा शून्ये पुरागारे भिक्षुरेकां निशां वसेत् ।
तथा हि त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् ॥ १८९ ॥

साहमासनदानेन वागातिथ्येन चार्चिता ।
सुप्ता सुशरणा प्रीता श्वो गमिष्यामि मैथिल ॥ १९० ॥

इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च ।
श्रुत्वा नाधिजगौ राजा किञ्चिदन्यदतः परम् ॥ १९१ ॥

---

# यावकाध्यायः (द्वैपायनशुकसंवादः)

## अध्याय ३०९

युधिष्ठिर उवाच ॥

कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ।
एतदिच्छामि कौरव्य श्रोतुं कौतूहलं हि मे ॥ ००१ ॥

भीष्म उवाच ॥

प्राकृतेन सुवृत्तेन चरन्तमकुतोभयम् ।
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम्  ॥ ००२  ॥

धर्मं पुत्र निषेवस्व सुतीक्ष्णौ हि हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः  ॥ ००३  ॥

सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत्परिपालय  ॥ ००४  ॥

सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य संश्रय  ॥ ००५  ॥

फेनपात्रोपमे देहे जीवे शकुनिवत्स्थिते ।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक  ॥ ००६  ॥

अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे  ॥ ००७  ॥

गण्यमानेषु वर्षेषु क्षीयमाणे तथायुषि ।
जीविते शिष्यमाणे च किमुत्थाय न धावसि  ॥ ००८  ॥

ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः  ॥ ००९  ॥

धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयातापि पीड्यते  ॥ ०१०  ॥

ये तु तुष्टाः सुनियताः सत्यागमपरायणाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च  ॥ ०११  ॥

उपधार्य मतं तेषां वृद्धानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ ०१२ ॥

अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः ।
सर्वभक्षा न पश्यन्ति कर्मभूमिं विचेतसः ॥ ०१३ ॥

धर्मनिःश्रेणिमास्थाय किञ्चित्किञ्चित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे ॥ ०१४ ॥

नास्तिकं भिन्नमर्यादं कूलपातमिवास्थिरम् ।
वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धतम् ॥ ०१५ ॥

कामं क्रोधं च मृत्युं च पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ०१६ ॥

मृत्युनाभ्याहते लोके जरया परिपीडिते ।
अमोघासु पतन्तीषु धर्मयानेन संतर ॥ ०१७ ॥

तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।
निर्वृतिं लभसे कस्मादकस्मान्मृत्युनाशितः ॥ ०१८ ॥

सञ्चिन्वानकमेवैनं कामानामवितृप्तकम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ०१९ ॥

क्रमशः सञ्चितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् ॥ ०२० ॥

संपतन्देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥ ०२१ ॥

ब्राह्मणस्य हि देहोऽयं न कामार्थाय जायते ।

इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम्  ॥ ०२२  ॥

ब्राह्मण्यं बहुभिरवाप्यते तपोभि ;स्तल्लब्ध्वा न परिपणेन हेडितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः ; क्षेमार्थी कुशलपरः सदा यतस्व  ॥ ०२३
॥

अव्यक्तप्रकृतिरयं कलाशरीरः ; सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा ।
ऋत्वास्यः समबलशुक्लकृष्णनेत्रो ; मांसाङ्गो द्रवति वयोहयो नराणाम्  ॥ ०२४
॥

तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं ; गच्छन्तं सततमिहाव्यपेक्षमाणम् ।
चक्षुस्ते यदि न परप्रणेतृनेयं ; धर्मे ते भवतु मनः परं निशम्य  ॥ ०२५  ॥

येऽमी तु प्रचलितधर्मकामवृत्ताः ; क्रोशन्तः सततमनिष्टसंप्रयोगाः ।
क्लिश्यन्ते परिगतवेदनाशरीरा ; बह्वीभिः सुभृशमधर्मवासनाभिः  ॥ ०२६  ॥

राजा धर्मपरः सदा शुभगोप्ता ; समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुविधमपि चरतः प्रदिशति ; सुखमनुपगतं निरवद्यम्  ॥ ०२७  ॥

श्वानो भीषणायोमुखानि वयांसि ; वडगृध्रकुलपक्षिणां च संघाः ।
नरां कदने रुधिरपा गुरुवचन ;नुदमुपरतं विशसन्ति  ॥ ०२८  ॥

मर्यादा नियताः स्वयंभुवा य इहेमाः ; प्रभिनत्ति दशगुणा मनोनुगत्वात् ।
निवसति भृशमसुखं पितृविषय ;विपिनमवगाह्य स पापः  ॥ ०२९  ॥

यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः ; सततनिकृतिवञ्चनारतिः स्यात् ।
उपनिधिभिरसुखकृत्स परमनिरयगो ; भृशमसुखमनुभवति दुष्कृतकर्मा  ॥
०३०  ॥

उष्णां वैतरणीं महानदी ;मवगाढोऽसिपत्रवनभिन्नगात्रः ।
परशुवनशयो निपतितो ; वसति च महानिरये भृशार्तः  ॥ ०३१  ॥

महापदानि कत्थसे न चाप्यवेक्षसे परम् ।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ॥ ०३२ ॥

प्रयास्यतां किमास्यते समुत्थितं महद्भयम् ।
अतिप्रमाथि दारुणं सुखस्य संविधीयताम् ॥ ०३३ ॥

पुरा मृतः प्रणीयसे यमस्य मृत्युशासनात् ।
तदन्तिकाय दारुणैः प्रयत्नमार्जवे कुरु ॥ ०३४ ॥

पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित् ।
तवेह जीवितं यमो न चास्ति तस्य वारकः ॥ ०३५ ॥

पुरा विवाति मारुतो यमस्य यः पुरःसरः ।
पुरैक एव नीयसे कुरुष्व सांपरायिकम् ॥ ०३६ ॥

पुरा सहिक्क एव ते प्रवाति मारुतोऽन्तकः ।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥ ०३७ ॥

स्मृतिश्च संनिरुध्यते पुरा तवेह पुत्रक ।
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु ॥ ०३८ ॥

कृताकृते शुभाशुभे प्रमादकर्मविप्लुते ।
स्मरन्पुरा न तप्यसे निधत्स्व केवलं निधिम् ॥ ०३९ ॥

पुरा जरा कलेवरं विजर्जरीकरोति ते ।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ॥ ०४० ॥

पुरा शरीरमन्तको भिनत्ति रोगसायकैः ।
प्रसह्य जीवितक्षये तपो महत्समाचर ॥ ०४१ ॥

पुरा वृका भयङ्करा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ॥ ०४२ ॥

पुरान्धकारमेककोऽनुपश्यसि त्वरस्व वै ।
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ॥ ०४३ ॥

पुरा कुसङ्गतानि ते सुहृन्मुखाश्च शात्रवः ।
विचालयन्ति दर्शनाद्घटस्व पुत्र यत्परम् ॥ ०४४ ॥

धनस्य यस्य राजतो भयं न चास्ति चौरतः ।
मृतं च यन्न मुञ्चति समर्जयस्व तद्धनम् ॥ ०४५ ॥

न तत्र संविभज्यते स्वकर्मभिः परस्परम् ।
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ॥ ०४६ ॥

परत्र येन जीव्यते तदेव पुत्र दीयताम् ।
धनं यदक्षयं ध्रुवं समर्जयस्व तत्स्वयम् ॥ ०४७ ॥

न यावदेव पच्यते महाजनस्य यावकम् ।
अपक्व एव यावके पुरा प्रणीयसे त्वर ॥ ०४८ ॥

न मातृपितृबान्धवा न संस्तुतः प्रियो जनः ।
अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम् ॥ ०४९ ॥

यदेव कर्म केवलं स्वयं कृतं शुभाशुभम् ।
तदेव तस्य यौतकं भवत्यमुत्र गच्छतः ॥ ०५० ॥

हिरण्यरत्नसञ्चयाः शुभाशुभेन सञ्चिताः ।
न तस्य देहसङ्क्षये भवन्ति कार्यसाधकाः ॥ ०५१ ॥

परत्रगामिकस्य ते कृताकृतस्य कर्मणः ।

न साक्षिरात्मना समो नृणामिहास्ति कश्चन ॥ ०५२ ॥

मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः ।
प्रपश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वतः ॥ ०५३ ॥

इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः ।
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः ॥ ०५४ ॥

यथानिशेषु सर्वतःस्पृशत्सु सर्वदारिषु ।
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ॥ ०५५ ॥

अनेकपारिपन्थिके विरूपरौद्ररक्षिते ।
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति ॥ ०५६ ॥

न तत्र संविभज्यते स्वकर्मणा परस्परम् ।
यथाकृतं स्वकर्मजं तदेव भुज्यते फलम् ॥ ०५७ ॥

यथाप्सरोगणाः फलं सुखं महर्षिभिः सह ।
तथाप्नुवन्ति कर्मतो विमानकामगामिनः ॥ ०५८ ॥

यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः ।
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः ॥ ०५९ ॥

प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः ।
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ॥ ०६० ॥

सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे ।
अबुद्धिमोहनं पुनः प्रभुर्विना न यावकम् ॥ ०६१ ॥

गता द्विरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसञ्चयं वयो हि तेऽतिवर्तते ॥ ०६२ ॥

पुरा करोति सोऽन्तकः प्रमादगोमुखं दमम् ।
यथागृहीतमुत्थितं त्वरस्व धर्मपालने ॥ ०६३ ॥

यदा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि ।
तथा गतिं गमिष्यतः किमात्मना परेण वा ॥ ०६४ ॥

यदेकपातिनां सतां भवत्यमुत्र गच्छताम् ।
भयेषु सांपरायिकं निधत्स्व तं महानिधिम् ॥ ०६५ ॥

सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् ।
न सन्ति यस्य वारकाः कुरुष्व धर्मसंनिधिम् ॥ ०६६ ॥

इदं निदर्शनं मया तवेह पुत्र संमतम् ।
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥ ०६७ ॥

दधाति यः स्वकर्मणा धनानि यस्य कस्यचित् ।
अबुद्धिमोहजैर्गुणैः शतैक एव युज्यते ॥ ०६८ ॥

श्रुतं समर्थमस्तु ते प्रकुर्वतः शुभाः क्रियाः ।
तदेव तत्र दर्शनं कृतज्ञमर्थसंहितम् ॥ ०६९ ॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ०७० ॥

किं ते धनेन किं बन्धुभिस्ते ; किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं ; पितामहास्ते क्व गताश्च सर्वे ॥ ०७१ ॥

श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
को हि तद्वेद कस्याद्य मृत्युसेना निवेक्ष्यते ॥ ०७२ ॥

अनुगम्य श्मशानान्तं निवर्तन्तीह बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥ ०७३ ॥

नास्तिकान्निरनुक्रोशान्नरान्पापमतौ स्थितान् ।
वामतः कुरु विश्रब्धं परं प्रेप्सुरतन्द्रितः ॥ ०७४ ॥

एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ ०७५ ॥

अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक्स धर्मं कृत्वेह परत्र सुखमेधते ॥ ०७६ ॥

न देहभेदे मरणं विजानतां ; न च प्रणाशः स्वनुपालिते पथि ।
धर्मं हि यो वर्धयते स पण्डितो ; य एव धर्माच्च्यवते स मुह्यति ॥ ०७७ ॥

प्रयुक्तयोः कर्मपथि स्वकर्मणोः ; फलं प्रयोक्ता लभते यथाविधि ।
निहीनकर्मा निरयं प्रपद्यते ; त्रिविष्टपं गच्छति धर्मपारगः ॥ ०७८ ॥

सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
तथात्मानं समादध्याद्भ्रश्येत न पुनर्यथा ॥ ०७९ ॥

यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः ॥ ०८० ॥

यस्य नोपहता बुद्धिर्निश्चयेष्ववलम्बते ।
स्वर्गे कृतावकाशस्य तस्य नास्ति महद्भयम् ॥ ०८१ ॥

तपोवनेषु ये जातास्तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगमजानताम् ॥ ०८२ ॥

यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत् ।

न तेन किञ्चिन्न प्राप्तं तन्मे बहुमतं फलम्  ॥ ०८३  ॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम्  ॥ ०८४  ॥

न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि यातानि भवांश्चैव गमिष्यति  ॥ ०८५  ॥

इह लोके हि धनिनः परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामेव नश्यति  ॥ ०८६  ॥

सञ्चिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च  ॥ ०८७  ॥

पश्य त्वं छिद्रभूतं हि जीवलोकं स्वकर्मणा ।
तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतम्  ॥ ०८८  ॥

तदेतत्संप्रदृश्यैव कर्मभूमिं प्रविश्य ताम् ।
शुभान्याचरितव्यानि परलोकमभीप्सता  ॥ ०८९  ॥

मासर्तुसञ्ज्ञापरिवर्तकेन ; सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण ; भूतानि कालः पचति प्रसह्य  ॥ ०९०  ॥

धनेन किं यन्न ददाति नाश्नुते ; बलेन किं येन रिपून्न बाधते ।
श्रुतेन किं येन न धर्ममाचरे ;त्किमात्मना यो न जितेन्द्रियो वशी  ॥ ०९१  ॥

इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदेशिकम्  ॥ ०९२  ॥

# शुकचरितम्

## अध्याय ३१०

युधिष्ठिर उवाच ॥

कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तस्तन्मे ब्रूहि पितामह ॥ ००१ ॥

कस्यां चोत्पादयामास शुकं व्यासस्तपोधनः ।
न ह्यस्य जननीं विद्म जन्म चाग्र्यं महात्मनः ॥ ००२ ॥

कथं च बालस्य सतः सूक्ष्मज्ञाने गता मतिः ।
यथा नान्यस्य लोकेऽस्मिन्द्वितीयस्येह कस्यचित् ॥ ००३ ॥

एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ ००४ ॥

माहात्म्यमात्मयोगं च विज्ञानं च शुकस्य ह ।
यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ॥ ००५ ॥

भीष्म उवाच ॥

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ००६ ॥

तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव ।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ॥ ००७ ॥

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव सिद्धिं प्राप्नोति मानवः ॥ ००८ ॥

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
योगस्य कलया तात न तुल्यं विद्यते फलम्  ॥ ००९  ॥

अत्र ते वर्तयिष्यामि जन्मयोगफलं यथा ।
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः  ॥ ०१०  ॥

मेरुशृङ्गे किल पुरा कर्णिकारवनायुते ।
विजहार महादेवो भीमैर्भूतगणैर्वृतः  ॥ ०११  ॥

शैलराजसुता चैव देवी तत्राभवत्पुरा ।
तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनः प्रभुः  ॥ ०१२  ॥

योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम  ॥ ०१३  ॥

अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चाभिभो ।
वीर्येण संमितः पुत्रो मम भूयादिति स्म ह  ॥ ०१४  ॥

सङ्कल्पेनाथ सोऽनेन दुष्प्रापेणाकृतात्मभिः ।
वरयामास देवेशमास्थितस्तप उत्तमम्  ॥ ०१५  ॥

अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः ।
आराधयन्महादेवं बहुरूपमुमापतिम्  ॥ ०१६  ॥

तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा ।
लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह  ॥ ०१७  ॥

आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ ।
मरुतो मारुतश्चैव सागराः सरितस्तथा  ॥ ०१८  ॥

अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ ।
विश्वावसुश्च गन्धर्वः सिद्धाश्चाप्सरसां गणाः ॥ ०१९ ॥

तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम् ।
धारयाणः स्रजं भाति ज्योत्स्नामिव निशाकरः ॥ ०२० ॥

तस्मिन्दिव्ये वने रम्ये देवदेवर्षिसङ्कुले ।
आस्थितः परमं योगमृषिः पुत्रार्थमुद्यतः ॥ ०२१ ॥

न चास्य हीयते वर्णो न ग्लानिरुपजायते ।
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ॥ ०२२ ॥

जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः ।
प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ ०२३ ॥

मार्कण्डेयो हि भगवानेतदाख्यातवान्मम ।
स देवचरितानीह कथयामास मे सदा ॥ ०२४ ॥

ता एताद्यापि कृष्णस्य तपसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ ०२५ ॥

एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् ॥ ०२६ ॥

उवाच चैनं भगवांस्त्र्यम्बकः प्रहसन्निव ।
एवंविधस्ते तनयो द्वैपायन भविष्यति ॥ ०२७ ॥

यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम् ।
यथा च खं तथा शुद्धो भविष्यति सुतो महान् ॥ ०२८ ॥

तद्भावभावी तद्बुद्धिस्तदात्मा तदपाश्रयः ।

तेजसावृत्य लोकांस्त्रीन्यशः प्राप्स्यति केवलम्  ॥ ०२९  ॥

---

# अध्याय ३११

भीष्म उवाच  ॥

स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः ।
अरणीं त्वथ सङ्गृह्य ममन्थाग्निचिकीर्षया  ॥ ००१  ॥

अथ रूपं परं राजन्बिभ्रतीं स्वेन तेजसा ।
घृताचीं नामाप्सरसमपश्यद्भगवानृषिः  ॥ ००२  ॥

ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः ।
अभवद्भगवान्व्यासो वने तस्मिन्युधिष्ठिर  ॥ ००३  ॥

सा च कृत्वा तदा व्यासं कामसंविग्नमानसम् ।
शुकी भूत्वा महाराज घृताची समुपागमत्  ॥ ००४  ॥

स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् ।
शरीरजेनानुगतः सर्वगात्रातिगेन ह  ॥ ००५  ॥

स तु धैर्येण महता निगृह्णन्हृच्छयं मुनिः ।
न शशाक नियन्तुं तद्व्यासः प्रविसृतं मनः  ॥ ००६  ॥

भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः  ॥ ००६  ॥

यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत्  ॥ ००७  ॥

सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ॥ ००८ ॥

शुक्रे निर्मथ्यमाने तु शुको जज्ञे महातपाः ।
परमर्षिर्महायोगी अरणीगर्भसंभवः ॥ ००९ ॥

यथाध्वरे समिद्धोऽग्निर्भाति हव्यमुपात्तवान् ।
तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा ॥ ०१० ॥

बिभ्रत्पितुश्च कौरव्य रूपवर्णमनुत्तमम् ।
बभौ तदा भावितात्मा विधूमोऽग्निरिव ज्वलन् ॥ ०११ ॥

तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाभ्येत्य स्नापयामास वारिणा ॥ ०१२ ॥

अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह ।
पपात भुवि राजेन्द्र शुकस्यार्थे महात्मनः ॥ ०१३ ॥

जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयश्चैव प्रावाद्यन्त महास्वनाः ॥ ०१४ ॥

विश्वावसुश्च गन्धर्वस्तथा तुम्बुरुनारदौ ।
हाहाहूहू च गन्धर्वौ तुष्टुवुः शुकसंभवम् ॥ ०१५ ॥

तत्र शक्रपुरोगाश्च लोकपालाः समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ ०१६ ॥

दिव्यानि सर्वपुष्पाणि प्रववर्षात्र मारुतः ।
जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् ॥ ०१७ ॥

तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥ ०१८ ॥

तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनम् ।
ददौ कमण्डलुं प्रीत्या देववासांसि चाभिभो ॥ ०१९ ॥

हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणमवर्तन्त शुकाश्चाषाश्च भारत ॥ ०२० ॥

आरणेयस्तथा दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी व्रतचारी समाहितः ॥ ०२१ ॥

उत्पन्नमात्रं तं वेदाः सरहस्याः ससङ्ग्रहाः ।
उपतस्थुर्महाराज यथास्य पितरं तथा ॥ ०२२ ॥

बृहस्पतिं तु वव्रे स वेदवेदाङ्गभाष्यवित् ।
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥ ०२३ ॥

सोऽधीत्य वेदानखिलान्सरहस्यान्ससङ्ग्रहान् ।
इतिहासं च कार्त्स्न्येन राजशास्त्राणि चाभिभो ॥ ०२४ ॥

गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः ।
उग्रं तपः समारेभे ब्रह्मचारी समाहितः ॥ ०२५ ॥

देवतानामृषीणां च बाल्येऽपि स महातपाः ।
संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ॥ ०२६ ॥

न त्वस्य रमते बुद्धिराश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ ०२७ ॥

# अध्याय ३१२

भीष्म उवाच ॥

स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः ॥ ००१ ॥

मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे ।
यथा मे मनसः शान्तिः परमा संभवेत्प्रभो ॥ ००२ ॥

श्रुत्वा पुत्रस्य वचनं परमर्षिरुवाच तम् ।
अधीष्व पुत्र मोक्षं वै धर्मांश्च विविधानपि ॥ ००३ ॥

पितुर्नियोगाज्जग्राह शुको ब्रह्मविदां वरः ।
योगशास्त्रं च निखिलं कापिलं चैव भारत ॥ ००४ ॥

स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षविद्याविशारदम् ॥ ००५ ॥

उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलेन विशेषतः ॥ ००६ ॥

पितुर्नियोगादगमन्मैथिलं जनकं नृपम् ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ ००७ ॥

उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः ।
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ॥ ००८ ॥

आर्जवेणैव गन्तव्यं न सुखान्वेषिणा पथा ।
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः ॥ ००९ ॥

अहङ्कारो न कर्तव्यो याज्ये तस्मिन्नराधिपे ।
स्थातव्यं च वशे तस्य स ते छेत्स्यति संशयम् ॥ ०१० ॥

स धर्मकुशलो राजा मोक्षशास्त्रविशारदः ।
याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ॥ ०११ ॥

एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः ।
पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं भूमिं ससागराम् ॥ ०१२ ॥

स गिरींश्चाप्यतिक्रम्य नदीस्तीर्त्वा सरांसि च ।
बहुव्यालमृगाकीर्णा विविधाश्चाटवीस्तथा ॥ ०१३ ॥

मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतं तथा ।
क्रमेणैव व्यतिक्रम्य भारतं वर्षमासदत् ॥ ०१४ ॥

स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ।
आर्यावर्तमिमं देशमाजगाम महामुनिः ॥ ०१५ ॥

पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।
अध्वानं सोऽतिचक्राम खेऽचरः खे चरन्निव ॥ ०१६ ॥

पत्तनानि च रम्याणि स्फीतानि नगराणि च ।
रत्नानि च विचित्राणि शुकः पश्यन्न पश्यति ॥ ०१७ ॥

उद्यानानि च रम्याणि तथैवायतनानि च ।
पुण्यानि चैव तीर्थानि सोऽतिक्रम्य तथाध्वनः ॥ ०१८ ॥

सोऽचिरेणैव कालेन विदेहानाससाद ह ।

रक्षितान्धर्मराजेन जनकेन महात्मना ॥ ०१९ ॥

तत्र ग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान् ।
पल्लीघोषान्समृद्धांश्च बहुगोकुलसङ्कुलान् ॥ ०२० ॥

स्फीतांश्च शालियवसैर्हंससारससेवितान् ।
पद्मिनीभिश्च शतशः श्रीमतीभिरलङ्कृतान् ॥ ०२१ ॥

स विदेहानतिक्रम्य समृद्धजनसेवितान् ।
मिथिलोपवनं रम्यमाससाद महर्द्धिमत् ॥ ०२२ ॥

हस्त्यश्वरथसङ्कीर्णं नरनारीसमाकुलम् ।
पश्यन्नपश्यन्निव तत्समतिक्रामदच्युतः ॥ ०२३ ॥

मनसा तं वहन्भारं तमेवार्थं विचिन्तयन् ।
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह ॥ ०२४ ॥

तस्या द्वारं समासाद्य द्वारपालैर्निवारितः ।
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह ॥ ०२५ ॥

स राजमार्गमासाद्य समृद्धजनसङ्कुलम् ।
पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह ॥ ०२६ ॥

तत्रापि द्वारपालास्तमुग्रवाचो न्यषेधयन् ।
तथैव च शुकस्तत्र निर्मन्युः समतिष्ठत ॥ ०२७ ॥

न चातपाध्वसंतप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नापैति च तथातपात् ॥ ०२८ ॥

तेषां तु द्वारपालानामेकः शोकसमन्वितः ।
मध्यङ्गतमिवादित्यं दृष्ट्वा शुकमवस्थितम् ॥ ०२९ ॥

पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां द्वितीयां राजवेश्मनः ॥ ०३० ॥

तत्रासीनः शुकस्तात मोक्षमेवानुचिन्तयन् ।
छायायामातपे चैव समदर्शी महाद्युतिः ॥ ०३१ ॥

तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां तृतीयां राजवेश्मनः ॥ ०३२ ॥

तत्रान्तःपुरसंबद्धं महच्चैत्ररथोपमम् ।
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ॥ ०३३ ॥

तद्दर्शयित्वा स शुकं मन्त्री काननमुत्तमम् ।
अर्हमासनमादिश्य निश्चक्राम ततः पुनः ॥ ०३४ ॥

तं चारुवेषाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः ।
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः ॥ ०३५ ॥

संलापोल्लापकुशला नृत्तगीतविशारदाः ।
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ ०३६ ॥

कामोपचारकुशला भावज्ञाः सर्वकोविदाः ।
परं पञ्चाशतो नार्यो वारमुख्याः समाद्रवन् ॥ ०३७ ॥

पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्य च ।
देशकालोपपन्नेन साध्वन्नेनाप्यतर्पयन् ॥ ०३८ ॥

तस्य भुक्तवतस्तात तदन्तःपुरकाननम् ।
सुरम्यं दर्शयामासुरेकैकश्येन भारत ॥ ०३९ ॥

क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चैव ताः शुकम् ।
उदारसत्त्वं सत्त्वज्ञाः सर्वाः पर्यचरंस्तदा ॥ ०४० ॥

आरणेयस्तु शुद्धात्मा त्रिसंदेहस्त्रिकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ ०४१ ॥

तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं ददुस्ताः परमस्त्रियः ॥ ०४२ ॥

पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ ०४३ ॥

पूर्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः ।
मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः ॥ ०४४ ॥

ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ॥ ०४५ ॥

अनेन विधिना कार्ष्णिस्तदहःशेषमच्युतः ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ०४६ ॥

---

# अध्याय ३१३

भीष्म उवाच ॥

ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरः पुरोहितं कृत्वा सर्वाण्यन्तःपुराणि च ॥ ००१ ॥

आसनं च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात्  ॥ ००२  ॥

स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत्  ॥ ००३  ॥

पुरोधसा सङ्गृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम्  ॥ ००४  ॥

तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत् ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत्  ॥ ००५  ॥

स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि  ॥ ००५  ॥

प्रतिगृह्य च तां पूजां जनकाद्द्विजसत्तमः ।
गां चैव समनुज्ञाय राजानमनुमान्य च  ॥ ००६  ॥

पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम् ।
अनामयं च राजेन्द्र शुकः सानुचरस्य ह  ॥ ००७  ॥

अनुज्ञातः स तेनाथ निषसाद सहानुगः ।
उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलिः  ॥ ००८  ॥

कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येव पर्यपृच्छत पार्थिवः  ॥ ००९  ॥

शुक उवाच  ॥

पित्राहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः  ॥ ०१०  ॥

तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः ।
प्रवृत्तौ वा निवृत्तौ वा स ते छेत्स्यति संशयम् ॥ ०११ ॥

सोऽहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः ।
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥ ०१२ ॥

किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः ।
कथं च मोक्षः कर्तव्यो ज्ञानेन तपसापि वा ॥ ०१३ ॥

जनक उवाच ॥

यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात भवेद्वेदपरायणः ॥ ०१४ ॥

तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो ।
देवतानां पितॄणां चाप्यनृणश्चानसूयकः ॥ ०१५ ॥

वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ।
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः ॥ ०१६ ॥

समावृत्तस्तु गार्हस्थ्ये सदारो नियतो वसेत् ।
अनसूयुर्यथान्यायमाहिताग्निस्तथैव च ॥ ०१७ ॥

उत्पाद्य पुत्रपौत्रं तु वन्याश्रमपदे वसेत् ।
तानेवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः ॥ ०१८ ॥

स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित् ।
निर्द्वंद्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ ०१९ ॥

शुक उवाच ॥

उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु वनेषु च ॥ ०२० ॥

एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति ।
यथावेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ ०२१ ॥

जनक उवाच ॥

न विना ज्ञानविज्ञानं मोक्षस्याधिगमो भवेत् ।
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः ॥ ०२२ ॥

आचार्यः प्लाविता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥ ०२३ ॥

अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश्चातुराश्रम्यसङ्कथः ॥ ०२४ ॥

अनेन क्रमयोगेन बहुजातिषु कर्मणा ।
कृत्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥ ०२५ ॥

भवितैः कारणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ ०२६ ॥

तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥ ०२७ ॥

राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत् ।
सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥ ०२८ ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।

संपश्यन्नोपलिप्येत जले वारिचरो यथा ॥ ०२९ ॥

पक्षीव प्लवनादूर्ध्वममुत्रानन्त्यमश्नुते ।
विहाय देहं निर्मुक्तो निर्द्वंद्वः प्रशमं गतः ॥ ०३० ॥

अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना ।
धार्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥ ०३१ ॥

ज्योतिरात्मनि नान्यत्र रतं तत्रैव चैव तत् ।
स्वयं च शक्यं तद्द्रष्टुं सुसमाहितचेतसा ॥ ०३२ ॥

न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ०३३ ॥

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ०३४ ॥

संयोज्य तपसात्मानमीर्ष्यामुत्सृज्य मोहिनीम् ।
त्यक्त्वा कामं च लोभं च ततो ब्रह्मत्वमश्नुते ॥ ०३५ ॥

यदा श्रव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वंद्वो ब्रह्म संपद्यते तदा ॥ ०३६ ॥

यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखदुःखे तथैव च ॥ ०३७ ॥

शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ॥ ०३८ ॥

प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥ ०३९ ॥

तमःपरिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ ०४० ॥

एतत्सर्वं प्रपश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि वेत्तव्यं तत्त्वतो वेद तद्भवान् ॥ ०४१ ॥

ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥ ०४२ ॥

तस्यैव च प्रसादेन प्रादुर्भूतं महामुने ।
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ ०४३ ॥

अधिकं तव विज्ञानमधिका च गतिस्तव ।
अधिकं च तवैश्वर्यं तच्च त्वं नावबुध्यसे ॥ ०४४ ॥

बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिम् ॥ ०४५ ॥

व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः ।
विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ॥ ०४६ ॥

भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ॥ ०४७ ॥

नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपा ।
नौत्सुक्यं नृत्तगीतेषु न राग उपजायते ॥ ०४८ ॥

न बन्धुषु निबन्धस्ते न भयेष्वस्ति ते भयम् ।
पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ॥ ०४९ ॥

अहं च त्वानुपश्यामि ये चाप्यन्ये मनीषिणः ।
आस्थितं परमं मार्गमक्षयं तमनामयम्  ॥ ०५०  ॥

यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन्वै वर्तसे विप्र किमन्यत्परिपृच्छसि  ॥ ०५१  ॥

---

# अध्याय ३१४

भीष्म उवाच  ॥

एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः ।
आत्मनात्मानमास्थाय दृष्ट्वा चात्मानमात्मना  ॥ ००१  ॥

कृतकार्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः  ॥ ००२  ॥

एतस्मिन्नेव काले तु देवर्षिर्नारदस्तदा ।
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम्  ॥ ००३  ॥

तमप्सरोगणाकीर्णं गीतस्वननिनादितम् ।
किंनराणां समूहैश्च भृङ्गराजैस्तथैव च  ॥ ००४  ॥

मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः ।
चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः  ॥ ००५  ॥

राजहंससमूहैश्च हृष्टैः परभृतैस्तथा  ॥ ००५  ॥

पक्षिराजो गरुत्मांश्च यं नित्यमधिगच्छति ।

चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा ॥ ००६ ॥

यत्र नित्यं समायान्ति लोकस्य हितकाम्यया ॥ ००६ ॥

विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना ।
यत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ॥ ००७ ॥

शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै ।
यत्रोवाच जगत्स्कन्दः क्षिपन्वाक्यमिदं तदा ॥ ००८ ॥

योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः ।
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ॥ ००९ ॥

सोऽभ्युद्धरत्विमां शक्तिमथ वा कम्पयत्विति ।
तच्छ्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ॥ ०१० ॥

अथ देवगणं सर्वं संभ्रान्तेन्द्रियमानसम् ।
अपश्यद्भगवान्विष्णुः क्षिप्तं सासुरराक्षसम् ॥ ०११ ॥

किं न्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ॥ ०११ ॥

स नामृष्यत तं क्षेपमवैक्षत च पावकिम् ।
स प्रहस्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा ॥ ०१२ ॥

कम्पयामास सव्येन पाणिना पुरुषोत्तमः ॥ ०१२ ॥

शक्त्यां तु कम्पमानायां विष्णुना बलिना तदा ।
मेदिनी कम्पिता सर्वा सशैलवनकानना ॥ ०१३ ॥

शक्तेनापि समुद्धर्तुं कम्पिता सा न तूद्धृता ।
रक्षता स्कन्दराजस्य धर्षणां प्रभविष्णुना ॥ ०१४ ॥

तां कम्पयित्वा भगवान्प्रह्लादमिदमब्रवीत् ।
पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति ॥ ०१५ ॥

सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ।
जग्राह तां तस्य शक्तिं न चैनामप्यकम्पयत् ॥ ०१६ ॥

नादं महान्तं मुक्त्वा स मूर्छितो गिरिमूर्धनि ।
विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः ॥ ०१७ ॥

यत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः ।
तपोऽतप्यत दुर्धर्षस्तात नित्यं वृषध्वजः ॥ ०१८ ॥

पावकेन परिक्षिप्तो दीप्यता तस्य चाश्रमः ।
आदित्यबन्धनं नाम दुर्धर्षमकृतात्मभिः ॥ ०१९ ॥

न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः ।
दशयोजनविस्तारमग्निज्वालासमावृतम् ॥ ०२० ॥

भगवान्पावकस्तत्र स्वयं तिष्ठति वीर्यवान् ।
सर्वविघ्नान्प्रशमयन्महादेवस्य धीमतः ॥ ०२१ ॥

दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ।
देवान्संतापयंस्तत्र महादेवो धृतव्रतः ॥ ०२२ ॥

ऐन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः ।
विविक्ते पर्वततटे पाराशर्यो महातपाः ॥ ०२३ ॥

वेदानध्यापयामास व्यासः शिष्यान्महातपाः ॥ ०२३ ॥

सुमन्तुं च महाभागं वैशंपायनमेव च ।

जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम्  ॥ ०२४  ॥

एभिः शिष्यैः परिवृतो व्यास आस्ते महातपाः ।
तत्राश्रमपदं पुण्यं ददर्श पितुरुत्तमम्  ॥ ०२५  ॥

आरणेयो विशुद्धात्मा नभसीव दिवाकरः  ॥ ०२५  ॥

अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम् ।
ददर्श सुतमायान्तं दिवाकरसमप्रभम्  ॥ ०२६  ॥

असज्जमानं वृक्षेषु शैलेषु विषमेषु च ।
योगयुक्तं महात्मानं यथा बाणं गुणच्च्युतम्  ॥ ०२७  ॥

सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः ।
यथोपजोषं तैश्चापि समागच्छन्महामुनिः  ॥ ०२८  ॥

ततो निवेदयामास पित्रे सर्वमशेषतः ।
शुको जनकराजेन संवादं प्रीतमानसः  ॥ ०२९  ॥

एवमध्यापयञ्शिष्यान्व्यासः पुत्रं च वीर्यवान् ।
उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः  ॥ ०३०  ॥

ततः कदाचिच्छिष्यास्तं परिवार्यावतस्थिरे ।
वेदाध्ययनसंपन्नाः शान्तात्मानो जितेन्द्रियाः  ॥ ०३१  ॥

वेदेषु निष्ठां संप्राप्य साङ्गेष्वतितपस्विनः ।
अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम्  ॥ ०३२  ॥

महता श्रेयसा युक्ता यशसा च स्म वर्धिताः ।
एकं त्विदानीमिच्छामो गुरुणानुग्रहं कृतम्  ॥ ०३३  ॥

इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह ।
उच्च्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ॥ ०३४ ॥

एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः ।
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥ ०३५ ॥

ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् ।
यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ॥ ०३६ ॥

काङ्क्षामस्तु वयं सर्वे वरं दत्तं महर्षिणा ।
षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ॥ ०३७ ॥

चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः ।
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ॥ ०३८ ॥

शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित् ।
पराशरात्मजो धीमान्परलोकार्थचिन्तकः ॥ ०३९ ॥

उवाच शिष्यान्धर्मात्मा धर्म्यं नैःश्रेयसं वचः ॥ ०३९ ॥

ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे भवेत् ।
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षति ॥ ०४० ॥

भवन्तो बहुलाः सन्तु वेदो विस्तार्यतामयम् ।
नाशिष्ये संप्रदातव्यो नाव्रते नाकृतात्मनि ॥ ०४१ ॥

एते शिष्यगुणाः सर्वे विज्ञातव्या यथार्थतः ।
नापरीक्षितचारित्रे विद्या देया कथञ्चन ॥ ०४२ ॥

यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः ।
परीक्षेत तथा शिष्यानीक्षेत्कुलगुणादिभिः ॥ ०४३ ॥

न नियोज्याश्च वः शिष्या अनियोगे महाभये ।
यथामति यथापाठं तथा विद्या फलिष्यति ॥ ०४४ ॥

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ॥ ०४५ ॥

वेदस्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम् ।
स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयंभुवा ॥ ०४६ ॥

यो निर्वदेत संमोहाद्ब्राह्मणं वेदपारगम् ।
सोऽपध्यानाद्ब्राह्मणस्य पराभूयादसंशयम् ॥ ०४७ ॥

यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ ०४८ ॥

एतद्वः सर्वमाख्यातं स्वाध्यायस्य विधिं प्रति ।
उपकुर्याच्च शिष्याणामेतच्च हृदि वो भवेत् ॥ ०४९ ॥

---

# अध्याय ३१५

भीष्म उवाच ॥

एतच्छ्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः ।
अन्योन्यं हृष्टमनसः परिषस्वजिरे तदा ॥ ००१ ॥

उक्ताः स्मो यद्भगवता तदात्वायतिसंहितम् ।
तन्नो मनसि संरूढं करिष्यामस्तथा च तत् ॥ ००२ ॥

अन्योन्यं च सभाज्यैवं सुप्रीतमनसः पुनः ।
विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ॥ ००३ ॥

शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने ।
वेदाननेकधा कर्तुं यदि ते रुचितं विभो ॥ ००४ ॥

शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः ।
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ॥ ००५ ॥

क्षितिं वा देवलोकं वा गम्यतां यदि रोचते ।
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम् ॥ ००६ ॥

तेऽनुज्ञातास्ततः सर्वे गुरुणा सत्यवादिना ।
जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्ध्नाभिवाद्य च ॥ ००७ ॥

अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन् ।
संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा ॥ ००८ ॥

पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः ।
याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः ॥ ००९ ॥

अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान् ।
तूष्णीं ध्यानपरो धीमानेकान्ते समुपाविशत् ॥ ०१० ॥

तं ददर्शाश्रमपदे नारदः सुमहातपाः ।
अथैनमब्रवीत्काले मधुराक्षरया गिरा ॥ ०११ ॥

भो भो महर्षे वासिष्ठ ब्रह्मघोषो न वर्तते ।
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव ॥ ०१२ ॥

ब्रह्मघोषैर्विरहितः पर्वतोऽयं न शोभते ।
रजसा तमसा चैव सोमः सोपप्लवो यथा ॥ ०१३ ॥

न भ्राजते यथापूर्वं निषादानामिवालयः ।
देवर्षिगणजुष्टोऽपि वेदध्वनिनिराकृतः ॥ ०१४ ॥

ऋषयश्च हि देवाश्च गन्धर्वाश्च महौजसः ।
विमुक्ता ब्रह्मघोषेण न भ्राजन्ते यथा पुरा ॥ ०१५ ॥

नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत् ।
महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण ॥ ०१६ ॥

एतन्मनोनुकूलं मे भवानर्हति भाषितुम् ।
सर्वज्ञः सर्वदर्शी च सर्वत्र च कुतूहली ॥ ०१७ ॥

त्रिषु लोकेषु यद्वृत्तं सर्वं तव मते स्थितम् ।
तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते ॥ ०१८ ॥

यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर ।
वियुक्तस्येह शिष्यैर्मे नातिहृष्टमिदं मनः ॥ ०१९ ॥

नारद उवाच ॥

अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या वाहीकाः स्त्रीणां कौतूहलं मलम् ॥ ०२० ॥

अधीयतां भवान्वेदान्सार्धं पुत्रेण धीमता ।
विधुन्वन्ब्रह्मघोषेण रक्षोभयकृतं तमः ॥ ०२१ ॥

भीष्म उवाच ॥

नारदस्य वचः श्रुत्वा व्यासः परमधर्मवित् ।
तथेत्युवाच संहृष्टो वेदाभ्यासे दृढव्रतः ॥ ०२२ ॥

शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत् ।
स्वरेणोच्चैः स शैक्षेण लोकानापूरयन्निव ॥ ०२३ ॥

तयोरभ्यसतोरेवं नानाधर्मप्रवादिनोः ।
वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः ॥ ०२४ ॥

ततोऽनध्याय इति तं व्यासः पुत्रमवारयत् ।
शुको वारितमात्रस्तु कौतूहलसमन्वितः ॥ ०२५ ॥

अपृच्छत्पितरं ब्रह्मन्कुतो वायुरभूदयम् ।
आख्यातुमर्हति भवान्वायोः सर्वं विचेष्टितम् ॥ ०२६ ॥

शुकस्यैतद्वचः श्रुत्वा व्यासः परमविस्मितः ।
अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् ॥ ०२७ ॥

दिव्यं ते चक्षुरुत्पन्नं स्वस्थं ते निर्मलं मनः ।
तमसा रजसा चापि त्यक्तः सत्त्वे व्यवस्थितः ॥ ०२८ ॥

आदर्शे स्वामिव छायां पश्यस्यात्मानमात्मना ।
न्यस्यात्मनि स्वयं वेदान्बुद्ध्या समनुचिन्तय ॥ ०२९ ॥

देवयानचरो विष्णोः पितृयानश्च तामसः ।
द्वावेतौ प्रेत्य पन्थानौ दिवं चाधश्च गच्छतः ॥ ०३० ॥

पृथिव्यामन्तरिक्षे च यत्र संवान्ति वायवः ।
सप्तैते वायुमार्गा वै तान्निबोधानुपूर्वशः ॥ ०३१ ॥

तत्र देवगणाः साध्याः समभूवन्महाबलाः ।

तेषामप्यभवत्पुत्रः समानो नाम दुर्जयः ॥ ०३२ ॥

उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत्सुतः ।
अपानश्च ततो ज्ञेयः प्राणश्चापि ततः परम् ॥ ०३३ ॥

अनपत्योऽभवत्प्राणो दुर्धर्षः शत्रुतापनः ।
पृथक्कर्माणि तेषां तु प्रवक्ष्यामि यथातथम् ॥ ०३४ ॥

प्राणिनां सर्वतो वायुश्चेष्टा वर्तयते पृथक् ।
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ॥ ०३५ ॥

प्रेरयत्यभ्रसंघातान्धूमजांश्चोष्मजांश्च यः ।
प्रथमः प्रथमे मार्गे प्रवहो नाम सोऽनिलः ॥ ०३६ ॥

अम्बरे स्नेहमभ्रेभ्यस्तडिद्भ्यश्चोत्तमद्युतिः ।
आवहो नाम संवाति द्वितीयः श्वसनो नदन् ॥ ०३७ ॥

उदयं ज्योतिषां शश्वत्सोमादीनां करोति यः ।
अन्तर्देहेषु चोदानं यं वदन्ति महर्षयः ॥ ०३८ ॥

यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम् ।
उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः ॥ ०३९ ॥

योऽद्भिः संयोज्य जीमूतान्पर्जन्याय प्रयच्छति ।
उद्वहो नाम वर्षिष्ठस्त्रितीयः स सदागतिः ॥ ०४० ॥

समुह्यमाना बहुधा येन नीलाः पृथग्घनाः ।
वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः ॥ ०४१ ॥

संहता येन चाविद्धा भवन्ति नदतां नदाः ।
रक्षणार्थाय संभूता मेघत्वमुपयान्ति च ॥ ०४२ ॥

योऽसौ वहति देवानां विमानानि विहायसा ।
चतुर्थः संवहो नाम वायुः स गिरिमर्दनः ॥ ०४३ ॥

येन वेगवता रुग्णा रूक्षेणारुजता रसान् ।
वायुना विहता मेघा न भवन्ति बलाहकाः ॥ ०४४ ॥

दारुणोत्पातसञ्चारो नभसः स्तनयित्नुमान् ।
पञ्चमः स महावेगो विवहो नाम मारुतः ॥ ०४५ ॥

यस्मिन्पारिप्लवे दिव्या वहन्त्यापो विहायसा ।
पुण्यं चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति ॥ ०४६ ॥

दूरात्प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः ।
योनिरंशुसहस्रस्य येन भाति वसुंधरा ॥ ०४७ ॥

यस्मादाप्यायते सोमो निधिर्दिव्योऽमृतस्य च ।
षष्ठः परिवहो नाम स वायुर्जवतां वरः ॥ ०४८ ॥

सर्वप्राणभृतां प्राणान्योऽन्तकाले निरस्यति ।
यस्य वर्त्मानुवर्तेते मृत्युवैवस्वतावुभौ ॥ ०४९ ॥

सम्यगन्वीक्षतां बुद्ध्या शान्तयाध्यात्मनित्यया ।
ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते ॥ ०५० ॥

यं समासाद्य वेगेन दिशामन्तं प्रपेदिरे ।
दक्षस्य दश पुत्राणां सहस्राणि प्रजापतेः ॥ ०५१ ॥

येन सृष्टः पराभूतो यात्येव न निवर्तते ।
परावहो नाम परो वायुः स दुरतिक्रमः ॥ ०५२ ॥

एवमेतेऽदितेः पुत्रा मारुताः परमाद्भुताः ।
अनारमन्तः संवान्ति सर्वगाः सर्वधारिणः ॥ ०५३ ॥

एतत्तु महदाश्चर्यं यदयं पर्वतोत्तमः ।
कम्पितः सहसा तेन वायुनाभिप्रवायता ॥ ०५४ ॥

विष्णोर्निःश्वासवातोऽयं यदा वेगसमीरितः ।
सहसोदीर्यते तात जगत्प्रव्यथते तदा ॥ ०५५ ॥

तस्माद्ब्रह्मविदो ब्रह्म नाधीयन्तेऽतिवायति ।
वायोर्वायुभयं ह्युक्तं ब्रह्म तत्पीडितं भवेत् ॥ ०५६ ॥

एतावदुक्त्वा वचनं पराशरसुतः प्रभुः ।
उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामयात्तदा ॥ ०५७ ॥

---

# अध्याय ३१६

भीष्म उवाच ॥

एतस्मिन्नन्तरे शून्ये नारदः समुपागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान्वक्तुमीप्सितान् ॥ ००१ ॥

देवर्षिं तु शुको दृष्ट्वा नारदं समुपस्थितम् ।
अर्घ्यपूर्वेण विधिना वेदोक्तेनाभ्यपूजयत् ॥ ००२ ॥

नारदोऽथाब्रवीत्प्रीतो ब्रूहि ब्रह्मविदां वर ।
केन त्वां श्रेयसा तात योजयामीति हृष्टवत् ॥ ००३ ॥

नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत ।
अस्मि.ण्ल्लोके हितं यत्स्यात्तेन मां योक्तुमर्हसि ॥ ००४ ॥

नारद उवाच ॥

तत्त्वं जिज्ञासतां पूर्वमृषीणां भावितात्मनाम् ।
सनत्कुमारो भगवानिदं वचनमब्रवीत् ॥ ००५ ॥

नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ००६ ॥

निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ।
सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमम् ॥ ००७ ॥

मानुष्यमसुखं प्राप्य यः सज्जति स मुह्यति ।
नालं स दुःखमोक्षाय सङ्गो वै दुःखलक्षणम् ॥ ००८ ॥

सक्तस्य बुद्धिश्चलति मोहजालविवर्धिनी ।
मोहजालावृतो दुःखमिह चामुत्र चाश्नुते ॥ ००९ ॥

सर्वोपायेन कामस्य क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥ ०१० ॥

नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेत मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः ॥ ०११ ॥

आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥ ०१२ ॥

सत्यस्य वचनं श्रेयः सत्यादपि हितं भवेत् ।

यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम ॥ ०१३ ॥

सर्वारम्भफलत्यागी निराशीर्निष्परिग्रहः ।
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः ॥ ०१४ ॥

इन्द्रियैरिन्द्रियार्थेभ्यश्चरत्यात्मवशैरिह ।
असज्जमानः शान्तात्मा निर्विकारः समाहितः ॥ ०१५ ॥

आत्मभूतैरतद्भूतः सह चैव विनैव च ।
स विमुक्तः परं श्रेयो नचिरेणाधिगच्छति ॥ ०१६ ॥

अदर्शनमसंस्पर्शस्तथासंभाषणं सदा ।
यस्य भूतैः सह मुने स श्रेयो विन्दते परम् ॥ ०१७ ॥

न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ ०१८ ॥

आकिञ्चन्यं सुसंतोषो निराशीष्ट्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ ०१९ ॥

परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ ०२० ॥

निरामिषा न शोचन्ति त्यजेहामिषमात्मनः ।
परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ॥ ०२१ ॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ ०२२ ॥

गुणसङ्गेष्वनासक्त एकचर्यारतः सदा ।
ब्राह्मणे नचिरादेव सुखमायात्यनुत्तमम् ॥ ०२३ ॥

द्वंद्वारामेषु भूतेषु य एको रमते मुनिः ।
विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति ॥ ०२४ ॥

शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ ०२५ ॥

तत्र मृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे ॥ ०२६ ॥

अहिते हितसञ्ज्ञस्त्वमध्रुवे ध्रुवसञ्ज्ञकः ।
अनर्थे चार्थसञ्ज्ञस्त्वं किमर्थं नावबुध्यसे ॥ ०२७ ॥

संवेष्ट्यमानं बहुभिर्मोहतन्तुभिरात्मजैः ।
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे ॥ ०२८ ॥

अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते स्वपरिग्रहात् ॥ ०२९ ॥

पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ०३० ॥

महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान् ।
स्नेहजालसमाकृष्टान्पश्य जन्तून्सुदुःखितान् ॥ ०३१ ॥

कुटुम्बं पुत्रदारं च शरीरं द्रव्यसञ्चयाः ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ ०३२ ॥

यदा सर्वं परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ॥ ०३३ ॥

अविश्रान्तमनालम्बमपाथेयमदैशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥ ०३४ ॥

न हि त्वा प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वा यास्यन्तमनुयास्यति ॥ ०३५ ॥

विद्या कर्म च शौर्यं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थस्तु विमुच्यते ॥ ०३६ ॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ०३७ ॥

रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ ०३८ ॥

क्षमारित्रां सत्यमयीं धर्मस्थैर्यवटाकराम् ।
त्यागवाताध्वगां शीघ्रां बुद्धिनावा नदीं तरेत् ॥ ०३९ ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ०४० ॥

त्यज धर्ममसङ्कल्पादधर्मं चाप्यहिंसया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ ०४१ ॥

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ०४२ ॥

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासं समुत्सृज ॥ ०४३ ॥

इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत् ।

महाभूतात्मकं सर्वं महद्यत्परमाणु यत्  ॥ ०४४  ॥

इन्द्रियाणि च पञ्चैव तमः सत्त्वं रजस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसञ्ज्ञकः  ॥ ०४५  ॥

सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः ।
पञ्चविंशक इत्येष व्यक्ताव्यक्तमयो गुणः  ॥ ०४६  ॥

एतैः सर्वैः समायुक्तः पुमानित्यभिधीयते ।
त्रिवर्गोऽत्र सुखं दुःखं जीवितं मरणं तथा  ॥ ०४७  ॥

य इदं वेद तत्त्वेन स वेद प्रभवाप्ययौ ।
पाराशर्येह बोद्धव्यं ज्ञानानां यच्च किञ्चन  ॥ ०४८  ॥

इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्  ॥ ०४९  ॥

इन्द्रियैर्नियतैर्देही धाराभिरिव तर्प्यते ।
लोके विततमात्मानं लोकं चात्मनि पश्यति  ॥ ०५०  ॥

परावरदृशः शक्तिर्ज्ञानवेलां न पश्यति ।
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा  ॥ ०५१  ॥

ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ।
ज्ञानेन विविधान्क्लेशानतिवृत्तस्य मोहजान्  ॥ ०५२  ॥

लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते  ॥ ०५२  ॥

अनादिनिधनं जन्तुमात्मनि स्थितमव्ययम् ।
अकर्तारममूर्तं च भगवानाह तीर्थवित्  ॥ ०५३  ॥

यो जन्तुः स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः ।
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा ॥ ०५४ ॥

ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
तप्यतेऽथ पुनस्तेन भुक्त्वापथ्यमिवातुरः ॥ ०५५ ॥

अजस्रमेव मोहार्तो दुःखेषु सुखसञ्ज्ञितः ।
बध्यते मथ्यते चैव कर्मभिर्मन्थवत्सदा ॥ ०५६ ॥

ततो निवृत्तो बन्धात्स्वात्कर्मणामुदयादिह ।
परिभ्रमति संसारं चक्रवद्बहुवेदनः ॥ ०५७ ॥

स त्वं निवृत्तबन्धस्तु निवृत्तश्चापि कर्मतः ।
सर्ववित्सर्वजित्सिद्धो भव भावविवर्जितः ॥ ०५८ ॥

संयमेन नवं बन्धं निवर्त्य तपसो बलात् ।
संप्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयाम् ॥ ०५९ ॥

---

# अध्याय ३१७

नारद उवाच ॥

अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ ००१ ॥

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ००२ ॥

तस्मादनिष्टनाशार्थमितिहासं निबोध मे ।
तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम्  ॥ ००३  ॥

अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते अल्पबुद्धयः  ॥ ००४  ॥

द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
ताननाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते  ॥ ००५  ॥

दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवद्धितं पश्येत्तथा क्षिप्रं विरज्यते  ॥ ००६  ॥

नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते  ॥ ००७  ॥

गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते  ॥ ००८  ॥

मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते  ॥ ००९  ॥

नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु संततिम् ।
सम्यक्प्रपश्यतः सर्वं नाश्रुकर्मोपपद्यते  ॥ ०१०  ॥

दुःखोपघाते शारीरे मानसे वाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत्  ॥ ०११  ॥

भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते  ॥ ०१२  ॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।

एतद्विज्ञानसामर्थ्यं न बालैः समतामियात्  ॥ ०१३  ॥

अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः  ॥ ०१४  ॥

न जानपदिकं दुःखमेकः शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम्  ॥ ०१५  ॥

सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम्  ॥ ०१६  ॥

परित्यजति यो दुःखं सुखं वाप्युभयं नरः ।
अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः  ॥ ०१७  ॥

दुःखमर्था हि त्यज्यन्ते पालने न च ते सुखाः ।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत्  ॥ ०१८  ॥

अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः  ॥ ०१९  ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्  ॥ ०२०  ॥

अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः  ॥ ०२१  ॥

निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत्  ॥ ०२२  ॥

भूतेष्वभावं सञ्चिन्त्य ये बुद्धा तमसः परम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम्  ॥ ०२३  ॥

सञ्चिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥ ०२४ ॥

अथाप्युपायं संपश्येद्दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ ०२५ ॥

शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात्परं किञ्चिद्धनिनो वाधनस्य वा ॥ ०२६ ॥

प्राक्संप्रयोगाद्भूतानां नास्ति दुःखमनामयम् ।
विप्रयोगात्तु सर्वस्य न शोचेत्प्रकृतिस्थितः ॥ ०२७ ॥

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया ॥ ०२८ ॥

प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च ।
विचरेदसमुन्नद्धः स सुखी स च पण्डितः ॥ ०२९ ॥

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत्स सुखी भवेत् ॥ ०३० ॥

---

# अध्याय ३१८

नारद उवाच ॥

सुखदुःखविपर्यासो यदा समुपपद्यते ।

नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम्  ॥ ००१  ॥

स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति ।
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत्  ॥ ००२  ॥

रुजन्ति हि शरीराणि रोगाः शारीरमानसाः ।
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः  ॥ ००३  ॥

व्याधितस्य विवित्साभिस्त्रस्यतो जीवितैषिणः ।
अवशस्य विनाशाय शरीरमपकृष्यते  ॥ ००४  ॥

स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः  ॥ ००५  ॥

व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः ।
जातं मर्त्यं जरयति निमेषं नावतिष्ठते  ॥ ००६  ॥

सुखदुःखानि भूतानामजरो जरयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च  ॥ ००७  ॥

अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः  ॥ ००८  ॥

यो यमिच्छेद्यथाकामं कामानां तत्तदाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम्  ॥ ००९  ॥

संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाश्च स्वकर्मभिः  ॥ ०१०  ॥

अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः ।
आशीर्भिरप्यसंयुक्ता दृश्यन्ते सर्वकामिनः  ॥ ०११  ॥

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ ०१२ ॥

अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठति ।
कश्चित्कर्मानुसृत्यान्यो न प्राप्यमधिगच्छति ॥ ०१३ ॥

अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।
शुक्रमन्यत्र संभूतं पुनरन्यत्र गच्छति ॥ ०१४ ॥

तस्य योनौ प्रसक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निवृत्तिरुपलभ्यते ॥ ०१५ ॥

केषाञ्चित्पुत्रकामानामनुसंतानमिच्छताम् ।
सिद्धौ प्रयतमानानां नैवाण्डमुपजायते ॥ ०१६ ॥

गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव ।
आयुष्माञ्जायते पुत्रः कथं प्रेतः पितैव सः ॥ ०१७ ॥

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दश मासान्परिधृता जायन्ते कुलपांसनाः ॥ ०१८ ॥

अपरे धनधान्यानि भोगांश्च पितृसञ्चितान् ।
विपुलानभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ ०१९ ॥

अन्योन्यं समभिप्रेत्य मैथुनस्य समागमे ।
उपद्रव इवाविष्टो योनिं गर्भः प्रपद्यते ॥ ०२० ॥

शीर्णं परशरीरेण निच्छवीकं शरीरिणम् ।
प्राणिनां प्राणसंरोधे मांसश्लेष्मविचेष्टितम् ॥ ०२१ ॥

निर्दग्धं परदेहेन परदेहं चलाचलम् ।
विनश्यन्तं विनाशान्ते नावि नावमिवाहितम्  ॥ ०२२  ॥

सङ्गत्या जठरे न्यस्तं रेतोबिन्दुमचेतनम् ।
केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि  ॥ ०२३  ॥

अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते  ॥ ०२४  ॥

गर्भमूत्रपुरीषाणां स्वभावनियता गतिः ।
धारणे वा विसर्गे वा न कर्तुर्विद्यते वशः  ॥ ०२५  ॥

स्रवन्ति ह्युदराद्गर्भा जायमानास्तथापरे ।
आगमेन सहान्येषां विनाश उपपद्यते  ॥ ०२६  ॥

एतस्माद्योनिसंबन्धाद्यो जीवन्परिमुच्यते ।
प्रजां च लभते काञ्चित्पुनर्द्वंद्वेषु मज्जति  ॥ ०२७  ॥

शतस्य सहजातस्य सप्तमीं दशमीं दशाम् ।
प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः  ॥ ०२८  ॥

नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः ।
व्याधिभिश्च विमथ्यन्ते व्यालैः क्षुद्रमृगा इव  ॥ ०२९  ॥

व्याधिभिर्भक्ष्यमाणानां त्यजतां विपुलं धनम् ।
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः  ॥ ०३०  ॥

ते चापि निपुणा वैद्याः कुशलाः संभृतौषधाः ।
व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः  ॥ ०३१  ॥

ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।

दृश्यन्ते जरया भग्ना नागा नागैरिवोत्तमैः ॥ ०३२ ॥

के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ ०३३ ॥

घोरानपि दुराधर्षान्नृपतीनुग्रतेजसः ।
आक्रम्य रोग आदत्ते पशून्पशुपचो यथा ॥ ०३४ ॥

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा ॥ ०३५ ॥

न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावा व्यतिवर्तन्ते ये नियुक्ताः शरीरिषु ॥ ०३६ ॥

न म्रियेरन्न जीर्येरन्सर्वे स्युः सर्वकामिकाः ।
नाप्रियं प्रतिपश्येयुरुत्थानस्य फलं प्रति ॥ ०३७ ॥

उपर्युपरि लोकस्य सर्वो भवितुमिच्छति ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ ०३८ ॥

ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च ।
अप्रमत्ताः शठाः क्रूरा विक्रान्ताः पर्युपासते ॥ ०३९ ॥

क्लेशाः प्रतिनिवर्तन्ते केषाञ्चिदसमीक्षिताः ।
स्वं स्वं च पुनरन्येषां न किञ्चिदभिगम्यते ॥ ०४० ॥

महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ॥ ०४१ ॥

सर्वेषामृद्धिकामानामन्ये रथपुरःसराः ।
मनुजाश्च शतस्त्रीकाः शतशो विधवाः स्त्रियः ॥ ०४२ ॥

द्वंद्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः ।
इदमन्यत्परं पश्य मात्र मोहं करिष्यसि ॥ ०४३ ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ०४४ ॥

एतत्ते परमं गुह्यमाख्यातमृषिसत्तम ।
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः ॥ ०४५ ॥

भीष्म उवाच ॥

नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् ।
सञ्चिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥ ०४६ ॥

पुत्रदारैर्महान्क्लेशो विद्याम्नाये महाञ्श्रमः ।
किं नु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ॥ ०४७ ॥

ततो मुहूर्तं सञ्चिन्त्य निश्चितां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥ ०४८ ॥

कथं त्वहमसङ्क्लिष्टो गच्छेयं परमां गतिम् ।
नावर्तेयं यथा भूयो योनिसंसारसागरे ॥ ०४९ ॥

परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः ।
सर्वसङ्गान्परित्यज्य निश्चितां मनसो गतिम् ॥ ०५० ॥

तत्र यास्यामि यत्रात्मा शमं मेऽधिगमिष्यति ।
अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः ॥ ०५१ ॥

न तु योगमृते शक्या प्राप्तुं सा परमा गतिः ।

अवबन्धो हि मुक्तस्य कर्मभिर्नोपपद्यते ॥ ०५२ ॥

तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥ ०५३ ॥

न ह्येष क्षयमाप्नोति सोमः सुरगणैर्यथा ।
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति ॥ ०५४ ॥

क्षीयते हि सदा सोमः पुनश्चैवाभिपूर्यते ॥ ०५४ ॥

रविस्तु संतापयति लोकान्रश्मिभिरुल्बणैः ।
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ॥ ०५५ ॥

अतो मे रोचते गन्तुमादित्यं दीप्ततेजसम् ।
अत्र वत्स्यामि दुर्धर्षो निःसङ्गेनान्तरात्मना ॥ ०५६ ॥

सूर्यस्य सदने चाहं निक्षिप्येदं कलेवरम् ।
ऋषिभिः सह यास्यामि सौरं तेजोऽतिदुःसहम् ॥ ०५७ ॥

आपृच्छामि नगान्नागान्गिरीनुर्वीं दिशो दिवम् ।
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ॥ ०५८ ॥

लोकेषु सर्वभूतानि प्रवेक्ष्यामि नसंशयः ।
पश्यन्तु योगवीर्यं मे सर्वे देवाः सहर्षिभिः ॥ ०५९ ॥

अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतम् ।
तस्मादनुज्ञां संप्राप्य जगाम पितरं प्रति ॥ ०६० ॥

सोऽभिवाद्य महात्मानमृषिं द्वैपायनं मुनिम् ।
शुकः प्रदक्षिणीकृत्य कृष्णमापृष्टवान्मुनिः ॥ ०६१ ॥

श्रुत्वा ऋषिस्तद्वचनं शुकस्य ; प्रीतो महात्मा पुनराह चैनम् ।
भो भोः पुत्र स्थीयतां तावदद्य ; यावच्चक्षुः प्रीणयामि त्वदर्थम्  ॥ ०६२  ॥

निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तबन्धनः ।
मोक्षमेवानुसञ्चिन्त्य गमनाय मनो दधे  ॥ ०६३  ॥

पितरं संपरित्यज्य जगाम द्विजसत्तमः  ॥ ०६३  ॥

---

# अध्याय ३१९

भीष्म उवाच  ॥

गिरिपृष्ठं समारुह्य सुतो व्यासस्य भारत ।
समे देशे विविक्ते च निःशलाक उपाविशत्  ॥ ००१  ॥

धारयामास चात्मानं यथाशास्त्रं महामुनिः ।
पादात्प्रभृतिगात्रेषु क्रमेण क्रमयोगवित्  ॥ ००२  ॥

ततः स प्राङ्मुखो विद्वानादित्ये नचिरोदिते ।
पाणिपादं समाधाय विनीतवदुपाविशत्  ॥ ००३  ॥

न तत्र पक्षिसंघातो न शब्दो नापि दर्शनम् ।
यत्र वैयासकिर्धीमान्योक्तुं समुपचक्रमे  ॥ ००४  ॥

स ददर्श तदात्मानं सर्वसङ्गविनिःसृतम् ।
प्रजहास ततो हासं शुकः संप्रेक्ष्य भास्करम्  ॥ ००५  ॥

स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ।

महायोगीश्वरो भूत्वा सोऽत्यक्रामद्विहायसम्  ॥ ००६  ॥

ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं तदा ।
निवेदयामास तदा स्वं योगं परमर्षये  ॥ ००७  ॥

दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते  ॥ ००८  ॥

नारदेनाभ्यनुज्ञातस्ततो द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत्  ॥ ००९  ॥

कैलासपृष्ठादुत्पत्य स पपात दिवं तदा ।
अन्तरिक्षचरः श्रीमान्व्यासपुत्रः सुनिश्चितः  ॥ ०१०  ॥

तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम् ।
ददृशुः सर्वभूतानि मनोमारुतरंहसम्  ॥ ०११  ॥

व्यवसायेन लोकांस्त्रीन्सर्वान्सोऽथ विचिन्तयन् ।
आस्थितो दिव्यमध्वानं पावकार्कसमप्रभः  ॥ ०१२  ॥

तमेकमनसं यान्तमव्यग्रमकुतोभयम् ।
ददृशुः सर्वभूतानि जङ्गमानीतराणि च  ॥ ०१३  ॥

यथाशक्ति यथान्यायं पूजयां चक्रिरे तदा ।
पुष्पवर्षैश्च दिव्यैस्तमवचक्रुर्दिवौकसः  ॥ ०१४  ॥

तं दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः ।
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः  ॥ ०१५  ॥

अन्तरिक्षचरः कोऽयं तपसा सिद्धिमागतः ।
अधःकायोर्ध्ववक्त्रश्च नेत्रैः समभिवाह्यते  ॥ ०१६  ॥

ततः परमधीरात्मा त्रिषु लोकेषु विश्रुतः ।
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगमत् ॥ ०१७ ॥

शब्देनाकाशमखिलं पूरयन्निव सर्वतः ॥ ०१७ ॥

तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ।
संभ्रान्तमनसो राजन्नासन्परमविस्मिताः ॥ ०१८ ॥

पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥ ०१८ ॥

दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम् ।
सुनिश्चितमिहायाति विमुक्तमिव निःस्पृहम् ॥ ०१९ ॥

ततः समतिचक्राम मलयं नाम पर्वतम् ।
उर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवते ॥ ०२० ॥

ते स्म ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् ॥ ०२० ॥

अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ।
अचिरेणैव कालेन नभश्चरति चन्द्रवत् ॥ ०२१ ॥

पितृशुश्रूषया सिद्धिं संप्राप्तोऽयमनुत्तमाम् ॥ ०२१ ॥

पितृभक्तो दृढतपाः पितुः सुदयितः सुतः ।
अनन्यमनसा तेन कथं पित्रा विवर्जितः ॥ ०२२ ॥

उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशः सर्वा वचने गतमानसः ॥ ०२३ ॥

सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम् ।

आलोकयामास तदा सरांसि सरितस्तथा ॥ ०२४ ॥

ततो द्वैपायनसुतं बहुमानपुरःसरम् ।
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः ॥ ०२५ ॥

अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित् ।
पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ॥ ०२६ ॥

ततः प्रतिवचो देयं सर्वैरेव समाहितैः ।
एतन्मे स्नेहतः सर्वे वचनं कर्तुमर्हथ ॥ ०२७ ॥

शुकस्य वचनं श्रुत्वा दिशः सवनकाननाः ।
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः ॥ ०२८ ॥

यथाज्ञापयसे विप्र बाढमेवं भविष्यति ।
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ॥ ०२९ ॥

---

# अध्याय ३२०

भीष्म उवाच ॥

इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा लोकांश्चतुर्विधान् ॥ ००१ ॥

तमो ह्यष्टविधं हित्वा जहौ पञ्चविधं रजः ।
ततः सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत् ॥ ००२ ॥

ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।

ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन्  ॥ ००३  ॥

उल्कापाता दिशां दाहा भूमिकम्पास्तथैव च ।
प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत्  ॥ ००४  ॥

द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः ।
निर्घातशब्दैश्च गिरिर्हिमवान्दीर्यतीव ह  ॥ ००५  ॥

न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा  ॥ ००६  ॥

ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः  ॥ ००७  ॥

स शृङ्गेऽप्रतिमे दिव्ये हिमवन्मेरुसंभवे ।
संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे  ॥ ००८  ॥

शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमाश्रित्य रुचिरे संददर्श ह  ॥ ००९  ॥

सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ।
ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते  ॥ ०१०  ॥

अदृश्येतां महाराज तदद्भुतमिवाभवत्  ॥ ०१०  ॥

ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः ।
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः  ॥ ०११  ॥

ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ।
गन्धर्वाणामृषीणां च ये च शैलनिवासिनः  ॥ ०१२  ॥

दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधाकृतम् ।
साधु साध्विति तत्रासीन्नादः सर्वत्र भारत ॥ ०१३ ॥

स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा ।
यक्षराक्षससंघैश्च विद्याधरगणैस्तथा ॥ ०१४ ॥

दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः ।
आसीत्किल महाराज शुकाभिपतने तदा ॥ ०१५ ॥

ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन् ।
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ ०१६ ॥

तस्यां क्रीडन्त्यभिरताः स्नान्ति चैवाप्सरोगणाः ।
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ॥ ०१७ ॥

तं प्रक्रमन्तमाज्ञाय पिता स्नेहसमन्वितः ।
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ॥ ०१८ ॥

शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत्तदा ॥ ०१९ ॥

महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः ।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥ ०२० ॥

स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ।
शशंसुर्ऋषयस्तस्मै कर्म पुत्रस्य तत्तदा ॥ ०२१ ॥

ततः शुकेति दीर्घेण शैक्षेणाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्री.ल्लोकाननुनाद्य वै ॥ ०२२ ॥

शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।

प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन् ॥ ०२३ ॥

तत एकाक्षरं नादं भो इत्येव समीरयन् ।
प्रत्याहरज्जगत्सर्वमुच्चैः स्थावरजङ्गमम् ॥ ०२४ ॥

ततः प्रभृति चाद्यापि शब्दानुच्चारितान्पृथक् ।
गिरिगह्वरपृष्ठेषु व्याजहार शुकं प्रति ॥ ०२५ ॥

अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान्संत्यज्य शब्दादीन्पदमध्यगमत्परम् ॥ ०२६ ॥

महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ ०२७ ॥

ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः ॥ ०२८ ॥

जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ।
वसनान्याददुः काश्चिद्दृष्ट्वा तं मुनिसत्तमम् ॥ ०२९ ॥

तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ ०३० ॥

तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवानभ्यागच्छत शङ्करः ॥ ०३१ ॥

तमुवाच महादेवः सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ॥ ०३२ ॥

अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रस्त्वया मत्तः पुरा वृतः ॥ ०३३ ॥

स तथालक्षणो जातस्तपसा तव संभृतः ।
मम चैव प्रभावेन ब्रह्मतेजोमयः शुचिः ॥ ०३४ ॥

स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः ।
दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ ०३५ ॥

यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः ।
तावत्तवाक्षया कीर्तिः सपुत्रस्य भविष्यति ॥ ०३६ ॥

छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने ॥ ०३७ ॥

सोऽनुनीतो भगवता स्वयं रुद्रेण भारत ।
छायां पश्यन्समावृत्तः स मुनिः परया मुदा ॥ ०३८ ॥

इति जन्म गतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण मयाख्यातं यन्मां त्वं परिपृच्छसि ॥ ०३९ ॥

एतदाचष्ट मे राजन्देवर्षिर्नारदः पुरा ।
व्यासश्चैव महायोगी सञ्जल्पेषु पदे पदे ॥ ०४० ॥

इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम् ।
धारयेद्यः शमपरः स गच्छेत्परमां गतिम् ॥ ०४१ ॥

# नरनारायणीयम्

## अध्याय ३२१

युधिष्ठिर उवाच ॥

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ ००१ ॥

कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥ ००२ ॥

मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥ ००३ ॥

देवतानां च को देवः पितॄणां च तथा पिता ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ ००४ ॥

भीष्म उवाच ॥

गूढं मां प्रश्नवित्प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येष तर्कया शक्यो वक्तुं वर्षशतैरपि ॥ ००५ ॥

ऋते देवप्रसादाद्वा राजञ्ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ॥ ००६ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ००७ ॥

नारायणो हि विश्वात्मा चतुर्मूर्तिः सनातनः ।

धर्मात्मजः संबभूव पितैवं मेऽभ्यभाषत ॥ ००८ ॥

कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ००९ ॥

तेभ्यो नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥ ०१० ॥

अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ॥ ०११ ॥

तपसा तेजसा चैव दुर्निरीक्षौ सुरैरपि ।
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति ॥ ०१२ ॥

नूनं तयोरनुमते हृदि हृच्छयचोदितः ।
महामेरोर्गिरेः शृङ्गात्प्रच्युतो गन्धमादनम् ॥ ०१३ ॥

नारदः सुमहद्भूतं लोकान्सर्वानचीचरत् ।
तं देशमगमद्राजन्बदर्याश्रममाशुगः ॥ ०१४ ॥

तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ।
इदं तदास्पदं कृत्स्नं यस्मि.ण्ल्लोकाः प्रतिष्ठिताः ॥ ०१५ ॥

सदेवासुरगन्धर्वाः सर्षिकिंनरलेलिहाः ।
एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा ॥ ०१६ ॥

धर्मस्य कुलसंतानो महानेभिर्विवर्धितः ।
अहो ह्यनुगृहीतोऽद्य धर्म एभिः सुरैरिह ॥ ०१७ ॥

नरनारायणाभ्यां च कृष्णेन हरिणा तथा ॥ ०१७ ॥

तत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे ।
स्थितौ धर्मोत्तरौ ह्येतौ तथा तपसि धिष्ठितौ  ॥ ०१८  ॥

एतौ हि परमं धाम कानयोराह्निकक्रिया ।
पितरौ सर्वभूतानां दैवतं च यशस्विनौ  ॥ ०१९  ॥

कां देवतां नु यजतः पितॄन्वा कान्महामती  ॥ ०१९  ॥

इति सञ्चिन्त्य मनसा भक्त्या नारायणस्य ह ।
सहसा प्रादुरभवत्समीपे देवयोस्तदा  ॥ ०२०  ॥

कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः  ॥ ०२१  ॥

तं दृष्ट्वा महदाश्चर्यमपूर्वं विधिविस्तरम् ।
उपोपविष्टः सुप्रीतो नारदो भगवानृषिः  ॥ ०२२  ॥

नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना ।
नमस्कृत्वा महादेवमिदं वचनमब्रवीत्  ॥ ०२३  ॥

वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
त्वमजः शाश्वतो धाता मतोऽमृतमनुत्तमम्  ॥ ०२४  ॥

प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत्  ॥ ०२४  ॥

चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ।
यजन्ते त्वामहरहर्नानामूर्तिसमास्थितम्  ॥ ०२५  ॥

पिता माता च सर्वस्य जगतः शाश्वतो गुरुः ।
कं त्वद्य यजसे देवं पितरं कं न विद्महे  ॥ ०२६  ॥

श्रीभगवानुवाच ॥

अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् ॥ ०२७ ॥

यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ ०२८ ॥

स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कल्पितः ॥ ०२९ ॥

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥ ०२९ ॥

अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरव्यया ।
तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः ॥ ०३० ॥

आवाभ्यां पूज्यतेऽसौ हि दैवे पित्र्ये च कल्पिते ॥ ०३० ॥

नास्ति तस्मात्परोऽन्यो हि पिता देवोऽथ वा द्विजः ।
आत्मा हि नौ स विज्ञेयस्ततस्तं पूजयावहे ॥ ०३१ ॥

तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकभाविनी ।
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥ ०३२ ॥

ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः ।
मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः ॥ ०३३ ॥

वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च ।
कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ॥ ०३४ ॥

एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः ।

तस्य देवस्य मर्यादां पूजयन्ति सनातनीम्  ॥ ०३५  ॥

दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः ।
आत्मप्राप्तानि च ततो जानन्ति द्विजसत्तमाः  ॥ ०३६  ॥

स्वर्गस्था अपि ये केचित्तं नमस्यन्ति देहिनः ।
ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम्  ॥ ०३७  ॥

ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च ।
कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः  ॥ ०३८  ॥

मुक्तानां तु गतिर्ब्रह्मन्क्षेत्रज्ञ इति कल्पितः ।
स हि सर्वगतश्चैव निर्गुणश्चैव कथ्यते  ॥ ०३९  ॥

दृश्यते ज्ञानयोगेन आवां च प्रसृतौ ततः ।
एवं ज्ञात्वा तमात्मानं पूजयावः सनातनम्  ॥ ०४०  ॥

तं वेदाश्चाश्रमाश्चैव नानातनुसमास्थिताः ।
भक्त्या संपूजयन्त्याद्यं गतिं चैषां ददाति सः  ॥ ०४१  ॥

ये तु तद्भाविता लोके एकान्तित्वं समास्थिताः ।
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत  ॥ ०४२  ॥

इति गुह्यसमुद्देशस्तव नारद कीर्तितः ।
भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्या च ते श्रुतः  ॥ ०४३  ॥

# अध्याय ३२२

भीष्म उवाच ॥

स एवमुक्तो द्विपदां वरिष्ठो ; नारायणेनोत्तमपूरुषेण ।
जगाद वाक्यं द्विपदां वरिष्ठं ; नारायणं लोकहिताधिवासम् ॥ ००१ ॥

यदर्थमात्मप्रभवेह जन्म ; तवोत्तमं धर्मगृहे चतुर्धा ।
तत्साध्यतां लोकहितार्थमद्य ; गच्छामि द्रष्टुं प्रकृतिं तवाद्याम् ॥ ००२ ॥

वेदाः स्वधीता मम लोकनाथ ; तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि ; परस्य गुह्यं न च भिन्नपूर्वम् ॥ ००३ ॥

गुप्तानि चत्वारि यथागमं मे ; शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तं चादिदेवं सततं प्रपन्न ; एकान्तभावेन वृणोम्यजस्रम् ॥ ००४ ॥

एभिर्विशेषैः परिशुद्धसत्त्वः ; कस्मान्न पश्येयमनन्तमीशम् ॥ ००४ ॥

तत्पारमेष्ठ्यस्य वचो निशम्य ; नारायणः सात्वतधर्मगोप्ता ।
गच्छेति तं नारदमुक्तवान्स ; संपूजयित्वात्मविधिक्रियाभिः ॥ ००५ ॥

ततो विसृष्टः परमेष्ठिपुत्रः ; सोऽभ्यर्चयित्वा तमृषिं पुराणम् ।
खमुत्पपातोत्तमवेगयुक्त ;स्ततोऽधिमेरौ सहसा निलिल्ये ॥ ००६ ॥

तत्रावतस्थे च मुनिर्मुहूर्त ;मेकान्तमासाद्य गिरेः स शृङ्गे ।
आलोकयन्नुत्तरपश्चिमेन ; ददर्श चात्यद्भुतरूपयुक्तम् ॥ ००७ ॥

क्षीरोदधेरुत्तरतो हि द्वीपः ; श्वेतः स नाम्ना प्रथितो विशालः ।
मेरोः सहस्रैः स हि योजनानां ; द्वात्रिंशतोर्ध्वं कविभिर्निरुक्तः ॥ ००८ ॥

अतीन्द्रियाश्चानशनाश्च तत्र ; निष्पन्दहीनाः सुसुगन्धिनश्च ।

श्वेताः पुमांसो गतसर्वपापा ;श्चक्षुर्मुषः पापकृतां नराणाम्  ॥ ००९  ॥

वज्रास्थिकायाः सममानोन्माना ; दिव्यान्वयरूपाः शुभसारोपेताः ।
छत्राकृतिशीर्षा मेघौघनिनादाः ; सत्पुष्करचतुष्का राजीवशतपादाः  ॥ ०१० ॥

षष्ट्या दन्तैर्युक्ताः शुक्लै ;रष्टाभिर्दंष्ट्राभिर्ये ।
जिह्वाभिर्ये विष्वग्वक्त्रं ; लेलिह्यन्ते सूर्यप्रख्यम्  ॥ ०११  ॥

भक्त्या देवं विश्वोत्पन्नं ; यस्मात्सर्वे लोकाः सूताः ।
वेदा धर्मा मुनयः शान्ता ; देवाः सर्वे तस्य विसर्गाः  ॥ ०१२  ॥

युधिष्ठिर उवाच  ॥

अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा  ॥ ०१३  ॥

ये विमुक्ता भवन्तीह नरा भरतसत्तम ।
तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम्  ॥ ०१४  ॥

तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे ।
त्वं हि सर्वकथारामस्त्वां चैवोपाश्रिता वयम्  ॥ ०१५  ॥

भीष्म उवाच  ॥

विस्तीर्णैषा कथा राजञ्श्रुता मे पितृसंनिधौ ।
सैषा तव हि वक्तव्या कथासारो हि स स्मृतः  ॥ ०१६  ॥

राजोपरिचरो नाम बभूवाधिपतिर्भुवः ।
आखण्डलसखः ख्यातो भक्तो नारायणं हरिम्  ॥ ०१७  ॥

धार्मिको नित्यभक्तश्च पितृन्नित्यमतन्द्रितः ।
साम्राज्यं तेन संप्राप्तं नारायणवरात्पुरा ॥ ०१८ ॥

सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥ ०१९ ॥

पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः ।
शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः ॥ ०२० ॥

सर्वभावेन भक्तः स देवदेवं जनार्दनम् ॥ ०२० ॥

तस्य नारायणे भक्तिं वहतोऽमित्रकर्शन ।
एकशय्यासनं शक्रो दत्तवान्देवराड्स्वयम् ॥ ०२१ ॥

आत्मा राज्यं धनं चैव कलत्रं वाहनानि च ।
एतद्भगवते सर्वमिति तत्प्रेक्षितं सदा ॥ ०२२ ॥

काम्यनैमित्तिकाजस्रं यज्ञियाः परमक्रियाः ।
सर्वाः सात्वतमास्थाय विधिं चक्रे समाहितः ॥ ०२३ ॥

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।
प्रायणं भगवत्प्रोक्तं भुञ्जते चाग्रभोजनम् ॥ ०२४ ॥

तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक्समभवन्मनो दुष्टं न चाभवत् ॥ ०२५ ॥

न च कायेन कृतवान्स पापं परमण्वपि ॥ ०२५ ॥

ये हि ते मुनयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥ ०२६ ॥

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः ॥ ०२७ ॥

सप्त प्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् ॥ ०२८ ॥

एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ॥ ०२९ ॥

लोकान्सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥ ०२९ ॥

तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥ ०३० ॥

आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥ ०३१ ॥

नारायणानुशास्ता हि तदा देवी सरस्वती ।
विवेश तानृषीन्सर्वा.ण्ल्लोकानां हितकाम्यया ॥ ०३२ ॥

ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥ ०३३ ॥

आदावेव हि तच्छास्त्रमोङ्कारस्वरभूषितम् ।
ऋषिभिर्भावितं तत्र यत्र कारुणिको ह्यसौ ॥ ०३४ ॥

ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः ।
ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ॥ ०३५ ॥

कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम् ।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ॥ ०३६ ॥

प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ ०३७ ॥

तथा प्रमाणं हि मया कृतो ब्रह्मा प्रसादजः ।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा ॥ ०३८ ॥

सूर्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च ।
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥ ०३९ ॥

अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः ।
सर्वे प्रमाणं हि यथा तथैतच्छास्त्रमुत्तमम् ॥ ०४० ॥

भविष्यति प्रमाणं वै एतन्मदनुशासनम् ।
अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ॥ ०४१ ॥

उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥ ०४२ ॥

स्वायंभुवेषु धर्मेषु शास्त्रे चोशनसा कृते ।
बृहस्पतिमते चैव लोकेषु प्रविचारिते ॥ ०४३ ॥

युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥ ०४४ ॥

स हि मद्भावितो राजा मद्भक्तश्च भविष्यति ।
तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ॥ ०४५ ॥

एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसञ्ज्ञितम् ।
एतदर्थ्यं च धर्म्यं च यशस्यं चैतदुत्तमम् ॥ ०४६ ॥

अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ ।
स च राजा श्रिया युक्तो भविष्यति महान्वसुः ॥ ०४७ ॥

संस्थिते तु नृपे तस्मिञ्शास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सत्यमेतद्वः कथितं मया ॥ ०४८ ॥

एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः ।
विसृज्य तानृषीन्सर्वान्कामपि प्रस्थितो दिशम् ॥ ०४९ ॥

ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ॥ ०५० ॥

उत्पन्नेऽऽङ्गिरसे चैव युगे प्रथमकल्पिते ।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥ ०५१ ॥

जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः ।
धारणात्सर्वलोकानां सर्वधर्मप्रवर्तकाः ॥ ०५२ ॥

---

# अध्याय ३२३

भीष्म उवाच ॥

ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसः सुते ।
बभूवुर्निर्वृता देवा जाते देवपुरोहिते ॥ ००१ ॥

बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ।
एभिः समन्वितो राजन्गुणैर्विद्वान्बृहस्पतिः ॥ ००२ ॥

तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः ।
अधीतवांस्तदा शास्त्रं सम्यक्चित्रशिखण्डिजम् ॥ ००३ ॥

स राजा भावितः पूर्वं दैवेन विधिना वसुः ।
पालयामास पृथिवीं दिवमाखण्डलो यथा ॥ ००४ ॥

तस्य यज्ञो महानासीदश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ॥ ००५ ॥

प्रजापतिसुताश्चात्र सदस्यास्त्वभवंस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ००६ ॥

धनुषाक्षोऽथ रैभ्यश्च अर्वावसुपरावसू ।
ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः ॥ ००७ ॥

ऋषिः शक्तिर्महाभागस्तथा वेदशिराश्च यः ।
कपिलश्च ऋषिश्रेष्ठः शालिहोत्रपितामहः ॥ ००८ ॥

आद्यः कठस्तैत्तिरिश्च वैशंपायनपूर्वजः ।
कण्वोऽथ देवहोत्रश्च एते षोडश कीर्तिताः ॥ ००९ ॥

संभृताः सर्वसंभारास्तस्मिन्राजन्महाक्रतौ ॥ ००९ ॥

न तत्र पशुघातोऽभूत्स राजैवं स्थितोऽभवत् ।
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः ॥ ०१० ॥

आरण्यकपदोद्गीता भागास्तत्रोपकल्पिताः ॥ ०१० ॥

प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः ।
साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥ ०११ ॥

स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ।
अदृश्येन हृतो भागो देवेन हरिमेधसा ॥ ०१२ ॥

बृहस्पतिस्ततः क्रुद्धः स्रुवमुद्यम्य वेगितः ।
आकाशं घ्नन्स्रुवः पातै रोषादश्रूण्यवर्तयत् ॥ ०१३ ॥

उवाच चोपरिचरं मया भागोऽयमुद्यतः ।
ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ॥ ०१४ ॥

उद्यता यज्ञभागा हि साक्षात्प्राप्ताः सुरैरिह ।
किमर्थमिह न प्राप्तो दर्शनं स हरिर्विभुः ॥ ०१५ ॥

ततः स तं समुद्धूतं भूमिपालो महान्वसुः ।
प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ ०१६ ॥

ऊचुश्चैनमसंभ्रान्ता न रोषं कर्तुमर्हसि ।
नैष धर्मः कृतयुगे यस्त्वं रोषमचीकृथाः ॥ ०१७ ॥

अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न स शक्यस्त्वया द्रष्टुमस्माभिर्वा बृहस्पते ॥ ०१८ ॥

यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ ०१८ ॥

एकतद्वितत्रिता ऊचुः ॥

वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः ।
गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥ ०१९ ॥

तप्त्वा वर्षसहस्राणि चत्वारि तप उत्तमम् ।
एकपादस्थिताः सम्यक्काष्ठभूताः समाहिताः ॥ ०२० ॥

मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः ।
स देशो यत्र नस्तप्तं तपः परमदारुणम्  ॥ ०२१  ॥

कथं पश्येमहि वयं देवं नारायणं त्विति  ॥ ०२१  ॥

ततो व्रतस्यावभृथे वागुवाचाशरीरिणी ।
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना  ॥ ०२२  ॥

यूयं जिज्ञासवो भक्ताः कथं द्रक्ष्यथ तं प्रभुम् ।
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः  ॥ ०२३  ॥

तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ।
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम्  ॥ ०२४  ॥

ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ।
अतीन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः  ॥ ०२५  ॥

एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः ।
गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रकाशितः  ॥ ०२६  ॥

अथ श्रुत्वा वयं सर्वे वाचं तामशरीरिणीम् ।
यथाख्यातेन मार्गेण तं देशं प्रतिपेदिरे  ॥ ०२७  ॥

प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः ।
ततो नो दृष्टिविषयस्तदा प्रतिहतोऽभवत्  ॥ ०२८  ॥

न च पश्याम पुरुषं तत्तेजोहृतदर्शनाः ।
ततो नः प्रादुरभवद्विज्ञानं देवयोगजम्  ॥ ०२९  ॥

न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा ।

ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत्  ॥ ०३० ॥

व्रतावसाने सुशुभान्नरान्ददृशिरे वयम् ।
श्वेतांश्चन्द्रप्रतीकाशान्सर्वलक्षणलक्षितान्  ॥ ०३१ ॥

नित्याञ्जलिकृतान्ब्रह्म जपतः प्रागुदङ्मुखान् ।
मानसो नाम स जपो जप्यते तैर्महात्मभिः  ॥ ०३२ ॥

तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः  ॥ ०३२ ॥

या भवेन्मुनिशार्दूल भाः सूर्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक्साभवन्मानवस्य ह  ॥ ०३३ ॥

तेजोनिवासः स द्वीप इति वै मेनिरे वयम् ।
न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः  ॥ ०३४ ॥

अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्तः स्म पुनरेव बृहस्पते  ॥ ०३५ ॥

सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् ।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः  ॥ ०३६ ॥

ततोऽभिवदतां तेषामश्रौष्म विपुलं ध्वनिम् ।
बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः  ॥ ०३७ ॥

वयं तु तेजसा तस्य सहसा हृतचेतसः ।
न किञ्चिदपि पश्यामो हृतदृष्टिबलेन्द्रियाः  ॥ ०३८ ॥

एकस्तु शब्दोऽविरतः श्रुतोऽस्माभिरुदीरितः ।
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन  ॥ ०३९ ॥

नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ।
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमीरितः ॥ ०४० ॥

एतस्मिन्नन्तरे वायुः सर्वगन्धवहः शुचिः ।
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तथा ॥ ०४१ ॥

तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः ।
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता ॥ ०४२ ॥

वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ॥ ०४२ ॥

मारुते संनिवृत्ते च बलौ च प्रतिपादिते ।
चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसां वर ॥ ०४३ ॥

मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु ।
अस्मान्न कश्चिन्मनसा चक्षुषा वाप्यपूजयत् ॥ ०४४ ॥

तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः ।
नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ॥ ०४५ ॥

ततोऽस्मान्सुपरिश्रान्तांस्तपसा चापि कर्शितान् ।
उवाच खस्थं किमपि भूतं तत्राशरीरकम् ॥ ०४६ ॥

दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः ॥ ०४७ ॥

गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात् ।
न स शक्यो अभक्तेन द्रष्टुं देवः कथञ्चन ॥ ०४८ ॥

कामं कालेन महता एकान्तित्वं समागतैः ।
शक्यो द्रष्टुं स भगवान्प्रभामण्डलदुर्दृशः ॥ ०४९ ॥

महत्कार्यं तु कर्तव्यं युष्माभिर्द्विजसत्तमाः ।
इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ॥ ०५० ॥

वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे ततः ।
सुराणां कार्यसिद्ध्यर्थं सहाया वै भविष्यथ ॥ ०५१ ॥

ततस्तदद्भुतं वाक्यं निशम्यैवं स्म सोमप ।
तस्य प्रसादात्प्राप्ताः स्मो देशमीप्सितमञ्जसा ॥ ०५२ ॥

एवं सुतपसा चैव हव्यकव्यैस्तथैव च ।
देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि ॥ ०५३ ॥

नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक् ॥ ०५३ ॥

भीष्म उवाच ॥

एवमेकतवाक्येन द्वितत्रितमतेन च ।
अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः ॥ ०५४ ॥

समानीय ततो यज्ञं दैवतं समपूजयत् ॥ ०५४ ॥

समाप्तयज्ञो राजापि प्रजाः पालितवान्वसुः ।
ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः ॥ ०५५ ॥

अन्तर्भूमिगतश्चैव सततं धर्मवत्सलः ।
नारायणपरो भूत्वा नारायणपदं जगौ ॥ ०५६ ॥

तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ।
महीतलाद्गतः स्थानं ब्रह्मणः समनन्तरम् ॥ ०५७ ॥

परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ॥ ०५७ ॥

---

# अध्याय ३२४

युधिष्ठिर उवाच ॥

यदा भक्तो भगवत आसीद्राजा महावसुः ।
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥ ००१ ॥

भीष्म उवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥ ००२ ॥

अजेन यष्टव्यमिति देवाः प्राहुर्द्विजोत्तमान् ।
स च छागो ह्यजो ज्ञेयो नान्यः पशुरिति स्थितिः ॥ ००३ ॥

ऋषय ऊचुः ॥

बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसञ्ज्ञानि बीजानि छागं न घ्नन्तुमर्हथ ॥ ००४ ॥

नैष धर्मः सतां देवा यत्र वध्येत वै पशुः ।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ॥ ००५ ॥

भीष्म उवाच ॥

तेषां संवदतामेवमृषीणां विबुधैः सह ।

मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान्वसुः ॥ ००६ ॥

अन्तरिक्षचरः श्रीमान्समग्रबलवाहनः ॥ ००६ ॥

तं दृष्ट्वा सहसायान्तं वसुं ते त्वन्तरिक्षगम् ।
ऊचुर्द्विजातयो देवानेष छेत्स्यति संशयम् ॥ ००७ ॥

यज्वा दानपतिः श्रेष्ठः सर्वभूतहितप्रियः ।
कथं स्विदन्यथा ब्रूयाद्वाक्यमेष महान्वसुः ॥ ००८ ॥

एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा ।
अपृच्छन्सहसाभ्येत्य वसुं राजानमन्तिकात् ॥ ००९ ॥

भो राजन्केन यष्टव्यमजेनाहो स्विदौषधैः ।
एतन्नः संशयं छिन्धि प्रमाणं नो भवान्मतः ॥ ०१० ॥

स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः ।
कस्य वः को मतः पक्षो ब्रूत सत्यं समागताः ॥ ०११ ॥

ऋषय ऊचुः ॥

धान्यैर्यष्टव्यमित्येष पक्षोऽस्माकं नराधिप ।
देवानां तु पशुः पक्षो मतो राजन्वदस्व नः ॥ ०१२ ॥

भीष्म उवाच ॥

देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् ।
छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा ॥ ०१३ ॥

कुपितास्ते ततः सर्वे मुनयः सूर्यवर्चसः ।
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ॥ ०१४ ॥

सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत ।
अद्य प्रभृति ते राजन्नाकाशे विहता गतिः ॥ ०१५ ॥

अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि ॥ ०१५ ॥

ततस्तस्मिन्मुहूर्तेऽथ राजोपरिचरस्तदा ।
अधो वै संबभूवाशु भूमेर्विवरगो नृपः ॥ ०१६ ॥

स्मृतिस्त्वेनं न प्रजहौ तदा नारायणाज्ञया ॥ ०१६ ॥

देवास्तु सहिताः सर्वे वसोः शापविमोक्षणम् ।
चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् ॥ ०१७ ॥

अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना ।
अस्य प्रतिप्रियं कार्यं सहितैर्नो दिवौकसः ॥ ०१८ ॥

इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः ।
ऊचुस्तं हृष्टमनसो राजोपरिचरं तदा ॥ ०१९ ॥

ब्रह्मण्यदेवं त्वं भक्तः सुरासुरगुरुं हरिम् ।
कामं स तव तुष्टात्मा कुर्याच्छापविमोक्षणम् ॥ ०२० ॥

मानना तु द्विजातीनां कर्तव्या वै महात्मनाम् ।
अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ॥ ०२१ ॥

यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम् ।
एकं त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम ॥ ०२२ ॥

यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ ।
भूमेर्विवरगो भूत्वा तावन्तं कालमाप्स्यसि ॥ ०२३ ॥

यज्ञेषु सुहुतां विप्रैर्वसोर्धारां महात्मभिः ॥ ०२३ ॥

प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिरास्पृशेत् ।
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः ॥ ०२४ ॥

वसोर्धारानुपीतत्वात्तेजसाप्यायितेन च ।
स देवोऽस्मद्वरात्प्रीतो ब्रह्मलोकं हि नेष्यति ॥ ०२५ ॥

एवं दत्त्वा वरं राज्ञे सर्वे तत्र दिवौकसः ।
गताः स्वभवनं देवा ऋषयश्च तपोधनाः ॥ ०२६ ॥

चक्रे च सततं पूजां विष्वक्सेनाय भारत ।
जप्यं जगौ च सततं नारायणमुखोद्गतम् ॥ ०२७ ॥

तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिंदम ।
अयजद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन् ॥ ०२८ ॥

ततोऽस्य तुष्टो भगवान्भक्त्या नारायणो हरिः ।
अनन्यभक्तस्य सततस्तत्परस्य जितात्मनः ॥ ०२९ ॥

वरदो भगवान्विष्णुः समीपस्थं द्विजोत्तमम् ।
गरुत्मन्तं महावेगमाबभाषे स्मयन्निव ॥ ०३० ॥

द्विजोत्तम महाभाग गम्यतां वचनान्मम ।
सम्राड्राजा वसुर्नाम धर्मात्मा मां समाश्रितः ॥ ०३१ ॥

ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलम् ।
मानितास्ते तु विप्रेन्द्रास्त्वं तु गच्छ द्विजोत्तम ॥ ०३२ ॥

भूमेर्विवरसङ्गुप्तं गरुडेह ममाज्ञया ।

अधश्चरं नृपश्रेष्ठं खेचरं कुरु माचिरम्  ॥ ०३३  ॥

गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।
विवेश विवरं भूमेर्यत्रास्ते वाग्यतो वसुः  ॥ ०३४  ॥

तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत  ॥ ०३५  ॥

तस्मिन्मुहूर्ते सञ्जज्ञे राजोपरिचरः पुनः ।
सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः  ॥ ०३६  ॥

एवं तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया ।
प्राप्ता गतिरयज्वार्हा द्विजशापान्महात्मना  ॥ ०३७  ॥

केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।
ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च  ॥ ०३८  ॥

एतत्ते सर्वमाख्यातं ते भूता मानवा यथा ।
नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः  ॥ ०३९  ॥

तत्ते सर्वं प्रवक्ष्यामि श्रृणुष्वैकमना नृप  ॥ ०३९  ॥

---

# महापुरुषस्तवः

## अध्याय ३२५

भीष्म उवाच  ॥

प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नराञ्श्वेतांश्चन्द्रप्रभाञ्शुभान्  ॥ ००१  ॥

पूजयामास शिरसा मनसा तैश्च पूजितः ।
दिदृक्षुर्जप्यपरमः सर्वकृच्छ्रधरः स्थितः  ॥ ००२  ॥

भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुर्महामुनिः ।
स्तोत्रं जगौ स विश्वाय निर्गुणाय महात्मने  ॥ ००३  ॥

नारद उवाच  ॥

नमस्ते देवदेव १ निष्क्रिय २ निर्गुण ३ लोकसाक्षिन् ४ क्षेत्रज्ञ ५
अनन्त ६=११६ पुरुष ७ महापुरुष ८ त्रिगुण ९ प्रधान १० अमृत ११
व्योम १२ सनातन १३ सदसद्व्यक्ताव्यक्त १४ ऋतधामन् १५ पूर्वादिदेव १६
वसुप्रद १७ प्रजापते १८ सुप्रजापते १९ वनस्पते २० महाप्रजापते २१
ऊर्जस्पते २२ वाचस्पते २३ मनस्पते २४ जगत्पते २५ दिवस्पते २६
मरुत्पते २७ सलिलपते २८ पृथिवीपते २९ दिक्पते ३० पूर्वनिवास ३१
ब्रह्मपुरोहित ३२ ब्रह्मकायिक ३३ महाकायिक ३४ महाराजिक ३५
चतुर्महाराजिक ३६ आभासुर ३७ महाभासुर ३८ सप्तमहाभासुर ३९ याम्य ४०
महायाम्य ४१ सञ्ज्ञासञ्ज्ञ ४२ तुषित ४३ महातुषित ४४ प्रतर्दन ४५
परिनिर्मित ४६ वशवर्तिन् ४७ अपरिनिर्मित ४८ यज्ञ ४९ महायज्ञ ५०
यज्ञसंभव ५१ यज्ञयोने ५२ यज्ञगर्भ ५३ यज्ञहृदय ५४ यज्ञस्तुत ५५
यज्ञभागहर ५६ पञ्चयज्ञधर ५७ पञ्चकालकर्तृगते ५८
पञ्चरात्रिक ५९ वैकुण्ठ ६० अपराजित ६१ मानसिक ६२ परमस्वामिन् ६३
सुस्नात ६४ हंस ६५ परमहंस ६६ परमयाज्ञिक ६७ सांख्ययोग ६८
अमृतेशय ६९ हिरण्येशय ७० वेदेशय ७१ कुशेशय ७२ ब्रह्मेशय ७३
पद्मेशय ७४ विश्वेश्वर ७५ त्वं जगदन्वयः ७६ त्वं जगत्प्रकृतिः ७७
तवाग्निरास्यम् ७८ वडवामुखोऽग्निः ७९ त्वमाहुतिः ८० त्वं सारथिः ८१
त्वं वषट्कारः ८२ त्वमोङ्कारः ८३ त्वं मनः ८४ त्वं चन्द्रमाः ८५
त्वं चक्षुराद्यम् ८६ त्वं सूर्यः ८७ त्वं दिशां गजः ८८ दिग्भानो ८९

हयशिरः ९० प्रथमत्रिसौपर्ण ९१ पञ्चाग्ने ९२ त्रिणाचिकेत ९३
षडङ्गविधान ९४ प्राग्ज्योतिष ९५ ज्येष्ठसामग ९६ सामिकव्रतधर ९७
अथर्वशिरः ९८ पञ्चमहाकल्प ९९ फेनपाचार्य १०० वालखिल्य १०१
वैखानस १०२ अभग्नयोग १०३ अभग्नपरिसंख्यान १०४ युगादे १०५
युगमध्य १०६ युगनिधन १०७ आखण्डल १०८ प्राचीनगर्भ १०९
कौशिक ११० पुरुष्टुत १११ पुरुहूत ११२ विश्वरूप ११३ अनन्तगते ११४
अनन्तभोग ११५ अनन्त ११६=६ अनादे ११७ अमध्य ११८ अव्यक्तमध्य ११९
अव्यक्तनिधन १२० व्रतावास १२१ समुद्राधिवास १२२ यशोवास १२३
तपोवास १२४ लक्ष्म्यावास १२५ विद्यावास १२६ कीर्त्यावास १२७
श्रीवास १२८ सर्वावास १२९ वासुदेव १३० सर्वच्छन्दक १३१
हरिहय १३२ हरिमेध १३३ महायज्ञभागहर १३४ वरप्रद १३५=१५७
यमनियममहानियमकृच्छ्रातिकृच्छ्रमहाकृच्छ्रसर्वकृच्छ्रनियमधर १३६
निवृत्तधर्मप्रवचनगते १३७ प्रवृत्तवेदक्रिय १३८ अज १३९
सर्वगते १४० सर्वदर्शिन् १४१ अग्राह्य १४२ अचल १४३ महाविभूते १४४
माहात्म्यशरीर १४५ पवित्र १४६ महापवित्र १४७ हिरण्मय १४८ बृहत् १४९
अप्रतर्क्य १५० अविज्ञेय १५१ ब्रह्माग्र्य १५२ प्रजासर्गकर १५३
प्रजानिधनकर १५४ महामायाधर १५५ चित्रशिखण्डिन् १५६ वरप्रद १५७=१३५
पुरोडाशभागहर १५८ गताध्वन् १५९ छिन्नतृष्ण १६०
छिन्नसंशय १६१ सर्वतोनिवृत्त १६२ ब्राह्मणरूप १६३ ब्राह्मणप्रिय १६४
विश्वमूर्ते १६५ महामूर्ते १६६ बान्धव १६७ भक्तवत्सल १६८
ब्रह्मण्यदेव १६९ भक्तोऽहं त्वां दिदृक्षुः १७० एकान्तदर्शनाय नमो
नमः १७१ ॥ ००४ ॥

---

# अध्याय ३२६

भीष्म उवाच ॥

एवं स्तुतः स भगवान्गुह्यैस्तथ्यैश्च नामभिः ।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक् ॥ ००१ ॥

किञ्चिच्चन्द्रविशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान् ।
कृशानुवर्णः किञ्चिच्च किञ्चिद्धिष्ण्याकृतिः प्रभुः ॥ ००२ ॥

शुकपत्रवर्णः किञ्चिच्च किञ्चित्स्फटिकसप्रभः ।
नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित् ॥ ००३ ॥

प्रवालाङ्कुरवर्णश्च श्वेतवर्णः क्वचिद्बभौ ।
क्वचित्सुवर्णवर्णाभो वैडूर्यसदृशः क्वचित् ॥ ००४ ॥

नीलवैडूर्यसदृश इन्द्रनीलनिभः क्वचित् ।
मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित् ॥ ००५ ॥

एतान्वर्णान्बहुविधान्रूपे बिभ्रत्सनातनः ।
सहस्रनयनः श्रीमाञ्शतशीर्षः सहस्रपात् ॥ ००६ ॥

सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित् ।
ओङ्कारमुद्गिरन्वक्त्रात्सावित्रीं च तदन्वयाम् ॥ ००७ ॥

शेषेभ्यश्चैव वक्त्रेभ्यश्चतुर्वेदोद्गतं वसु ।
आरण्यकं जगौ देवो हरिर्नारायणो वशी ॥ ००८ ॥

वेदीं कमण्डलुं दर्भान्मणिरूपानथोपलान् ।
अजिनं दण्डकाष्ठं च ज्वलितं च हुताशनम् ॥ ००९ ॥

धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा ॥ ००९ ॥

तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः ।
वाग्यतः प्रयतो भूत्वा ववन्दे परमेश्वरम् ॥ ०१० ॥

तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ॥ ०१० ॥

एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥ ०११ ॥

न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिकश्रेष्ठात्त्वं चैवैकान्तिको मतः ॥ ०१२ ॥

ममैतास्तनवः श्रेष्ठा जाता धर्मगृहे द्विज ।
तास्त्वं भजस्व सततं साधयस्व यथागतम् ॥ ०१३ ॥

वृणीष्व च वरं विप्र मत्तस्त्वं यमिहेच्छसि ।
प्रसन्नोऽहं तवाद्येह विश्वमूर्तिरिहाव्ययः ॥ ०१४ ॥

नारद उवाच ॥

अद्य मे तपसो देव यमस्य नियमस्य च ।
सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया ॥ ०१५ ॥

वर एष ममात्यन्तं दृष्टस्त्वं यत्सनातनः ।
भगवान्विश्वदृक्सिंहः सर्वमूर्तिर्महाप्रभुः ॥ ०१६ ॥

भीष्म उवाच ॥

एवं संदर्शयित्वा तु नारदं परमेष्ठिजम् ।
उवाच वचनं भूयो गच्छ नारद माचिरम् ॥ ०१७ ॥

इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ।
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ ०१८ ॥

सिद्धाश्चैते महाभागाः पुरा ह्येकान्तिनोऽभवन् ।
तमोरजोविनिर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ॥ ०१९ ॥

न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥ ०२० ॥

सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै ।
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥ ०२१ ॥

भूतग्रामशरीरेषु नश्यत्सु न विनश्यति ।
अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा ॥ ०२२ ॥

द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः ।
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ॥ ०२३ ॥

यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तम ।
स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥ ०२४ ॥

पश्य देवस्य माहात्म्यं महिमानं च नारद ।
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥ ०२५ ॥

सत्त्वं रजस्तमश्चैव गुणानेतान्प्रचक्षते ।
एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च ॥ ०२६ ॥

एतान्गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते ।
निर्गुणो गुणभुक्चैव गुणस्रष्टा गुणाधिकः ॥ ०२७ ॥

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ ०२८ ॥

खे वायुः प्रलयं याति मनस्याकाशमेव च ।

मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥ ०२९ ॥

अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।
नास्ति तस्मात्परतरं पुरुषाद्वै सनातनात् ॥ ०३० ॥

नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ॥ ०३१ ॥

सर्वभूतात्मभूतो हि वासुदेवो महाबलः ॥ ०३१ ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
ते समेता महात्मानः शरीरमिति सञ्ज्ञितम् ॥ ०३२ ॥

तदाविशति यो ब्रह्मन्नदृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन्प्रभुः ॥ ०३३ ॥

न विना धातुसंघातं शरीरं भवति क्वचित् ।
न च जीवं विना ब्रह्मन्धातवश्चेष्टयन्त्युत ॥ ०३४ ॥

स जीवः परिसंख्यातः शेषः सङ्कर्षणः प्रभुः ।
तस्मात्सनत्कुमारत्वं यो लभेत स्वकर्मणा ॥ ०३५ ॥

यस्मिंश्च सर्वभूतानि प्रलयं यान्ति सङ्क्षये ।
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ॥ ०३६ ॥

तस्मात्प्रसूतो यः कर्ता कार्यं कारणमेव च ।
यस्मात्सर्वं प्रभवति जगत्स्थावरजङ्गमम् ॥ ०३७ ॥

सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु ॥ ०३७ ॥

यो वासुदेवो भगवान्क्षेत्रज्ञो निर्गुणात्मकः ।

ज्ञेयः स एव भगवाञ्जीवः सङ्कर्षणः प्रभुः ॥ ०३८ ॥

सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारो महेश्वरः ॥ ०३९ ॥

मत्तः सर्वं संभवति जगत्स्थावरजङ्गमम् ।
अक्षरं च क्षरं चैव सच्चासच्चैव नारद ॥ ०४० ॥

मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम ।
अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥ ०४१ ॥

निर्गुणो निष्कलश्चैव निर्द्वंद्वो निष्परिग्रहः ।
एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ॥ ०४२ ॥

इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः ॥ ०४२ ॥

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥ ०४३ ॥

मयैतत्कथितं सम्यक्तव मूर्तिचतुष्टयम् ॥ ०४३ ॥

सिद्धा ह्येते महाभागा नरा ह्येकान्तिनोऽभवन् ।
तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ॥ ०४४ ॥

अहं कर्ता च कार्यं च कारणं चापि नारद ।
अहं हि जीवसञ्ज्ञो वै मयि जीवः समाहितः ॥ ०४५ ॥

मैवं ते बुद्धिरत्राभूद्दृष्टो जीवो मयेति च ॥ ०४५ ॥

अहं सर्वत्रगो ब्रह्मन्भूतग्रामान्तरात्मकः ।
भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम् ॥ ०४६ ॥

हिरण्यगर्भो लोकादिश्चतुर्वक्त्रो निरुक्तगः ।
ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ॥ ०४७ ॥

पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमास्थितान् ।
द्वादशैव तथादित्यान्वामं पार्श्वं समास्थितान् ॥ ०४८ ॥

अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ।
नासत्यं चैव दस्रं च भिषजौ पश्य पृष्ठतः ॥ ०४९ ॥

सर्वान्प्रजापतीन्पश्य पश्य सप्त ऋषीनपि ।
वेदान्यज्ञांश्च शतशः पश्यामृतमथौषधीः ॥ ०५० ॥

तपांसि नियमांश्चैव यमानपि पृथग्विधान् ।
तथाष्टगुणमैश्वर्यमेकस्थं पश्य मूर्तिमत् ॥ ०५१ ॥

श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मिनीम् ।
वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम् ॥ ०५२ ॥

ध्रुवं च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम् ।
अम्भोधरान्समुद्रांश्च सरांसि सरितस्तथा ॥ ०५३ ॥

मूर्तिमन्तः पितृगणांश्चतुरः पश्य सत्तम ।
त्रींश्चैवेमान्गुणान्पश्य मत्स्थान्मूर्तिविवर्जितान् ॥ ०५४ ॥

देवकार्यादपि मुने पितृकार्यं विशिष्यते ।
देवानां च पितृणां च पिता ह्येकोऽहमादितः ॥ ०५५ ॥

अहं हयशिरो भूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयान्वितम् ॥ ०५६ ॥

मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् ।
ततस्तस्मै वरान्प्रीतो ददावहमनुत्तमान् ॥ ०५७ ॥

मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ।
अहङ्कारकृतं चैव नाम पर्यायवाचकम् ॥ ०५८ ॥

त्वया कृतां च मर्यादां नातिक्राम्यति कश्चन ।
त्वं चैव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ॥ ०५९ ॥

सुरासुरगणानां च ऋषीणां च तपोधन ।
पितॄणां च महाभाग सततं संशितव्रत ॥ ०६० ॥

विविधानां च भूतानां त्वमुपास्यो भविष्यसि ॥ ०६० ॥

प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा ।
अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा ॥ ०६१ ॥

एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे ।
अहं दत्त्वा वरान्प्रीतो निवृत्तिपरमोऽभवम् ॥ ०६२ ॥

निर्वाणं सर्वधर्माणां निवृत्तिः परमा स्मृता ।
तस्मान्निवृत्तिमापन्नश्चरेत्सर्वाङ्गनिर्वृतः ॥ ०६३ ॥

विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः सांख्यनिश्चितनिश्चयाः ॥ ०६४ ॥

हिरण्यगर्भो भगवानेष छन्दसि सुष्टुतः ।
सोऽहं योगगतिर्ब्रह्मन्योगशास्त्रेषु शब्दितः ॥ ०६५ ॥

एषोऽहं व्यक्तिमागम्य तिष्ठामि दिवि शाश्वतः ।
ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः ॥ ०६६ ॥

कृत्वात्मस्थानि भूतानि स्थावराणि चराणि च ॥ ०६६ ॥

एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम ।
ततो भूयो जगत्सर्वं करिष्यामीह विद्यया ॥ ०६७ ॥

अस्मन्मूर्तिश्चतुर्थी या सासृजच्छेषमव्ययम् ।
स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ॥ ०६८ ॥

प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ।
अनिरुद्धात्तथा ब्रह्मा तत्रादिकमलोद्भवः ॥ ०६९ ॥

ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ।
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः ॥ ०७० ॥

यथा सूर्यस्य गगनादुदयास्तमयाविह ।
नष्टौ पुनर्बलात्काल आनयत्यमितद्युतिः ॥ ०७१ ॥

तथा बलादहं पृथ्वीं सर्वभूतहिताय वै ॥ ०७१ ॥

सत्त्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् ।
आनयिष्यामि स्वं स्थानं वाराहं रूपमास्थितः ॥ ०७२ ॥

हिरण्याक्षं हनिष्यामि दैतेयं बलगर्वितम् ।
नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः ॥ ०७३ ॥

सुरकार्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ॥ ०७३ ॥

विरोचनस्य बलवान्बलिः पुत्रो महासुरः ।
भविष्यति स शक्रं च स्वराज्याच्च्यावयिष्यति ॥ ०७४ ॥

त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ ।
अदित्यां द्वादशः पुत्रः संभविष्यामि कश्यपात् ॥ ०७५ ॥

ततो राज्यं प्रदास्यामि शक्रायामिततेजसे ।
देवताः स्थापयिष्यामि स्वेषु स्थानेषु नारद ॥ ०७६ ॥

बलिं चैव करिष्यामि पातालतलवासिनम् ॥ ०७६ ॥

त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः ।
क्षत्रं चोत्सादयिष्यामि समृद्धबलवाहनम् ॥ ०७७ ॥

संधौ तु समनुप्राप्ते त्रेतायां द्वापरस्य च ।
रामो दाशरथिर्भूत्वा भविष्यामि जगत्पतिः ॥ ०७८ ॥

त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा ।
प्राप्स्यतो वानरत्वं हि प्रजापतिसुतावृषी ॥ ०७९ ॥

तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः ।
ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ॥ ०८० ॥

ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनम् ।
हनिष्ये रावणं संख्ये सगणं लोककण्टकम् ॥ ०८१ ॥

द्वापरस्य कलेश्चैव संधौ पर्यवसानिके ।
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ॥ ०८२ ॥

तत्राहं दानवान्हत्वा सुबहून्देवकण्टकान् ।
कुशस्थलीं करिष्यामि निवासं द्वारकां पुरीम् ॥ ०८३ ॥

वसानस्तत्र वै पुर्यामदितेर्विप्रियङ्करम् ।
हनिष्ये नरकं भौमं मुरं पीठं च दानवम् ॥ ०८४ ॥

प्राग्ज्योतिषपुरं रम्यं नानाधनसमन्वितम् ।
कुशस्थलीं नयिष्यामि हत्वा वै दानवोत्तमान्  ॥ ०८५  ॥

शङ्करं च महासेनं बाणप्रियहितैषिणम् ।
पराजेष्याम्यथोद्युक्तौ देवलोकनमस्कृतौ  ॥ ०८६  ॥

ततः सुतं बलेर्जित्वा बाणं बाहुसहस्रिणम् ।
विनाशयिष्यामि ततः सर्वान्सौभनिवासिनः  ॥ ०८७  ॥

यः कालयवनः ख्यातो गर्गतेजोभिसंवृतः ।
भविष्यति वधस्तस्य मत्त एव द्विजोत्तम  ॥ ०८८  ॥

जरासंधश्च बलवान्सर्वराजविरोधकः ।
भविष्यत्यसुरः स्फीतो भूमिपालो गिरिव्रजे  ॥ ०८९  ॥

मम बुद्धिपरिस्पन्दाद्वधस्तस्य भविष्यति  ॥ ०८९  ॥

समागतेषु बलिषु पृथिव्यां सर्वराजसु ।
वासविः सुसहायो वै मम ह्येको भविष्यति  ॥ ०९०  ॥

एवं लोका वदिष्यन्ति नरनारायणावृषी ।
उद्युक्तौ दहतः क्षत्रं लोककार्यार्थमीश्वरौ  ॥ ०९१  ॥

कृत्वा भारावतरणं वसुधाया यथेप्सितम् ।
सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम  ॥ ०९२  ॥

करिष्ये प्रलयं घोरमात्मज्ञातिविनाशनम्  ॥ ०९२  ॥

कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम् ।
कृत्वा लोकान्गमिष्यामि स्वानहं ब्रह्मसत्कृतान्  ॥ ०९३  ॥

हंसो हयशिराश्चैव प्रादुर्भावा द्विजोत्तम ।
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता तदा ॥ ०९४ ॥

सवेदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ॥ ०९४ ॥

अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ।
अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ॥ ०९५ ॥

लोककार्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः ॥ ०९५ ॥

न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ।
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ॥ ०९६ ॥

एतत्ते सर्वमाख्यातं ब्रह्मन्भक्तिमतो मया ।
पुराणं च भविष्यं च सरहस्यं च सत्तम ॥ ०९७ ॥

एवं स भगवान्देवो विश्वमूर्तिधरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ॥ ०९८ ॥

नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं प्राद्रवद्बदराश्रमम् ॥ ०९९ ॥

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥ १०० ॥

नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणः सदने तात यथा दृष्टं यथा श्रुतम् ॥ १०१ ॥

युधिष्ठिर उवाच ॥

एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः ।
किं ब्रह्मा न विजानीते यतः शुश्राव नारदात् ॥ १०२ ॥

पितामहो हि भगवांस्तस्माद्देवादनन्तरः ।
कथं स न विजानीयात्प्रभावममितौजसः ॥ १०३ ॥

भीष्म उवाच ॥

महाकल्पसहस्राणि महाकल्पशतानि च ।
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥ १०४ ॥

सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।
जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ॥ १०५ ॥

परमात्मानमीशानमात्मनः प्रभवं तथा ॥ १०५ ॥

ये त्वन्ये ब्रह्मसदने सिद्धसंघाः समागताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् ॥ १०६ ॥

तेषां सकाशात्सूर्यश्च श्रुत्वा वै भावितात्मनाम् ।
आत्मानुगामिनां ब्रह्म श्रावयामास भारत ॥ १०७ ॥

षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनाम् ।
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः ॥ १०८ ॥

तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् ॥ १०८ ॥

सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः ।
मेरौ समागता देवाः श्राविताश्चेदमुत्तमम् ॥ १०९ ॥

देवानां तु सकाशाद्वै ततः श्रुत्वासितो द्विजः ।

श्रावयामास राजेन्द्र पितृणां मुनिसत्तमः ॥ ११० ॥

मम चापि पिता तात कथयामास शंतनुः ।
ततो मयैतच्छ्रुत्वा च कीर्तितं तव भारत ॥ १११ ॥

सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ।
सर्वे ते परमात्मानं पूजयन्ति पुनः पुनः ॥ ११२ ॥

इदमाख्यानमार्षेयं पारंपर्यागतं नृप ।
नावासुदेवभक्ताय त्वया देयं कथञ्चन ॥ ११३ ॥

मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै ।
यानि श्रुतानि धर्म्याणि तेषां सारोऽयमुद्धृतः ॥ ११४ ॥

सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतम् ।
एवमेतत्पुरा विप्रैः कथामृतमिहोद्धृतम् ॥ ११५ ॥

यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥ ११६ ॥

प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ११७ ॥

मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ।
जिज्ञासुर्लभते कामान्भक्तो भक्तगतिं व्रजेत् ॥ ११८ ॥

त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥ ११९ ॥

ब्रह्मण्यदेवो भगवान्प्रीयतां ते सनातनः ।
युधिष्ठिर महाबाहो महाबाहुर्जनार्दनः ॥ १२० ॥

वैशंपायन उवाच ॥

श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय ।
भ्रातरश्चास्य ते सर्वे नारायणपराभवन् ॥ १२१ ॥

जितं भगवता तेन पुरुषेणेति भारत ।
नित्यं जप्यपरा भूत्वा सरस्वतीमुदीरयन् ॥ १२२ ॥

यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः ।
स जगौ परमं जप्यं नारायणमुदीरयन् ॥ १२३ ॥

गत्वान्तरिक्षात्सततं क्षीरोदममृताशयम् ।
पूजयित्वा च देवेशं पुनरायात्स्वमाश्रमम् ॥ १२४ ॥

---

# अध्याय ३२७

जनमेजय उवाच ॥

कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः ।
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ ००१ ॥

निवृत्तं चास्थितो धर्मं क्षेमी भागवतप्रियः ।
प्रवृत्तिधर्मान्विदधे स एव भगवान्प्रभुः ॥ ००२ ॥

कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः ।
कथं निवृत्तिधर्माश्च कृता व्यावृत्तबुद्धयः ॥ ००३ ॥

एतं नः संशयं विप्र छिन्धि गुह्यं सनातनम् ।
त्वया नारायणकथा श्रुता वै धर्मसंहिता ॥ ००४ ॥

इमे सब्रह्मका लोकाः ससुरासुरमानवाः ।
क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ॥ ००५ ॥

मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्वाणं परमं सुखम् ॥ ००५ ॥

ये च मुक्ता भवन्तीह पुण्यपापविवर्जिताः ।
ते सहस्रार्चिषं देवं प्रविशन्तीति शुश्रुमः ॥ ००६ ॥

अहो हि दुरनुष्ठेयो मोक्षधर्मः सनातनः ।
यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ॥ ००७ ॥

किं नु ब्रह्मा च रुद्रश्च शक्रश्च बलभित्प्रभुः ।
सूर्यस्ताराधिपो वायुरग्निर्वरुण एव च ॥ ००८ ॥

आकाशं जगती चैव ये च शेषा दिवौकसः ॥ ००८ ॥

प्रलयं न विजानन्ति आत्मनः परिनिर्मितम् ।
ततस्ते नास्थिता मार्गं ध्रुवमक्षयमव्ययम् ॥ ००९ ॥

स्मृत्वा कालपरीमाणं प्रवृत्तिं ये समास्थिताः ।
दोषः कालपरीमाणे महानेष क्रियावताम् ॥ ०१० ॥

एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम् ।
छिन्धीतिहासकथनात्परं कौतूहलं हि मे ॥ ०११ ॥

कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज ।
किमर्थं चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ॥ ०१२ ॥

ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ।
ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥ ०१३ ॥

वैशंपायन उवाच ॥

अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर ।
नातप्ततपसा ह्येष नावेदविदुषा तथा ॥ ०१४ ॥

नापुराणविदा चापि शक्यो व्याहर्तुमञ्जसा ॥ ०१४ ॥

हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ॥ ०१५ ॥

सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥ ०१६ ॥

एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् ॥ ०१७ ॥

वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते ॥ ०१८ ॥

तेषामभ्यस्यतां वेदान्कदाचित्संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्तितः ॥ ०१९ ॥

ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत ॥ ०१९ ॥

शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतः श्रीमान्व्यासो वाक्यमुवाच ह ॥ ०२० ॥

मया हि सुमहत्तप्तं तपः परमदारुणम् ।

भूतं भव्यं भविष्यच्च जानीयामिति सत्तमाः ॥ ०२१ ॥

तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ।
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ॥ ०२२ ॥

त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ।
तच्छृणुध्वं यथाज्ञानं वक्ष्ये संशयमुत्तमम् ॥ ०२३ ॥

यथा वृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ॥ ०२३ ॥

परमात्मेति यं प्राहुः सांख्ययोगविदो जनाः ।
महापुरुषसञ्ज्ञां स लभते स्वेन कर्मणा ॥ ०२४ ॥

तस्मात्प्रसूतमव्यक्तं प्रधानं तद्विदुर्बुधाः ।
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ॥ ०२५ ॥

अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ।
योऽसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ॥ ०२६ ॥

सोऽहङ्कार इति प्रोक्तः सर्वतेजोमयो हि सः ॥ ०२६ ॥

पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहङ्कारप्रसूतानि महाभूतानि भारत ॥ ०२७ ॥

महाभूतानि सृष्ट्वाथ तद्गुणान्निर्ममे पुनः ।
भूतेभ्यश्चैव निष्पन्ना मूर्तिमन्तोऽष्ट ताञ्शृणु ॥ ०२८ ॥

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महात्मा वै मनुः स्वायंभुवस्तथा ॥ ०२९ ॥

ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः ॥ ०२९ ॥

वेदान्वेदाङ्गसंयुक्तान्यज्ञान्यज्ञाङ्गसंयुतान् ।
निर्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः ॥ ०३० ॥

अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ॥ ०३० ॥

रुद्रो रोषात्मको जातो दशान्यान्सोऽसृजत्स्वयम् ।
एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ॥ ०३१ ॥

ते रुद्राः प्रकृतिश्चैव सर्वे चैव सुरर्षयः ।
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः ॥ ०३२ ॥

वयं हि सृष्टा भगवंस्त्वया वै प्रभविष्णुना ।
येन यस्मिन्नधीकारे वर्तितव्यं पितामह ॥ ०३३ ॥

योऽसौ त्वया विनिर्दिष्टो अधिकारोऽर्थचिन्तकः ।
परिपाल्यः कथं तेन सोऽधिकारोऽधिकारिणा ॥ ०३४ ॥

प्रदिशस्व बलं तस्य योऽधिकारार्थचिन्तकः ।
एवमुक्तो महादेवो देवांस्तानिदमब्रवीत् ॥ ०३५ ॥

साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः ।
ममाप्येषा समुत्पन्ना चिन्ता या भवतां मता ॥ ०३६ ॥

लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः ।
कथं बलक्षयो न स्याद्युष्माकं ह्यात्मनश्च मे ॥ ०३७ ॥

इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम् ।
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ॥ ०३८ ॥

ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा ।

क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः ॥ ०३९ ॥

ते तपः समुपातिष्ठन्ब्रह्मोक्तं वेदकल्पितम् ।
स महानियमो नाम तपश्चर्या सुदारुणा ॥ ०४० ॥

ऊर्ध्वं दृष्टिर्बाहवश्च एकाग्रं च मनोऽभवत् ।
एकपादस्थिताः सम्यक्काष्ठभूताः समाहिताः ॥ ०४१ ॥

दिव्यं वर्षसहस्रं ते तपस्तप्त्वा तदुत्तमम् ।
शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम् ॥ ०४२ ॥

भो भोः सब्रह्मका देवा ऋषयश्च तपोधनाः ।
स्वागतेनार्च्य वः सर्वाञ्श्रावये वाक्यमुत्तमम् ॥ ०४३ ॥

विज्ञातं वो मया कार्यं तच्च लोकहितं महत् ।
प्रवृत्तियुक्तं कर्तव्यं युष्मत्प्राणोपबृंहणम् ॥ ०४४ ॥

सुतप्तं वस्तपो देवा ममाराधनकाम्यया ।
भोक्ष्यथास्य महासत्त्वास्तपसः फलमुत्तमम् ॥ ०४५ ॥

एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥ ०४६ ॥

सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यशः ।
तथा श्रेयो विधास्यामि यथाधीकारमीश्वराः ॥ ०४७ ॥

श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥ ०४८ ॥

वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।
तस्मिन्सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् ॥ ०४९ ॥

देवा देवर्षयश्चैव सर्वे भागानकल्पयन्  ॥ ०४९  ॥

ते कार्तयुगधर्माणो भागाः परमसत्कृताः ।
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्  ॥ ०५०  ॥

बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम्  ॥ ०५०  ॥

ततोऽथ वरदो देवस्तान्सर्वानमरान्स्थितान् ।
अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः  ॥ ०५१  ॥

येन यः कल्पितो भागः स तथा समुपागतः ।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम्  ॥ ०५२  ॥

एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम् ।
यूयं यज्ञैरिज्यमानाः समाप्तवरदक्षिणैः  ॥ ०५३  ॥

युगे युगे भविष्यध्वं प्रवृत्तिफलभोगिनः  ॥ ०५३  ॥

यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान्  ॥ ०५४  ॥

यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः  ॥ ०५५  ॥

यूयं लोकान्धारयध्वं यज्ञभागफलोदिताः ।
सर्वार्थचिन्तका लोके यथाधीकारनिर्मिताः  ॥ ०५६  ॥

याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः ।
ताभिराप्यायितबला लोकान्वै धारयिष्यथ  ॥ ०५७  ॥

यूयं हि भाविता लोके सर्वयज्ञेषु मानवैः ।
मां ततो भावयिष्यध्वमेषा वो भावना मम ॥ ०५८ ॥

इत्यर्थं निर्मिता वेदा यज्ञाश्चौषधिभिः सह ।
एभिः सम्यक्प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ॥ ०५९ ॥

निर्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितम् ।
मया कृतं सुरश्रेष्ठा यावत्कल्पक्षयादिति ॥ ०६० ॥

चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ॥ ०६० ॥

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मानसा निर्मिता हि वै ॥ ०६१ ॥

एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्येन कल्पिताः ॥ ०६२ ॥

अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥ ०६३ ॥

सनः सनत्सुजातश्च सनकः ससनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ ०६४ ॥

सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तं धर्ममास्थिताः ॥ ०६५ ॥

एते योगविदो मुख्याः सांख्यधर्मविदस्तथा ।
आचार्या मोक्षशास्त्रे च मोक्षधर्मप्रवर्तकाः ॥ ०६६ ॥

यतोऽहं प्रसृतः पूर्वमव्यक्तात्त्रिगुणो महान् ।
तस्मात्परतरो योऽसौ क्षेत्रज्ञ इति कल्पितः ॥ ०६७ ॥

सोऽहं क्रियावतां पन्थाः पुनरावृत्तिदुर्लभः ॥ ०६७ ॥

यो यथा निर्मितो जन्तुर्यस्मिन्यस्मिंश्च कर्मणि ।
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुतेऽवशः ॥ ०६८ ॥

एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ।
एष माता पिता चैव युष्माकं च पितामहः ॥ ०६९ ॥

मयानुशिष्टो भविता सर्वभूतवरप्रदः ॥ ०६९ ॥

अस्य चैवानुजो रुद्रो ललाटाद्यः समुत्थितः ।
ब्रह्मानुशिष्टो भविता सर्वत्रसवरप्रदः ॥ ०७० ॥

गच्छध्वं स्वानधीकारांश्चिन्तयध्वं यथाविधि ।
प्रवर्तन्तां क्रियाः सर्वाः सर्वलोकेषु माचिरम् ॥ ०७१ ॥

प्रदृश्यन्तां च कर्माणि प्राणिनां गतयस्तथा ।
परिनिर्मितकालानि आयूंषि च सुरोत्तमाः ॥ ०७२ ॥

इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ।
अहिंस्या यज्ञपशवो युगेऽस्मिन्नैतदन्यथा ॥ ०७३ ॥

चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः ॥ ०७३ ॥

ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ।
प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे ॥ ०७४ ॥

तत्र पादचतुर्थो वै धर्मस्य न भविष्यति ॥ ०७४ ॥

ततो वै द्वापरं नाम मिश्रः कालो भविष्यति ।

द्विपादहीनो धर्मश्च युगे तस्मिन्भविष्यति ॥ ०७५ ॥

ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते ।
एकपादस्थितो धर्मो यत्र तत्र भविष्यति ॥ ०७६ ॥

देवा ऊचुः ॥

एकपादस्थिते धर्मे यत्रक्वचनगामिनि ।
कथं कर्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥ ०७७ ॥

श्रीभगवानुवाच ॥

यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
अहिंसाधर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः ॥ ०७८ ॥

स वै देशः सेवितव्यो मा वोऽधर्मः पदा स्पृशेत् ॥ ०७८ ॥

व्यास उवाच ॥

तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा ।
नमस्कृत्वा भगवते जग्मुर्देशान्यथेप्सितान् ॥ ०७९ ॥

गतेषु त्रिदिवौकःसु ब्रह्मैकः पर्यवस्थितः ।
दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम् ॥ ०८० ॥

तं देवो दर्शयामास कृत्वा हयशिरो महत् ।
साङ्गानावर्तयन्वेदान्कमण्डलुगणित्रधृक् ॥ ०८१ ॥

ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम् ।
लोककर्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ॥ ०८२ ॥

मूर्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः ।
स परिष्वज्य देवेन वचनं श्रावितस्तदा ॥ ०८३ ॥

लोककार्यगतीः सर्वास्त्वं चिन्तय यथाविधि ।
धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः ॥ ०८४ ॥

त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा ॥ ०८४ ॥

यदा च सुरकार्यं ते अविषह्यं भविष्यति ।
प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकः ॥ ०८५ ॥

एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत ।
तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिराद्गतः ॥ ०८६ ॥

एवमेष महाभागः पद्मनाभः सनातनः ।
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ॥ ०८७ ॥

निवृत्तिं चास्थितो धर्मं गतिमक्षयधर्मिणाम् ।
प्रवृत्तिधर्मान्विदधे कृत्वा लोकस्य चित्रताम् ॥ ०८८ ॥

स आदिः स मध्यः स चान्तः प्रजानां ; स धाता स धेयः स कर्ता स कार्यम् ।
युगान्ते स सुप्तः सुसङ्क्षिप्य लोका ;न्युगादौ प्रबुद्धो जगद्ध्युत्ससर्ज ॥ ०८९ ॥

तस्मै नमध्वं देवाय निर्गुणाय गुणात्मने ।
अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ॥ ०९० ॥

महाभूताधिपतये रुद्राणां पतये तथा ।
आदित्यपतये चैव वसूनां पतये तथा ॥ ०९१ ॥

अश्विभ्यां पतये चैव मरुतां पतये तथा ।
वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ॥ ०९२ ॥

समुद्रवासिने नित्यं हरये मुञ्जकेशिने ।
शान्तये सर्वभूतानां मोक्षधर्मानुभाषिणे ॥ ०९३ ॥

तपसां तेजसां चैव पतये यशसोऽपि च ।
वाचश्च पतये नित्यं सरितां पतये तथा ॥ ०९४ ॥

कपर्दिने वराहाय एकश्टङ्गाय धीमते ।
विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते सदा ॥ ०९५ ॥

गुह्याय ज्ञानदृश्याय अक्षराय क्षराय च ।
एष देवः सञ्चरति सर्वत्रगतिरव्ययः ॥ ०९६ ॥

एवमेतत्पुरा दृष्टं मया वै ज्ञानचक्षुषा ।
कथितं तच्च वः सर्वं मया पृष्टेन तत्त्वतः ॥ ०९७ ॥

क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः ।
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि ॥ ०९८ ॥

वैशंपायन उवाच ॥

इत्युक्तास्तु वयं तेन वेदव्यासेन धीमता ।
सर्वे शिष्याः सुतश्चास्य शुकः परमधर्मवित् ॥ ०९९ ॥

स चास्माकमुपाध्यायः सहास्माभिर्विशां पते ।
चतुर्वेदोद्गताभिश्च ऋग्भिस्तमभितुष्टुवे ॥ १०० ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एवं मेऽकथयद्राजन्पुरा द्वैपायनो गुरुः ॥ १०१ ॥

यश्चेदं श्टणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।

नमो भगवते कृत्वा समाहितमना नरः  ॥ १०२  ॥

भवत्यरोगो द्युतिमान्बलरूपसमन्वितः ।
आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्  ॥ १०३  ॥

कामकामी लभेत्कामं दीर्घमायुरवाप्नुयात् ।
ब्राह्मणः सर्ववेदी स्यात्क्षत्रियो विजयी भवेत्  ॥ १०४  ॥

वैश्यो विपुललाभः स्याच्छूद्रः सुखमवाप्नुयात्  ॥ १०४  ॥

अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम् ।
लग्नगर्भा विमुच्येत गर्भिणी जनयेत्सुतम्  ॥ १०५  ॥

वन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत्  ॥ १०५  ॥

क्षेमेण गच्छेदध्वानमिदं यः पठते पथि ।
यो यं कामं कामयते स तमाप्नोति च ध्रुवम्  ॥ १०६  ॥

इदं महर्षेर्वचनं विनिश्चितं ; महात्मनः पुरुषवरस्य कीर्तनम् ।
समागमं चर्षिदिवौकसामिमं ; निशम्य भक्ताः सुसुखं लभन्ते  ॥ १०७  ॥

---

# भगवन्नामनिर्वचनम्

## अध्याय ३२८

जनमेजय उवाच  ॥

अस्तौषीद्यैरिमं व्यासः सशिष्यो मधुसूदनम् ।
नामभिर्विविधैरेषां निरुक्तं भगवन्मम ॥ ००१ ॥

वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः ।
श्रुत्वा भवेयं यत्पूतः शरच्चन्द्र इवामलः ॥ ००२ ॥

वैशंपायन उवाच ॥

शृणु राजन्यथाचष्ट फल्गुनस्य हरिर्विभुः ।
प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्मजम् ॥ ००३ ॥

नामभिः कीर्तितैस्तस्य केशवस्य महात्मनः ।
पृष्टवान्केशवं राजन्फल्गुनः परवीरहा ॥ ००४ ॥

अर्जुन उवाच ॥

भगवन्भूतभव्येश सर्वभूतसृगव्यय ।
लोकधाम जगन्नाथ लोकानामभयप्रद ॥ ००५ ॥

यानि नामानि ते देव कीर्तितानि महर्षिभिः ।
वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः ॥ ००६ ॥

तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव ।
न ह्यन्यो वर्तयेन्नाम्नां निरुक्तं त्वामृते प्रभो ॥ ००७ ॥

श्रीभगवानुवाच ॥

ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ॥ ००८ ॥

सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।

बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥ ००९ ॥

गौणानि तत्र नामानि कर्मजानि च कानिचित् ।
निरुक्तं कर्मजानां च शृणुष्व प्रयतोऽनघ ॥ ०१० ॥

कथ्यमानं मया तात त्वं हि मेऽर्धं स्मृतः पुरा ॥ ०१० ॥

नमोऽतियशसे तस्मै देहिनां परमात्मने ।
नारायणाय विश्वाय निर्गुणाय गुणात्मने ॥ ०११ ॥

यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः ।
योऽसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च ॥ ०१२ ॥

अष्टादशगुणं यत्तत्सत्त्वं सत्त्ववतां वर ।
प्रकृतिः सा परा मह्यं रोदसी योगधारिणी ॥ ०१३ ॥

ऋता सत्यामराजय्या लोकानामात्मसञ्ज्ञिता ॥ ०१३ ॥

तस्मात्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
ततो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ॥ ०१४ ॥

अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः ॥ ०१४ ॥

ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ।
प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षण ॥ ०१५ ॥

तत्र ब्रह्मा समभवत्स तस्यैव प्रसादजः ॥ ०१५ ॥

अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ।
क्रोधाविष्टस्य सञ्जज्ञे रुद्रः संहारकारकः ॥ ०१६ ॥

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादेशितपन्थानौ सृष्टिसंहारकारकौ ॥ ०१७ ॥

निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ॥ ०१७ ॥

कपर्दी जटिलो मुण्डः श्मशानगृहसेवकः ।
उग्रव्रतधरो रुद्रो योगी त्रिपुरदारुणः ॥ ०१८ ॥

दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ।
नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे ॥ ०१९ ॥

तस्मिन्हि पूज्यमाने वै देवदेवे महेश्वरे ।
संपूजितो भवेत्पार्थ देवो नारायणः प्रभुः ॥ ०२० ॥

अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन ।
तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ॥ ०२१ ॥

यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ।
आत्मानं नार्चयेत्कश्चिदिति मे भावितं मनः ॥ ०२२ ॥

मया प्रमाणं हि कृतं लोकः समनुवर्तते ॥ ०२२ ॥

प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।
यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ॥ ०२३ ॥

रुद्रो नारायणश्चैव सत्त्वमेकं द्विधाकृतम् ।
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥ ०२४ ॥

न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति सञ्चिन्त्य मनसा पुराणं विश्वमीश्वरम् ॥ ०२५ ॥

पुत्रार्थमाराधितवानात्मानमहमात्मना ॥ ०२५ ॥

न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
ऋत आत्मानमेवेति ततो रुद्रं भजाम्यहम् ॥ ०२६ ॥

सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥ ०२७ ॥

भविष्यतां वर्ततां च भूतानां चैव भारत ।
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ॥ ०२८ ॥

नमस्व हव्यदं विष्णुं तथा शरणदं नम ।
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नम ॥ ०२९ ॥

चतुर्विधा मम जना भक्ता एवं हि ते श्रुतम् ।
तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ॥ ०३० ॥

अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् ॥ ०३० ॥

ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु श्रेष्ठभाक् ॥ ०३१ ॥

ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रबुद्धवर्याः सेवन्ते मामेवैष्यन्ति यत्परम् ॥ ०३२ ॥

भक्तं प्रति विशेषस्ते एष पार्थानुकीर्तितः ॥ ०३२ ॥

त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ ।
भारावतरणार्थं हि प्रविष्टौ मानुषीं तनुम् ॥ ०३३ ॥

जानाम्यध्यात्मयोगांश्च योऽहं यस्माच्च भारत ।

निवृत्तिलक्षणो धर्मस्तथाभ्युदयिकोऽपि च ॥ ०३४ ॥

नराणामयनं ख्यातमहमेकः सनातनः ।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ०३५ ॥

अयनं मम तत्पूर्वमतो नारायणो ह्यहम् ॥ ०३५ ॥

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ॥ ०३६ ॥

गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥ ०३७ ॥

अधिभूतानि चान्तेऽहं तदिच्छंश्चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः ॥ ०३८ ॥

दमात्सिद्धिं परीप्सन्तो मां जनाः कामयन्ति हि ।
दिवं चोर्वीं च मध्यं च तस्माद्दामोदरो ह्यहम् ॥ ०३९ ॥

पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा ।
ममैतानि सदा गर्भे पृश्निगर्भस्ततो ह्यहम् ॥ ०४० ॥

ऋषयः प्राहुरेवं मां त्रितकूपाभिपातितम् ।
पृश्निगर्भ त्रितं पाहीत्येकतद्वितपातितम् ॥ ०४१ ॥

ततः स ब्रह्मणः पुत्र आद्यो ऋषिवरस्त्रितः ।
उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्तनात् ॥ ०४२ ॥

सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत ।
अंशवो ये प्रकाशन्ते मम ते केशसञ्ज्ञिताः ॥ ०४३ ॥

सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ॥ ०४३ ॥

स्वपत्न्यामाहितो गर्भ उतथ्येन महात्मना ।
उतथ्येऽन्तर्हिते चैव कदाचिद्देवमायया ॥ ०४४ ॥

बृहस्पतिरथाविन्दत्तां पत्नीं तस्य भारत ॥ ०४४ ॥

ततो वै तमृषिश्रेष्ठं मैथुनोपगतं तथा ।
उवाच गर्भः कौन्तेय पञ्चभूतसमन्वितः ॥ ०४५ ॥

पूर्वागतोऽहं वरद नार्हस्यम्बां प्रबाधितुम् ।
एतद्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च ॥ ०४६ ॥

मैथुनोपगतो यस्मात्त्वयाहं विनिवारितः ।
तस्मादन्धो जास्यसि त्वं मच्छापान्नात्र संशयः ॥ ०४७ ॥

स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान् ।
स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा ॥ ०४८ ॥

वेदानवाप्य चतुरः साङ्गोपाङ्गान्सनातनान् ।
प्रयोजयामास तदा नाम गुह्यमिदं मम ॥ ०४९ ॥

आनुपूर्व्येण विधिना केशवेति पुनः पुनः ।
स चक्षुष्मान्समभवद्गौतमश्चाभवत्पुनः ॥ ०५० ॥

एवं हि वरदं नाम केशवेति ममार्जुन ।
देवानामथ सर्वेषामृषीणां च महात्मनाम् ॥ ०५१ ॥

अग्निः सोमेन संयुक्त एकयोनि मुखं कृतम् ।
अग्नीषोमात्मकं तस्माज्जगत्कृत्स्नं चराचरम् ॥ ०५२ ॥

अपि हि पुराणे भवति
एकयोन्यात्मकावग्नीषोमौ
देवाश्चाग्निमुखा इति
एकयोनित्वाच्च परस्परं महयन्तो लोकान्धारयत इति ॥ ०५३ ॥

---

# ब्राह्मणमाहात्म्यमग्निषोमीयात्मकम्

## अध्याय ३२९

अर्जुन उवाच ॥

अग्नीषोमौ कथं पूर्वमेकयोनी प्रवर्तितौ ।
एष मे संशयो जातस्तं छिन्धि मधुसूदन ॥ ००१ ॥

श्रीभगवानुवाच ॥

हन्त ते वर्तयिष्यामि पुराणं पाण्डुनन्दन ।
आत्मतेजोद्भवं पार्थ श‍ृणुष्वैकमना मम ॥ ००२ ॥

संप्रक्षालनकालेऽतिक्रान्ते चतुर्थे युगसहस्रान्ते
अव्यक्ते सर्वभूतप्रलये स्थावरजङ्गमे
ज्योतिर्धरणिवायुरहितेऽन्धे तमसि जलैकार्णवे लोके
तम इत्येवाभिभूतेऽसञ्ज्ञकेऽद्वितीये प्रतिष्ठिते
नैव रात्र्यां न दिवसे न सति नासति न व्यक्ते नाव्यक्ते व्यवस्थिते
एतस्यामवस्थायां नारायणगुणाश्रयादक्षयादजरादनिन्द्रियादग्राह्यादसंभवात्सत्यादहिंस्राल्ललामा
अक्षयादजरामरादमूर्तितः सर्वव्यापिनः सर्वकर्तुः
शाश्वतात्तमसः पुरुषः प्रादुर्भूतो हरिरव्ययः ॥ ००३ ॥

निदर्शनमपि ह्यत्र भवति
नासीदहो न रात्रिरासीत्
न सदासीन्नासदासीत्
तम एव पुरस्तादभवद्विश्वरूपम्
सा विश्वस्य जननीत्येवमस्यार्थोऽनुभाष्यते ॥ ००४ ॥

तस्येदानीं तमःसंभवस्य पुरुषस्य पद्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज
ततो भूतसर्गे प्रवृत्ते प्रजाक्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठत्
यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणाः
योऽग्निस्तत्क्षत्रं क्षत्राद्ब्रह्म बलवत्तरम्
कस्मादिति लोकप्रत्यक्षगुणमेतत्तद्यथा
ब्राह्मणेभ्यः परं भूतं नोत्पन्नपूर्वम्
दीप्यमानेऽग्नौ जुहोतीति कृत्वा ब्रवीमि
भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति ॥ ००५ ॥

मन्त्रवादोऽपि हि भवति
त्वमग्ने यज्ञानां होता विश्वेषाम्
हितो देवेभिर्मानुषे जने इति
निदर्शनं चात्र भवति
विश्वेषामग्ने यज्ञानां होतेति
हितो देवैर्मानुषैर्जगत इति
अग्निर्हि यज्ञानां होता कर्ता
स चाग्निर्ब्रह्म ॥ ००६ ॥

न ह्यृते मन्त्राद्धवनमस्ति
न विना पुरुषं तपः संभवति
हविर्मन्त्राणां संपूजा विद्यते देवमनुष्याणामनेन त्वं होतेति नियुक्तः
ये च मानुषा होत्राधिकारास्ते च

ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्विजात्योः
तस्माद्ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति
यज्ञा देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति ॥ ००७ ॥

शतपथे हि ब्राह्मणं भवति
अग्नौ समिद्धे स जुहोति यो विद्वान्ब्राह्मणमुखे दानाहुतिं जुहोति
एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति
अग्निर्विष्णुः सर्वभूतान्यनुप्रविश्य प्राणान्धारयति
अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति ॥ ००८ ॥

विश्वं ब्रह्मासृजत्पूर्वं सर्वादिर्निरवस्करम् ।
ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः ॥ ००९ ॥

ब्राह्मणानां मतिर्वाक्यं कर्म श्रद्धा तपांसि च ।
धारयन्ति महीं द्यां च शैत्याद्वार्यमृतं यथा ॥ ०१० ॥

नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः ।
ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये ॥ ०११ ॥

नैषामुक्षा वर्धते नोत वाहा ; न गर्गरो मथ्यते संप्रदाने ।
अपध्वस्ता दस्युभूता भवन्ति ; येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः ॥ ०१२ ॥

वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्वात्मानः सर्वकर्तारः सर्वभावनाश्च ब्राह्मणाः
वाक्समकालं हि तस्य देवस्य वरप्रदस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः
इत्थं च सुरासुरविशिष्टा ब्राह्मणा यदा मया ब्रह्मभूतेन पुरा
स्वयमेवोत्पादिताः सुरासुरमहर्षयो भूतविशेषाः स्थापिता निगृहीताश्च ॥ ०१३ ॥

अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः

कौशिकनिमित्तं चेन्द्रो मुष्कवियोगं मेषवृषणत्वं चावाप
अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य पुरंदरस्य च्यवनेन स्तम्भितो बाहुः
क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चात्मानं संयोज्य नेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ॥ ०१४ ॥

त्रिपुरवधार्थं दीक्षामभ्युपगतस्य रुद्रस्योशनसा शिरसो जटा उत्कृत्य प्रयुक्ताः
ततः प्रादुर्भूता भुजगाः
तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपनीतः
पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमेव वा ॥ ०१५ ॥

अमृतोत्पादने पुरश्चरणतामुपगतस्याङ्गिरसो बृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः
अथ बृहस्पतिरपां चुक्रोध
यस्मान्ममोपस्पृशतः कलुषीभूता न प्रसादमुपगतास्तस्मादद्यप्रभृति झषमकरमत्स्यकच्छपजन्तुस
कलुषीभवतेति
तदाप्रभृत्यापो यादोभिः सङ्कीर्णाः संवृत्ताः ॥ ०१६ ॥

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्रीयोऽसुराणाम्
स प्रत्यक्षं देवेभ्यो भागमददत्परोक्षमसुरेभ्यः ॥ ०१७ ॥

अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त
हे स्वसरयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो भागमददत्परोक्षमस्माकम्
ततो देवा वर्धन्ते वयं क्षीयामः
तदेनं त्वं वारयितुमर्हसि तथा यथास्मान्भजेदिति ॥ ०१८ ॥

अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच
पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि
नार्हस्येवं कर्तुमिति

स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा संपूज्य हिरण्यकशिपुमगात्
॥ ०१९ ॥

हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान्
यस्मात्त्वयान्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वमपूर्वात्सत्त्वजाताद्वधं प्राप्स्यसीति
तच्छापदानाद्धिरण्यकशिपुः प्राप्तवान्वधम् ॥ ०२० ॥

विश्वरूपो मातृपक्षवर्धनोऽत्यर्थं तपस्यभवत्
तस्य व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज
ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत्तासु चाप्सरःसु नचिरादेव सक्तोऽभवत्
सक्तं चैनं ज्ञात्वाप्सरस ऊचुर्गच्छामहे वयं यथागतमिति ॥ ०२१ ॥

तास्त्वाष्ट्र उवाच
क्व गमिष्यथ आस्यतां तावन्मया सह श्रेयो भविष्यतीति
तास्तमब्रुवन्
वयं देवस्त्रियोऽप्सरस इन्द्रं वरदं पुरा प्रभविष्णुं वृणीमह इति ॥ ०२२ ॥

अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा न भविष्यन्तीति
ततो मन्त्राञ्जजाप
तैर्मन्त्रैः प्रावर्धत त्रिशिराः
एकेनास्येन सर्वलोकेषु द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपावेकेनाप एकेन सेन्द्रान्देवान्
अथेन्द्रस्तं विवर्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे ॥ ०२३ ॥

देवाश्च ते सहेन्द्रेण ब्रह्माणमभिजग्मुरूचुश्च
विश्वरूपेण सर्वयज्ञेषु सुहुतः सोमः पीयते
वयमभागाः संवृत्ताः
असुरपक्षो वर्धते वयं क्षीयामः
तदर्हसि नो विधातुं श्रेयो यदनन्तरमिति ॥ ०२४ ॥

तान्ब्रह्मोवाच ऋषिर्भार्गवस्तपस्तप्यते दधीचः

स याच्यतां वरं यथा कलेवरं जह्यात्
तस्यास्थिभिर्वज्रं क्रियतामिति ॥ ०२५ ॥

देवास्तत्रागच्छन्यत्र दधीचो भगवानृषिस्तपस्तेपे
सेन्द्रा देवास्तमभिगम्योचुर्भगवंस्तपसः कुशलमविघ्नं चेति
तान्दधीच उवाच स्वागतं भवद्भ्यः किं क्रियताम्
यद्वक्ष्यथ तत्करिष्यामीति
ते तमब्रुवञ्शरीरपरित्यागं लोकहितार्थं भगवान्कर्तुमर्हतीति
अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागं चकार ॥ ०२६ ॥

तस्य परमात्मन्यवसृते तान्यस्थीनि धाता सङ्गृह्य वज्रमकरोत्
तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसंभूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान शिरसां चास्य छेदनमकरोत्
तस्मादनन्तरं विश्वरूपगात्रमथनसंभवं त्वष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान ॥ ०२७ ॥

तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं परित्यज्य अप्सु संभवां शीतलां मानससरोगतां नलिनीं प्रपेदे
तत्र चैश्वर्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश ॥ ०२८ ॥

अथ ब्रह्मवध्याभयप्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव
देवान्रजस्तमश्चाविवेश
मन्त्रा न प्रावर्तन्त महर्षीणाम्
रक्षांसि प्रादुरभवन्
ब्रह्म चोत्सादनं जगाम
अनिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः ॥ ०२९ ॥

अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराजत्वेऽभिषिषिचुः
नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयां बभूव

अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च बभूवुः ॥ ०३० ॥

अथोवाच नहुषः
सर्वं मां शक्रोपभुक्तमुपस्थितमृते शचीमिति
स एवमुक्त्वा शचीसमीपमगमदुवाच चैनाम्
सुभगेऽहमिन्द्रो देवानां भजस्व मामिति
तं शची प्रत्युवाच
प्रकृत्या त्वं धर्मवत्सलः सोमवंशोद्भवश्च
नार्हसि परपत्नीधर्षणं कर्तुमिति ॥ ०३१ ॥

तामथोवाच नहुषः
ऐन्द्रं पदमध्यास्यते मया
अहमिन्द्रस्य राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रभुक्तेति
सा तमुवाच
अस्ति मम किञ्चिद्व्रतमपर्यवसितम्
तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति
स शच्यैवमभिहितो नहुषो जगाम ॥ ०३२ ॥

अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयगृहीता बृहस्पतिमुपागच्छत्
स च तामभिगतां दृष्ट्वैव ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाच
अनेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय
सा तवेन्द्रं दर्शयिष्यतीति ॥ ०३३ ॥

साथ महानियममास्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत्
सोपश्रुतिः शचीसमीपमगात्
उवाच चैनामियमस्मि त्वयोपहूतोपस्थिता
किं ते प्रियं करवाणीति
तां मूर्ध्ना प्रणम्योवाच शची भगवत्यर्हसि मे भर्तारं दर्शयितुं त्वं सत्या मता चेति
सैनां मानसं सरोऽनयत्
तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत् ॥ ०३४ ॥

तामिन्द्रः पत्नीं कृशां ग्लानां च दृष्ट्वा चिन्तयां बभूव
अहो मम महद्दुःखमिदमद्योपगतम्
नष्टं हि मामियमन्विष्योपागमद्दुःखार्तेति
तामिन्द्र उवाच कथं वर्तयसीति
सा तमुवाच
नहुषो मामाह्वयति
कालश्चास्य मया कृत इति ॥ ०३५ ॥

तामिन्द्र उवाच
गच्छ
नहुषस्त्वया वाच्योऽपूर्वेण मामृषियुक्तेन यानेन त्वमधिरूढ उद्वहस्व
इन्द्रस्य हि महान्ति वाहनानि मनसः प्रियाण्यधिरूढानि मया
त्वमन्येनोपयातुमर्हसीति
सैवमुक्ता हृष्टा जगाम
इन्द्रोऽपि बिसग्रन्थिमेवाविवेश भूयः ॥ ०३६ ॥

अथेन्द्राणीमभ्यागतां दृष्ट्वोवाच नहुषः पूर्णः स काल इति
तं शच्यब्रवीच्छक्रेण यथोक्तम्
स महर्षियुक्तं वाहनमधिरूढः शचीसमीपमुपागच्छत् ॥ ०३७ ॥

अथ मैत्रावरुणिः कुम्भयोनिरगस्त्यो महर्षीन्विक्रियमाणांस्तान्नहुषेणापश्यत्
पद्भ्यां च तेनास्पृश्यत
ततः स नहुषमब्रवीदकार्यप्रवृत्त पाप पतस्व महीम्
सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति
स महर्षिवाक्यसमकालमेव तस्माद्यानादवापतत् ॥ ०३८ ॥

अथानिन्द्रं पुनस्त्रैलोक्यमभवत्
ततो देवा ऋषयश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुः
ऊचुश्चैनं भगवन्निन्द्रं ब्रह्मवध्याभिभूतं त्रातुमर्हसीति

ततः स वरदस्तानब्रवीदश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतु
ततः स्वं स्थानं प्राप्स्यतीति ॥ ०३९ ॥

ततो देवा ऋषयश्चेन्द्रं नापश्यन्यदा तदा शचीमूचुर्गच्छ सुभगे इन्द्रमानयस्वेति
सा पुनस्तत्सरः समभ्यगच्छत्
इन्द्रश्च तस्मात्सरसः समुत्थाय बृहस्पतिमभिजगाम
बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाहरत्
ततः कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य वाहनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः
स्वस्थानं प्रापयामास
ततः स देवराड्देवैर्ऋषिभिः स्तूयमानस्त्रिविष्टपस्थो निष्कल्मषो बभूव
ब्रह्मवध्यां चतुर्षु स्थानेषु वनिताग्निवनस्पतिगोषु व्यभजत्
एवमिन्द्रो ब्रह्मतेजःप्रभावोपबृंहितः शत्रुवधं कृत्वा
स्वस्थानं प्रापितः ॥ ०४१ ॥

आकाशगङ्गागतश्च पुरा भरद्वाजो महर्षिरुपास्पृशंस्त्रीन्क्रमान्क्रमता विष्णुनाभ्यासादितः
स भरद्वाजेन ससलिलेन पाणिनोरसि ताडितः सलक्षणोरस्कः
संवृत्तः ॥ ०४२ ॥

भृगुणा महर्षिणा शप्तोऽग्निः सर्वभक्षत्वमुपनीतः ॥ ०४३ ॥

अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वासुरान्हनिष्यन्तीति
तत्र बुधो व्रतचर्यासमाप्तावागच्छत्
अदितिं चावोचद्भिक्षां देहीति
तत्र देवैः पूर्वमेतत्प्राश्यं नान्येनेत्यदितिर्भिक्षां नादात्
अथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन विवस्वतो द्वितीये जन्मन्यण्डसञ्ज्ञितस्याण्डं
मारितमदित्याः
स मार्तण्डो विवस्वानभवच्छ्राद्धदेवः ॥ ०४४ ॥

दक्षस्य वै दुहितरः षष्टिरासन्
ताभ्यः कश्यपाय त्रयोदश प्रादाद्दश धर्माय दश मनवे सप्तविंशतिमिन्दवे
तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकां प्रीतिमकरोत्

ततस्ताः शेषाः पत्न्य ईर्ष्यावत्यः पितुः समीपं गत्वेममर्थं शशंसुः
भगवन्नस्मासु तुल्यप्रभावासु सोमो रोहिणीमधिकं भजतीति
सोऽब्रवीद्यक्ष्मैनमावेक्ष्यतीति ॥ ०४५ ॥

दक्षशापात्सोमं राजानं यक्ष्माविवेश
स यक्ष्मणाविष्टो दक्षमगमत्
दक्षश्चैनमब्रवीन्न समं वर्तस इति
तत्रर्षयः सोममब्रुवन्क्षीयसे यक्ष्मणा
पश्चिमस्यां दिशि समुद्रे हिरण्यसरस्तीर्थम्
तत्र गत्वात्मानमभिषेचयस्वेति
अथागच्छत्सोमस्तत्र हिरण्यसरस्तीर्थम्
गत्वा चात्मनः स्नपनमकरोत्
स्नात्वा चात्मानं पाप्मनो मोक्षयामास
तत्र चावभासितस्तीर्थे यदा सोमस्तदाप्रभृति तीर्थं तत्प्रभासमिति नाम्ना ख्यातं बभूव
तच्छापादद्यापि क्षीयते सोमोऽमावास्यान्तरस्थः
पौर्णमासीमात्रेऽधिष्ठितो मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति
मेघसदृशं वर्णमगमत्तदस्य शशलक्ष्म विमलमभवत् ॥ ४६ ॥

स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्भागे तपस्तेपे
तस्य तपस्तप्यमानस्य सर्वगन्धवहः शुचिर्वायुर्विवायमानः शरीरमस्पृशत्
स तपसा तापितशरीरः कृशो वायुनोपवीज्यमानो हृदयपरितोषमगमत्
तत्र तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः
पुष्पशोभां न दर्शितवन्त इति स एताञ्शशाप न सर्वकालं पुष्पवन्तो भविष्यथेति ॥ ०४७ ॥

नारायणो लोकहितार्थं वडवामुखो नाम महर्षिः पुराभवत्
तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतः
तेनामर्षितेनात्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः
स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः
उक्तश्चापेयो भविष्यसि

एतच्च ते तोयं वडवामुखसञ्ज्ञितेन पीयमानं मधुरं भविष्यति
तदेतद्यापि वडवामुखसञ्ज्ञितेनानुवर्तिना तोयं सामुद्रं पीयते ॥ ०४८ ॥

हिमवतो गिरेर्दुहितरमुमां रुद्रश्चकमे
भृगुरपि च महर्षिर्हिमवन्तमागम्याब्रवीत्कन्यामुमां मे देहीति
तमब्रवीद्धिमवानभिलषितो वरो रुद्र इति
तमब्रवीद्भृगुर्यस्मात्त्वयाहं कन्यावरणकृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां भवान्भाजनं भविष्यतीति
अद्यप्रभृत्येतदवस्थितमृषिवचनम् ॥ ०४९ ॥

तदेवंविधं माहात्म्यं ब्राह्मणानाम्
क्षत्रमपि शाश्वतीमव्ययां पृथिवीं पत्नीमभिगम्य बुभुजे
तदेतद्ब्रह्माग्नीषोमीयम्
तेन जगद्धार्यते ॥ ०५० ॥

---

# भगवन्नामनिर्वचनम्

## अध्याय ३३०

श्रीभगवानुवाच ॥

सूर्याचन्द्रमसौ शश्वत्केशैर्मे अंशुसञ्ज्ञितैः ।
बोधयंस्तापयंश्चैव जगदुत्तिष्ठतः पृथक् ॥ ००१ ॥

बोधनात्तापनाच्चैव जगतो हर्षणं भवेत् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ॥ ००२ ॥

हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥ ००२ ॥

इडोपहूतयोगेन हरे भागं क्रतुष्वहम् ।
वर्णश्च मे हरिश्रेष्ठस्तस्माद्धरिरहं स्मृतः ॥ ००३ ॥

धाम सारो हि लोकानामृतं चैव विचारितम् ।
ऋतधामा ततो विप्रैः सत्यश्चाहं प्रकीर्तितः ॥ ००४ ॥

नष्टां च धरणीं पूर्वमविन्दं वै गुहागताम् ।
गोविन्द इति मां देवा वाग्भिः समभितुष्टुवुः ॥ ००५ ॥

शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।
तेनाविष्टं हि यत्किञ्चिच्छिपिविष्टं हि तत्स्मृतम् ॥ ००६ ॥

यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ॥ ००७ ॥

स्तुत्वा मां शिपिविष्टेति यास्को ऋषिरुदारधीः ।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् ॥ ००८ ॥

न हि जातो न जायेऽहं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥ ००९ ॥

नोक्तपूर्वं मया क्षुद्रमश्लीलं वा कदाचन ।
ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती ॥ ०१० ॥

सच्चासच्चैव कौन्तेय मयावेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः ॥ ०११ ॥

सत्त्वान्न च्युतपूर्वोऽहं सत्त्वं वै विद्धि मत्कृतम् ।
जन्मनीहाभवत्सत्त्वं पौर्विकं मे धनञ्जय ॥ ०१२ ॥

निराशीःकर्मसंयुक्तं सात्वतं मां प्रकल्पय ।
सात्वतज्ञानदृष्टोऽहं सात्वतः सात्वतां पतिः ॥ ०१३ ॥

कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान् ।
कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णोऽहमर्जुन ॥ ०१४ ॥

मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम ॥ ०१५ ॥

निर्वाणं परमं सौख्यं धर्मोऽसौ पर उच्यते ।
तस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा ॥ ०१६ ॥

पृथिवीनभसी चोभे विश्रुते विश्वलौकिके ।
तयोः संधारणार्थं हि मामधोक्षजमञ्जसा ॥ ०१७ ॥

निरुक्तं वेदविदुषो ये च शब्दार्थचिन्तकाः ।
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्थितिः ॥ ०१८ ॥

शब्द एकमतैरेष व्याहृतः परमर्षिभिः ।
नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् ॥ ०१९ ॥

घृतं ममार्चिषो लोके जन्तूनां प्राणधारणम् ।
घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः ॥ ०२० ॥

त्रयो हि धातवः ख्याताः कर्मजा इति च स्मृताः ।
पित्तं श्लेष्मा च वायुश्च एष संघात उच्यते ॥ ०२१ ॥

एतैश्च धार्यते जन्तुरेतैः क्षीणैश्च क्षीयते ।
आयुर्वेदविदस्तस्मात्त्रिधातुं मां प्रचक्षते ॥ ०२२ ॥

वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ।

नैघण्टुकपदाख्यातं विद्धि मां वृषमुत्तमम् ॥ ०२३ ॥

कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥ ०२४ ॥

न चादिं न मध्यं तथा नैव चान्तं ; कदाचिद्विदन्ते सुराश्चासुराश्च ।
अनाद्यो ह्यमध्यस्तथा चाप्यनन्तः ; प्रगीतोऽहमीशो विभुर्लोकसाक्षी ॥ ०२५ ॥

शुचीनि श्रवणीयानि शृणोमीह धनञ्जय ।
न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः ॥ ०२६ ॥

एकशृङ्गः पुरा भूत्वा वराहो दिव्यदर्शनः ।
इमामुद्धृतवान्भूमिमेकशृङ्गस्ततो ह्यहम् ॥ ०२७ ॥

तथैवासं त्रिककुदो वाराहं रूपमास्थितः ।
त्रिककुत्तेन विख्यातः शरीरस्य तु मापनात् ॥ ०२८ ॥

विरिञ्चि इति यः प्रोक्तः कपिलज्ञानचिन्तकैः ।
स प्रजापतिरेवाहं चेतनात्सर्वलोककृत् ॥ ०२९ ॥

विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः सांख्या निश्चितनिश्चयाः ॥ ०३० ॥

हिरण्यगर्भो द्युतिमानेष यश्छन्दसि स्तुतः ।
योगैः संपूज्यते नित्यं स एवाहं विभुः स्मृतः ॥ ०३१ ॥

एकविंशतिशाखं च ऋग्वेदं मां प्रचक्षते ।
सहस्रशाखं यत्साम ये वै वेदविदो जनाः ॥ ०३२ ॥

गायन्त्यारण्यके विप्रा मद्भक्तास्तेऽपि दुर्लभाः ॥ ०३२ ॥

षड्श्चाशतमष्टौ च सप्तत्रिंशतमित्युत ।
यस्मिञ्शाखा यजुर्वेदे सोऽहमाध्वर्यवे स्मृतः ॥ ०३३ ॥

पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम् ।
कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ॥ ०३४ ॥

शाखाभेदाश्च ये केचिद्याश्च शाखासु गीतयः ।
स्वरवर्णसमुच्चाराः सर्वांस्तान्विद्धि मत्कृतान् ॥ ०३५ ॥

यत्तद्धयशिरः पार्थ समुदेति वरप्रदम् ।
सोऽहमेवोत्तरे भागे क्रमाक्षरविभागवित् ॥ ०३६ ॥

रामादेशितमार्गेण मत्प्रसादान्महात्मना ।
पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात्सनातनात् ॥ ०३७ ॥

बाभ्रव्यगोत्रः स बभौ प्रथमः क्रमपारगः ॥ ०३७ ॥

नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम् ।
क्रमं प्रणीय शिक्षां च प्रणयित्वा स गालवः ॥ ०३८ ॥

कण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान् ।
जातीमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ०३९ ॥

सप्तजातिषु मुख्यत्वाद्योगानां संपदं गतः ॥ ०३९ ॥

पुराहमात्मजः पार्थ प्रथितः कारणान्तरे ।
धर्मस्य कुरुशार्दूल ततोऽहं धर्मजः स्मृतः ॥ ०४० ॥

नरनारायणौ पूर्वं तपस्तेपतुरव्ययम् ।
धर्मयानं समारूढौ पर्वते गन्धमादने ॥ ०४१ ॥

तत्कालसमयं चैव दक्षयज्ञो बभूव ह ।
न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ॥ ०४२ ॥

ततो दधीचिवचनाद्दक्षयज्ञमपाहरत् ।
ससर्ज शूलं क्रोधेन प्रज्वलन्तं मुहुर्मुहुः ॥ ०४३ ॥

तच्छूलं भस्मसात्कृत्वा दक्षयज्ञं सविस्तरम् ।
आवयोः सहसागच्छद्बदर्याश्रममन्तिकात् ॥ ०४४ ॥

वेगेन महता पार्थ पतन्नारायणोरसि ॥ ०४४ ॥

ततः स्वतेजसाविष्टाः केशा नारायणस्य ह ।
बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेशवान् ॥ ०४५ ॥

तच्च शूलं विनिर्धूतं हुङ्कारेण महात्मना ।
जगाम शङ्करकरं नारायणसमाहतम् ॥ ०४६ ॥

अथ रुद्र उपाधावत्तावृषी तपसान्वितौ ।
तत एनं समुद्धूतं कण्ठे जग्राह पाणिना ॥ ०४७ ॥

नारायणः स विश्वात्मा तेनास्य शितिकण्ठता ॥ ०४७ ॥

अथ रुद्रविघातार्थमिषीकां जगृहे नरः ।
मन्त्रैश्च संयुयोजाशु सोऽभवत्परशुर्महान् ॥ ०४८ ॥

क्षिप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा ।
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ॥ ०४९ ॥

अर्जुन उवाच ॥

अस्मिन्युद्धे तु वार्ष्णेय त्रैलोक्यमथने तदा ।
जयं कः प्राप्तवांस्तत्र शंसैतन्मे जनार्दन ॥ ०५० ॥

श्रीभगवानुवाच ॥

तयोः संलग्नयोर्युद्धे रुद्रनारायणात्मनोः ।
उद्विग्नाः सहसा कृत्स्ना लोकाः सर्वेऽभवंस्तदा ॥ ०५१ ॥

नागृह्णात्पावकः शुभ्रं मखेषु सुहुतं हविः ।
वेदा न प्रतिभान्ति स्म ऋषीणां भावितात्मनाम् ॥ ०५२ ॥

देवान्रजस्तमश्चैव समाविविशतुस्तदा ।
वसुधा सञ्चकम्पेऽथ नभश्च विपफाल ह ॥ ०५३ ॥

निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनाच्च्युतः ।
अगाच्छोषं समुद्रश्च हिमवांश्च व्यशीर्यत ॥ ०५४ ॥

तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन ।
ब्रह्मा वृतो देवगणैर्ऋषिभिश्च महात्मभिः ॥ ०५५ ॥

आजगामाशु तं देशं यत्र युद्धमवर्तत ॥ ०५५ ॥

साञ्जलिप्रग्रहो भूत्वा चतुर्वक्रो निरुक्तगः ।
उवाच वचनं रुद्रं लोकानामस्तु वै शिवम् ॥ ०५६ ॥

न्यस्यायुधानि विश्वेश जगतो हितकाम्यया ॥ ०५६ ॥

यदक्षरमथाव्यक्तमीशं लोकस्य भावनम् ।
कूटस्थं कर्तृनिर्द्वंद्वमकर्तेति च यं विदुः ॥ ०५७ ॥

व्यक्तिभावगतस्यास्य एका मूर्तिरियं शिवा ।

नरो नारायणश्चैव जातौ धर्मकुलोद्वहौ ॥ ०५८ ॥

तपसा महता युक्तौ देवश्रेष्ठौ महाव्रतौ ।
अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे ॥ ०५९ ॥

त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ॥ ०५९ ॥

मया च सार्धं वरदं विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु माचिरम् ॥ ०६० ॥

ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ॥ ०६१ ॥

शरणं च जगामाद्यं वरेण्यं वरदं हरिम् ॥ ०६१ ॥

ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः ।
प्रीतिमानभवत्तत्र रुद्रेण सह सङ्गतः ॥ ०६२ ॥

ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः ।
उवाच देवमीशानमीशः स जगतो हरिः ॥ ०६३ ॥

यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ।
नावयोरन्तरं किञ्चिन्मा ते भूद्बुद्धिरन्यथा ॥ ०६४ ॥

अद्य प्रभृति श्रीवत्सः शूलाङ्कोऽयं भवत्वयम् ।
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥ ०६५ ॥

एवं लक्षणमुत्पाद्य परस्परकृतं तदा ।
सख्यं चैवातुलं कृत्वा रुद्रेण सहितावृषी ॥ ०६६ ॥

तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः ॥ ०६६ ॥

एष ते कथितः पार्थ नारायणजयो मृधे ।
नामानि चैव गुह्यानि निरुक्तानि च भारत ॥ ०६७ ॥

ऋषिभिः कथितानीह यानि सङ्कीर्तितानि ते ॥ ०६७ ॥

एवं बहुविधै रूपैश्चरामीह वसुंधराम् ।
ब्रह्मलोकं च कौन्तेय गोलोकं च सनातनम् ॥ ०६८ ॥

मया त्वं रक्षितो युद्धे महान्तं प्राप्तवाञ्जयम् ॥ ०६८ ॥

यस्तु ते सोऽग्रतो याति युद्धे संप्रत्युपस्थिते ।
तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ॥ ०६९ ॥

कालः स एव कथितः क्रोधजेति मया तव ।
निहतांस्तेन वै पूर्वं हतवानसि वै रिपून् ॥ ०७० ॥

अप्रमेयप्रभावं तं देवदेवमुमापतिम् ।
नमस्व देवं प्रयतो विश्वेशं हरमव्ययम् ॥ ०७१ ॥

---

# अध्याय ३३१

जनमेजय उवाच ॥

ब्रह्मन्सुमहदाख्यानं भवता परिकीर्तितम् ।
यच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः ॥ ००१ ॥

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।

आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम्  ॥ ००२  ॥

नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा  ॥ ००३  ॥

समुद्धृतमिदं ब्रह्मन्कथामृतमनुत्तमम् ।
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम्  ॥ ००४  ॥

स हीशो भगवान्देवः सर्वभूतात्मभावनः ।
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम  ॥ ००५  ॥

यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः ।
ऋषयश्च सगन्धर्वा यच्च किञ्चिच्चराचरम्  ॥ ००६  ॥

न ततोऽस्ति परं मन्ये पावनं दिवि चेह च  ॥ ००६  ॥

सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं चापि नारायणकथा यथा  ॥ ००७  ॥

सर्वथा पाविताः स्मेह श्रुत्वेमामादितः कथाम् ।
हरेर्विश्वेश्वरस्येह सर्वपापप्रणाशनीम्  ॥ ००८  ॥

न चित्रं कृतवांस्तत्र यदार्यो मे धनञ्जयः ।
वासुदेवसहायो यः प्राप्तवाञ्जयमुत्तमम्  ॥ ००९  ॥

न चास्य किञ्चिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ।
त्रैलोक्यनाथो विष्णुः स यस्यासीत्साह्यकृत्सखा  ॥ ०१०  ॥

धन्याश्च सर्व एवासन्ब्रह्मंस्ते मम पूर्वकाः ।
हिताय श्रेयसे चैव येषामासीज्जनार्दनः  ॥ ०११  ॥

तपसापि न दृश्यो हि भगवा.ण्लोकपूजितः ।
यं दृष्टवन्तस्ते साक्षाच्छ्रीवत्साङ्कविभूषणम्  ॥ ०१२  ॥

तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ।
न चाल्पतेजसमृषिं वेद्मि नारदमव्ययम्  ॥ ०१३  ॥

श्वेतद्वीपं समासाद्य येन दृष्टः स्वयं हरिः  ॥ ०१३  ॥

देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनम् ।
यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितम्  ॥ ०१४  ॥

बदरीमाश्रमं यत्तु नारदः प्राद्रवत्पुनः ।
नरनारायणौ द्रष्टुं किं नु तत्कारणं मुने  ॥ ०१५  ॥

श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः ।
बदरीमाश्रमं प्राप्य समागम्य च तावृषी  ॥ ०१६  ॥

कियन्तं कालमवसत्काः कथाः पृष्टवांश्च सः ।
श्वेतद्वीपादुपावृत्ते तस्मिन्वा सुमहात्मनि  ॥ ०१७  ॥

किमब्रूतां महात्मानौ नरनारायणावृषी ।
तदेतन्मे यथातत्त्वं सर्वमाख्यातुमर्हसि  ॥ ०१८  ॥

वैशंपायन उवाच  ॥

नमो भगवते तस्मै व्यासायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम्  ॥ ०१९  ॥

प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम् ।
निवृत्तो नारदो राजंस्तरसा मेरुमागमत्  ॥ ०२०  ॥

हृदयेनोद्वहन्भारं यदुक्तं परमात्मना ॥ ०२० ॥

पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत् ।
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः ॥ ०२१ ॥

ततो मेरोः प्रचक्राम पर्वतं गन्धमादनम् ।
निपपात च खात्तूर्णं विशालां बदरीमनु ॥ ०२२ ॥

ततः स ददृशे देवौ पुराणावृषिसत्तमौ ।
तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ ॥ ०२३ ॥

तेजसाभ्यधिकौ सूर्यात्सर्वलोकविरोचनात् ।
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ॥ ०२४ ॥

जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ ।
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ ॥ ०२५ ॥

षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ ।
स्वास्यौ पृथुललाटौ च सुहनू सुभ्रुनासिकौ ॥ ०२६ ॥

आतपत्रेण सदृशे शिरसी देवयोस्तयोः ।
एवं लक्षणसंपन्नौ महापुरुषसञ्ज्ञितौ ॥ ०२७ ॥

तौ दृष्ट्वा नारदो हृष्टस्ताभ्यां च प्रतिपूजितः ।
स्वागतेनाभिभाष्याथ पृष्टश्चानामयं तदा ॥ ०२८ ॥

बभूवान्तर्गतमतिर्निरीक्ष्य पुरुषोत्तमौ ।
सदोगतास्तत्र ये वै सर्वभूतनमस्कृताः ॥ ०२९ ॥

श्वेतद्वीपे मया दृष्टास्तादृशावृषिसत्तमौ ।
इति सञ्चिन्त्य मनसा कृत्वा चाभिप्रदक्षिणम् ॥ ०३० ॥

उपोपविविशे तत्र पीठे कुशमये शुभे ॥ ०३० ॥

ततस्तौ तपसां वासौ यशसां तेजसामपि ।
ऋषी शमदमोपेतौ कृत्वा पूर्वाह्णिकं विधिम् ॥ ०३१ ॥

पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यां प्रपूज्य च ।
पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्णिकौ नृप ॥ ०३२ ॥

तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत ।
आज्याहुतिमहाज्वालैर्यज्ञवाटोऽग्निभिर्यथा ॥ ०३३ ॥

अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् ।
सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितम् ॥ ०३४ ॥

अपीदानीं स भगवान्परमात्मा सनातनः ।
श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ॥ ०३५ ॥

नारद उवाच ॥

दृष्टो मे पुरुषः श्रीमान्विश्वरूपधरोऽव्ययः ।
सर्वे हि लोकास्तत्रस्थास्तथा देवाः सहर्षिभिः ॥ ०३६ ॥

अद्यापि चैनं पश्यामि युवां पश्यन्सनातनौ ॥ ०३६ ॥

यैर्लक्षणैरुपेतः स हरिरव्यक्तरूपधृक् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ॥ ०३७ ॥

दृष्टौ मया युवां तत्र तस्य देवस्य पार्श्वतः ।
इह चैवागतोऽस्म्यद्य विसृष्टः परमात्मना ॥ ०३८ ॥

को हि नाम भवेत्तस्य तेजसा यशसा श्रिया ।
सदृशस्त्रिषु लोकेषु ऋते धर्मात्मजौ युवाम् ॥ ०३९ ॥

तेन मे कथितं पूर्वं नाम क्षेत्रज्ञसञ्ज्ञितम् ।
प्रादुर्भावाश्च कथिता भविष्यन्ति हि ये यथा ॥ ०४० ॥

तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ॥ ०४१ ॥

तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ॥ ०४२ ॥

रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ।
विश्वभुक्सर्वगो देवो बान्धवो भक्तवत्सलः ॥ ०४३ ॥

स कर्ता कारणं चैव कार्यं चातिबलद्युतिः ॥ ०४३ ॥

तपसा योज्य सोऽऽत्मानं श्वेतद्वीपात्परं हि यत् ।
तेज इत्यभिविख्यातं स्वयंभासावभासितम् ॥ ०४४ ॥

शान्तिः सा त्रिषु लोकेषु सिद्धानां भावितात्मनाम् ।
एतया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः ॥ ०४५ ॥

न तत्र सूर्यस्तपति न सोमोऽभिविराजते ।
न वायुर्वाति देवेशे तपश्चरति दुश्चरम् ॥ ०४६ ॥

वेदीमष्टतलोत्सेधां भूमावास्थाय विश्वभुक् ।
एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्मुखः ॥ ०४७ ॥

साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ॥ ०४७ ॥

यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ।
शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ॥ ०४८ ॥

नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्षयश्च ये ।
हव्यं कव्यं च सततं विधिपूर्वं प्रयुञ्जते ॥ ०४९ ॥

कृत्स्नं तत्तस्य देवस्य चरणावुपतिष्ठति ॥ ०४९ ॥

याः क्रियाः संप्रयुक्तास्तु एकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ ०५० ॥

न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकं गतः ॥ ०५१ ॥

इह चैवागतस्तेन विसृष्टः परमात्मना ॥ ०५१ ॥

एवं मे भगवान्देवः स्वयमाख्यातवान्हरिः ।
आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ॥ ०५२ ॥

---

# अध्याय ३३२

नरनारायणावूचतुः ॥

धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टः स्वयं प्रभुः ।
न हि तं दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् ॥ ००१ ॥

अव्यक्तयोनिर्भगवान्दुर्दर्शः पुरुषोत्तमः ।

नारदैतद्धि ते सत्यं वचनं समुदाहृतम् ॥ ००२ ॥

नास्य भक्तैः प्रियतरो लोके कश्चन विद्यते ।
ततः स्वयं दर्शितवान्स्वमात्मानं द्विजोत्तम ॥ ००३ ॥

तपो हि तप्यतस्तस्य यत्स्थानं परमात्मनः ।
न तत्संप्राप्नुते कश्चिद्दृते ह्यावां द्विजोत्तम ॥ ००४ ॥

या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः ।
स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता ॥ ००५ ॥

तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः ।
क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ॥ ००६ ॥

तस्माच्चोत्तिष्ठते देवात्सर्वभूतहितो रसः ।
आपो येन हि युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ॥ ००७ ॥

तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम् ।
येन स्म युज्यते सूर्यस्ततो लोकान्विराजते ॥ ००८ ॥

तस्माद्देवात्समुद्भूतः स्पर्शस्तु पुरुषोत्तमात् ।
येन स्म युज्यते वायुस्ततो लोकान्विवात्यसौ ॥ ००९ ॥

तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात्प्रभोः ।
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥ ०१० ॥

तस्माच्चोत्तिष्ठते देवात्सर्वभूतगतं मनः ।
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥ ०११ ॥

षड्भूतोत्पादकं नाम तत्स्थानं वेदसञ्ज्ञितम् ।
विद्यासहायो यत्रास्ते भगवान्हव्यकव्यभुक् ॥ ०१२ ॥

ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः ।
तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ॥ ०१३ ॥

सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते ॥ ०१३ ॥

आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् ।
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत ॥ ०१४ ॥

तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत ॥ ०१५ ॥

प्रद्युम्नाच्चापि निर्मुक्ता जीवं सङ्कर्षणं तथा ।
विशन्ति विप्रप्रवराः सांख्या भागवतैः सह ॥ ०१६ ॥

ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥ ०१७ ॥

सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ ०१७ ॥

समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ ०१८ ॥

आवामपि च धर्मस्य गृहे जातौ द्विजोत्तम ।
रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ ॥ ०१९ ॥

ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः ।
भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यतो द्विज ॥ ०२० ॥

विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम ।
आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यक्तदुत्तमम् ॥ ०२१ ॥

आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन ।
समागतो भगवता सञ्जल्पं कृतवान्यथा ॥ ०२२ ॥

सर्वं हि नौ संविदितं त्रैलोक्ये सचराचरे ।
यद्भविष्यति वृत्तं वा वर्तते वा शुभाशुभम् ॥ ०२३ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रेऽभ्यवर्तत ।
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥ ०२४ ॥

जजाप विधिवन्मन्त्रान्नारायणगतान्बहून् ।
दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ॥ ०२५ ॥

अवसत्स महातेजा नारदो भगवानृषिः ।
तमेवाभ्यर्चयन्देवं नरनारायणौ च तौ ॥ ०२६ ॥

---

# अध्याय ३३३

वैशंपायन उवाच ॥

कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥ ००१ ॥

ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः ।
क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते ॥ ००२ ॥

त्वया मतिमतां श्रेष्ठ तन्मे शंस यथागमम् ।
किमेतत्क्रियते कर्म फलं चास्य किमिष्यते ॥ ००३ ॥

नारद उवाच ॥

त्वयैतत्कथितं पूर्वं दैवं कर्तव्यमित्यपि ।
दैवतं च परो यज्ञः परमात्मा सनातनः ॥ ००४ ॥

ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम् ।
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥ ००५ ॥

मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् ।
अहं सङ्कल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ ००६ ॥

यजाम्यहं पितॄन्साधो नारायणविधौ कृते ।
एवं स एव भगवान्पिता माता पितामहः ॥ ००७ ॥

इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ॥ ००७ ॥

श्रुतिश्चाप्यपरा देव पुत्रान्हि पितरोऽयजन् ।
वेदश्रुतिः प्रणष्टा च पुनरध्यापिता सुतैः ॥ ००८ ॥

ततस्ते मन्त्रदाः पुत्राः पितृत्वमुपपेदिरे ॥ ००८ ॥

नूनं पुरैतद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ ००९ ॥

त्रीन्पिण्डान्न्यस्य वै पृथ्व्यां पूर्वं दत्त्वा कुशानिति ।
कथं तु पिण्डसञ्ज्ञां ते पितरो लेभिरे पुरा ॥ ०१० ॥

नरनारायणावूचतुः ॥

इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम् ।
गोविन्द उज्जहाराशु वाराहं रूपमाश्रितः ॥ ०११ ॥

स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः ।
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः ॥ ०१२ ॥

प्राप्ते चाह्निककाले स मध्यंदिनगते रवौ ।
दंष्ट्राविलग्नान्मृत्पिण्डान्विधूय सहसा प्रभुः ॥ ०१३ ॥

स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ॥ ०१३ ॥

स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि ।
सङ्कल्पयित्वा त्रीन्पिण्डान्स्वेनैव विधिना प्रभुः ॥ ०१४ ॥

आत्मगात्रोष्मसंभूतैः स्नेहगर्भैस्तिलैरपि ।
प्रोक्ष्यापवर्गं देवेशः प्राङ्मुखः कृतवान्स्वयम् ॥ ०१५ ॥

मर्यादास्थापनार्थं च ततो वचनमुक्तवान् ।
अहं हि पितरः स्रष्टुमुद्यतो लोककृत्स्वयम् ॥ ०१६ ॥

तस्य चिन्तयतः सद्यः पितृकार्यविधिं परम् ।
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम् ॥ ०१७ ॥

आश्रिता धरणीं पिण्डास्तस्मात्पितर एव ते ॥ ०१७ ॥

त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे ।
भवन्तु पितरो लोके मया सृष्टाः सनातनाः ॥ ०१८ ॥

पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ॥ ०१९ ॥

नास्ति मत्तोऽधिकः कश्चित्को वाभ्यर्च्यो मया स्वयम् ।
को वा मम पिता लोके अहमेव पितामहः ॥ ०२० ॥

पितामहपिता चैव अहमेवात्र कारणम् ।
इत्येवमुक्त्वा वचनं देवदेवो वृषाकपिः ॥ ०२१ ॥

वराहपर्वते विप्र दत्त्वा पिण्डान्सविस्तरान् ।
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ ०२२ ॥

एतदर्थं शुभमते पितरः पिण्डसञ्ज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ ०२३ ॥

ये यजन्ति पितृन्देवान्गुरूंश्चैवातिथींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पृथिवीं मातरं तथा ॥ ०२४ ॥

कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ॥ ०२४ ॥

अन्तर्गतः स भगवान्सर्वसत्त्वशरीरगः ।
समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः ॥ ०२५ ॥

महान्महात्मा सर्वात्मा नारायण इति श्रुतः ॥ ०२५ ॥

---

# अध्याय ३३४

वैशंपायन उवाच ॥

श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम् ।

अत्यन्तभक्तिमान्देवे एकान्तित्वमुपेयिवान्  ॥ ००१  ॥

प्रोष्य वर्षसहस्रं तु नरनारायणाश्रमे ।
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम्  ॥ ००२  ॥

हिमवन्तं जगामाशु यत्रास्य स्वक आश्रमः  ॥ ००२  ॥

तावपि ख्याततपसौ नरनारायणावृषी ।
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम्  ॥ ००३  ॥

त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः ।
पावितात्माद्य संवृत्तः श्रुत्वेमामादितः कथाम्  ॥ ००४  ॥

नैव तस्य परो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम्  ॥ ००५  ॥

मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम्  ॥ ००६  ॥

कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थितिः  ॥ ००७  ॥

य एष गुरुरस्माकमृषिर्गन्धवतीसुतः ।
तेनैतत्कथितं तात माहात्म्यं परमात्मनः  ॥ ००८  ॥

तस्माच्छ्रुतं मया चेदं कथितं च तवानघ  ॥ ००८  ॥

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत्  ॥ ००९  ॥

धर्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम्  ॥ ००९  ॥

वर्ततां ते महायज्ञो यथा सङ्कल्पितस्त्वया ।
सङ्कल्पिताश्वमेधस्त्वं श्रुतधर्मश्च तत्त्वतः ॥ ०१० ॥

एतत्तु महदाख्यानं श्रुत्वा पारिक्षितो नृपः ।
ततो यज्ञसमाप्त्यर्थं क्रियाः सर्वाः समारभत् ॥ ०११ ॥

नारायणीयमाख्यानमेतत्ते कथितं मया ।
नारदेन पुरा राजन्गुरवे मे निवेदितम् ॥ ०१२ ॥

ऋषीणां पाण्डवानां च श्रृण्वतोः कृष्णभीष्मयोः ॥ ०१२ ॥

स हि परमगुरुर्भुवनपति ;र्धरणिधरः शमनियमनिधिः ।
श्रुतिविनयनिधिर्द्विजपरमहित ;स्तव भवतु गतिर्हरिरमरहितः ॥ ०१३ ॥

तपसां निधिः सुमहतां महतो ; यशसश्च भाजनमरिष्टकहा ।
एकान्तिनां शरणदोऽभयदो ; गतिदोऽस्तु वः स मखभागहरः ॥ ०१४ ॥

त्रिगुणातिगश्चतुष्पञ्चधरः ; पूर्तेष्टयोश्च फलभागहरः ।
विदधाति नित्यमजितोऽतिबलो ; गतिमात्मगां सुकृतिनामृषिणाम् ॥ ०१५ ॥

तं लोकसाक्षिणमजं पुरुषं ; रविवर्णमीश्वरगतिं बहुशः ।
प्रणमध्वमेकमतयो यतयः ; सलिलोद्भवोऽपि तमृषिं प्रणतः ॥ ०१६ ॥

स हि लोकयोनिरमृतस्य पदं ; सूक्ष्मं पुराणमचलं परमम् ।
तत्सांख्ययोगिभिरुदारधृतं ; बुद्ध्या यतात्मभिर्विदितं सततम् ॥ ०१७ ॥

# अध्याय ३३५

जनमेजय उवाच ॥

श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।
जन्म धर्मगृहे चैव नरनारायणात्मकम् ॥ ००१ ॥

महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी ॥ ००१ ॥

प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ।
स तथा नः श्रुतो ब्रह्मन्कथ्यमानस्त्वयानघ ॥ ००२ ॥

यच्च तत्कथितं पूर्वं त्वया हयशिरो महत् ।
हव्यकव्यभुजो विष्णोरुदक्पूर्वे महोदधौ ॥ ००३ ॥

तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ००३ ॥

किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा ।
रूपं प्रभावमहतामपूर्वं धीमतां वर ॥ ००४ ॥

दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम् ।
तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ॥ ००५ ॥

एतन्नः संशयं ब्रह्मन्पुराणज्ञानसंभवम् ।
कथयस्वोत्तममते महापुरुषनिर्मितम् ॥ ००६ ॥

पाविताः स्म त्वया ब्रह्मन्पुण्यां कथयता कथाम् ॥ ००६ ॥

वैशंपायन उवाच ॥

कथयिष्यामि ते सर्वं पुराणं वेदसंमितम् ।

जगौ यद्भगवान्व्यासो राज्ञो धर्मसुतस्य वै ॥ ००७ ॥

श्रुत्वाश्वशिरसो मूर्तिं देवस्य हरिमेधसः ।
उत्पन्नसंशयो राजा तमेव समचोदयत् ॥ ००८ ॥

युधिष्ठिर उवाच ॥

यत्तद्दर्शितवान्ब्रह्मा देवं हयशिरोधरम् ।
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ॥ ००९ ॥

व्यास उवाच ॥

यत्किञ्चिदिह लोके वै देहबद्धं विशां पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ०१० ॥

ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ॥ ०११ ॥

भूतप्रलयमव्यक्तं श‍ृणुष्व नृपसत्तम ॥ ०११ ॥

धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले ॥ ०१२ ॥

वायौ चाकाशसंलीने आकाशे च मनोनुगे ।
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते ॥ ०१३ ॥

अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।
तम एवाभवत्सर्वं न प्राज्ञायत किञ्चन ॥ ०१४ ॥

तमसो ब्रह्म संभूतं तमोमूलमृतात्मकम् ।
तद्विश्वभावसञ्ज्ञान्तं पौरुषीं तनुमास्थितम् ॥ ०१५ ॥

सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते ।
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥ ०१६ ॥

विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ।
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः ॥ ०१७ ॥

जगतश्चिन्तयन्सृष्टिं चित्रां बहुगुणोद्भवाम् ॥ ०१७ ॥

तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः ।
अहङ्कारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ॥ ०१८ ॥

हिरण्यगर्भो भगवान्सर्वलोकपितामहः ॥ ०१८ ॥

पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः ।
सहस्रपत्रे द्युतिमानुपविष्टः सनातनः ॥ ०१९ ॥

ददृशेऽद्भुतसङ्काशे लोकानापोमयान्प्रभुः ।
सत्त्वस्थः परमेष्ठी स ततो भूतगणान्सृजत् ॥ ०२० ॥

पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे ।
नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ ॥ ०२१ ॥

तावपश्यत्स भगवाननादिनिधनोऽच्युतः ।
एकस्तत्राभवद्बिन्दुर्मध्वाभो रुचिरप्रभः ॥ ०२२ ॥

स तामसो मधुर्जातस्तदा नारायणाज्ञया ।
कठिनस्त्वपरो बिन्दुः कैटभो राजसस्तु सः ॥ ०२३ ॥

तावभ्यधावतां श्रेष्ठौ तमोरजगुणान्वितौ ।
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ॥ ०२४ ॥

दद्दशातेऽरविन्दस्थं ब्रह्माणममितप्रभम् ।
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान्  ॥ ०२५  ॥

ततो विग्रहवन्तौ तौ वेदान्दृष्ट्वासुरोत्तमौ ।
सहसा जगृहतुर्वेदान्ब्रह्मणः पश्यतस्तदा  ॥ ०२६  ॥

अथ तौ दानवश्रेष्ठौ वेदान्गृह्य सनातनान् ।
रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ  ॥ ०२७  ॥

ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् ।
ततो वचनमीशानं प्राह वेदैर्विनाकृतः  ॥ ०२८  ॥

वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ।
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तमम्  ॥ ०२९  ॥

मम वेदा हृताः सर्वे दानवाभ्यां बलादितः ।
अन्धकारा हि मे लोका जाता वेदैर्विनाकृताः  ॥ ०३०  ॥

वेदानृते हि किं कुर्यां लोकान्वै स्त्रष्टुमुद्यतः  ॥ ०३०  ॥

अहो बत महद्दुःखं वेदनाशनजं मम ।
प्राप्तं दुनोति हृदयं तीव्रशोकाय रन्धयन्  ॥ ०३१  ॥

को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् ।
वेदांस्तानानयेन्नष्टान्कस्य चाहं प्रियो भवे  ॥ ०३२  ॥

इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ।
हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर  ॥ ०३३  ॥

ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः  ॥ ०३३  ॥

नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ।
लोकाद्य भुवनश्रेष्ठ सांख्ययोगनिधे विभो ॥ ०३४ ॥

व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थित ।
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ॥ ०३५ ॥

अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयंभुवे ।
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ॥ ०३६ ॥

चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ।
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ॥ ०३७ ॥

त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो ।
नासिक्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ॥ ०३८ ॥

अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्मितम् ।
इदं च सप्तमं जन्म पद्मजं मेऽमितप्रभ ॥ ०३९ ॥

सर्गे सर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जितः ।
प्रथितः पुण्डरीकाक्ष प्रधानगुणकल्पितः ॥ ०४० ॥

त्वमीश्वरस्वभावश्च स्वयंभूः पुरुषोत्तमः ।
त्वया विनिर्मितोऽहं वै वेदचक्षुर्वयोतिगः ॥ ०४१ ॥

ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि ।
ददस्व चक्षुषी मह्यं प्रियोऽहं ते प्रियोऽसि मे ॥ ०४२ ॥

एवं स्तुतः स भगवान्पुरुषः सर्वतोमुखः ।
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः ॥ ०४३ ॥

ऐश्वरेण प्रयोगेण द्वितीयां तनुमास्थितः ॥ ०४३ ॥

सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥ ०४४ ॥

तस्य मूर्धा समभवद्द्यौः सनक्षत्रतारका ।
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः ॥ ०४५ ॥

कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गा सरस्वती पुण्या भ्रुवावास्तां महानदी ॥ ०४६ ॥

चक्षुषी सोमसूर्यौ ते नासा संध्या पुनः स्मृता ।
ओङ्कारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्मिता ॥ ०४७ ॥

दन्ताश्च पितरो राजन्सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ॥ ०४८ ॥

ग्रीवा चास्याभवद्राजन्कालरात्रिर्गुणोत्तरा ॥ ०४८ ॥

एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम् ।
अन्तर्दधे स विश्वेशो विवेश च रसां प्रभुः ॥ ०४९ ॥

रसां पुनः प्रविष्टश्च योगं परममास्थितः ।
शैक्षं स्वरं समास्थाय ओमिति प्रासृजत्स्वरम् ॥ ०५० ॥

स स्वरः सानुनादी च सर्वगः स्निग्ध एव च ।
बभूवान्तर्महीभूतः सर्वभूतगुणोदितः ॥ ०५१ ॥

ततस्तावसुरौ कृत्वा वेदान्समयबन्धनान् ।
रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ ॥ ०५२ ॥

एतस्मिन्नन्तरे राजन्देवो हयशिरोधरः ।
जग्राह वेदानखिलान्रसातलगतान्हरिः ॥ ०५३ ॥

प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः ॥ ०५३ ॥

स्थापयित्वा हयशिर उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ॥ ०५४ ॥

अथ किञ्चिदपश्यन्तौ दानवौ मधुकैटभौ ।
पुनराजग्मतुस्तत्र वेगितौ पश्यतां च तौ ॥ ०५५ ॥

यत्र वेदा विनिक्षिप्तास्तत्स्थानं शून्यमेव च ॥ ०५५ ॥

तत उत्तममास्थाय वेगं बलवतां वरौ ।
पुनरुत्तस्थतुः शीघ्रं रसानामालयात्तदा ॥ ०५६ ॥

ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ॥ ०५६ ॥

श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ।
भूयोऽप्यमितविक्रान्तं निद्रायोगमुपागतम् ॥ ०५७ ॥

आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमावृते ॥ ०५८ ॥

निष्कल्मषेण सत्त्वेन संपन्नं रुचिरप्रभम् ।
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥ ०५९ ॥

ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ।
अयं स पुरुषः श्वेतः शेते निद्रामुपागतः ॥ ०६० ॥

अनेन नूनं वेदानां कृतमाहरणं रसात् ।

कस्यैष को नु खल्वेष किं च स्वपिति भोगवान् ॥ ०६१ ॥

इत्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम् ।
युद्धार्थिनौ तु विज्ञाय विबुद्धः पुरुषोत्तमः ॥ ०६२ ॥

निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे ।
अथ युद्धं समभवत्तयोर्नारायणस्य च ॥ ०६३ ॥

रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।
ब्रह्मणोपचितिं कुर्वञ्जघान मधुसूदनः ॥ ०६४ ॥

ततस्तयोर्वधेनाशु वेदापहरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥ ०६५ ॥

ततः परिवृतो ब्रह्मा हतारिर्वेदसत्कृतः ।
निर्ममे स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान् ॥ ०६६ ॥

दत्त्वा पितामहायाग्र्यां बुद्धिं लोकविसर्गिकीम् ।
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ॥ ०६७ ॥

तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ॥ ०६८ ॥

एवमेष महाभागो बभूवाश्वशिरा हरिः ।
पौराणमेतदाख्यातं रूपं वरदमैश्वरम् ॥ ०६९ ॥

यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयेत वा ।
न तस्याध्ययनं नाशमुपगच्छेत्कदाचन ॥ ०७० ॥

आराध्य तपसोग्रेण देवं हयशिरोधरम् ।
पाञ्चालेन क्रमः प्राप्तो रामेण पथि देशिते ॥ ०७१ ॥

एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ॥ ०७२ ॥

यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तां तां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ॥ ०७३ ॥

एष वेदनिधिः श्रीमानेष वै तपसो निधिः ।
एष योगश्च सांख्यं च ब्रह्म चाग्र्यं हरिर्विभुः ॥ ०७४ ॥

नारायणपरा वेदा यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ ०७५ ॥

नारायणपरं सत्यमृतं नारायणात्मकम् ।
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ॥ ०७६ ॥

प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ।
नारायणात्मको गन्धो भूमौ श्रेष्ठतमः स्मृतः ॥ ०७७ ॥

अपां चैव गुणो राजन्रसो नारायणात्मकः ।
ज्योतिषां च गुणो रूपं स्मृतं नारायणात्मकम् ॥ ०७८ ॥

नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः ।
नारायणात्मकश्चापि शब्द आकाशसंभवः ॥ ०७९ ॥

मनश्चापि ततो भूतमव्यक्तगुणलक्षणम् ।
नारायणपरः कालो ज्योतिषामयनं च यत् ॥ ०८० ॥

नारायणपरा कीर्तिः श्रीश्च लक्ष्मीश्च देवताः ।
नारायणपरं सांख्यं योगो नारायणात्मकः ॥ ०८१ ॥

कारणं पुरुषो येषां प्रधानं चापि कारणम् ।
स्वभावश्चैव कर्माणि दैवं येषां च कारणम्  ॥ ०८२  ॥

पञ्चकारणसंख्यातो निष्ठा सर्वत्र वै हरिः ।
तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः  ॥ ०८३  ॥

तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ।
सब्रह्मकानां लोकानामृषीणां च महात्मनाम्  ॥ ०८४  ॥

सांख्यानां योगिनां चापि यतीनामात्मवेदिनाम् ।
मनीषितं विजानाति केशवो न तु तस्य ते  ॥ ०८५  ॥

ये केचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वते ।
दानानि च प्रयच्छन्ति तप्यन्ति च तपो महत्  ॥ ०८६  ॥

सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः ।
सर्वभूतकृतावासो वासुदेवेति चोच्यते  ॥ ०८७  ॥

अयं हि नित्यः परमो महर्षि ;र्महाविभूतिर्गुणवान्निर्गुणाख्यः ।
गुणैश्च संयोगमुपैति शीघ्रं ; कालो यथर्तावृतुसंप्रयुक्तः  ॥ ०८८  ॥

नैवास्य विन्दन्ति गतिं महात्मनो ; न चागतिं कश्चिदिहानुपस्यति ।
ज्ञानात्मकाः संयमिनो महर्षयः ; पश्यन्ति नित्यं पुरुषं गुणाधिकम्  ॥ ०८९  ॥

---

# अध्याय ३३६

जनमेजय उवाच  ॥

अहो ह्येकान्तिनः सर्वान्प्रीणाति भगवान्हरिः ।
विधिप्रयुक्तां पूजां च गृह्णाति भगवान्स्वयम् ॥ ००१ ॥

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
तेषां त्वयाभिनिर्दिष्टा पारंपर्यागता गतिः ॥ ००२ ॥

चतुर्थ्यां चैव ते गत्यां गच्छन्ति पुरुषोत्तमम् ।
एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ॥ ००३ ॥

नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
अगत्वा गतयस्तिस्रो यद्गच्छन्त्यव्ययं हरिम् ॥ ००४ ॥

सहोपनिषदान्वेदान्ये विप्राः सम्यगास्थिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥ ००५ ॥

तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।
केनैष धर्मः कथितो देवेन ऋषिणापि वा ॥ ००६ ॥

एकान्तिनां च का चर्या कदा चोत्पादिता विभो ।
एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ ००७ ॥

वैशंपायन उवाच ॥

समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम् ॥ ००८ ॥

आगतिश्च गतिश्चैव पूर्वं ते कथिता मया ।
गहनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ॥ ००९ ॥

संमितः सामवेदेन पुरैवादियुगे कृतः ।

धार्यते स्वयमीशेन राजन्नारायणेन ह ॥ ०१० ॥

एतमर्थं महाराज पृष्टः पार्थेन नारदः ।
ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः ॥ ०११ ॥

गुरुणा च ममाप्येष कथितो नृपसत्तम ।
यथा तु कथितस्तत्र नारदेन तथा शृणु ॥ ०१२ ॥

यदासीन्मानसं जन्म नारायणमुखोद्गतम् ।
ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम् ॥ ०१३ ॥

तेन धर्मेण कृतवान्दैवं पित्र्यं च भारत ॥ ०१३ ॥

फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ।
वैखानसाः फेनपेभ्यो धर्ममेतं प्रपेदिरे ॥ ०१४ ॥

वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्दधे पुनः ॥ ०१४ ॥

यदासीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप ।
तदा पितामहात्सोमादेतं धर्ममजानत ॥ ०१५ ॥

नारायणात्मकं राजन्रुद्राय प्रददौ च सः ॥ ०१५ ॥

ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप ।
वालखिल्यानृषीन्सर्वान्धर्ममेतमपाठयत् ॥ ०१६ ॥

अन्तर्दधे ततो भूयस्तस्य देवस्य मायया ॥ ०१६ ॥

तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत् ।
तत्रैष धर्मः संभूतः स्वयं नारायणान्नृप ॥ ०१७ ॥

सुपर्णो नाम तमृषिः प्राप्तवान्पुरुषोत्तमात् ।
तपसा वै सुतप्तेन दमेन नियमेन च ॥ ०१८ ॥

त्रिः परिक्रान्तवानेतत्सुपर्णो धर्ममुत्तमम् ।
यस्मात्तस्माद्व्रतं ह्येतत्त्रिसौपर्णमिहोच्यते ॥ ०१९ ॥

ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम् ।
सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः ॥ ०२० ॥

वायुना द्विपदां श्रेष्ठ प्रथितो जगदायुषा ।
वायोः सकाशात्प्राप्तश्च ऋषिभिर्विघसाशिभिः ॥ ०२१ ॥

तेभ्यो महोदधिश्चैनं प्राप्तवान्धर्ममुत्तमम् ।
ततः सोऽन्तर्दधे भूयो नारायणसमाहितः ॥ ०२२ ॥

यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः ।
ब्रह्मणः पुरुषव्याघ्र तत्र कीर्तयतः शृणु ॥ ०२३ ॥

जगत्स्रष्टुमना देवो हरिर्नारायणः स्वयम् ।
चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुः ॥ ०२४ ॥

अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषः सृतः ।
प्रजासर्गकरो ब्रह्मा तमुवाच जगत्पतिः ॥ ०२५ ॥

सृज प्रजाः पुत्र सर्वा मुखतः पादतस्तथा ।
श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत ॥ ०२६ ॥

धर्मं च मत्तो गृह्णीष्व सात्वतं नाम नामतः ।
तेन सर्वं कृतयुगं स्थापयस्व यथाविधि ॥ ०२७ ॥

ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे ।

धर्मं चाग्र्यं स जग्राह सरहस्यं ससङ्ग्रहम्  ॥ ०२८  ॥

आरण्यकेन सहितं नारायणमुखोद्गतम्  ॥ ०२८  ॥

उपदिश्य ततो धर्मं ब्रह्मणेऽमिततेजसे ।
तं कार्तयुगधर्माणं निराशीःकर्मसञ्ज्ञितम्  ॥ ०२९  ॥

जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम्  ॥ ०२९  ॥

ततोऽथ वरदो देवो ब्रह्मलोकपितामहः ।
असृजत्स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान्  ॥ ०३०  ॥

ततः प्रावर्तत तदा आदौ कृतयुगं शुभम् ।
ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः  ॥ ०३१  ॥

तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत् ।
पूजयामास देवेशं हरिं नारायणं प्रभुम्  ॥ ०३२  ॥

धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः ।
अध्यापयामास तदा लोकानां हितकाम्यया  ॥ ०३३  ॥

ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप ।
अध्यापयत्पुराव्यग्रः सर्वलोकपतिर्विभुः  ॥ ०३४  ॥

ततः शङ्खपदश्चापि पुत्रमात्मजमौरसम् ।
दिशापालं सुधर्माणमध्यापयत भारत  ॥ ०३५  ॥

ततः सोऽन्तर्दधे भूयः प्राप्ते त्रेतायुगे पुनः  ॥ ०३५  ॥

नासिक्यजन्मनि पुरा ब्रह्मणः पार्थिवोत्तम ।
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः  ॥ ०३६  ॥

उज्जगाराारविन्दाक्षो ब्रह्मणः पश्यतस्तदा ॥ ०३६ ॥

सनत्कुमारो भगवांस्ततः प्राधीतवान्नृप ।
सनत्कुमारादपि च वीरणो वै प्रजापतिः ॥ ०३७ ॥

कृतादौ कुरुशार्दूल धर्ममेतमधीतवान् ॥ ०३७ ॥

वीरणश्चाप्यधीत्यैनं रौच्याय मनवे ददौ ।
रौच्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे ॥ ०३८ ॥

कुक्षिनाम्नेऽथ प्रददौ दिशां पालाय धर्मिणे ।
ततः सोऽन्तर्दधे भूयो नारायणमुखोद्गतः ॥ ०३९ ॥

अण्डजे जन्मनि पुनर्ब्रह्मणे हरियोनये ।
एष धर्मः समुद्भूतो नारायणमुखात्पुनः ॥ ०४० ॥

गृहीतो ब्रह्मणा राजन्प्रयुक्तश्च यथाविधि ।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप ॥ ०४१ ॥

बर्हिषद्भ्यश्च सङ्क्रान्तः सामवेदान्तगं द्विजम् ।
ज्येष्ठं नाम्नाभिविख्यातं ज्येष्ठसामव्रतो हरिः ॥ ०४२ ॥

ज्येष्ठाच्चाप्यनुसङ्क्रान्तो राजानमविकम्पनम् ।
अन्तर्दधे ततो राजन्नेष धर्मः प्रभोर्हरेः ॥ ०४३ ॥

यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन हि ॥ ०४४ ॥

पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ०४५ ॥

ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुर्ज्येष्ठे विवस्वाञ्जगृहे ततः ॥ ०४६ ॥

त्रेतायुगादौ च पुनर्विवस्वान्मनवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ०४७ ॥

इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥ ०४८ ॥

व्रतिनां चापि यो धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥ ०४९ ॥

नारदेन तु संप्राप्तः सरहस्यः ससङ्ग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ०५० ॥

एवमेष महान्धर्म आद्यो राजन्सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥ ०५१ ॥

धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ०५२ ॥

एकव्यूहविभागो वा क्वचिद्द्विव्यूहसञ्ज्ञितः ।
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ॥ ०५३ ॥

हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा ।
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ॥ ०५४ ॥

मनश्च प्रथितं राजन्पञ्चेन्द्रियसमीरणम् ।
एष लोकनिधिर्धीमानेष लोकविसर्गकृत् ॥ ०५५ ॥

अकर्ता चैव कर्ता च कार्यं कारणमेव च ।
यथेच्छति तथा राजन्क्रीडते पुरुषोऽव्ययः ॥ ०५६ ॥

एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥ ०५७ ॥

एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप ॥ ०५७ ॥

यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दन ।
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः ॥ ०५८ ॥

भवेत्कृतयुगप्राप्तिराशीःकर्मविवर्जितैः ॥ ०५८ ॥

एवं स भगवान्व्यासो गुरुर्मम विशां पते ।
कथयामास धर्मज्ञो धर्मराज्ञे द्विजोत्तमः ॥ ०५९ ॥

ऋषीणां संनिधौ राजञ्श्रृण्वतोः कृष्णभीष्मयोः ।
तस्याप्यकथयत्पूर्वं नारदः सुमहातपाः ॥ ०६० ॥

देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम् ।
यत्र चैकान्तिनो यान्ति नारायणपरायणाः ॥ ०६१ ॥

जनमेजय उवाच ॥

एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।
न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ॥ ०६२ ॥

वैशंपायन उवाच ॥

तिस्त्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः ।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥ ०६३ ॥

देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः ॥ ०६४ ॥

अत्रापि स विजानाति पुरुषं ब्रह्मवर्तिनम् ।
नारायणपरो मोक्षस्ततो वै सात्त्विकः स्मृतः ॥ ०६५ ॥

मनीषितं च प्राप्नोति चिन्तयन्पुरुषोत्तमम् ।
एकान्तभक्तिः सततं नारायणपरायणः ॥ ०६६ ॥

मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिणः ।
तेषां वै छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ ०६७ ॥

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः ॥ ०६८ ॥

सांख्ययोगेन तुल्यो हि धर्म एकान्तसेवितः ।
नारायणात्मके मोक्षे ततो यान्ति परां गतिम् ॥ ०६९ ॥

नारायणेन दृष्टश्च प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छया राजन्प्रतिबुद्धो न जायते ॥ ०७० ॥

राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशां पते ॥ ०७१ ॥

प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ॥ ०७१ ॥

पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः ।
रजसा तमसा चैव मानुषं समभिप्लुतम् ॥ ०७२ ॥

कामं देवाश्च ऋषयः सत्त्वस्था नृपसत्तम ।

हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ॥ ०७३ ॥

जनमेजय उवाच ॥

कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ।
वैशंपायन उवाच ॥

सुसूक्ष्मसत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकम् ॥ ०७५ ॥

एवमेकं सांख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते ॥ ०७६ ॥

एष एकान्तिनां धर्मो नारायणपरात्मकः ॥ ०७६ ॥

यथा समुद्रात्प्रसृता जलौघा ;स्तमेव राजन्पुनराविशन्ति ।
इमे तथा ज्ञानमहाजलौघा ; नारायणं वै पुनराविशन्ति ॥ ०७७ ॥

एष ते कथितो धर्मः सात्वतो यदुबान्धव ।
कुरुष्वैनं यथान्यायं यदि शक्नोषि भारत ॥ ०७८ ॥

एवं हि सुमहाभागो नारदो गुरवे मम ।
श्वेतानां यतिनामाह एकान्तगतिमव्ययाम् ॥ ०७९ ॥

व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते ।
स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ॥ ०८० ॥

इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये न भजन्ति विमोहिताः ॥ ०८१ ॥

कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।

संहारकारकश्चैव कारणं च विशां पते ॥ ०८२ ॥

---

# अध्याय ३३७

जनमेजय उवाच ॥

सांख्यं योगं पञ्चरात्रं वेदारण्यकमेव च ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ ००१ ॥

किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने ।
प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥ ००२ ॥

वैशंपायन उवाच ॥

जज्ञे बहुज्ञं परमत्युदारं ; यं द्वीपमध्ये सुतमात्मवन्तम् ।
पराशराद्गन्धवती महर्षिं ; तस्मै नमोऽज्ञानतमोनुदाय ॥ ००३ ॥

पितामहाद्यं प्रवदन्ति षष्ठं ; महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशजमेकपुत्रं ; द्वैपायनं वेदमहानिधानम् ॥ ००४ ॥

तमादिकालेषु महाविभूति ;र्नारायणो ब्रह्ममहानिधानम् ।
ससर्ज पुत्रार्थमुदारतेजा ; व्यासं महात्मानमजः पुराणः ॥ ००५ ॥

जनमेजय उवाच ॥

त्वयैव कथितः पूर्वं संभवो द्विजसत्तम ।
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ॥ ००६ ॥

पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ॥ ००७ ॥

किमतः पूर्वजं जन्म व्यासस्यामिततेजसः ।
कथयस्वोत्तममते जन्म नारायणोद्भवम् ॥ ००८ ॥

वैशंपायन उवाच ॥

वेदार्थान्वेत्तुकामस्य धर्मिष्ठस्य तपोनिधेः ।
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ॥ ००९ ॥

कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः ।
शुश्रूषां तत्परा राजन्कृतवन्तो वयं तदा ॥ ०१० ॥

सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ॥ ०११ ॥

एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः ।
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ ०१२ ॥

वेदानावर्तयन्साङ्गान्भारतार्थांश्च सर्वशः ।
तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ ०१३ ॥

कथान्तरेऽथ कस्मिंश्चित्पृष्टोऽस्माभिर्द्विजोत्तमः ।
वेदार्थान्भारतार्थांश्च जन्म नारायणात्तथा ॥ ०१४ ॥

स पूर्वमुक्त्वा वेदार्थान्भारतार्थांश्च तत्त्ववित् ।
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे ॥ ०१५ ॥

शृणुध्वमाख्यानवरमेतदार्षेयमुत्तमम् ।
आदिकालोद्भवं विप्रास्तपसाधिगतं मया ॥ ०१६ ॥

प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसंभवे ।
नारायणो महायोगी शुभाशुभविवर्जितः ॥ ०१७ ॥

ससृजे नाभितः पुत्रं ब्रह्माणममितप्रभम् ।
ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् ॥ ०१८ ॥

मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ।
सृज प्रजास्त्वं विविधा ब्रह्मन्सजडपण्डिताः ॥ ०१९ ॥

स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः ।
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ॥ ०२० ॥

का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु ते ।
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ॥ ०२१ ॥

स एवमुक्तो भगवान्भूत्वाथान्तर्हितस्ततः ।
चिन्तयामास देवेशो बुद्धिं बुद्धिमतां वरः ॥ ०२२ ॥

स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ।
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ॥ ०२३ ॥

स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम् ।
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः ॥ ०२४ ॥

ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ।
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा ॥ ०२५ ॥

अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः ।
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः ॥ ०२६ ॥

एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
प्राप चैव मुहूर्तेन स्वस्थानं देवसञ्ज्ञितम्  ॥ ०२७  ॥

तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ।
अथास्य बुद्धिरभवत्पुनरन्या तदा किल  ॥ ०२८  ॥

सृष्टा इमाः प्रजाः सर्वा ब्रह्मणा परमेष्ठिना ।
दैत्यदानवगन्धर्वरक्षोगणसमाकुलाः  ॥ ०२९  ॥

जाता हीयं वसुमती भाराक्रान्ता तपस्विनी  ॥ ०२९  ॥

बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः ।
भविष्यन्ति तपोयुक्ता वरान्प्राप्स्यन्ति चोत्तमान्  ॥ ०३०  ॥

अवश्यमेव तैः सर्वैर्वरदानेन दर्पितैः ।
बाधितव्याः सुरगणा ऋषयश्च तपोधनाः  ॥ ०३१  ॥

तत्र न्याय्यमिदं कर्तुं भारावतरणं मया  ॥ ०३१  ॥

अथ नानासमुद्भूतैर्वसुधायां यथाक्रमम् ।
निग्रहेण च पापानां साधूनां प्रग्रहेण च  ॥ ०३२  ॥

इमां तपस्विनीं सत्यां धारयिष्यामि मेदिनीम् ।
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना  ॥ ०३३  ॥

मया धृता धारयति जगद्धि सचराचरम् ।
तस्मात्पृथ्व्याः परित्राणं करिष्ये संभवं गतः  ॥ ०३४  ॥

एवं स चिन्तयित्वा तु भगवान्मधुसूदनः ।
रूपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः  ॥ ०३५  ॥

वाराहं नारसिंहं च वामनं मानुषं तथा ।
एभिर्मया निहन्तव्या दुर्विनीताः सुरारयः ॥ ०३६ ॥

अथ भूयो जगत्स्रष्टा भोःशब्देनानुनादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥ ०३७ ॥

अपान्तरतमा नाम सुतो वाक्संभवो विभोः ।
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥ ०३८ ॥

तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ।
वेदाख्याने श्रुतिः कार्या त्वया मतिमतां वर ॥ ०३९ ॥

तस्मात्कुरु यथाज्ञप्तं मयैतद्वचनं मुने ॥ ०३९ ॥

तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे ।
ततस्तुतोष भगवान्हरिस्तेनास्य कर्मणा ॥ ०४० ॥

तपसा च सुतप्तेन यमेन नियमेन च ॥ ०४० ॥

श्रीभगवानुवाच ॥

मन्वन्तरेषु पुत्र त्वमेवं लोकप्रवर्तकः ।
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥ ०४१ ॥

पुनस्तिष्ये च संप्राप्ते कुरवो नाम भारताः ।
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ॥ ०४२ ॥

तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति ।
परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥ ०४३ ॥

तत्राप्यनेकधा वेदान्भेत्स्यसे तपसान्वितः ।

कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि ॥ ०४४ ॥

धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा ।
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ॥ ०४५ ॥

वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ०४६ ॥

यं मानसं वै प्रवदन्ति पुत्रं ; पितामहस्योत्तमबुद्धियुक्तम् ।
वसिष्ठमग्र्यं तपसो निधानं ; यश्चापि सूर्यं व्यतिरिच्य भाति ॥ ०४७ ॥

तस्यान्वये चापि ततो महर्षिः ; पराशरो नाम महाप्रभावः ।
पिता स ते वेदनिधिर्वरिष्ठो ; महातपा वै तपसो निवासः ॥ ०४८ ॥

कानीनगर्भः पितृकन्यकायां ; तस्मादृषेस्त्वं भविता च पुत्रः ॥ ०४८ ॥

भूतभव्यभविष्याणां छिन्नसर्वार्थसंशयः ।
ये ह्यतिक्रान्तकाः पूर्वं सहस्रयुगपर्ययाः ॥ ०४९ ॥

तांश्च सर्वान्मयोद्दिष्टान्द्रक्ष्यसे तपसान्वितः ।
पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्ययान् ॥ ०५० ॥

अनादिनिधनं लोके चक्रहस्तं च मां मुने ।
अनुध्यानान्मम मुने नैतद्वचनमन्यथा ॥ ०५१ ॥

शनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान् ।
तस्मिन्मन्वन्तरे चैव सप्तर्षिगणपूर्वकः ॥ ०५२ ॥

त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ०५२ ॥

व्यास उवाच ॥

एवं सारस्वतमृषिमपान्तरतमं तदा ।
उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत्  ॥ ०५३  ॥

सोऽहं तस्य प्रसादेन देवस्य हरिमेधसः ।
अपान्तरतमा नाम ततो जातोऽऽज्ञया हरेः  ॥ ०५४  ॥

पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः  ॥ ०५४  ॥

तदेतत्कथितं जन्म मया पूर्वकमात्मनः ।
नारायणप्रसादेन तथा नारायणांशजम्  ॥ ०५५  ॥

मया हि सुमहत्तप्तं तपः परमदारुणम् ।
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना  ॥ ०५६  ॥

एतद्वः कथितं सर्वं यन्मां पृच्छथ पुत्रकाः ।
पूर्वजन्म भविष्यं च भक्तानां स्नेहतो मया  ॥ ०५७  ॥

वैशंपायन उवाच  ॥

एष ते कथितः पूर्वं संभवोऽस्मद्गुरोर्नृप ।
व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु  ॥ ०५८  ॥

सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै  ॥ ०५९  ॥

सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः  ॥ ०६०  ॥

अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन  ॥ ०६१  ॥

उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ०६२ ॥

पञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान्स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥ ०६३ ॥

यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशां पते ॥ ०६४ ॥

तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥ ०६५ ॥

निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान्हेतुबलान्नाध्यावसति माधवः ॥ ०६६ ॥

पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥ ०६७ ॥

सांख्यं च योगं च सनातने द्वे ; वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो ; नारायणो विश्वमिदं पुराणम् ॥ ०६८ ॥

शुभाशुभं कर्म समीरितं य ;त्प्रवर्तते सर्वलोकेषु किञ्चित् ।
तस्मादृषेस्तद्भवतीति विद्या ;द्दिव्यन्तरिक्षे भुवि चाप्सु चापि ॥ ०६९ ॥

---

# अध्याय ३३८

जनमेजय उवाच ॥

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ॥ ००१ ॥

वैशंपायन उवाच ॥

बहवः पुरुषा लोके सांख्ययोगविचारिणाम् ।
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ ००२ ॥

बहूनां पुरुषाणां च यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ॥ ००३ ॥

नमस्कृत्वा तु गुरवे व्यासायामिततेजसे ।
तपोयुक्ताय दान्ताय वन्द्याय परमर्षये ॥ ००४ ॥

इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव ।
ऋतं सत्यं च विख्यातमृषिसिंहेन चिन्तितम् ॥ ००५ ॥

उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥ ००६ ॥

समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् ।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥ ००७ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशां पते ॥ ००८ ॥

क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः ।
वैजयन्त इति ख्यातः पर्वतप्रवरो नृप ॥ ००९ ॥

तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन् ।

वैराजसदने नित्यं वैजयन्तं निषेवते ॥ ०१० ॥

अथ तत्रासतस्तस्य चतुर्वक्त्रस्य धीमतः ।
ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ॥ ०११ ॥

आकाशेनैव योगीशः पुरा त्रिनयनः प्रभुः ॥ ०११ ॥

ततः खान्निपपाताशु धरणीधरमूर्धनि ।
अग्रतश्चाभवत्प्रीतो ववन्दे चापि पादयोः ॥ ०१२ ॥

तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ।
उत्थापयामास तदा प्रभुरेकः प्रजापतिः ॥ ०१३ ॥

उवाच चैनं भगवांश्चिरस्यागतमात्मजम् ।
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकम् ॥ ०१४ ॥

कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ।
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः ॥ ०१५ ॥

रुद्र उवाच ॥

त्वत्प्रसादेन भगवन्स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥ ०१६ ॥

चिरदृष्टो हि भगवान्वैराजसदने मया ।
ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् ॥ ०१७ ॥

कौतूहलं चापि हि मे एकान्तगमनेन ते ।
नैतत्कारणमल्पं हि भविष्यति पितामह ॥ ०१८ ॥

किं नु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।

सुरासुरैरध्युषितमृषिभिश्चामितप्रभैः ॥ ०१९ ॥

गन्धर्वैरप्सरोभिश्च सततं संनिषेवितम् ।
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥ ०२० ॥

ब्रह्मोवाच ॥

वैजयन्तो गिरिवरः सततं सेव्यते मया ।
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ ०२१ ॥

रुद्र उवाच ॥

बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुवा ।
सृज्यन्ते चापरे ब्रह्मन्स चैकः पुरुषो विराट् ॥ ०२२ ॥

को ह्यसौ चिन्त्यते ब्रह्मंस्त्वया वै पुरुषोत्तमः ।
एतन्मे संशयं ब्रूहि महत्कौतूहलं हि मे ॥ ०२३ ॥

ब्रह्मोवाच ॥

बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ॥ ०२४ ॥

आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते ॥ ०२४ ॥

बहूनां पुरुषाणां स यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ॥ ०२५ ॥

निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ॥ ०२५ ॥

# अध्याय ३३९

ब्रह्मोवाच ॥

श्रृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ ००१ ॥

न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम ।
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ ००२ ॥

अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥ ००३ ॥

ममान्तरात्मा तव च ये चान्ये देहसञ्ज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥ ००४ ॥

विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ००५ ॥

क्षेत्राणि हि शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥ ००६ ॥

नागतिर्न गतिस्तस्य ज्ञेया भूतेन केनचित् ।
सांख्येन विधिना चैव योगेन च यथाक्रमम् ॥ ००७ ॥

चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तमाम् ।
यथाज्ञानं तु वक्ष्यामि पुरुषं तं सनातनम् ॥ ००८ ॥

तस्यैकत्वं महत्त्वं हि स चैकः पुरुषः स्मृतः ।
महापुरुषशब्दं स बिभर्त्येकः सनातनः ॥ ००९ ॥

एको हुताशो बहुधा समिध्यते ; एकः सूर्यस्तपसां योनिरेका ।
एको वायुर्बहुधा वाति लोके ; महोदधिश्चाम्भसां योनिरेकः ॥ ०१० ॥

पुरुषश्चैको निर्गुणो विश्वरूप ;स्तं निर्गुणं पुरुषं चाविशन्ति ॥ ०१० ॥

हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥ ०११ ॥

अचिन्त्यं चापि तं ज्ञात्वा भावसूक्ष्मं चतुष्टयम् ।
विचरेद्यो यतिर्यत्तः स गच्छेत्पुरुषं प्रभुम् ॥ ०१२ ॥

एवं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।
एकात्मानं तथात्मानमपरेऽध्यात्मचिन्तकाः ॥ ०१३ ॥

तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ ०१४ ॥

न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥ ०१४ ॥

कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।
ससप्तदशकेनापि राशिना युज्यते हि सः ॥ ०१५ ॥

एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥ ०१५ ॥

यत्तत्कृत्स्नं लोकतन्त्रस्य धाम ; वेद्यं परं बोधनीयं सबोद्धृ ।
मन्ता मन्तव्यं प्राशिता प्राशितव्यं ; घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ ०१६ ॥

द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं; ज्ञाता ज्ञेयं सगुणं निर्गुणं च ।
यद्वै प्रोक्तं गुणसाम्यं प्रधानं; नित्यं चैतच्छाश्वतं चाव्ययं च ॥ ०१७ ॥

यद्वै सूते धातुराद्यं निधानं; तद्वै विप्राः प्रवदन्तेऽनिरुद्धम् ।
यद्वै लोके वैदिकं कर्म साधु; आशीर्युक्तं तद्धि तस्योपभोज्यम् ॥ ०१८ ॥

देवाः सर्वे मुनयः साधु दान्ता ;स्तं प्राग्यज्ञैर्यज्ञभागं यजन्ते ।
अहं ब्रह्मा आद्य ईशः प्रजानां; तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ ०१९ ॥

मत्तो जगज्जङ्गमं स्थावरं च; सर्वे वेदाः सरहस्या हि पुत्र ॥ ०१९ ॥

चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति ।
एवं स एव भगवाञ्ज्ञानेन प्रतिबोधितः ॥ ०२० ॥

एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।
सांख्यज्ञाने तथा योगे यथावदनुवर्णितम् ॥ ०२१ ॥

---

# उञ्छवृत्युपाख्यानम्

## अध्याय ३४०

युधिष्ठिर उवाच ॥

धर्माः पितामहेनोक्ता मोक्षधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हति मे भवान् ॥ ००१ ॥

भीष्म उवाच ॥

सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ ००२ ॥

यस्मिन्यस्मिंस्तु विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ००३ ॥

अपि च त्वं नरव्याघ्र श्रोतुमर्हसि मे कथाम् ।
पुरा शक्रस्य कथितां नारदेन सुरर्षिणा ॥ ००४ ॥

सुरर्षिर्नारदो राजन्सिद्धस्त्रैलोक्यसंमतः ।
पर्येति क्रमशो लोकान्वायुरव्याहतो यथा ॥ ००५ ॥

स कदाचिन्महेष्वास देवराजालयं गतः ।
सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ॥ ००६ ॥

तं कृतक्षणमासीनं पर्यपृच्छच्छचीपतिः ।
ब्रह्मर्षे किञ्चिदाश्चर्यमस्ति दृष्टं त्वयानघ ॥ ००७ ॥

यथा त्वमपि विप्रर्षे त्रैलोक्यं सचराचरम् ।
जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ॥ ००८ ॥

न ह्यस्त्यविदितं लोके देवर्षे तव किञ्चन ।
श्रुतं वाप्यनुभूतं वा दृष्टं वा कथयस्व मे ॥ ००९ ॥

तस्मै राजन्सुरेन्द्राय नारदो वदतां वरः ।
आसीनायोपपन्नाय प्रोक्तवान्विपुलां कथाम् ॥ ०१० ॥

यथा येन च कल्पेन स तस्मै द्विजसत्तमः ।
कथां कथितवान्पृष्टस्तथा त्वमपि मे शृणु ॥ ०११ ॥

# अध्याय ३४१

भीष्म उवाच ॥

आसीत्किल कुरुश्रेष्ठ महापद्मे पुरोत्तमे ।
गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः ॥ ००१ ॥

सौम्यः सोमान्वये वेदे गताध्वा छिन्नसंशयः ।
धर्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः ॥ ००२ ॥

अहिंसानिरतो नित्यं सत्यः सज्जनसंमतः ।
न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ॥ ००३ ॥

ज्ञातिसंबन्धिविपुले मित्रापाश्रयसंमते ।
कुले महति विख्याते विशिष्टां वृत्तिमास्थितः ॥ ००४ ॥

स पुत्रान्बहुलान्दृष्ट्वा विपुले कर्मणि स्थितः ।
कुलधर्माश्रितो राजन्धर्मचर्यापरोऽभवत् ॥ ००५ ॥

ततः स धर्मं वेदोक्तं यथाशास्त्रोक्तमेव च ।
शिष्टाचीर्णं च धर्मं च त्रिविधं चिन्त्य चेतसा ॥ ००६ ॥

किं नु मे स्याच्छुभं कृत्वा किं क्षमं किं परायणम् ।
इत्येवं खिद्यते नित्यं न च याति विनिश्चयम् ॥ ००७ ॥

तस्यैवं खिद्यमानस्य धर्मं परममास्थितः ।
कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः ॥ ००८ ॥

स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना ।
विश्रान्तं चैनमासीनमिदं वचनमब्रवीत् ॥ ००९ ॥

---

# अध्याय ३४२

ब्राह्मण उवाच ॥

समुत्पन्नाभिधानोऽस्मि वाङ्माधुर्येण तेऽनघ ।
मित्रतामभिपन्नस्त्वां किञ्चिद्वक्ष्यामि तच्छृणु ॥ ००१ ॥

गृहस्थधर्मं विप्रेन्द्र कृत्वा पुत्रगतं त्वहम् ।
धर्मं परमकं कुर्यां को हि मार्गो भवेद्द्विज ॥ ००२ ॥

अहमात्मानमात्मस्थमेक एवात्मनि स्थितः ।
कर्तुं काङ्क्षामि नेच्छामि बद्धः साधारणैर्गुणैः ॥ ००३ ॥

यावदेवानतीतं मे वयः पुत्रफलाश्रितम् ।
तावदिच्छामि पाथेयमादातुं पारलौकिकम् ॥ ००४ ॥

अस्मिन्हि लोकसंताने परं पारमभीप्सतः ।
उत्पन्ना मे मतिरियं कुतो धर्ममयः प्लवः ॥ ००५ ॥

समुह्यमानानि निशम्य लोके ; निर्यात्यमानानि च सात्त्विकानि ।
दृष्ट्वा च धर्मध्वजकेतुमालां ; प्रकीर्यमाणामुपरि प्रजानाम् ॥ ००६ ॥

न मे मनो रज्यति भोगकाले ; दृष्ट्वा यतीन्प्रार्थयतः परत्र ।
तेनातिथे बुद्धिबलाश्रयेण ; धर्मार्थतत्त्वे विनियुङ्क्ष्व मां त्वम् ॥ ००७ ॥

भीष्म उवाच ॥

सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिलाषिणः ।
प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा ॥ ००८ ॥

अहमप्यत्र मुह्यामि ममाप्येष मनोरथः ।
न च संनिश्चयं यामि बहुद्वारे त्रिविष्टपे ॥ ००९ ॥

केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थाश्रमं केचिद्गार्हस्थ्यं केचिदाश्रिताः ॥ ०१० ॥

राजधर्माश्रयं केचित्केचिदात्मफलाश्रयम् ।
गुरुचर्याश्रयं केचित्केचिद्वाक्यं यमाश्रयम् ॥ ०११ ॥

मातरं पितरं केचिच्छुश्रूषन्तो दिवं गताः ।
अहिंसया परे स्वर्गं सत्येन च तथा परे ॥ ०१२ ॥

आहवेऽभिमुखाः केचिन्निहताः स्विद्दिवं गताः ।
केचिदुञ्छव्रतैः सिद्धाः स्वर्गमार्गसमाश्रिताः ॥ ०१३ ॥

केचिदध्ययने युक्ता वेदव्रतपराः शुभाः ।
बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः ॥ ०१४ ॥

आर्जवेनापरे युक्ता निहतानार्जवैर्जनैः ।
ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः ॥ ०१५ ॥

एवं बहुविधैर्लोके धर्मद्वारैरनावृतैः ।
ममापि मतिराविग्ना मेघलेखेव वायुना ॥ ०१६ ॥

# अध्याय ३४३

अतिथिरुवाच ॥

उपदेशं तु ते विप्र करिष्येऽहं यथागमम् ।
गुरुणा मे यथाख्यातमर्थतस्तच्च मे शृणु ॥ ००१ ॥

यत्र पूर्वाभिसर्गेण धर्मचक्रं प्रवर्तितम् ।
नैमिषे गोमतीतीरे तत्र नागाह्वयं पुरम् ॥ ००२ ॥

समग्रैस्त्रिदशैस्तत्र इष्टमासीद्द्विजर्षभ ।
यत्रेन्द्रातिक्रमं चक्रे मान्धाता राजसत्तमः ॥ ००३ ॥

कृताधिवासो धर्मात्मा तत्र चक्षुःश्रवा महान् ।
पद्मनाभो महाभागः पद्म इत्येव विश्रुतः ॥ ००४ ॥

स वाचा कर्मणा चैव मनसा च द्विजर्षभ ।
प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः ॥ ००५ ॥

साम्ना दानेन भेदेन दण्डेनेति चतुर्विधम् ।
विषमस्थं जनं स्वं च चक्षुर्ध्यानेन रक्षति ॥ ००६ ॥

तमभिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितम् ।
स ते परमकं धर्मं नमिथ्या दर्शयिष्यति ॥ ००७ ॥

स हि सर्वातिथिर्नागो बुद्धिशास्त्रविशारदः ।
गुणैरनवमैर्युक्तः समस्तैराभिकामिकैः ॥ ००८ ॥

प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः ।
तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ॥ ००९ ॥

यज्वा दानरुचिः क्षान्तो वृत्ते च परमे स्थितः ।
सत्यवागनसूयुश्च शीलवानभिसंश्रितः ॥ ०१० ॥

शेषान्नभोक्ता वचनानुकूलो ; हितार्जवोत्कृष्टकृताकृतज्ञः ।
अवैरकृद्भूतहिते नियुक्तो ; गङ्गाह्रदाम्भोऽभिजनोपपन्नः ॥ ०११ ॥

---

# अध्याय ३४४

ब्राह्मण उवाच ॥

अतिभारोद्यतस्यैव भारापनयनं महत् ।
पराश्वासकरं वाक्यमिदं मे भवतः श्रुतम् ॥ ००१ ॥

अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधार्तस्य च भोजनम् ॥ ००२ ॥

ईप्सितस्येव संप्राप्तिरन्नस्य समयेऽतिथेः ।
एषितस्यात्मनः काले वृद्धस्येव सुतो यथा ॥ ००३ ॥

मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम् ।
प्रह्लादयति मां वाक्यं भवता यदुदीरितम् ॥ ००४ ॥

दत्तचक्षुरिवाकाशे पश्यामि विमृशामि च ।
प्रज्ञानवचनाद्योऽयमुपदेशो हि मे कृतः ॥ ००५ ॥

बाढमेवं करिष्यामि यथा मां भाषते भवान्  ॥ ००५  ॥

इहेमां रजनीं साधो निवसस्व मया सह ।
प्रभाते यास्यति भवान्पर्याश्वस्तः सुखोषितः  ॥ ००६  ॥

असौ हि भगवान्सूर्यो मन्दरश्मिरवाङ्मुखः  ॥ ००६  ॥

भीष्म उवाच  ॥

ततस्तेन कृतातिथ्यः सोऽतिथिः शत्रुसूदन ।
उवास किल तां रात्रिं सह तेन द्विजेन वै  ॥ ००७  ॥

तत्तच्च धर्मसंयुक्तं तयोः कथयतोस्तदा ।
व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा  ॥ ००८  ॥

ततः प्रभातसमये सोऽतिथिस्तेन पूजितः ।
ब्राह्मणेन यथाशक्त्या स्वकार्यमभिकाङ्क्षता  ॥ ००९  ॥

ततः स विप्रः कृतधर्मनिश्चयः ; कृताभ्यनुज्ञः स्वजनेन धर्मवित् ।
यथोपदिष्टं भुजगेन्द्रसंश्रयं ; जगाम काले सुकृतैकनिश्चयः  ॥ ०१०  ॥

---

# अध्याय ३४५

भीष्म उवाच  ॥

स वनानि विचित्राणि तीर्थानि च सरांसि च ।
अभिगच्छन्क्रमेण स्म कञ्चिन्मुनिमुपस्थितः  ॥ ००१  ॥

तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः ।
पर्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः ॥ ००२ ॥

सोऽभिगम्य यथाख्यातं नागायतनमर्थवित् ।
प्रोक्तवानहमस्मीति भोःशब्दालङ्कृतं वचः ॥ ००३ ॥

ततस्तस्य वचः श्रुत्वा रूपिणी धर्मवत्सला ।
दर्शयामास तं विप्रं नागपत्नी पतिव्रता ॥ ००४ ॥

सा तस्मै विधिवत्पूजां चक्रे धर्मपरायणा ।
स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत् ॥ ००५ ॥

ब्राह्मण उवाच ॥

विश्रान्तोऽभ्यर्चितश्चास्मि भवत्या श्लक्ष्णया गिरा ।
द्रष्टुमिच्छामि भवति तं देवं नागमुत्तमम् ॥ ००६ ॥

एतद्धि परमं कार्यमेतन्मे फलमीप्सितम् ।
अनेनार्थेन चास्म्यद्य संप्राप्तः पन्नगालयम् ॥ ००७ ॥

नागभार्योवाच ॥

आर्य सूर्यरथं वोढुं गतोऽसौ मासचारिकः ।
सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ॥ ००८ ॥

एतद्विदितमार्यस्य विवासकरणं मम ।
भर्तुर्भवतु किं चान्यत्क्रियतां तद्वदस्व मे ॥ ००९ ॥

ब्राह्मण उवाच ॥

अनेन निश्चयेनाहं साध्वि संप्राप्तवानिह ।

प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्महावने ॥ ०१० ॥

संप्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः ।
ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ॥ ०११ ॥

अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे ।
कालं परिमिताहारो यथोक्तं परिपालयन् ॥ ०१२ ॥

भीष्म उवाच ॥

ततः स विप्रस्तां नागीं समाधाय पुनः पुनः ।
तदेव पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः ॥ ०१३ ॥

---

# अध्याय ३४६

भीष्म उवाच ॥

अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना ।
निराहारेण वसता दुःखितास्ते भुजङ्गमाः ॥ ००१ ॥

सर्वे संभूय सहितास्तस्य नागस्य बान्धवाः ।
भ्रातरस्तनया भार्या ययुस्तं ब्राह्मणं प्रति ॥ ००२ ॥

तेऽपश्यन्पुलिने तं वै विविक्ते नियतव्रतम् ।
समासीनं निराहारं द्विजं जप्यपरायणम् ॥ ००३ ॥

ते सर्वे समभिक्रम्य विप्रमभ्यर्च्य चासकृत् ।
ऊचुर्वाक्यमसंदिग्धमातिथेयस्य बान्धवाः ॥ ००४ ॥

षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन ।
न चाभिलषसे किञ्चिदाहारं धर्मवत्सल ॥ ००५ ॥

अस्मानभिगतश्चासि वयं च त्वामुपस्थिताः ।
कार्यं चातिथ्यमस्माभिर्वयं सर्वे कुटुम्बिनः ॥ ००६ ॥

मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम ।
आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ॥ ००७ ॥

त्यक्ताहारेण भवता वने निवसता सता ।
बालवृद्धमिदं सर्वं पीड्यते धर्मसङ्कटात् ॥ ००८ ॥

न हि नो भ्रूणहा कश्चिद्राजापथ्योऽनृतोऽपि वा ।
पूर्वाशी वा कुले ह्यस्मिन्देवतातिथिबन्धुषु ॥ ००९ ॥

ब्राह्मण उवाच ॥

उपदेशेन युष्माकमाहारोऽयं मया वृतः ।
द्विरूनं दशरात्रं वै नागस्यागमनं प्रति ॥ ०१० ॥

यद्यष्टरात्रे निर्याते नागमिष्यति पन्नगः ।
तदाहारं करिष्यामि तन्निमित्तमिदं व्रतम् ॥ ०११ ॥

कर्तव्यो न च संतापो गम्यतां च यथागतम् ।
तन्निमित्तं व्रतं मह्यं नैतद्भेत्तुमिहार्हथ ॥ ०१२ ॥

भीष्म उवाच ॥

तेन ते समनुज्ञाता ब्राह्मणेन भुजङ्गमाः ।
स्वमेव भवनं जग्मुरकृतार्था नरर्षभ ॥ ०१३ ॥

# अध्याय ३४७

भीष्म उवाच ॥

अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः ।
दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्मा विवस्वतः ॥ ००१ ॥

तं भार्या समभिक्रामत्पादशौचादिभिर्गुणैः ।
उपपन्नां च तां साध्वीं पन्नगः पर्यपृच्छत ॥ ००२ ॥

अपि त्वमसि कल्याणि देवतातिथिपूजने ।
पूर्वमुक्तेन विधिना युक्ता युक्तेन मत्समम् ॥ ००३ ॥

न खल्वस्यकृतार्थेन स्त्रीबुद्ध्या मार्दवीकृता ।
मद्वियोगेन सुश्रोणि वियुक्ता धर्मसेतुना ॥ ००४ ॥

नागभार्योवाच ॥

शिष्याणां गुरुशुश्रूषा विप्राणां वेदपारणम् ।
भृत्यानां स्वामिवचनं राज्ञां लोकानुपालनम् ॥ ००५ ॥

सर्वभूतपरित्राणं क्षत्रधर्म इहोच्यते ।
वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ॥ ००६ ॥

विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत् ।
गृहस्थधर्मो नागेन्द्र सर्वभूतहितैषिता ॥ ००७ ॥

नियताहारता नित्यं व्रतचर्या यथाक्रमम् ।
धर्मो हि धर्मसंबन्धादिन्द्रियाणां विशेषणम् ॥ ००८ ॥

अहं कस्य कुतो वाहं कः को मे ह भवेदिति ।
प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥ ००९ ॥

पतिव्रतात्वं भार्यायाः परमो धर्म उच्यते ।
तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै ॥ ०१० ॥

साहं धर्मं विजानन्ती धर्मनित्ये त्वयि स्थिते ।
सत्पथं कथमुत्सृज्य यास्यामि विषमे पथि ॥ ०११ ॥

देवतानां महाभाग धर्मचर्या न हीयते ।
अतिथीनां च सत्कारे नित्ययुक्तास्म्यतन्द्रिता ॥ ०१२ ॥

सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै ।
स च कार्यं न मे ख्याति दर्शनं तव काङ्क्षति ॥ ०१३ ॥

गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः ।
आसीनोऽऽवर्तयन्ब्रह्म ब्राह्मणः संशितव्रतः ॥ ०१४ ॥

अहं त्वनेन नागेन्द्र सामपूर्वं समाहिता ।
प्रस्थाप्यो मत्सकाशं स संप्राप्तो भुजगोत्तमः ॥ ०१५ ॥

एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि ।
दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः ॥ ०१६ ॥

# अध्याय ३४८

नाग उवाच ॥

अथ ब्राह्मणरूपेण कं तं समनुपश्यसि ।
मानुषं केवलं विप्रं देवं वाथ शुचिस्मिते ॥ ००१ ॥

को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि ।
संदर्शनरुचिर्वाक्यमाज्ञापूर्वं वदिष्यति ॥ ००२ ॥

सुरासुरगणानां च देवर्षीणां च भामिनि ।
ननु नागा महावीर्याः सौरसेयास्तरस्विनः ॥ ००३ ॥

वन्दनीयाश्च वरदा वयमप्यनुयायिनः ।
मनुष्याणां विशेषेण धनाध्यक्षा इति श्रुतिः ॥ ००४ ॥

नागभार्योवाच ॥

आर्जवेनाभिजानामि नासौ देवोऽनिलाशन ।
एकं त्वस्य विजानामि भक्तिमानतिरोषणः ॥ ००५ ॥

स हि कार्यान्तराकाङ्क्षी जलेप्सुः स्तोकको यथा ।
वर्षं वर्षप्रियः पक्षी दर्शनं तव काङ्क्षति ॥ ००६ ॥

न हि त्वा दैवतं किञ्चिद्विविघ्नं प्रतिपालयेत् ।
तुल्ये ह्यभिजने जातो न कश्चित्पर्युपासते ॥ ००७ ॥

तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि ।
आशाछेदेन तस्याद्य नात्मानं दग्धुमर्हसि ॥ ००८ ॥

आशया त्वभिपन्नानामकृत्वाश्रुप्रमार्जनम् ।

राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ॥ ००९ ॥

मौनाज्ज्ञानफलावाप्तिर्दानेन च यशो महत् ।
वाग्मित्वं सत्यवाक्येन परत्र च महीयते ॥ ०१० ॥

भूमिप्रदानेन गतिं लभत्याश्रमसंमिताम् ।
नष्टस्यार्थस्य संप्राप्तिं कृत्वा फलमुपाश्नुते ॥ ०११ ॥

अभिप्रेतामसङ्क्लिष्टां कृत्वाकामवतीं क्रियाम् ।
न याति निरयं कश्चिदिति धर्मविदो विदुः ॥ ०१२ ॥

नाग उवाच ॥

अभिमानेन मानो मे जातिदोषेण वै महान् ।
रोषः सङ्कल्पजः साध्वि दग्धो वाचाग्निना त्वया ॥ ०१३ ॥

न च रोषादहं साध्वि पश्येयमधिकं तमः ।
यस्य वक्तव्यतां यान्ति विशेषेण भुजङ्गमाः ॥ ०१४ ॥

दोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान् ।
तथा शक्रप्रतिस्पर्धी हतो रामेण संयुगे ॥ ०१५ ॥

अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम् ।
धर्षणाद्रोषसंविग्नाः कार्तवीर्यसुता हताः ॥ ०१६ ॥

जामदग्न्येन रामेण सहस्रनयनोपमः ।
संयुगे निहतो रोषात्कार्तवीर्यो महाबलः ॥ ०१७ ॥

तदेष तपसां शत्रुः श्रेयसश्च निपातनः ।
निगृहीतो मया रोषः श्रुत्वैव वचनं तव ॥ ०१८ ॥

आत्मानं च विशेषेण प्रशंसाम्यनपायिनि ।
यस्य मे त्वं विशालाक्षि भार्या सर्वगुणान्विता ॥ ०१९ ॥

एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः ।
सर्वथा चोक्तवान्वाक्यं नाकृतार्थः प्रयास्यति ॥ ०२० ॥

---

## अध्याय ३४९

भीष्म उवाच ॥

स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति ।
तमेव मनसा ध्यायन्कार्यवत्तां विचारयन् ॥ ००१ ॥

तमभिक्रम्य नागेन्द्रो मतिमान्स नरेश्वर ।
प्रोवाच मधुरं वाक्यं प्रकृत्या धर्मवत्सलः ॥ ००२ ॥

भो भो क्षाम्याभिभाषे त्वां न रोषं कर्तुमर्हसि ।
इह त्वमभिसंप्राप्तः कस्यार्थे किं प्रयोजनम् ॥ ००३ ॥

आभिमुख्यादभिक्रम्य स्नेहात्पृच्छामि ते द्विज ।
विविक्ते गोमतीतीरे किं वा त्वं पर्युपाससे ॥ ००४ ॥

ब्राह्मण उवाच ॥

धर्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतम् ।
पद्मनाभं द्विजश्रेष्ठं तत्र मे कार्यमाहितम् ॥ ००५ ॥

तस्य चाहमसांनिध्यं श्रुतवानस्मि तं गतम् ।

स्वजनं तं प्रतीक्षामि पर्जन्यमिव कर्षकः ॥ ००६ ॥

तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम् ।
वर्तयाम्ययुतं ब्रह्म योगयुक्तो निरामयः ॥ ००७ ॥

नाग उवाच ॥

अहो कल्याणवृत्तस्त्वं साधु सज्जनवत्सलः ।
श्रवाढ्यस्त्वं महाभाग परं स्नेहेन पश्यसि ॥ ००८ ॥

अहं स नागो विप्रर्षे यथा मां विन्दते भवान् ।
आज्ञापय यथा स्वैरं किं करोमि प्रियं तव ॥ ००९ ॥

भवन्तं स्वजनादस्मि संप्राप्तं श्रुतवानिह ।
अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ ०१० ॥

संप्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति ।
विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ॥ ०११ ॥

वयं हि भवता सर्वे गुणक्रीता विशेषतः ।
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे ॥ ०१२ ॥

ब्राह्मण उवाच ॥

आगतोऽहं महाभाग तव दर्शनलालसः ।
कञ्चिदर्थमनर्थज्ञः प्रष्टुकामो भुजङ्गम ॥ ०१३ ॥

अहमात्मानमात्मस्थो मार्गमाणोऽऽत्मनो हितम् ।
वासार्थिनं महाप्राज्ञ बलवन्तमुपास्मि ह ॥ ०१४ ॥

प्रकाशितस्त्वं स्वगुणैर्यशोगर्भगभस्तिभिः ।

शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ ०१५ ॥

तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन ।
पश्चात्कार्यं वदिष्यामि श्रोतुमर्हति मे भवान् ॥ ०१६ ॥

---

# अध्याय ३५०

ब्राह्मण उवाच ॥

विवस्वतो गच्छति पर्ययेण ; वोढुं भवांस्तं रथमेकचक्रम् ।
आश्चर्यभूतं यदि तत्र किं चि ;द्दृष्टं त्वया शंसितुमर्हसि त्वम् ॥ ००१ ॥

नाग उवाच ॥

यस्य रश्मिसहस्रेषु शाखास्विव विहङ्गमाः ।
वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ ००२ ॥

यतो वायुर्विनिःसृत्य सूर्यरश्म्याश्रितो महान् ।
विजृम्भत्यम्बरे विप्र किमाश्चर्यतरं ततः ॥ ००३ ॥

शुक्रो नामासितः पादो यस्य वारिधरोऽम्बरे ।
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥ ००४ ॥

योऽष्टमासांस्तु शुचिना किरणेनोज्झितं पयः ।
पर्यादत्ते पुनः काले किमाश्चर्यमतः परम् ॥ ००५ ॥

यस्य तेजोविशेषेषु नित्यमात्मा प्रतिष्ठितः ।

यतो बीजं मही चेयं धार्यते सचराचरम्  ॥ ००६  ॥

यत्र देवो महाबाहुः शाश्वतः परमोऽक्षरः ।
अनादिनिधनो विप्र किमाश्चर्यमतः परम्  ॥ ००७  ॥

आश्चर्याणामिवाश्चर्यमिदमेकं तु मे शृणु ।
विमले यन्मया दृष्टमम्बरे सूर्यसंश्रयात्  ॥ ००८  ॥

पुरा मध्याह्नसमये लोकांस्तपति भास्करे ।
प्रत्यादित्यप्रतीकाशः सर्वतः प्रत्यदृश्यत  ॥ ००९  ॥

स लोकांस्तेजसा सर्वान्स्वभासा निर्विभासयन् ।
आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव  ॥ ०१०  ॥

हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः ।
अनिर्देश्येन रूपेण द्वितीय इव भास्करः  ॥ ०११  ॥

तस्याभिगमनप्राप्तौ हस्तो दत्तो विवस्वता ।
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चनार्थिना  ॥ ०१२  ॥

ततो भित्त्वैव गगनं प्रविष्टो रविमण्डलम् ।
एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम्  ॥ ०१३  ॥

तत्र नः संशयो जातस्तयोस्तेजःसमागमे ।
अनयोः को भवेत्सूर्यो रथस्थो योऽयमागतः  ॥ ०१४  ॥

ते वयं जातसंदेहाः पर्यपृच्छामहे रविम् ।
क एष दिवमाक्रम्य गतः सूर्य इवापरः  ॥ ०१५  ॥

# अध्याय ३५१

सूर्य उवाच ॥

नैष देवोऽनिलसखो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ ००१ ॥

एष मूलफलाहारः शीर्णपर्णाशनस्तथा ।
अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः ॥ ००२ ॥

ऋचश्चानेन विप्रेण संहितान्तरभिष्टुताः ।
स्वर्गद्वारकृतोद्योगो येनासौ त्रिदिवं गतः ॥ ००३ ॥

असन्नधीरनाकाङ्क्षी नित्यमुञ्छशिलाशनः ।
सर्वभूतहिते युक्त एष विप्रो भुजङ्गम ॥ ००४ ॥

न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानां परमां गतिम् ॥ ००५ ॥

नाग उवाच ॥

एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज ।
संसिद्धो मानुषः कायो योऽसौ सिद्धगतिं गतः ॥ ००६ ॥

सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ॥ ००६ ॥

---

# अध्याय ३५२

ब्राह्मण उवाच ॥

आश्चर्यं नात्र संदेहः सुप्रीतोऽस्मि भुजङ्गम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥ ००१ ॥

स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोऽस्मि भवता संप्रेषणनियोजनैः ॥ ००२ ॥

नाग उवाच ॥

अनुक्त्वा मद्गतं कार्यं क्वेदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ॥ ००३ ॥

उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि ब्राह्मण ॥ ००४ ॥

न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ००५ ॥

त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः ।
लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥ ००६ ॥

ब्राह्मण उवाच ॥

एवमेतन्महाप्राज्ञ विज्ञातार्थ भुजङ्गम ।
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥ ००७ ॥

य एवाहं स एव त्वमेवमेतद्भुजङ्गम ।
अहं भवांश्च भूतानि सर्वे सर्वत्रगाः सदा ॥ ००८ ॥

आसीत्तु मे भोगपते संशयः पुण्यसञ्चये ।
सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थदर्शनम् ॥ ००९ ॥

एष मे निश्चयः साधो कृतः कारणवत्तरः ।
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजङ्गम ॥ ०१० ॥

---

# अध्याय ३५३

भीष्म उवाच ॥

स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ ००१ ॥

स तेन कृतसंस्कारो धर्ममेवोपतस्थिवान् ।
तथैव च कथामेतां राजन्कथितवांस्तदा ॥ ००२ ॥

भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।
कथैषा कथिता पुण्या नारदाय महात्मने ॥ ००३ ॥

नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ ००४ ॥

देवराजेन च पुरा कथैषा कथिता शुभा ।
समस्तेभ्यः प्रशस्तेभ्यो वसुभ्यो वसुधाधिप ॥ ००५ ॥

यदा च मम रामेण युद्धमासीत्सुदारुणम् ।
वसुभिश्च तदा राजन्कथेयं कथिता मम ॥ ००६ ॥

पृच्छमानाय तत्त्वेन मया तुभ्यं विशां पते ।
कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ॥ ००७ ॥

तदेष परमो धर्मो यन्मां पृच्छसि भारत ।
असन्नधीरनाकाङ्क्षी धर्मार्थकरणे नृप ॥ ००८ ॥

स च किल कृतनिश्चयो द्विजाग्र्यो ; भुजगपतिप्रतिदेशितार्थकृत्यः ।
यमनियमसमाहितो वनान्तं ; परिगणितोञ्छशिलाशनः प्रविष्टः ॥ ००९ ॥

---